एवमन्त्यत्वाभावादिशादेः शस्येत्त्वानापत्तिः । उक्तार्थलाक्षणिकत्वे तु लक्षणैव दोषः । किञ्च दन्नचश्चकारवैयर्थ्यापत्त्याऽवयवत्वमेव न्याय्यम् । अत एव "वुञ्छण्कठच्" इतिसूत्रविहितके णित्त्वप्रयुक्तवृद्धिर्न । "तस्य लोप" इति भाष्ये एकान्तत्वमेव न्याय्यमित्युक्तेश्च । उपदेशेऽजितिसूत्रे उपदेशग्रहणन्तु स्पष्टार्थमेवेत्याहुः । सर्वत्रानुबन्धसहितनिर्देशे विधौ "गुप्तिज्किद्भ्य" इत्यादौ नकारेत्संज्ञकः सो भवतीत्यादिक्रमेण बोधः । अनुवादे "सन्यत" इत्यादौ च नकारेत्संज्ञके सशब्दे परे इत्यादिक्रमेण बोधः । स्पष्टश्चेदं निष्ठासञ्ज्ञा-

---

गृहीत्वा सन्निति वा गृहीत्वा नाप्रयोजकत्वशङ्का । न वा गुणशब्दगकारे स्थास्नोऽकार इत्यत्र ककारे च व्यभिचारः । न वा सर्वामष्टाध्यायीं गृहीत्वा सनूसकारे । न वा " सुप्यजातौ णिनिः " इत्यत्रत्येकारे कुकि ककारे च भागाऽसिद्धिः । न वा " काश्यादिभ्यष्ठञ्ञिठौ " इत्यत्र ञिठप्रत्ययठकारे व्यभिचार इत्यन्यत्र निरूपितम् ।

*परसमीपबोधक इति* । चिन्त्यमिदम् । शितिकिदित्यादौ बहुव्रीह्युपपत्तये समीपेऽवयवत्वारोपस्याऽऽवश्यकत्वात् । एवम् आदिशब्दः पूर्वसमीपबोधक इत्यपि चिन्त्यमेव ।

*परेत्विति* । तदर्थभूते विधेये कदाप्यदर्शनादिति हेतुः आनङादिनकारादौ व्यभिचरितः । वक्ष्यमाणहेतुना सत्प्रतिपक्षितश्च । अनवयवत्वनिश्चयाधीनः सर्मपि ऽवयवत्वारोपः, तदधीना इत्संज्ञा, तदधीनश्च लोपः, तदधीनञ्च तदर्थभूते विधेये कदाऽप्यदर्शनं, तदधीनश्चानवयत्वनिश्चय, इति चक्रकेणाऽसिद्धिग्रस्तोऽपि । नचैकान्तवादिमते ऽपि नानुबन्धकृतमित्यादि परिभाषात्रयं वक्तव्यमिति वाच्यम् । शित्करणेनानुबन्धघटितबोधकवृत्तयो येऽनुबन्धत्वघटितातिरिक्ता आनुपूर्वीभिन्नाश्च धर्मास्तन्निमित्तककार्ये कर्तव्ये ऽनुबन्धानामविद्यमानवद्भाव इत्येकपरिभाषास्वीकारेण निर्वाहात् । *शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्चेति* । नचायं हेतुः पृथिव्यादीनां गुणे गन्धादौ व्यभिचरित इति वाच्यम् । सांख्यमतवद्वैयाकरणमते ऽपि अतिरिक्तद्रव्याभावेन घटकत्वरूपसाध्यस्यापि तत्र सत्त्वात् ।

*नकारेत्संज्ञकस्सो भवतीति* । वस्तुतस्त्वनुवादे "सन्यत" इत्यादावेवैतादृशार्थस्योपयोगो नतु विधेयसमर्पके । "गुप्तिज्किद्भ्यः सन्" इत्यादौ सन् भवतीत्यर्थे ऽपि क्षतिविरहात् । वाक्यार्थबोधात्पूर्वम् उपदेशत्वज्ञानाभावेन इत्संज्ञाया अप्रवृत्त्या तथाबोधासंभवाच्च । अनुवादे लक्षणया तथा बोधसंभवेऽपि विधौ "न विधौ परः शब्दार्थः " इति न्यायेन लक्षणाया अभावेन तथा वक्तुमशक्यत्वादिति दिक् । *नासञ्ज्ञतिरिति । टकारेत्संज्ञकाऽऽकारादचि परत इत्यर्थादिति भावः ।

परेतु—अनुबन्धविनिर्मुक्तपदार्थोपस्थितौ प्रमाणाभावाल्लोकप्रसिद्धम् "अदर्शनं लोपः " इति सूत्रसङ्केतितमर्थं विहाय लोपपदस्य शाब्दबोधविषयत्वाभावार्थकत्वस्यान्याय्यत्वात् इत्संज्ञालोपौ लुगादिवल्लक्ष्ये एव प्रवर्तेते ।

सूत्रे भाष्ये। अत एवाऽऽटश्चेत्यादेर्नासङ्गतिः। अन्यथा यत्राऽऽट् सूत्रे तत्र नाच्परो नेष्यते च तत्र वृद्धिः। यत्र प्रयोगे इष्यते वृद्धिस्तत्र नाऽऽडिति तदसङ्गतिः स्पष्टैव। अन्त्यङ्किम्। वाचालः। हल्किम्। चिरिणोतीत्यादौ धातोरन्त्यस्य मा भूत्।

आद्योच्चारणमिति। आद्यमुच्चारणमित्यर्थः। भावे घञिति भावः। तच्च प्रत्यासत्त्यैतच्छास्त्रप्रवर्तकाचार्याणामेव। आद्यत्वञ्चाज्ञातस्वस्वरूपज्ञापकत्वम्। उपस्याऽऽद्यर्थत्वादिशेरुच्चारणक्रियत्वात्। अत एव "एकाच उपदेशे" इति सूत्रे कैयटेनोक्तम् "इत्सञ्ज्ञाविधावुच्चारणवचन उपदिशिर्गृह्यते" इति। "आदेच" इति सूत्रेऽपि "येषां स्वरूपज्ञापनायापूर्वमुच्चारणं तेषामेवोपदेशव्यवहारः" इति। तत्र सूत्रे भाष्येऽपि "उद्देशश्च प्रातिपदिकानां नोपदेशः" इति। प्रकृतसूत्रे भाष्येऽपि "प्रत्यक्षमाख्यानमुपदेशः" इत्युक्तम्। तस्य चोक्त एवार्थः। परे तु "उपदेश इति किमर्थमभ्रआं अपः, कः पुनरुद्देशोपदेशयोर्विशेषः" इति भाष्ये उक्तम्। यदि प्रत्यक्षमाख्यानमुपदेशो

---

तस्मात् बोध्यावयवत्वमेकान्तत्वं बोध्यानवयवत्वमनेकान्तत्वमित्येव सिद्धान्तः।

नच "इदम इश् अणत्वात्सवर्णग्रहणं प्राप्नोति" इतिभाष्यविरोध इति वाच्यम्। उक्तभाष्यस्य, उपदेश इति किम् अभ्रआँ अटितः, पदे किम् तन्त्रयुतम्, लोपश्चेति द्विशकारको निर्देश इत्यादिभाष्यस्य चाऽनेकान्तपक्षाभिप्रायकत्वेनाऽदोषादित्याहुः।

अन्ये तु बोधकावयवेष्वनुबन्धेषु बोध्यावयवत्वमारोप्यत इत्येकान्तः। अनारोपश्चाऽनेकान्तः। अत एव प्रत्याहाराद्यवर्णेष्वणुदित्सूत्रं चरितार्थमिति मूलोक्तं सङ्गच्छते। तथाहि–बोधकावयवे ऋलृगित्यत्र ककारे बोध्यावयवत्वस्याऽऽरोपेऽयं ककार इत्संज्ञकाऽभिन्न इति ज्ञातुं शक्यत्वात्ककारचिन्हेनायमिकारोऽप्याणिति ज्ञातुं शक्यत इति ककारादिचिन्हेन प्रत्याहाराद्यवर्णेऽणुदित्सूत्रं चरितार्थमिति सङ्गच्छते। अन्यथा प्रत्याहाराद्यवर्णानामनण्त्वेन सवर्णबोधानुदयात्तस्याऽसङ्गतिः स्पष्टैव। अतएव "आदिरन्त्येन" इति संज्ञाऽऽदेरेवेति चेत् विशिष्टाद्विभक्तिः कथमिति शङ्कायां प्रत्याहारे ऽनुबन्धानां द्योतकत्वेनाऽर्थवत्सूत्रोक्तार्थवत्त्वविशिष्टस्यैव सेति समाधानं मनसि निधाय समुदाय एव प्रातिपदिकसंज्ञेत्यर्थकः "सहग्रहणात्समुदाय एव संज्ञा" इत्यादिशेखरः, "इदम इश् अणत्वात्सवर्णग्रहणं प्राप्नोति" इति भाष्यम्, अण् सवर्णान् गृह्णातीति घटित इत्यध्याहारसहिताणघटितं सवर्णान् गृह्णातीत्यर्थफलकः स्वग्रन्थश्च सङ्गच्छते। अस्मिन्कल्पे चैकान्तत्वं न निष्प्रयोजनं, "सन्यतः" इत्यादौ लक्षणाद्यभावरूपप्रयोजनसत्त्वादित्याहुः। *वाचाल इति* नच चालित्येव सिद्धे आलच् इति गुरुनिर्देशाल्लकारस्य नेत्संज्ञेति वाच्यम्। "तनोतेर्डउः सन्वच्च" इत्यत्रेवाऽत्रापि सन्ध्यभावकल्पनापत्तेः। ज्ञापकेन सूत्राक्षरखण्डनस्यायुक्तत्वाच्च।

गुणैः प्रापणमुद्देशस्तर्हि "लृटः सद्वा" "निष्ठा" इति विहितानां शतृशानच्क्तक्तवतूनामवयवस्येत्सञ्ज्ञानापत्तिः। तथा "राजसूयसूर्य" "चित्याग्निचित्ये" इत्यादिनिपातनानुमितक्यबादीनां पादेरित्त्वानापत्तिः । वदः सुपीत्यत्रोच्चारितस्तु नैतत्संबन्धी। अत एव "तस्यापत्यमत इञ्" इति न्यासेऽन्यशब्दसम्बद्धापत्यार्थस्यानुक्तरूपशेषत्वमुक्तमाकरे । तस्मादत्र सूत्रे उपदेशशब्देनोद्देशस्यापि ग्रहणं वक्तव्यम् । एवम् अभ्रआँ अप इत्यादावपि प्राप्नोतीति तेषां सङ्ग्रहोऽस्य व्यावृत्तिर्येन भवति स विशेषः क इति प्रश्नः । तत्सङ्ग्रहार्थमेव लोकव्यवहारेणापि तयोः सङ्कीर्णत्वमुपपाद्यैतद्व्यावृत्तये तत्सङ्ग्रहाय च "उपदेशनेऽजनुनासिक इति वक्तव्यं किं पुनरुपदेशनं शास्त्रम्" इत्युक्तं वार्तिककृता । तत्र शास्त्रपदेन प्रयोगशासनकरणभूता धातुप्रातिपदिकप्रत्ययनिपातागमादेशा हलन्त्यसूत्रे व्यवसितपदार्थत्वेन भाष्ये उक्ता गृह्यन्ते । एवञ्च तत्सङ्ग्रहोऽभ्रआं इत्येतद्व्यावृत्तिश्च सिद्धा । तस्य च वार्तिकस्य बाहुलकात्करणे घञा प्रत्याख्यानं भगवता कृतम् । किञ्च हलन्त्यसूत्रे भावघञन्तोपदेशपदानुवृत्तौ "भवतष्ठक्छसौ" इत्यादिविहितेष्वित्सञ्ज्ञानापत्तिः । परस्य सत्त्वेन कादेरन्त्यत्वाभावात् । यदि तूपदेशे प्रत्ययत्वादिविशिष्टान्त्य इत् इत्यर्थ इत्युच्यते तदोपदेश इति व्यर्थम् । अन्त्यपदसा-

---

*प्रत्यक्षमाख्यानमिति* । तत्त्वन्तु पाणिन्युच्चरितपदविशिष्टविधेयताश्रयत्वम् । वैशिष्ट्यञ्च स्वजन्यशाब्दबोधीयत्व-स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नत्वैतदुभयसम्बन्धेन । यथा गां सक्थिनि कर्णे वा गृहीत्वोपदिशति अयं गौरिति । तत्र शाब्दबोधस्य शक्तिग्रहात्मकप्रत्यक्षजन्यत्वेन प्रत्यक्षीयविषयतावच्छेदकगोत्वादिधर्मावच्छिन्नविधेयताकत्वेन च लक्षणसमन्वय इति दिक् । *लृटः सद्वेति* । चिन्त्यमेतत् । "तौ सत्" इत्यत्र शकारऋकारेत्संज्ञकातः शाकारचकारेत्संज्ञकाऽऽनस्य च "तौ" इत्यनेन परामर्शात्तयोरेव संज्ञायां दोषाभावात् । *क्यबादीनामिति* । इदमपि चिन्त्यमेव । पकारेत्संज्ञककारेत्संज्ञकयप्रत्ययस्यैव निपातनेनानुमानात् । वस्तुतस्तु "कालेभ्यो भववत्" "चरणेभ्यो धर्मवत्" इत्याद्यतिदेशशास्त्रविहितप्रत्ययानामित्संज्ञाऽनापत्तिः । स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नत्वस्वजन्यशाब्दबोधीयत्वोभयसम्बन्धेन पाणिन्युच्चरितपदविशिष्टविधेयताश्रयत्वरूपप्रत्यक्षाख्यानत्वाभावात् । *अन्त्यत्वाभावादिति* । चिन्त्यमिदम् । ठक्छसावित्येतदन्त्यत्वाभावेऽपि ठगुनिरूपितान्त्यत्वस्य ककारे सत्त्वेन दोषाभावात् । वस्तुतस्तु चित्रङि ङकारे प्राचीनोक्ताज्ञातस्वस्वरूपज्ञापकत्वरूपोपदेशत्वाभावेनेत्संज्ञानापत्तिर्बोध्या । *प्रत्ययत्वादिविशिष्टान्त्यमिति* । प्रत्ययादिबोधकान्त्यमिति यावत् ।

मर्थ्येनैव तल्लाभात् । अत एवात्र सूत्रे उपदेशग्रहणस्यानुबन्धा अनेकान्ता इत्यस्थितपक्षेऽश्रआँ अटित इति प्रयोजनमुक्तं, न तूत्तरार्थमित्युक्तम् । न च करणसाधनोपदेशशब्दानुवृत्त्या सिद्धे हलन्त्यसूत्रे "व्यवसितान्त्यमिति वक्तव्यं के पुनर्व्यवसिता धातुप्रातिपदिकप्रत्ययनिपातागमादेशा" इतिवार्त्तिकानुत्थानमिति वाच्यम् । समुदायद्वाराऽवयवस्याप्युपदेशकरणत्वात्तदन्त्यस्यापि लोपापत्तिरित्याशयात् । भाष्यकृता चान्त्यग्रहणसामर्थ्येन प्रत्याख्यातम् । तत्रानुबन्धविशिष्टानां धातुत्वादि तु धातुत्वादियोग्यघटितत्वाद् बोध्यम् । निपातानां द्योतकत्वेन ब्राह्मणवसिष्ठन्यायेन च पृथग् ग्रहणम् । व्यवसितत्वञ्च धातुत्वादिना परिच्छिन्नत्वादिति कैयटः । एवञ्चोदश्विदादिप्रातिपदिकान्त्यस्यापि लोपः प्राप्नोतीति "प्रातिपदिकानां प्रतिषेधो वाच्यो ऽकृत्तद्धितान्तानाम्" इति वार्त्तिकृतोक्तम् । कुम्भकार इत्यादौ अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेः पूर्वं प्रातिपदिकत्वे णादिलोपो न स्यादिति अकृदित्यादि । तच्च फलाभावान्नेत्सञ्ज्ञेत्यादिना भाष्ये प्रत्याख्यातम् । अत्राद्योच्चारणार्थकोपदेशपदानुवृत्तौ त्वस्य वार्त्तिकस्यानुत्थानमेव स्यात् । "उद्देशश्च प्रातिपदिकानां नोपदेश" इति "आदेच" इतिसूत्रभाष्ये उक्तेः । एतद्भाष्यैकवाक्यतया पस्पशाह्निकान्तस्थे "अग्रहणप्रातिपदिकानामुपदेशः कर्त्तव्यो मञ्चको मञ्जक इति मा भूत्" इति भाष्ये उपदेशशब्दो ग्रहणं कर्त्तव्यमित्यर्थकः । तच्चानुवादरूपमेव सन्देहनिवर्त्तकमिति बोद्धयम् ।

नन्वेवं "तस्मिन्निति निर्दिष्टे" इति सूत्रे षष्ठीप्रकल्पकत्वं तस्येति पक्षे "गुप्तिज्किद्भ्य" इत्यादावपि षष्ठीप्रक्लृप्त्यापत्तिः । न च सनः सनेवादेशो भविष्यतीति बाधकाभाव इति वाच्यम् । "उपदेशे इत्युच्यमाना इत्सञ्ज्ञा न प्रकल्पेत"इत्युक्तं भाष्ये, तद्विरुद्ध्येतात्रोपदेशपदाननुवृत्ताविति चेन्न । तस्यैकदेश्युक्तित्वेनासाधकत्वात् । तथा हि । तत्र "ङमो ह्रस्वादचि" इत्यादौ

*बोध्यमिति* । वस्तुतस्तु धात्वादिपदं धात्वादिबोधकमिति व्याख्यातत्वेनैवं व्याख्यानं निरर्थकम् । *प्रतिषेधो वाच्य इति* । नच चित्रङ्ङकारस्य पैकागारिकट् इत्यत्र टकारस्य चेत्संज्ञा न स्यादिति वाच्यम् । स्ववृत्तिः प्रातिपदिकवृत्तिश्च या आनुपूर्वी तादृशानुपूर्व्यवच्छिन्नविषयताप्रयोजकानां प्रातिपदिकानां प्रतिषेधो वक्तव्यः, अकृदित्यादि तु तात्पर्यग्राहकमित्यदोषात् ।

१ प्रातिपदिकत्वे संभाविते पूर्वं प्राप्तोऽपि णादिलोपो न स्यात्, अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेरित्यर्थः ।

यत्र सप्तमी पञ्चमी चेत्युभयं निर्दिश्यते तत्र किं पूर्वस्य कार्यमथ परस्येति सन्देहे परत्वानवकाशत्वाभ्यां पञ्चमीनिर्देशो बलवानिति सिद्धान्तिनोक्तम् । तत एकदेशिना यथार्थं वा षष्ठीनिर्देशः कर्त्तव्य इति समाधानान्तरमुक्तम् । यथाविषयं प्रागुक्तेषु कार्यिणः षष्ठ्या निर्देष्टव्या इति तदर्थः। तेषु सप्तमीनिर्देशस्य क्वचित् पूर्वत्र क्वचिदुत्तरत्राऽऽवश्यकत्वेनोभयनिर्देशे गौरवेणैषैकदेश्युक्तिः । ततः परेणैकदेशिना षष्ठीपदानुवृत्त्या तस्मिन्नित्यादेरेव षष्ठीप्रकल्पकत्वमाश्रित्य यथार्थं वा षष्ठीत्येकदेश्युक्तिः प्रत्याख्याता । षष्ठीपदानुवृत्तौ गौरवादुभयोः प्रकल्पकत्ववारणाय परत्वानवकाशत्वयोरेकः पूर्वपरयोरितिपूर्वपरग्रहणस्य युगपत्प्रकल्पकत्वाभावे ज्ञापकस्य चावश्यकत्वाच्चेयमप्येकदेश्युक्तिः । ततः पूर्वैकदेशिना तत्पक्षे गुप्तिजित्यादौ दोषः शङ्कितः । ततः षष्ठीप्रक्लृप्तिवादिनैकदेशिनोक्तम्—"स्यादेष दोषो यदीत्सञ्ज्ञा आदेशं प्रतीक्षेत । तत्र खलु कृतायामित्सञ्ज्ञायां लोपे च कृते आदेशो भविष्यति । उपदेश इति हीत्सञ्ज्ञोच्यते" इति । एवञ्च त्वदुक्तिर्व्याहतेत्याशयः । तदग्रे उपदेशपदाननुवृत्तिमभिप्रेत्य "अथवा नानुत्पन्ने सनि प्रक्लृप्त्या भवितव्यम् । यदा चोत्पन्नः सन् तदा कृतसामर्थ्या पञ्चमीति प्रक्लृप्तिर्न भविष्यति" इति समाधानान्तरं कृतम् । तत्र परत्वविशिष्टस्य सन उत्पादने पञ्चम्या उपक्षयात् प्रवृत्त्यन्तराभावान्नास्ति तस्याः प्रकल्पकत्वमिति तदर्थं कैयट आह । एवञ्च प्रकृतसूत्रस्थस्य सूत्रार्थप्रतिपिपादयिषया प्रवृत्तस्य भाष्यवार्त्तिकस्यैकदेश्युक्ततद्भाष्यबलेन प्रौढिवादत्वकल्पनं नोचितम् । लक्ष्यासिद्धेश्च । अइउणित्यादीनामपि क्रमबोधकत्वेनार्थवत्त्वात् प्रातिपदिकत्वम् । चित्रङश्चोः क्वरित्यादेरपि प्रातिपदिकत्वम् । लोपश्चेत्यत्रापि शकारस्य स्वरूपेणार्थवत्त्वात् प्रातिपदिकत्वम् । अनुबन्धानामेकान्तत्वे तु "लोपो यि" इत्यतो लोपग्रहणेऽनुवर्त्तमाने पुनर्लोपग्रहणात् सर्वादेशत्वं बोद्धयम् । एकाच उपदेश इत्यत्रत्यः कैयटोऽपि चिन्त्य एव । अन्योऽपि तज्जातीयश्चिन्त्य एव । "एकाच उपदेशे" "आदेच उपदेशे" इत्यादौ तु भावसाधन एवेति सुधियो विभावयन्त्वित्याहुः ।

---

तथाहि चित्रङित्यादि चित्रशब्दत्वावच्छिन्नबोधकं, चित्रशब्दत्वञ्च न स्ववृत्त्यानुपूर्वी, या च चित्रङ्शब्दत्वरूपा स्ववृत्त्यानुपूर्वी सा च न प्रातिपदिकवृत्तीति न दोषः। न च उदश्वितोऽन्यतरस्याम्" इत्यादौ इत्संज्ञालोपाभावप्रयोज्यं स्ववृत्त्यानुपूर्वीविषयताप्रयोजकत्वम् एतन्निषेधप्रवृत्तिप्रयोज्यौ च इत्संज्ञालोपा-

तारश्च प्रत्यासत्त्यैतच्छास्त्रकर्त्तार एवेति दिक् । निर्देशादिति । तेषां तत्र ग्रहणे हि नासिकादौ यणापत्तिरिति भावः । न चेत्त्वविधानसामर्थ्याद् यणभावः सिद्धः । तस्यापि प्रत्याहारेष्वनुबन्धाग्रहणज्ञापनद्वारैव यणभावकल्पकत्वौचित्यात् । साक्षाच्छास्त्रबाधकल्पनापेक्षयाऽस्यार्थस्यौचित्यात् । निर्देशादित्यस्य तन्मूलभूतेत्त्वविधानसामर्थ्यादित्यर्थ इति तात्पर्यम् । आदिना तृषिमृषिकृषेरेकःपूर्वेत्यादिसङ्ग्रहः । ननु "प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न" इति वार्त्तिके प्रत्याहारशब्दस्य वर्णसमाम्नाये प्रसिद्धेः प्रत्याहारेष्वितामित्यनुपपन्नमत आह । आदिरन्त्येनेतीति । वार्त्तिके तादर्थ्यात्ताच्छब्द्यमिति भावः ।

ऊकालोऽच् । कुक्कुटरुते उकारे एकद्वित्रिमात्रत्वप्रसिद्धेरकारादयो नोक्ताः । ऊ इति एकद्वित्रिमात्राणां क्रमेण प्रश्लेषनिर्देशो व्याख्यानात् । तेन स्वोच्चारणकालसदृशो लक्ष्यते । स कालो यस्येति बहुव्रीहिः । तत्फलितमाह । उश्च ऊश्च उ३श्चेति । ननु उकालो ह्रस्व इति वाक्ये ऽणत्वात्सवर्णग्रहणे द्वित्रिमात्रयोरपि ह्रस्वसञ्ज्ञायां प्रदाय प्रलूयेत्यादौ "ह्रस्वस्य" इति तुक्स्यादिति चेन्न । ऊ अजित्येवाज्ग्रहणसामर्थ्याद्सदृशोऽजित्यर्थे सादृश्यस्य व्याख्यानात् कालकृतस्यैव ग्रहणमिति सिद्धे अधिकं काल-

---

भावौ इत्यन्योन्याश्रय इति वाच्यम् । इत्संज्ञालोपाभावसम्भावनाप्रयोज्या या स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वसम्भावना तादृशसम्भावनाविषयीभूतानां प्रातिपदिकानां प्रतिषेधो वक्तव्यः अक्वदित्यादि तात्पर्यग्राहकमित्यर्थेनादोषात् ।

*यणापत्तिरिति* । नचानुनासिक इत्यादौ " यस्येति च " इत्यकारलोपान्न यणप्राप्तिः नापीत्वप्राप्तिरिति शेखरासङ्गतिरिति वाच्यम् । "यचि भम्" इत्यत्र यकारसाहचर्येणाऽच्त्वहल्त्वोभयानाक्रान्त एवाच् गृह्यत इति भसंज्ञाया अप्रवृत्तौ " यस्येति च" इति लोपस्याऽप्रवृत्तेरिति भावः । वस्तुतस्तु प्रकृते नासिकाशब्दो नात्यन्तस्वार्थिककन्प्रत्ययान्तः किन्तु णासृधातुप्रकृतिकण्वुलन्तः । अत एव " घोणा नासा च नासिका " इति कोशः सङ्गच्छते । अन्यथा नासेत्यनेनैव सिद्धौ स्वार्थिककन्नन्तोपादानं व्यर्थं स्यात् । पर्यायस्वार्थिककन्नन्तानां कोशे कुत्राप्यदर्शनात् ।

*एकद्वित्रिमात्राणामिति* । नच सरूपसूत्रे शेखरे एकादिदशान्तानां द्वन्द्वैकशेषौ न भवतो ऽनभिधानादिति वक्ष्यमाणत्वेनेदमसङ्गतमिति वाच्यम् । तस्य सङ्कलितसंख्यातात्पर्येण द्वन्द्वैकशेषौ नेत्यर्थे तात्पर्येणादोषात् । वस्तुतस्तु वाक्त्वक्प्रिय इत्यादिवत् बहुव्रीहिः सुलभः । समाहारद्वंद्वे टच्प्रसङ्गेन प्राण्यङ्गत्वादितरेतरद्वन्द्वस्याभावेन बहुव्रीहिणैव तादृशप्रयोगाः साधनीयाः ।

ननु शास्त्रेऽनुनासिकोच्चारणाभावात् तत्त्वज्ञानं दुर्लभमत आह । प्रतिज्ञेति । प्रतिज्ञाविषयानुनासिक्यवन्त इत्यर्थः । पाणिनीया इत्यस्य पाणिनिप्रभृतिप्रोक्ता वर्णा इत्यर्थः । प्रतिज्ञा चायमेवमिति कथनं, वर्णानां तत्त्वज्ञापको व्यवहारश्च । ताभ्यां तज्ज्ञानं सुलभमिति भावः । प्रतिज्ञाग्रहणमुच्चारितसम्बन्धिकालसदृशकालस्यैव सञ्ज्ञा, न तु तेन गृहीतसम्बन्धिकालसदृशकालस्यापीत्यर्थेनादोषात् । तदुक्तं भाष्ये "यावत्तपरकरणं तावदत्र कालग्रहणम्" इति । न चाजिति वर्णग्रहणे जातिग्रहणस्य दुर्वारत्वात्तितउच्छत्रमित्यत्र दीर्घात्पदान्ताद्वेति तुगापत्तिरिति वाच्यम् । ज्ञापकसिद्धत्वेन तस्यासार्वत्रिकत्वात् । अन्तरङ्गत्वेन ह्रस्वत्वनिमित्तनित्यतुक एव प्राप्तेश्च । अज्ग्रहणं प्रतक्ष्येत्यादौ ह्रस्वस्येति तुग्व्यावृत्त्यर्थम् ।

---

सामानाधिकरण्यं च येनकेनापि पदेन न सर्वैः पदैः अपेक्ष्यते इति भाष्ये स्पष्टम् । *अण्त्वात्सवर्णग्रहणे इति* । न च ककारादिचिह्नाभावेनाऽण्त्वाभावात्कथमणुदित्सूत्रप्रवृत्तिरिति वाच्यम् । व्यासज्यवृत्तिधर्मानवच्छिन्ना या अण्वृत्तिविषयता तादृशविषयताप्रयोजकं पदं स्वबोध्याण्सवर्णान् गृह्णातीति ग्राहकशास्त्रस्यार्थेनाऽदोषात् । विवेचयिष्यते चेदमग्रे ।

*वर्णग्रहणे जातिग्रहणस्येति* । "यत्र यादृशवर्णत्वव्याप्यजात्यवच्छिन्नस्य ग्रहणं तत्र तादृशजात्यवच्छिन्नमात्रारब्धसमुदाये सा जातिरतिदिश्यते" इत्येतदर्थकवर्णग्रहणेजातिग्रहणमिति परिभाषयेति भावः । *तितउच्छत्रमिति* । ऊकालोऽजित्यत्राऽच्त्वजात्यवच्छिन्नस्य ग्रहणसत्त्वेनाऽच्त्वजात्यवच्छिन्नमात्रारब्धे अउ इति समुदाये ऽच्त्वजातेरतिदेशेन तस्य दीर्घसंज्ञायां "पदान्ताद्वा" इति विकल्पेन तुगापत्तिरिति भावः । *असार्वत्रिकत्वादिति* । वस्तुतस्तु एतत्परिभाषाया अस्वीकारेऽपि न क्षतिः । नच धिप्सतीत्यादौ "दम्भ इच्च" इत्यनेन इत्वे हलन्ताच्चेति कित्त्वं न स्यात् । इक्समीपाद्धलः परस्य सनो द्वितीयेन हला व्यवधानादिति वाच्यम् । इको झल् हलन्ताच्चेत्यनयोः स्थाने "इग्वतो झल्" इति न्यासेनाऽदोषात् । नच यियक्षते इत्यादौ सनः कित्त्वं स्यादिति वाच्यम् । वचिस्वपीत्यत्र भाष्ये वच्यादिभ्यो विहिते कितीत्युक्तत्वेन सत्यपि कित्त्वे क्षत्यभावात्, पूर्वोत्तरसाहचर्येणौपदेशिकधातोरेव ग्रहणाच्च । "लिङ्सिचावात्मनेपदेषु" इत्यत्र उश्चेतिज्ञापकादिगन्तस्य ग्रहणमिति पराजेष्ठा इत्यादौ न दोषः । नच "नपुंसकस्य झलच" इति सूत्रे भाष्ये "ऊर्जि" इत्यादौ नुम्वारणाय अच इत्यावर्त्त्य अचः परो यो झल् तदन्तस्येत्यर्थः कृतः । तथाच एतत्परिभाषाया अभावे तक्षीत्यादौ नुम् न स्यात्, अचः परो यो झल् तदन्ताङ्गस्याऽभावादिति वाच्यम् । "नपुंसकस्य, न यम" इति न्यासेनादोषात् । नच आयसावित्यादौ उगिल्लक्षणनुमापत्तिः एतत्परिभाषाभावे वृद्ध्यादेशेऽच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकप-

उच्चैरु। नात्र श्रुतिकृतमुच्चैस्त्वमुपांशुप्रयोगेऽव्याप्तेः। श्रुतिप्रकर्षस्याऽव्यवस्थितत्वाच्च। किन्तु स्थानकृतम्। उच्चैरित्यधिकरणशक्तिप्रधानम्। अधिकरणत्वञ्चोच्चारणं प्रति। तच्च ताल्वादीनां सभागत्वे एवेत्याशयेनाह। ताल्वादीति। इदं प्राचामनुरोधेन। वर्णसमाम्नायेऽकारस्य प्राथम्यात् कण्ठादीति वक्तुमुचितम्। एवमन्यत्रापि बोद्ध्यम्। प्रयत्नप्रेरितो वायुर्यदोर्ध्वभागे प्रतिहतोऽचं व्यञ्जयति तदा स उदात्त इति भावः। अजिति। ऊकाल इत्यतस्तदनुवर्त्तते। उदात्तत्वादीनामज्धर्मताया एव लोकप्रसिद्धत्वेन हल्स्वरप्राप्तौ व्यञ्जनस्याविद्यमानत्वाच्चेदं स्वरूपकथनपरं बोद्ध्यम्। आये इति। यच्छब्दः फिषोऽन्त इत्यन्तोदात्तः, जस्सुप्त्वादनुदात्तः, एकादेश उदात्तेनेत्येकार उदात्तः। अर्वाङिति। अभिमुखवाच्यव्युत्पन्नं फिषोऽन्त इत्यन्तोदात्तम्। आद्यस्य शेषनिघातेनाऽनुदात्तत्वम्। अर्वन्तमञ्चतीत्यर्थे कृदुत्तरपदप्रकृतिस्वरेण वाऽन्तोदात्तत्वम्। एकस्मिन्नच्युदात्तानुदात्तयोर्धर्मिणोर्मेलनाविरोधादाह। वर्णधर्माविति। बाहुलकादधिकरणे घञ्। अर्शआद्यजित्यन्ये। इयं त्रिसूत्री स्पष्टार्था। लोकवेदयोरुदात्तादिव्यवहारस्य प्रसिद्धत्वात्। ह्रस्वग्रहणमिति। ह्रस्वपदघटितग्रहणमित्यर्थः। अतन्त्रमिति। स्वशास्त्रसङ्केतितरूपेणाबोधकमित्यर्थः। किन्त्वर्धमात्रारूपार्थबोधकमिति भावः। एवञ्च दीर्घादिष्वप्यर्धमात्रैवोदात्ता। इत आरभ्य नवसूत्र्या "अ अ" इत्यतः प्रागुत्कर्षेणास्य त्रिपाद्यामपि प्रवृत्तिः। सर्वञ्चेदं भाष्ये स्पष्टम्। अर्धमुदात्तमिति वृत्तिस्तु सत्या सत्यभामेतिवद् व्याख्येया। उत्तरार्धमित्यस्य चार्धमात्रातोऽवशिष्ट उत्तरो भाग इत्यर्थः। वेदे तु यथाप्रयोगं प्रातिशाख्यादस्माच्च व्यवस्था। तस्य चेति। अनुदात्तस्येत्यर्थः। उदात्तेति। उदात्तस्वरितयोः परत्वे सतीत्यर्थः। तयोः परत्वञ्चोपस्थितानुदात्तापेक्षयैव। अन्यत्र —उदात्तस्वरितयोः परत्वाभावे। प्रातिशाख्ये इति। लोके त्वनुदात्त एवेति भावः। ह्रस्वस्वरितमुदाहरति। क्वेति। किमोदित्यत् "क्वाति" इति क्वादेशे "तित्स्व-

र्याप्तिकस्थानिताकत्वस्याऽभावेन "अचः परस्मिन्" इति स्थानिवत्त्वाप्रवृत्तेरिति वाच्यम्। अच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानितावच्छेदककादेशः स्थानिवदित्यचः परस्मिन्नित्यस्यार्थेनाऽदोषात्। प्रकृते च स्थानितावच्छेदकं यत्पूर्वत्वं परत्वञ्च तत्पर्याप्त्यनुयोगितावच्छेदकीभूतं पूर्वपराणुवृत्तितद्यक्तित्वम् तदेवाच्त्वपर्याप्त्यनुयोगितावच्छेदकमिति स्थानिवत्त्वं सुलभम्। नचैवं णिलोपादेः स्थानिवत्त्वं न स्यात्

रितम्" इति स्वरितः। दीर्घं तमुदाहरति । रथानामिति । ऐकार इति । "स्वरितो वा ऽनुदात्ते पदादौ"इत्येकारः स्वरितः। नोदात्तस्वरितोदयमिति निषेधस्तु "उदात्तादनुदात्तस्य स्वरित" इत्यस्यैवानन्तरस्येति न्यायात् । स्वरितपरमुदाहरति। शतचक्रमिति । अहेरित्यर्थेऽह्नः। वृत्रस्येत्यर्थः। "छन्दसि वा वचनं प्राङ् णौ चङ्युपधायाः" इति वचनाद् गुणाभावः । उदात्तस्वरितयोरिति स्वरितः । उदात्तयणो हल्पूर्वादिति तु न छान्दसत्वात् । यच्छब्दः फिष इत्यन्तोदात्तस्तदेकादेशश्च वा स्वरितः । स इति । उदात्तादिह्रस्वादिसञ्ज्ञक इत्यर्थः ।

मुख । उच्यतेऽसौ वचनः । बाहुलकात् कर्मणि ल्युट् । मुखसहिता नासिकेति विग्रहः । तया वचन इति, साधनं कृतेति समासस्तदाह । मुखसहितेत्यादि । मुखेति किम् । यमानुस्वाराणामेव प्रसज्येत । एवञ्चाङोऽनुनासिक इत्यत्रानुस्वारः स्यात् । नासिकेति किम् । शक्तेत्यादौ "अनुदात्तोपदेश" इत्यादिना कलोपो मा भूत् । अष्टादशेति । यद्यपीदं न व्यक्तिपक्षे व्यक्तीनामानन्त्यात् तथाप्यष्टादशधर्मवत्त्वमकारजातीयादेरित्यर्थः । ह्रस्वत्वादीनां तत्तत्समानाधिकरणोदात्तत्वानुनासिकत्वादीनाञ्च भेदमाश्रित्येदम्बोद्ध्यम् । एवमग्रेऽपि । लृवर्णस्येति । विवृतस्येत्यर्थः । तेन "लृति लृ वा" इति विधेयस्येषत्स्पृष्टस्य दीर्घत्वेऽपि न क्षतिः । दीर्घाभा-

---

अत्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मस्य स्थानितावच्छेदकणित्वपर्याप्त्यनुयोगितानवच्छेदकत्वादिति वाच्यम् । "णेरनिटि" इत्यस्य ण्यन्ताङ्गान्त्याल्लो लोप इत्यर्थेन स्थानितावच्छेदकात्त्वपर्याप्त्यनुयोगितायाः अत्त्वपर्याप्त्यनुयोगितायाश्चैकस्यैव धर्मस्यावच्छेदकत्वेनादोषात् । वस्तुतस्तु णित्वस्यैकारेऽपि पर्याप्तत्वेन न कोऽपि दोष इति सुधियो विभावयन्तु ।

*इति विग्रह इति* । वस्तुतस्तु मुखसहितया नासिकयेति न विग्रहः, किन्तु मुखद्वितीयया नासिकयेति । अन्यथोत्तरपदलोपस्य नित्यत्वेन मुखसहितनासिकयेति मूलस्यासङ्गत्यापत्तेरिति साम्प्रदायिकाः । अन्ये तु मुखपदं मुखसहिते लाक्षणिकं सूत्रे, शाकपार्थिवादौ पाठे न मानं नापि प्रयोजनमित्याहुः । *यमानुस्वाराणामिति* । प्रासादवासिन्यायमबुद्ध्वा ऽयं ग्रन्थ इति बोध्यम् । *न व्यक्तिपक्षे इति* । चिन्त्यमिदं, जातिपक्षेऽपि व्यक्तीनामानन्त्येन धर्मेत एवाष्टादशविधत्वस्योपपादनीयत्वात् । ननु स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप्यमिथोविरुद्धयावद्धर्मबोधनस्य विधापदार्थत्वेन ह्रस्वत्वादयो ऽष्टावेव धर्मा इति विधापदार्थोऽनुपपत्तिरित्यत आह *तत्तत्समानाधि-

वादिति। अत एव तुल्यास्यसूत्रे भाष्ये "ऌति सवर्णे" इत्यनेन पक्षे द्विलकाराभावे "अकः सवर्णे" इति दीर्घत्वे होतॄकार इति ऋकारघटितप्रयोगः सङ्गच्छते । ह्रस्वाभावादिति। इदमेओङित्यादौ भाष्ये स्पष्टम्। गानरोदनादौ चतुर्मात्रार्धमात्रादीनामुपलम्भेऽपि शास्त्रीयकार्ये उपयोगाभावाल्लोके प्रयोगेष्वप्रयोगाच्च नोक्ताः। अत एवानुदात्ततरस्यानुक्तिः। एकश्रुतेः स्वरान्तरत्वे इदमुपलक्षणं तस्या लोकेऽपि सत्त्वात्।

तुल्यास्य। तुल्यावास्यप्रयत्नौ यस्येत्यर्थः। आस्ये भवमास्यं व्याख्यानात्। तच्च वर्णोपयोगित्वात्स्थानमेव। प्रयत्नस्य पृथगुपादानात्। प्रकृष्टो यत्न आभ्यन्तरः। तस्य वर्णोत्पत्त्यव्यवहितप्राग्भावित्वरूपप्रकर्षवत्त्वात्। जनकत्वं षष्ठ्यर्थः। तत्तत्कार्यगतभेदं स्थानेष्वारोप्य भेदघटिततुल्यत्वस्य निर्वाहः। वस्तुतः सादृश्यं न भेदघटितमिति भाष्यसम्मतमिति न कश्चिद्दोषः। स्पष्टश्चेदं भाष्ये। तदाह। ताल्वादीति। शिक्षायाः कण्ठादीनाङ्कण्ठत्वादिनैव स्थानतोक्त्या तद्रूपेणैवाऽऽस्यशब्देन ग्रहणमिति तद्भागभेदमादाय नोदात्तादिषु सावर्ण्यभङ्ग इति बोध्यम्। यस्यैतद्द्वयं येन

---

करणेति*। उदात्तत्वविशिष्टानुनासिकत्वविशिष्टह्रस्वत्वमित्यादिक्रमेणाष्टादशविधत्वमिति भावः। *एकश्रुतेरिति*। अस्याः प्रचय इत्यपि व्यवहारः। *तुल्याविति*। ननु तुल्यं च तुल्यश्च इति विग्रहे "नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्" इति सूत्रेण नपुंसकस्यैवैकशेषे तुल्ये इति वक्तुमुचितम्। नच "अद्वन्द्वतत्पुरुषविशेषणानाम्" इति वार्तिकेन तन्निषेध इति वाच्यम्। "त्यदादीनि सर्वैः" इति सूत्रभाष्ये तस्य "त्यदादितः शेष" इत्यस्यैव निषेधकत्वमित्युक्तत्वात्। इति चेन्न। प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताकबोधविषयकशब्दतन्त्रविषये एव एकशेषप्रवृत्त्या प्रकृते तुल्यत्वरूपप्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधविषयकाऽर्थतन्त्रस्यैव स्वीकारेणैकशेषाप्रवृत्तेः। व्यक्तिगतसंख्याभिप्रायेण च द्विवचनोपपत्तिः। न ब्राह्मणं हन्यादित्यत्र ब्राह्मणशब्दादेकवचनन्तु जातिगतैकत्वविवक्षायां बोध्यम्। *आस्ये भवमिति*। आस्यशब्दाद्भवार्थे "अर्शआदिभ्योऽच्" इत्यच्। *व्याख्यानादिति*। सूत्रे आस्यपदोपादानरूपादित्यर्थः। अन्यथा सर्वेषां वर्णानां जनकस्याऽऽस्यस्य तुल्यत्वात्तद्वैयर्थ्यं स्पष्टमेव। *वर्णोपयोगित्वादिति*। वर्णत्वव्याप्यधर्मावच्छिन्नजन्यतानिरूपितजनकतावत्त्वादिति भावः। तेन कण्ठादिभागानां न स्थानत्वम्। अत एवाकारादीनां दीर्घादिभिः सावर्ण्येन गङ्गीस्यादित्यादिसिद्धिः। *जनकत्वं षष्ठ्यर्थ इति*। तथाच यज्जनकावास्यप्रयत्नौ यज्जनकाऽऽस्यप्रयत्नाभ्यां तुल्यौ तौ मिथः सवर्णसंज्ञौ भवतः। *न भेदघटितमिति*। "नञिवयुक्तमन्य" इत्यत्र इवशब्दोपादानादेतद्गम्यते

यदीयेनैतद्द्वयेन तुल्यमित्यर्थः । "यजुष्येकेषाम्" इति निर्देशाद्यावदास्यभवतुल्यत्वं ग्राह्यम् । अत एवैचोः सावर्ण्यमाशङ्क्य "नैतौ तुल्यस्थानौ" इति भाष्ये समाहितम् । अत एव वलयोर्न सावर्ण्यम् । तेन तद्वानासामित्यादौ "तोर्लि" इति न । अत एव प्रयत्नशब्देन यत्नमात्रग्रहणमिति पक्षे यत्किञ्चित्प्रयत्नभेदे यत्किञ्चित्प्रयत्नैक्यमादाय सवर्णसञ्ज्ञेत्यर्थो "झरो झरि सवर्णे" इति सवर्णग्रहणेन ज्ञापकेन साधितो भाष्ये। तेन स्थानांशे यावत्स्थानसाम्ये इत्येव स्वारसिकोऽर्थ इति प्रतीयते । न च यावदास्यभवतुल्यत्वविवक्षणे प्रयत्नग्रहणं व्यर्थम् । प्रयत्नस्याप्यास्यभवत्वादिति वाच्यम् । ह्रस्वदीर्घयोः सावर्ण्यानापत्तेः । तयोर्जनकानामास्यभवानां वायुसंयोगानामतुल्यत्वात् । तस्मादास्यभवानाङ्कण्ठादीनामेव ग्रहणमिति बोधनाय तत्सार्थक्यात् । आस्येति किम् । तप्ता । झरो झरीति लोपो मा भूत् । प्रयत्नेति किम् ।

---

इत्यन्यत्र निरूपितम् । *यावदास्यभवतुल्यत्वमिति* । स्वजनकस्थानप्रयत्नजन्यत्वं–स्वाजनकस्थानप्रयत्नाजन्यत्वमिति सम्बन्धाभ्यां वर्णविशिष्टो वर्णः सवर्णसंज्ञको भवतीत्यर्थः । तेनेकारसावर्ण्यमेकारस्य न, तस्य चेकाराजनककण्ठस्थानजन्यत्वात् ।

नन्वेवमेकारसावर्ण्यमिकारे प्रसक्तमेकारजनकतालुस्थानजन्यत्वात्स्वजनकमूर्धादिस्थानाजन्यत्वाच्चेति चेन्न। आद्यसम्बन्धे यावत्पदनिवेशेनेकारस्य तालुस्थानजन्यत्वेऽपि यावत्स्थानाजन्यत्वेनाऽऽद्यसम्बन्धेन वर्णवैशिष्ट्याभावात् । अथवा परस्परनिवेशेनापि वारणसम्भवात् ।

तथाहि, परस्परत्वञ्च सम्बन्धविशिष्टसम्बन्धसम्बन्धित्वम्। सम्बन्धे सम्बन्धवैशिष्ट्यञ्च स्वीयप्रतियोगितासमानाधिकरणानुयोगिताकत्वं–स्वीयानुयोगितासमानाधिकरणप्रतियोगिताकत्वं–स्ववृत्तिसम्बन्धतावच्छेदकरूपवत्त्वं स्वभिन्नत्वमेतच्चतुष्टयसम्बन्धेन ।

तथाच प्रकृते तालुस्थानजन्यत्वसम्बन्धप्रतियोगिताकण्ठतालुस्थानजन्यत्वसम्बन्धानुयोगितयोरिकारे अभावान्न दोषः । देवदत्तो यज्ञदत्तं नमति यज्ञदत्तो विष्णुमित्रमित्यत्र परस्परमिति प्रयोगवारणायाऽऽद्यौ सम्बन्धौ । तत्रैव प्रथमो नमति द्वितीयश्च प्रथमं ताडयतीत्यर्थके तद्वारणाय तृतीयः सम्बन्धः। देवदत्तः स्वं नमतीत्यत्र तद्वारणाय तुरीयः सम्बन्धः।

अथवा वर्णविशिष्टवर्णविशिष्टः सवर्णसंज्ञको भवतीत्यर्थः । उभयत्रापि वर्णवैशिष्ट्यं स्वजनकस्थानप्रयत्नजन्यत्वं–स्वाजनकस्थानप्रयत्नाजन्यत्वमिति सम्बन्धद्वयेन।प्रकृते चैकारवैशिष्ट्यस्येकारे सत्त्वेऽपि तद्वैशिष्ट्यस्यैकारेऽसत्त्वेन न दोष इत्यलमतिविस्तरेण ॥

प्राक्श्चोततति । प्रेति किम् । शचयोः श्वासाघोषविवाराख्यबाह्यप्रयत्नसाम्येन तत्रैव दोषात् ।

कस्य किं स्थानमित्याशङ्कायामाह । अकुहेति । यद्यपि सर्ववर्णोच्चारणे कण्ठव्यापार आवश्यकस्तथापि चकाराद्युच्चारणे ताल्वादिव्यापारोऽपि तथा अकारादीनामुच्चारणे तु नेति भावः । कचयोस्तु न सावर्ण्यम् । यावत्स्थानसाम्याभावात् । भिन्नस्थानकथनवैयर्थ्यापत्तेश्च । अत्र कण्ठपदं कण्ठस्थानतत्समीपजिह्वामूलस्थानोभयपरम् । तेन कण्ठ्यावहौ जिह्वामूले तु कुः प्रोक्त इति शिक्षया न विरोधः । जिह्वामूलीयपदस्य च वर्णविशेषे रूढिरिति न व्यवहारातिप्रसङ्गः । अत एवायोगवाहेषु जिह्वामूलीयगणनं भाष्ये । तत्तद्वर्णोत्पत्तेः प्राक् तत्तत्स्थानादौ जिह्वास्पर्शाद्यनुभवेन तत्तद्वर्णानां तत्तत्स्थानत्वानिर्णयेऽप्यकुहेत्यादिकथनं साधारणधर्मबोधनायानुवादकम् । न त्वेतदेव कण्ठादिस्थानविधायकमिति भ्रमितव्यम् । विसर्जनीयपदेनात्र साहचर्यादकाराश्रयस्य ग्रहणम् । अत एव "अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" इति शिक्षया न विरोधः । दन्ता इति । दन्तसंयुक्तदेशा इत्यर्थः । अतो भग्नदन्तस्याप्युच्चारणं भवत्येव । उप पश्च ध्मायेते अनेन तत्र भव इति योगेनोपध्मानीयस्यौष्ठ्यत्वमित्याह । उपूपेति । रूढत्वाच्च न व्यवहारातिप्रसङ्गः । नासिका चेति । चेन स्वस्ववर्गानुकूलं ताल्वादि गृह्यते । अत एवैषां प्रातिशाख्ये नासिकायां भव इत्यर्थकनासिक्यशब्देन व्यवहारः । यत्तु—

अनुस्वारयमानां च नासिकास्थानमिष्यते ।

इति शिक्षोक्तेरेषां नासिका करणम् । किञ्च स्थानत्वे कङयोः सा-

---

*प्राक् श्चोततीति* । सवर्णसंज्ञायां झरोझरीति शलोपापत्तिः । *तत्रैव दोषादिति* । यत्किञ्चित्प्रयत्नैक्यसत्त्वेऽपि सवर्णसंज्ञेत्युक्तत्वात् । *कण्ठव्यापार आवश्यक इति* । *चिन्त्यमेतत् । चकाराद्युच्चारणे कण्ठव्यापारस्याऽऽवश्यकत्वेऽपि तेषां तत्स्थानकत्वे प्रमाणाभावात् । नहि केवलं कण्ठव्यापारस्य चकाराद्युच्चारणे उपयोगित्वेन चकारादिनिरूपितं स्थानत्वं कण्ठस्येति शक्यते वक्तुम् । किन्तु वाय्वाघाताद्यदेशावच्छेदेन यो वर्णो ऽभिव्यज्यते तन्निरूपितस्थानत्वं तद्देशस्यैव । अन्यथा सर्ववर्णानां मूर्धन्युरआदिव्यापारावश्यकत्वादुरस्यमूर्धन्यत्वाद्यापत्तिः । *उभयपरमिति* । अन्यतरपरमिति वक्तुं युक्तम् । अकारादीनामपि जिह्वामूलस्थानकत्वापत्तेः । *गुणत्वेन व्यवहारस्त्विति* । "वृद्धिरादैच्" इति सूत्रे भाष्ये इति शेषः ।

वर्ण्यानापत्तिः यावत्स्थानैक्याभावात् । यत्किञ्चित्स्थानैक्येन तत्त्वे तु ञमामपि परस्परं सावर्ण्यापत्तिरिति । तन्न । कण्ठादीनामपि करणत्वस्यैव "अस्यन्त्यनेन वर्णान्" इति भाष्यात्प्रतीतेः । स्थानत्वव्यवहारस्तु वर्णाभिव्यक्तिजनकताल्वादौ वर्णजनकवायुसंयोगाधारे वर्णाधारत्वाऽऽरोपेण । तत्तत्स्थानजिह्वाग्रादिसंबन्धेन वर्णोत्पत्त्या जिह्वाग्रादौ तत्संबन्धजनकप्रयत्नविशेषे स्पृष्टतादौ च करणत्वव्यवहारः । वर्णाभिव्यक्त्यनन्तरभावी सावर्ण्यानुपयुक्त आन्तरतम्यपरीक्षोपयुक्तश्च कण्ठविवरादिनिष्ठविकासादेरास्यबहिर्देशावच्छिन्नकार्यस्य जनको यत्नो गुणशब्देनोच्यते । अकारादिनिष्ठानुनासिक्यस्य "भेदकत्वाद् गुणस्य" इत्यादौ गुणत्वेन व्यवहारस्तु कण्ठाद्यवच्छिन्नवायुसंयोगेनोत्पन्नेषु नासावच्छिन्नवायुसंयोगेन तद्रूपधर्मोत्पत्त्या । एवञ्च नासिकायास्तत्र गुणजनकत्वादनुनासिकाकारादीनां नासिकास्थानं नोक्तं मूले । "एकोऽयमात्मोदकन्नाम तस्य गुणभेदादन्यत्वं भवति अन्यदिदं शीतमन्यदिदमुष्णम्" इति दृष्टान्तपरभाष्येण तथैव प्रतीतेः । आत्माऽत्र द्रव्यम् । उदात्तत्वादीनां गुणत्वव्यवहारस्तु सावर्ण्यानुपयुक्तत्वान्तरतम्यपरीक्षोपयोगित्वरूपसादृश्येनेति बोद्धव्यम् । ङादीनान्तु तद्गुणरहितस्वरूपानुपलम्भेन उभयावच्छेदेन वायुसंयोगोत्तरमेव स्वरूपोत्पत्त्या विनिगमनाविरहेणोभयोः स्थानत्वम् । अनुस्वारयमानाञ्चेति शिक्षायां चेन ङादीनामपि सङ्ग्रह इति युक्तम् । अत एव कण्ठ्योऽकार इत्याद्युक्त्वा "नासिक्यान्नासिक्ययमानुस्वारानिति स्थानानि" इत्युक्तं प्रातिशाख्ये । नासिक्या ङञणनमा इति तद्व्याख्यातारः । कङयोः सावर्ण्यन्तु भवत्येव । "आस्ये तुल्यदेशप्रयत्नम्" इति वार्त्तिके किमास्योपादाने प्रयोजनमिति प्रश्ने प्रयत्नविशेषणमास्योपादानमित्युक्त्वा तद्व्यावर्त्यत्वेन बाह्यप्रयत्नान् प्रदर्श्य "यथा तृतीयास्तथा पञ्चमा आनुनासिक्यमेषामधिको गुण" इति भाष्येण तस्य बाह्यप्रयत्नत्वोक्त्याऽत्र सूत्रे नासिकाया आस्यशब्देन, तत्रत्यप्रयत्नस्य च प्रयत्नशब्देनाग्रहणबोधनात् । नासिका आस्यबाह्येति वदतां मते तद्ग्रहणाभावाच्च । अत एव बाह्यप्रयत्नानुपक्रम्य—

अमो ऽनुनासिका न ह्रौ नादिनो हझषः स्मृताः ।
ईषन्नादा यणश्चैव श्वासिनस्तु खफादयः ॥
ईषच्छ्वासाँश्चरो विद्यादित्युक्तं शिक्षायाम् ।

नादेति संवारघोषयोरुपलक्षणं, श्वासेति विवाराघोषयोः, न ह्राविन्यु-

पलक्षणम् ऐचः सर्वस्य प्लुतलृकारस्य च अनुनासिकस्यादर्शनादित्यलम् । एदैतोरित्यादौ लोकानुभवसिद्धार्थानुवादके तपरशास्त्राप्रवृत्त्या प्लुतानामपि तत्स्थानत्वं बोध्यम् । तथा च पाणिनीयशिक्षा—

कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू ।
स्युर्मूर्धन्या ऋटुरषा दन्त्या लृतुलसाः स्मृताः ॥
जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः ।
एऐ तु कण्ठ्यतालव्यावोऔ कण्ठोष्ठजौ स्मृतौ ॥
अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलश्च दन्ताश्च नासिकोष्ठौ च तालु च ॥
हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् ।
उरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥

इति । यत्तु दन्तोष्ठादि समुदितं स्थानमिति । तन्न । शिक्षायां दन्त्योष्ठ्यः कण्ठ्यतालव्यावित्यादौ तत्र भव इत्यधिकारविहितयतः प्रत्येकमनुत्पत्त्यापत्तेः । दन्तोष्ठ्यमित्यादि त्वसङ्गतमेव । स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववच्छरीरावयवसमुदायस्य शरीरावयवत्वाभावात् । एतेन दन्तोष्ठरूपमतिरिक्तं स्थानमित्यपास्तम् । अष्टौ स्थानानीतिप्रतिज्ञाविरोधाच्चेति दिक् । सूत्रे प्रशब्देन विलक्षणार्थबोधेऽपि लोके यत्नप्रयत्नयोः पर्यायतेति ध्वनयन्नाह । प्रयत्नो द्विधेति । क्वचिद् यत्न इत्येव पाठः । चतुर्धेति । यत्तु—

स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम् ।
तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥

इति शिक्षावाक्याद्विवृततरविवृततमयोः प्रतीत्या नाज्झलाविति सूत्रभाष्यादूष्मणामीषद्विवृतत्वस्य च प्रतीत्या चतुर्धेत्यसङ्गतमिति । तन्न । नाज्झलावितिसूत्रेण विवृतत्वव्याप्यानामेषां सवर्णसञ्ज्ञानुपयुक्तत्वबोधनमित्याशयात् । भाष्यमते तु सन्तु सप्त प्रयत्नाः । एवञ्चैदैतोश्च न सावर्ण्यप्रसक्तिः प्रयत्नभेदादिति बोद्धव्यम् । नाज्झलाविति सूत्रमपि प्रयत्नभेदप्राप्तसावर्ण्याभावानुवादकं सत् तस्यैव बोधकम् । अत एव भाष्ये तन्न वक्तव्यमिति नोक्तम् । स्पृष्टादीनामाभ्यन्तरत्वन्त्वोष्ठप्रभृतिकाकलकपर्यन्तरूपास्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां स्पर्शेषत्स्पर्शदूरावस्थानसमीपावस्थानरूपाभ्यन्तरकार्यकारित्वाद्वर्णोत्पत्त्यव्यवहितप्राग्भावित्वाच्च बोद्धव्यम् । तत्र बहूनामेक-

स्थानत्वेऽपि कस्य चिदुच्चारणे सम्यक्स्पर्शः कस्य चिदीषदिति शिक्षाकारोक्तिमनुभवं चानुसृत्य विवेक्तव्यम् । प्रयतनमिति नपुंसके भावे ल्युट् । प्रयत्नमित्यपपाठः । नङन्तस्य पुंस्त्वात् । तथा च शिक्षा—स्वराणामूष्मणाञ्चेत्याद्यनन्तरम्—

अचोऽस्पृष्टा यणस्त्वीषन्नेमस्पृष्टाः शलः स्मृताः ।
शेषाः स्पृष्टा हलः प्रोक्ता इति ।

अचोऽस्पृष्टाः स्पर्शाभावरूपविवृतत्ववन्तः । यणस्त्वीषदित्यनेन तेषामीषत्स्पृष्टत्वमीषद्विवृतत्वञ्च बोधितम् । नेम इत्यर्धे । तेन शलामीषद्विवृतत्वं यणपेक्षयाऽधिकविवृतत्वं चेति बोद्धव्यम् । अत्र शिक्षोक्तव्याप्यधर्मवतां व्यापकधर्ममादाय न सावर्ण्यमिति यणां चवर्गादिभिर्न सावर्ण्यम् । तेनाश्चित इत्यादौ न यादिः परसवर्णः । विवृतमेवेति । प्रक्रियादशायां विवृतत्वम्प्रतिज्ञेयमित्यर्थः । तेन दण्डाढकादौ दीर्घसिद्धिः । अन्यथा संवृतस्य ह्रस्वाकारस्य विवृतेन दीर्घेण सावर्ण्याभावात् स न स्यादिति भावः । दीर्घाकारस्य विवृततरत्वन्तु पाणिनिशिक्षानुक्तत्वान्नैतच्छास्त्रप्रक्रियोपयोगीति दिक् ।

तस्य प्रयोगे संवृतत्वे मानमाह । अ अ । प्रयत्नभेदाद्दीर्घाभावः । अत्रोद्देश्ये सवर्णग्रहणं जातिनिर्देशो वा न, व्याख्यानात् । अधिकारत्वे फलमाह । त्रिपाद्यामपीति । अन्यथा गोधुङ्मानित्यत्र घत्वजश्त्वानुनासिकेषु भष्भावानापत्तिरिति भावः । वस्तुतो घत्वे कृते "झय"इति वत्वापत्तिर्दोषः । न च ततः परत्वाज्जश्त्वानुनासिकत्वयोस्तदप्राप्तिरिति वाच्यम् । विप्रतिषेधे परमित्यस्य यथोद्देशत्वेन त्रिपाद्यामप्रवृत्तेः । "पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य" इत्यनेन तस्या यथोद्देशत्वस्यैव बोधनात् । अन्य-

---

*विवृततरत्वन्त्विति* । नारदशिक्षोक्तमिति भावः ।

*प्रयत्नभेदादिति* । आद्यस्य विवृतत्वादन्त्यस्य संवृतत्वात् । न चानेनैवान्त्यस्य विवृतस्य संवृतादेशे तस्यासिद्धत्वादुक्तापत्तिस्तदवस्थैवेति वाच्यम् । पृथग्द्वयोर्निर्देशेन तस्य मूलत एव संवृतत्वस्वीकारात् । *दीर्घाभाव इति* । प्रयत्नभेदेनाक्षरसमाम्नायस्थाकारेणात्रत्यद्वितीयस्याग्रहेणाऽत्वाभावादित्यर्थः । अत एव "आद् गुण" इति गुणोऽपि न । मूले च प्रयत्नभेदेन अद्दीर्घयोरभाव इति विग्रहः । अत्पदेन च गुणस्य ग्रहणम् । गुणेन ह्रस्वस्यैव प्राप्तेः ।

*घत्वजश्त्वानुनासिकेषु भष्भावानापत्तिरिति* । नन्वेतेषु कृतेषु प्राप्तेषु वा । नाद्यः । तदनन्तरं सर्वथा भष्भावाप्राप्तौ मूलासङ्गतेः । नान्त्यः । घत्वात्प्राक् झषन्त-

था परस्यासिद्धत्वे विप्रतिषेधसूत्रस्य सिद्धत्वात्परिभाषान्तराणामिवास्यापि कार्यकालपक्षे तेनाकर्षणापत्तेः। अत एव भाष्ये वत्वमेवापादितम्। अधिकारत्वादेव "श्चुत्वं धुटि सिद्धं वाच्यम्" इत्यादि चरितार्थम्। एवं च यत्रानुवृत्तिस्तस्यासिद्धत्वम्। पूर्वत्वञ्च क्वचित्सपादसप्ताध्याय्याः क्वचित्सूत्रान्तरसहितायाः। तत्रायमर्थः। "होढ" इत्यादावस्योपस्थितौ वाक्यभेदेनान्वयः। हस्य ढो भवति इदञ्च शास्त्रं पूर्वत्रासिद्धमिति। अत एव "न मु ने" इत्यादिभिस्तन्निषेध उपपद्यते। पूर्वत्रेति सञ्ज्ञाहकमेव। शृङ्गग्राहिकयैव तु तत्तच्छास्त्रं प्रति तस्यासिद्धत्वं प्रतिपाद्यते। तेनापवादस्य यं प्रत्यपवादत्वं तत्रासिद्धत्वाभावेऽप्यन्यत्रासिद्धत्वं भवत्येव। असिद्धमिति। सिद्धं निष्पन्नं प्रवृत्तम्। सिद्धश्च प्रत्ययविधावित्यादौ तथा दर्शनात्। तद्भिन्नमसिद्धमनिष्पन्नमप्रवृत्तम्। यद्यपि लोकेऽनाहार्यज्ञानस्यैव प्रवर्त्तकत्वं निवर्त्तकत्वञ्च दृष्टं तथापीह शास्त्रप्रामाण्यादाहार्यारोपोऽपि शास्त्रप्रवृत्तावप्रवृत्तौ च नियामक इति बोध्यम्। अत्र कार्यासिद्धत्वे ऽमू इत्याद्यसिद्धिः। अद अ औ इति स्थिते परत्वान्मुत्वे तस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्याऽसिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेनाकाराभावेन पररूपाद्यनापत्तिः। अतिदेशस्याऽऽरोप-

---

त्वाभावेन पूर्वरीत्या मूलासङ्गतेः। तस्मात् षत्वे कृते जश्त्वानुनासिकभष्भावेषु प्राप्तेषु इति व्याख्येयम्। मूलस्य चात्रैव तात्पर्यं वर्णयन्ति।

ननु जश्त्वं बाधित्वाऽपवादत्वाद् भष्भावः स्यात्। नच तं बाधित्वा परत्वात् अनुनासिकः, तं च अन्तरङ्गत्वाद् बाधित्वा जश्त्वं, तच्च अपवादत्वाद् बाधित्वा भष्भाव इति चक्रकापत्तिरिति वाच्यम्। अपवादत्वाज्जश्त्वमन्तरङ्गत्वाच्चानुनासिकं बाधित्वा भष्भावसिद्धेः। कार्यकालपक्षे त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्तेरिदानीं सुवचत्वात्। तत्र तदप्रवृत्तिबीजस्य बहिरङ्गदृष्ट्याऽन्तरङ्गासिद्धत्वरूपस्य पूर्वत्रासिद्धमित्यस्याधिकारत्वाभावेऽसत्त्वात्। ततश्च अधिकारत्वाभावे नेदं दूषणम् इत्यरुचेराह। *वत्वापत्तिरिति*। प्रतिपदोक्तत्वादिति भावः। *शृङ्गग्राहिकयेति*। तत्तच्छास्त्रमनूद्य तद्दृष्ट्याऽसिद्धत्वं बोध्यते इत्यर्थः। वस्तुतस्तु पूर्वत्वेन रूपेण सामान्यलक्षणप्रत्यासत्त्या पूर्वदृष्ट्याऽसिद्धत्वबोधनेनोपपत्तौ चिन्त्यमिदम्। नच "न मु ने" इतिनिषेधासङ्गतिरिति वाच्यम्। अदसोऽसेरित्येकवाक्यतापन्नपूर्वत्रासिद्धमित्यत्रत्यपूर्वपदार्थे "आङो नाऽस्त्रियाम्" "टाङसि" "अकः सवर्णे" इत्येतद्भिन्नत्वेन नमुने इति निषेधेन सङ्कोचेनादोषात्। एवं नलोपः सुप्स्वरेत्यनेनापि सुप्स्वरादिविधिभिन्नशास्त्राभिन्नत्वेन "नलोपः प्रातिपदिक" इति सूत्रैकवाक्यतापन्नपूर्वत्रासिद्धमित्यत्रत्यपूर्वपदार्थे सङ्कोच इति न दोषः। एवं श्चुत्वं धुटीति वार्तिकेन श्चुत्वविधायकैकवाक्यतापन्नपूर्वत्रेत्येतद्घटकपूर्वपदार्थे "ङःसिधुट्" इत्येतद्भिन्नत्वेन

रूपत्वान्निरधिष्ठानारोपासम्भवेन कार्यप्रवृत्तेरत्र पक्षे आवश्यकत्वात् । शास्त्रासिद्धत्वे तु यत्राप्यन्तरङ्गत्वात्त्रैपादिकं प्रवृत्तं तत्रापि तत्तच्छास्त्रे एवाभावारोपेण तन्निवृत्तिबुद्धेरभाव आदेशबुद्ध्यभावो लक्ष्ये जातत्वबुद्ध्यभावश्च । जायमानं कार्यं त्वादेशे एव स्थानिबुद्ध्या प्रवर्त्तते । "न हि रजतभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयति" इति न दोषः । यत्र तु सहप्रसङ्गस्तत्राप्रवृत्तिरेवाभावारोपात् । न च "पूर्वत्र न" इत्येव सूत्रमस्त्विति वाच्यम्। पूर्वशास्त्रप्राप्तौ निषेध इत्यर्थे "नलोपः सुप्" इति सूत्रासङ्गतेः । तद्धि निय-

---

सङ्कोचः । एवमपवादशास्त्रैकवाक्यतापन्नपूर्वत्रेत्येतद्घटकपूर्वपदार्थे उत्सर्गशास्त्रभिन्नत्वेन सङ्कोच इति दिक् ।

*अनाहार्यज्ञानस्येति* । बाधज्ञानसमकालिकेच्छाजन्यज्ञानमाहार्यज्ञानं तद्भिन्नस्येत्यर्थः । *पररूपाद्यनापत्तिरिति* । नच मुत्वस्यासिद्धत्वे देवदत्तहन्तृहतन्यायेन तत्स्थान्यकाराभावेऽपि अदस्शब्दाद्याकारेण त्यदाद्यत्वनिष्पन्नाकारस्य पररूपं भवत्येवेति कथं पररूपानापत्तिरिति वाच्यम् । इष्टपररूपाद्यनापत्तिरिति तदर्थस्वीकारात् । वस्तुतस्तु मुत्वशास्त्रेण स्वघटितं साधु तदितरत्सर्वमसाध्विति बोधनेन 'अ अ औ' इत्यस्यासाधुत्वेन यत्किञ्चिद्बोधितसाधुत्ववत्येव सर्वशास्त्रप्रवृत्त्या यथाश्रुतमेव साधु । मुत्वस्यासिद्धत्वेऽपि तदधिकरणकालस्यासिद्धत्वे प्रमाणाभावेनाधमात्राधिककालशून्यत्वरूपसंहिताया आद्याकारान्त्याकारयोरभावेन पररूपप्राप्त्यभावाच्च ।

परेतु कार्यासिद्धत्वस्य स्वीकारेऽपि "पूर्वत्रासिद्धम्" इत्यस्य त्रैपादिकं शास्त्रं न प्रवृत्तं तत्कृता स्थानिनिवृत्तिरपि न जातेति सम्भावनायां यद्भवति तद्भवति यत्र भवति तत्र भवतीत्यर्थकरणेन अमू इत्यादौ मुत्वे जाते ऽपि मुत्वं न कृतं तत्कृता स्थानिनिवृत्तिर्न जातेति सम्भावनया उकारे एव अकारबुद्ध्या पररूपे जाते सन्नियोगशिष्टन्यायेन मकारस्यापि निवृत्तौ वृद्धौ तद्घटकमात्रोद्देश्यकविकाराभावेन तल्लक्ष्यत्वाभावात्पुनर्मुत्वे "अमू अमी" इत्यादिसिद्धिः । नच "पूर्वत्रासिद्धम्" इत्यस्य तादृशार्थकत्वे प्रमाणाभाव इति वाच्यम् । हर एहीत्यादौ लोपस्यासिद्धत्वेऽपि स्थानिबुद्धेरभावेन पूर्वत्रासिद्धमित्यस्य वैयर्थ्यापत्तेः एतादृशार्थकल्पनात् । नचामूदृक् अमूभ्याम् अमीभिरित्यादौ तद्घटकमात्रोद्देश्यकविकारसत्त्वेन पुनर्मुत्वं न स्यादिति कार्यासिद्धत्वपक्षो ऽसङ्गत इति वाच्यम् । "न मु ने" इति निषेधेन मुत्वे लक्ष्येलक्षणन्यायो न प्रवर्तत इति कल्पनेनादोषात् । अन्यथा अद अ आ इत्यस्यां दशायां परत्वान्मुत्वे तस्यासिद्धत्वात्पररूपे लक्ष्येलक्षणन्यायेन मुत्वाप्राप्त्येनादेशगुणयोः कृतयोः मुत्वे च नादेशप्राप्त्यभावेन तद्वैयर्थ्यं स्पष्टमेवेत्याहुः ।

*त्रैपादिकं प्रवृत्तमिति* । यत्तु तादृशप्रयोगस्याभावान्नास्योपयोगः । नच पिपठिषतेः क्विपि पिपठीरित्यादौ अन्तरङ्गत्वात्षत्वे तस्यासिद्ध-

मार्थम्। त्वद्रीत्या राजन्–अश्व इत्यस्यां दशायाङ्कस्यापि पूर्वशास्त्रस्याप्राप्त्यैत-न्निषेधाप्रवृत्तौ नलोपे जाते "भुक्तवन्तम्" इति न्यायेनैतदप्रवृत्तौ राजाश्वे दीर्घसिद्ध्या नियमानुपयोगात्। राजभ्यामित्यादावपि दीर्घापत्तेश्च। पूर्वशा-स्त्रविषयसम्भावनायामित्यर्थे राजभ्यामित्यादौ नलोपे सुब्विधिदीर्घविषय-सम्भावनया सर्वथा नलोपानापत्तेरिति दिक्।

बाह्यप्रयत्न इति। काकलकाधस्ताद्गलविवरसङ्कोचविकासश्वासो-त्पत्तिध्वनिविशेषरूपनादतद्विशेषरूपघोषाल्पघोषप्राणाल्पत्वमहत्त्वरूपकार्यक-रत्वमेषाम्। तथाहि—

आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया।
मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्॥
सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णान् जनयते, इति शिक्षायामुक्तम्।

आत्मान्तःकरणं संस्काररूपेण स्वगतानर्थान् बुद्ध्या स्ववृत्त्या समेत्यै-कबुद्धिविषयान् कृत्वा तद्बोधनेच्छया मनो युक्तं करोति, तदिच्छावन्मनः कायाग्निञ्जाठरमग्निमभिहन्ति, स कायाग्निः, सोदीर्णः स मारुतः उदी-र्णः ऊर्ध्वं प्रेरित इत्यादिस्तदर्थः। एवञ्च शब्दप्रयोगेच्छयोत्पन्नयत्ना-भिहताग्निना नाभिप्रदेशात्प्रेरितो वायुर्वेगान्मूर्धपर्यन्तङ्गत्वा प्रतिनिवृत्तो वक्त्रं प्राप्य उक्तयत्नसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्था-नान्याहत्य वर्णानभिव्यनक्ति। ततो यत्नविशेषेण गलविवरविकासादीन् करोति, तत्र ये तत्तत्स्थानाभिघातका यत्नास्ते आस्यान्तर्गततत्तत्कार्यका-रित्वादाभ्यन्तरा इत्युच्यन्ते। गलविवरविकासादिकराश्चास्यबहिर्भूतदेशे कार्यकरत्वाद् बाह्या इति। मात्राकालिकत्वादिरूपह्रस्वत्वादिकन्तु वा-य्वल्पत्वमहत्त्वकृतमिति नाभिप्रदेशात्प्रेरकयत्न एव कश्चिद्विलक्षणोऽल्पं

---

त्वाद्रुत्वे तादृशलक्ष्यसम्भव इति वाच्यम्। षत्वस्यासिद्धत्वात्क्विपि अतो-लोपे सुप्रत्यये हल्ङ्यादिलोपे पदान्तत्वेन षत्वस्याप्राप्तेः। एतन्मूलक-मेव पठ्यते असिद्धशास्त्रप्रतिबन्धकसापादिकशास्त्रप्रवृत्तिसम्भावनायां पूर्वं त्रैपादिकं न प्रवर्तत इति; तन्न। लूनमिच्छत्या लून्युः प्रस्तीम्युरित्यादिलक्ष्यस-म्भवेनास्य ग्रन्थस्याऽऽवश्यकत्वात्। तत्र हि लूत इत्यत्रैव "ल्वादिभ्यः" इत्य-नेन नत्वे पश्चात्क्यजन्तात्क्विपि ङसि यणि च "ख्यत्यात्परस्य" इत्युत्वं भवति नत्वादीनामसिद्धत्वात्। *दिगिति*। अत्रेदं चिन्त्यम्—"पूर्वत्र" इत्येव सूत्रमस्तु। आमन्त्रितमिति सूत्रादविद्यमानवदित्यनुवर्तते इति॥

वायुं प्रेरयति कश्चिदधिकमिति तस्य वायुप्रेरणारूपङ्कार्यमास्यबाह्य-देशमिति तदपि बाह्यमेव । अत एव अइउण्सूत्रे भाष्ये ह्रस्वत्वा-दिजनकयत्नस्यास्यविशेषणेन सवर्णसूत्रे ऽग्रहणमित्युक्तम् । यद्य-प्येक एव यत्नः सर्वकार्यजनको वर्णनाशकश्चेति "परः संनिकर्ष" इति सूत्रे भाष्ये उक्तं तथापि तत्तत्कार्येणोपाधिना एकस्मिन्नपि भेदमारोप्य तथा व्यवहार इति बोद्धव्यम् । उदात्तादिजनकयत्नस्याभ्यन्तरकार्यकरत्वे-ऽपि उदात्तादिशब्दैर्विना बोधितानां तेषां "अनङ्गुदात्त" इत्यनेनाविव-क्षाबोधनात् सवर्णसञ्ज्ञानुपयुक्तत्वान्तरतम्यपरीक्षोपयुक्तत्वरूपसादृश्येन बाह्येषु गणनम् । इदं ह्रस्वत्वादेरानुनासिक्यस्य चोपलक्षणम् ।

शर इति । शषसाः । अनुप्रदानं बाह्यप्रयत्नः । विवृण्वते इति । तदभिव्य-क्त्युत्तरज्ञायमाने कण्ठविवरविकासे तेषां कर्तृत्वविवक्षा बोध्या । विवार एषां प्रयत्न इति भावः । अन्ये त्विति । वर्गतृतीयचतुर्थपञ्चमास्तद्यमा हकारानु-स्वारौ यरलवा इत्यर्थः । नादभागिनस्तत्प्रयत्नकाः । यद्यपि खयादिषु घो-षाघोषान्यतरप्रयत्नमात्रेणापि प्रक्रियांशनिर्वाहस्तथापि शिक्षानुरोधेनान्येषामु-क्तिः । अल्पासवो ऽल्पप्राणाः । यत एतदुच्चारणोत्तरं प्राणानामल्पत्वमिव भवति । वर्गेष्विति । विद्यमानानामिति शेषः । चतुर्णामिति । निर्धारणे षष्ठी, अन्यतमादिति शेषः । पूर्वसदृश इति । सादृ-श्यं यत्नकृतम् । अत एवायोगवाहेषु यमानां गणनं भाष्ये "चत्वारश्च यमाः स्मृताः" इति पाणिनिशिक्षा च सङ्गच्छते । अयञ्च वेदे एव तदाह । प्रातिशाख्ये इति । अन्येषामिति । अचाम् उक्तान्यह-लाञ्चेत्यर्थः । यरलवाश्चेति । चेनाचामपि ग्रहणम् । "सुपां सुलुक्" इति सूत्रे इकारस्यान्तर्यतो दकार इति भाष्यात् घोषसंवारनादाल्पप्राणत्वमचाम् । अन्यथा तदौ पर्यायेण स्याताम् । अल्पप्राणत्वानङ्गीकारे दधौ पर्यायेण स्याताम् । अचां घोषत्वं "परः सन्निकर्ष" इति सूत्रे भाष्ये ऽपि स्पष्टम् । अन्ये इति । द्वितीयचतुर्थौ तद्यमौ शषसहा अयोगवाहाश्चेत्यर्थः । जिह्वामू-लीययमादीनां स्थानबाह्यप्रयत्नकथनं तु स्वरूपनिर्णयाय न तु सावर्ण्या-न्तरतम्यपरीक्षादावुपयोगीति बोद्धव्यम् । अनुपयुक्ता इति । तुल्यास्यसूत्रे प्रशब्दग्रहणात् । उपयुक्तत्वे हि शछयोरपि सावर्ण्यं स्यादिति भावः । आन्तरतम्यपरीक्षा च घोषवत इत्यादिना तत्र तत्र स्फुटीभविष्यति । स्प-र्शाः तत्पदव्यवहार्याः । अन्तस्थाशब्द आदन्तः । स्पर्शोष्मणोरन्तर्मध्ये

तिष्ठन्तीति तदर्थः। ऊष्माण इति। ऊष्मा वायुस्तत्प्रधाना इत्यर्थः। एवं सोष्माण इत्यस्य वायुना सह वर्त्तन्त इत्यर्थ इति प्रातिशाख्यभाष्ये स्पष्टम्। यद्यपि वर्गद्वितीयचतुर्थयोरपि स्थानेन्तरतमसूत्रभाष्यादूष्मत्वं तथापि विवृतमूष्मणामित्यत्रैतएव गृह्यन्ते। अन्यथा कखादीनां सावर्ण्यापत्तौ नाऽऽज्झलावित्यादिनिर्देशासङ्गतिरिति भावः। अचः स्वरा इति। उदात्तादिभिः स्वयमेव राजन्त इति व्युत्पत्तेः, तद्धर्मत्वादुदात्तादयोऽपि स्वरा इत्युच्यन्ते। कपाभ्यामिति। खफयोरप्युपलक्षणम्। अं अः इत्युपलक्षणमिकारादेरपि। तदाह। अचः पराविति।

ऋऌवर्णयोरिति। आ च ऌवर्णश्चेति विग्रहः, ऋत्यक इति प्रकृतिभावः। एतदर्थमेव वर्णोपदेशे ऌकारपाठः। अन्यथा तस्यासत्त्वशङ्कयाऽस्य वचनस्यैवाशक्यत्वं स्यात्। ध्वनितश्चेदं एओङितिसूत्रशेषे भाष्ये। तत्र हि सँय्यन्तेत्यादौ "हलोनन्तरा" इति सूत्रे प्रत्याहारघटकेष्वपि ग्रहणकशास्त्रप्रवृत्त्या मात्राकालिकस्य यद्वयादेरणुदित्सूत्रेण यादिग्रहणेन ग्रहणाद् द्विव्यञ्जनाश्रयो विधिर्न प्राप्नोतीत्याशङ्क्य मात्रिकव्यञ्जनानुपदेशादनुपदिष्टस्यासत्त्वात् असत्प्रतिपत्तेरशक्यत्वान्न अणुदित्सूत्रेण तद्ग्रहणमित्युक्तम्। न च क्ऌ३प्तशिखेत्यादावनृत इति निषेधात् प्लुतानापत्तिः। ऋऌवर्णयोःपृथगनुबन्धत्वकरणेन क्वचित्परस्पराग्राहकत्वकल्पनेनादोषात्।

अकारहकारयोरिति। एकारस्य तालव्यत्वमोकारस्यौष्ठ्यत्वमिति मते एकारशकारादीनामप्युलक्षणमिदम्। एतेन "नाज्झलौ" इत्येव सूत्रयितुमुचितमित्यपास्तम्। हशि चेत्येव सिद्धेऽतोरोरित्याकारे व्यावृत्त्यर्थम्। सूत्रे द्विवचनोपपत्तये मध्यमपदलोपिसमासं दर्शयति। आकारसहित इति। अत एव वेलास्विति निर्देश उपपद्यते। समाहारद्वन्द्वे तु टच्प्रसङ्गोऽज्झलिति समाहारद्वन्द्वं कृत्वा आपदेन द्वन्द्वे तु अज्भिरप्याकारस्य सावर्ण्यं न स्यादिति भावः। अत एव भाष्ये

---

*आच ऌवर्णश्चेति*। ननु "आच आच रलौ" इति मनोरमोक्तं विहाय किमिति द्वितियः प्रकार आश्रीयत इति चेच्छृणु, "न पदान्ताः परेऽणः सन्ति" इति भाष्यप्रामाण्येन ऌकारान्तानामनभिधानेन आच आच रलाविति विग्रहस्य वक्तुमशक्यत्वात्।

*अपास्तमिति*। एकारशकारयोः 'एकारस्य तालुमात्रजन्यत्वम्" इति मते सावर्ण्यापत्तिरिति भावः। नच शकारस्येषद्विवृतत्वेन एकारस्य विवृतत्वेन आभ्यन्तरप्रयत्नैक्याभावान्न दोष इति वाच्यम्। सूत्रकृन्मते दोषसत्त्वात्। केचित्तु

प्रयत्नभेदेनैषां सावर्ण्याभावः साधितः। एतेषु परेष्विति। इदमुपलक्षणम् एतेषु विद्यमानस्येत्यपि बोद्ध्यम् । तेन हकारादीनामकारादिषु परतो दीर्घादिसङ्ग्रहः । अच्त्वं स्यादिति । अच्पदबोद्ध्यत्वं स्यादित्यर्थः। इदं प्रत्याहारघटकेष्वपि ग्राहकशास्त्रप्रवृत्तिरिति मते व्यक्तिपक्षे च बोद्ध्यम्।

अणुदि । अणमुद्दिश्य सवर्णबोधकताऽत्र विधीयते । सवर्णस्येत्यस्य बोधक इति शेषः । आदेशादौ सवर्णग्रहणवारणायाह । प्रतीयते इति ।

---

एकारादीनां केवलतालव्यत्वमिति मते इकारैकारयोः सूत्रकृन्मते सावर्ण्यस्य दुर्वारत्वेन केवलौष्ठ्यत्वादि न सूत्रकृतां मतमिति "एकारशकारयोरप्युपलक्षणम्" इति मूलं चिन्त्यमेवेति नाज्झलाविति न्यासे न कोपि दोष इत्याहुः। अन्येतु तथा न्यासे लृति लृ वेति विधेयस्येषत्स्पृष्टलकारस्य लकारस्य च सवर्णसंज्ञापत्तौ होतॢकार इत्यत्र यणो मय इति द्वित्वापत्तिः। अत एव नाच्शलौ इति सूत्रकरणमप्यपास्तम् । भाष्यमते तु अणुदित्सूत्रस्याप्यभावात् लत्वजातेस्तस्मिन् लकारेऽभावान्न दोष इत्याहुः।

*सावर्ण्याभावः साधित इति*। स्यादेतत्। भाष्यकारमते प्रयत्नभेदेनाज्झलोः सावर्ण्याभावेऽपि सूत्रकृन्मते कथं सावर्ण्याभावः। नच तुल्यास्यसूत्रे "नाज्झलौ" इति निषेधेनाज्झल्भिन्नत्वेन सङ्कोचेनाज्झलोर्न सावर्ण्यप्रसक्तिरिति वाच्यम्। एवं तर्हि अचां हलामपि परस्परं सवर्णसंज्ञानापत्तेरिति चेन्मैवम्, अज्भिन्नेन तुल्यास्यप्रयत्नमज्भिन्नं सवर्णसंज्ञं भवति, हल्भिन्नेन तुल्यास्यप्रयत्नं हल्भिन्नं सवर्णसंज्ञं भवतीति नाज्झलाविति तात्पर्यग्राहकेणाऽऽवृत्त्या तुल्यास्यसूत्रस्यार्थद्वयकरणेनादोषात् । अत्र प्रथमवाक्येन हलो द्वितीयवाक्येनाचां सवर्णसंज्ञा बोध्या । अथवा स्वविशिष्टः सवर्णसंज्ञो भवति । वैशिष्ट्यञ्च स्ववृत्त्यच्त्वाभावहल्त्वाभावान्यतरवत्त्वं स्वनिष्ठजन्यतानिरूपितजनकताविशिष्टजनकतानिरूपितजन्यतावत्त्वमेतदुभयसम्बन्धेन । जनकतावैशिष्ट्यञ्च स्वव्याप्यत्वं-स्वव्यापकत्वमेतदुभयसम्बन्धेनेत्यदोषात्। अथवा तुल्यास्यसूत्रोक्तप्रथमवैशिष्ट्ये स्ववृत्त्यच्त्वाभावहल्त्वाभावान्यतरवत्त्वं सबन्धो निवेशनीयः। परस्परपदार्थघटकाऽऽद्यद्वयसम्बन्धीयस्वीयपदस्थानेऽज्वृत्तीति हल्वृत्तीति च यथापूर्वं निवेशनीयम् । तथा चानुयोगित्वप्रतियोगित्वे च अज्निष्ठे हल्निष्ठे वा विवक्षिते, नत्वज्निष्ठा प्रतियोगिता हल्निष्ठा चानुयोगिता, नवा हल्निष्ठा प्रतियोगिता अज्निष्ठा चानुयोगिता, अत्रैव नाज्झलाविति तात्पर्यग्राहकमित्यदोष इति दिक् । *बोधक इति शेष इति*। घटकतयेति शेष इत्यपि बोध्यम् । तथाच अण् उदिच्च घटकतया सवर्णान् गृह्णातीति सूत्रार्थः । अण्घटितमुदिच्च स्वादिसवर्णान् गृह्णातीति यावत् । एतेन "नचाणुदित्सूत्रं व्यर्थं प्रत्याहाराद्यवर्णेषु ककारादिचिन्हेन स एवायमिति प्रत्यभिज्ञयाऽणत्वादणुदित्सूत्रं चरितार्थम्" इति शेखरोऽसङ्गतः प्रत्याहाराद्यवर्णस्यानर्थकत्वेन तज्जन्योपस्थित्या शाब्दबोधाजननादित्यपास्तम् । इगादिपदानां घटकतया स्वादिसवर्णग्राहकत्वेन

परे तु प्रत्ययग्रहणमेकदेशानुमत्या "भाव्यमानेन सवर्णानां ग्रहणं न" इति परिभाषां ज्ञापयतीति युक्तम्। प्रत्ययपदस्य तदर्थत्वन्तु न युक्तं वार्तिककृता टित्किन्मित्सूपसंख्यानोक्तेः। भाष्यकृता चाप्रत्ययग्रहणमेतत्परिभाषाज्ञापकमित्युक्तेः। "ज्यादादीयसः" इति सूत्रे भाष्ये ध्वनितमिदम्। तत्र हि किमर्थमादित्युच्यते ज्याद इत्येवोच्यतां, का रूपसिद्धिः, आन्तर्यतो दीर्घस्य दीर्घो भविष्यति, एवन्तर्हीदमेव ज्ञापयति भवत्येषा परिभाषा भाव्यमानेनेत्यादि। त्वदुक्तव्याख्याने हि पूर्वपक्षसिद्धान्तयोरुभयोरपि निर्दलत्वापत्तिः। जातिपक्षे ऽप्यनयैव परिभाषया सवर्णग्रहणं वारणीयम्। व्यक्तिपक्षे गुणाभेदकत्वप्राप्तश्च वारणीयम्। तेन घटवदित्यादौ नानुनासिको वकारः। एतेनाणुदिदित्येव सिद्धे ऽण्ग्रहणेन यण्सु गुणभेदकत्वं ज्ञाप्यते इति परास्तमित्याहुः। ननु चोरित्यादावनुवादे कथमुदित्त्वमिति चेन्न। व्याकरणान्तरे एषामुदित्संज्ञकत्वेनादोषात्। उपदेशशब्दस्य करणसाधनत्वेन शास्त्रपरत्वे ऽस्यापि शास्त्रत्वेनेत्त्वप्रवृत्तेः सुलभत्वाच्च। चो भिन्नक्रम इत्याह। उदिच्चेति। यद्यपि समुदायसवर्णिनो ऽप्रसिद्धास्तथापि तदवयवचादिसवर्णा एवात्र तत्सवर्णा बोद्धव्याः। ह्रस्वाकाराद्योरपि कालपुरुषाद्युपाधिभेदेन स्थानेषु भेदमारोप्य तुल्यस्थानत्वं सूपपादम्। अत्रेति। ग्राहकसूत्र एवेत्यर्थः। व्याख्यानादिति भावः। उपसर्गादृतीत्यादितपरकरणादिति तु न युक्तम्। लृकारग्रहणेन चारितार्थ्यात्। एवमिणपि परेणैव। अचि श्नुवति सूत्रे इण इत्येव सिद्धे य्वोरिति गुरुनिर्देशाद्व्याख्यानाच्चेति लण्सूत्रे भाष्ये स्पष्टम्। नन्वेवं "अस्य च्वौ" इत्यादौ सवर्णग्रहणं न प्राप्नोति। अण्ग्रहणेन वर्णसमाम्नायस्थानामेव ग्रहणेन णकारादिचिह्नेन प्रत्याहारे तत्प्रत्यभिज्ञानेन तत्रत्याद्यवर्णो-

---

शाब्दबोधे बाधकाभावात्। सहग्रहणेनाऽऽदेरेव संज्ञात्वेन प्रत्याहाराद्यवर्णस्यानर्थक्याभावाच्च। *ज्ञापयतीति*। नच पुनरपि ज्याद ईयस इत्येवोच्यताम्, लोपेनैव सिद्धे ऽकारादेशविधानसामर्थ्येन पररूपाप्रवृत्त्या सवर्णदीर्घेण ज्यायानिति रूपसिद्धेरिति वाच्यम्। वृद्धशब्दाण्ण्यन्तात्क्विपि ज्यादेशे वृद्धौ पुकि ईयसुनि श्रवणार्थमकारोच्चारणस्य चारितार्थ्यात्। दीर्घोच्चारणेन द्विमात्रिक एव विधेय इति पाणिनितात्पर्यावधारणेन पाणिनितात्पर्यविषयीभूतद्विमात्रिकविधानाय दीर्घोच्चारणसार्थक्येन स्वांशे चारितार्थ्यं नास्तीति वक्तुमशक्यत्वाच्च। दीर्घोच्चारणं विनापि ज्यायानिति रूपसिद्धिर्भवतीति पूर्वपक्षान्तरमेतत्। *चारितार्थ्येनेति*। अण्घटितं स्वादिसवर्णान् गृह्णातीति सूत्रार्थात्। आदिरन्त्येनेति सूत्रेण संज्ञा आदेरेवेति स्वीकाराच्चेति भावः। एतेन एक-

रेण निर्दिष्टे इति औपश्लेषिके ऽधिकरणे सप्तम्येवोचिता "उपपदविभक्तेः"-इति न्यायात् न तु सतिसप्तमीति "तत्र च दीयते" इति सूत्रे कैयटे स्पष्टम् । "स्तुक्रमोः" इति सूत्रे च कैयट आह "तस्मिन्निति परिभाषायां सत्यां सत्सप्तम्याश्रयणमशक्यम्" इति । उपश्लेषः समीपवृत्तित्वं न च वर्णयोर्बौद्धं द्रष्टव्यम् । एवम् "इको यणचि" इत्यादावपीयमेवेति "संहितायाम्" इति सूत्रे भाष्ये । तत्रोपश्लेषः पूर्वस्येव परस्याव्यवहितस्येव व्यवहितस्य चेति पूर्वस्यैवेति नियमार्थमिदमव्यवहितस्यैवेति च । अत एव लक्ष्यानुसारात् क्वचित्सतीत्यध्याहारात् सत्सप्तम्याश्रयणे नास्याः प्रवृत्तिरिति "श्नान्नलोपः" इत्यत्र भाष्ये उक्तम् । अत एव "कर्तृकर्मणोः कृति" इत्यत्र नास्याः प्रवृत्तिः, कृति सति प्रत्यासत्त्या तत्प्रकृत्यर्थकर्तृकर्मणोः षष्ठीति तदर्थात् । तस्मादिति सूत्रे निर्दिष्टे इति निर्दिष्टादित्यर्थकं विभक्तिविपरिणामात् । सा चोत्तरस्येति दिग्योगलक्षणा इति दिग्योगलक्षणपञ्चम्यामेव तत्प्रवृत्तिः । "उदः

---

श्लिष्टस्य कार्यम् अव्यवहितोच्चारिते पूर्वस्य बोध्यमित्येवम् उद्देश्यविधेयभावकल्पनेनादोषात् । परन्तु "तस्मिन्निति" इत्यत्र तस्मिन् इत्यौपश्लेषिकाधिकरणबोधकसप्तम्यन्तानामनुकरणम् । तथा चौपश्लेषिकाधिकरणबोधकसप्तम्यन्तपदघटिते शास्त्रे निर्दिष्टे पूर्वस्येत्युपतिष्ठते । एवं "तस्मादिति" इत्यत्र तस्मात् इति दिग्योगलक्षणपञ्चम्यन्तानामनुकरणम् । तथा च दिग्योगलक्षणपञ्चम्यन्तपदघटिते शास्त्रे निर्दिष्टे परस्येत्युपतिष्ठते । निर्दिष्टे इत्युभयत्र सतिसप्तमी । अथवा तस्मिन्निति परिभाषायाम् इतिपदमौपश्लेषिकाधिकरणबोधकसप्तम्यन्तार्थोपश्लिष्टसम्बन्धिकार्यपरम् । एवं तस्मादिति परिभाषायामपि इतिपदं पञ्चम्यन्तार्थान्वयिसम्बन्धिकार्यपरम् । तस्मिन्निति तस्मादिति च निरुक्तार्थतात्पर्यग्राहके पदे । तथा चौपश्लेषिकाधिकरणबोधकसप्तम्यन्तार्थोपश्लिष्टं कार्यमव्यवहितपूर्वसम्बन्धि बोध्यम् । एवं दिग्योगलक्षणपञ्चम्यन्तार्थान्वयिसम्बन्धि कार्यमव्यवहितोत्तरसम्बन्धि बोद्धव्यमिति क्रमेण परिभाषयोर्वाक्यार्थबोधः । न च "इको यणचि" इत्यत्र अचि इत्यौपश्लेषिकाधिकरणबोधिका सप्तमी, एवम् "उदः स्था" इत्यादौ उद इति दिग्योगलक्षणा पञ्चमीत्यत्र नियामकाभावादेतत्परिभाषाद्वयीयोद्देश्यासिद्धिरिति वाच्यम् । एतदुद्देश्यान्यथानुपपत्त्या असति प्रमाणान्तरे ऽस्मिन् शास्त्रे यानि सप्तम्यन्तानि तानि सर्वाण्यौपश्लेषिकाधिकरणबोधकानि यानि च पञ्चम्यन्तानि तानि सर्वाणि दिग्योगलक्षणानीति कल्पनेनादोषात् । एतन्मूलकमेव पठ्यते " तस्मिन्निति परिभाषायां जागरूकायां सतिसप्तम्याश्रयणमयुक्तम्" इति । एतन्मूलिकैवोपपदविभक्त्यर्थे कारकविभक्त्यर्थे च यत्र तात्पर्यं प्रसज्यते तत्र कारकविभक्त्यर्थे एव तात्पर्यं कल्पनीयमित्येतदर्थिका "व्याख्यानत" इति परिभाषाशेषभूता "उपपदविभक्तेः कारकविभक्तिर्बलीयसी"-

स्था" इत्यादौ च उद इति दिग्योगलक्षणा पञ्चमी । तत्रानियतदिक्शब्दाध्याहारे प्रसक्ते परशब्दस्यैवाध्याहार इति तस्मादित्यनेन नियम्यते । अव्यवहितोच्चारितात्पञ्चम्यन्तात्परस्येति तदर्थः । तत्फलितमाह । सप्तमीनिर्देशेनेत्यादि । यदि तु अर्धमात्राधिककालेन वर्णान्तरेण वा व्यवधाने उपश्लेष एव नेत्युच्यते तदा निर्दिष्टपदं संहिताधिकारश्च विफल इति "संहितायाम्" इति सूत्रे भाष्ये स्पष्टम् । अवग्रहे च संप्रदाय एव शरणमिति आनङादिविषये आदेशोत्तरमेवावग्रहोऽन्यत्र ततः प्राक् । अकृतव्यूहपरिभाषा त्वनित्या, नास्त्येव वा । "न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम्" इति भाष्येण तदनुरोधेन शास्त्रासङ्कोचस्य शास्त्रकरणाभावस्य च स्पष्टमुक्तत्वाच्च । एतेन संहिताधिकारस्तद्बहिर्भूतानामर्धमात्राधिककालव्यवाये प्रवृत्तिज्ञापनार्थम् । तेनाग्नाविष्णू इत्यादावग्रहे आनङादिसिद्धिरित्यपास्तम् । "प्रत्ययः" "परश्च" इत्यादौ तूत्तरांशविकला तस्मादिति परिभाषा प्रवर्त्तते । तेन न प्रत्यया व्यवहिताः । अत एव "छन्दसि परे ऽपि व्यवहिताश्च" इति सूत्रं सार्थकम् । आगमविधावपि "आने मुक्" इत्यादौ तस्मिन्निति परिभाषया पूर्वसंबन्धित्वनिर्णयः । अत एवात्र पूर्वस्येत्यादि न स्थानषष्ठी । तत्तद्विधिभिरेव संबन्धस्य निर्णीतत्वेन "षष्ठी स्थाने" इत्यस्याप्रवृत्तेः । "गाङ्कुटादिभ्यः" इत्यादावपि षष्ठ्यंशविकलैतत्परिभाषाप्रवृत्तिर्बोध्या । परिभाषाणां नियमत्वन्तु यदि परिभाषासूत्रं न स्यात्तदा व्यवहितादावपि प्रवृत्तिः स्यादित्येतावतेति दिक् ।

अलोऽन्त्यस्य । षष्ठी स्थाने इत्यनुवर्त्तते तदाह । षष्ठीत्यादि ।

---

इति परिभाषा "तत्र च दीयते" इति कैयटे पठ्यते इत्याहुः । *उत्तरांशविकलेति* । तस्मिन्निति तस्मादिति परिभाषाद्वयविषये यावानंशः सिद्धो बाधितो वा भवेत्तमंशं विहायान्यांशोपस्थापकत्वस्वीकारादिति भावः । अत्रैव प्रमाणमाह *"व्यवहिताश्च" इतिसूत्रं सार्थकमिति* । अन्यथा "ते प्राग्धातोः" इत्यत्र प्राक्पदसत्त्वेनोत्तरत्वांशानुपस्थितौ सन्नियोगशिष्टन्यायेनेतरांशस्याप्यनुपस्थितौ व्यवहितप्रयोगः सिद्ध एवेति तद्वैयर्थ्यं स्पष्टमेव। तस्मिन्निति तस्मादिति परिभाषाद्वयस्याप्यव्यवहितत्वं विधेयान्वयिषष्ठ्यर्थः पूर्वत्वम्, अव्यवहितत्वमुत्तरत्वं विधेयान्वयिषष्ठ्यर्थश्चेति प्रत्येकमंशत्रयं विधेयम् । तत्र "शि तुक्" "पदान्ताद्वा" इत्यादौ तस्मिन्नितिपरिभाषया अंशत्रयोपस्थितिः । "इको यणचि" इत्यादौ षष्ठ्यंशस्य सिद्धत्वेन तद्रहितांशद्वयोपस्थितिः । एवं तस्मादिति परिभाषया "ङमो ह्रस्वादचि" इत्यादावंशत्रयोपस्थितिः । "उदः स्था" इत्यादौ षष्ठ्यंशस्य सिद्धत्वादंशद्वयोपस्थितिः । प्रत्ययाधिकारे षष्ठ्यंशस्य बाधितत्वादुत्तरांशस्य सिद्धत्वात्केव-

स्थाने विधीयमानः स्थानषष्ठीनिर्दिष्टान्त्यस्येत्यर्थः । स्थानेइत्यादि किम् । इट् तृच ऋकारात्पूर्वो मा भूदिति । अन्त्यस्येति साहचर्यादल इति षष्ठ्यन्तम्, अन्त्यस्याल इत्यर्थः । अल इति किम् । पदस्येति विधीयमानं "वसुस्रंसु"इति दत्वं स्वनडुद्भ्यामित्यादावन्त्यस्य पदस्य मा भूत् । स्थाने विधीयमान इति प्रत्यासत्तिलब्धम् । एवञ्चाल एवेति, अन्त्यस्यैवेति नियमद्वयमत्र । अल्समुदायबोधकपदोत्तरं स्थानषष्ठी अस्या लिङ्गम् । अत एव "इतोऽत्"इत्यादौ नास्याः प्रवृत्तिः । पथ्यादीनामित्यस्यावयवषष्ठीत्वात् इत इत्यस्याल्समुदायोत्तरत्वाभावाच ।

ङिच्च । अनेकालर्थमिदम् । आदेरिति । आदेरल इत्यर्थः । तेन द्वीपमित्यादौ पान्तसमुदायस्य न ईत्त्वम् । अत्र परस्येत्यावर्त्तते तेन परबोधकशब्देन यत्र परस्य स्थाने विधानं तत्रैवेदम् । तेन "नित्यं ङितः" इत्यादौ न दोषः । तत्र विकरणव्यवधाने प्रवृत्तये धातोरित्यस्य विहितविशेषणत्वात् ।

अनेकाल् शित् । शित उदाहरणम् इदम इश् । ननु शकारोच्चारणसामर्थ्याद्भूतपूर्वानेकाल्त्वमादाय सर्वादेशत्वे सिद्धे शिदिति व्यर्थम् । किं च सानुबन्धकनिर्देशे यथा नालः स्थानित्वं "भोभगो" इति सूत्रे भाष्ये उक्तम् तथाऽऽदेशत्वमपि सूत्रोपात्तस्यैवेति त-

---

लाव्यवहितांशोपस्थितिरिति दिक् ।*अत एवेति* । अल्समुदायबोधकपदो-
त्तरं स्थानषष्ठी अस्या लिङ्गमिति स्वीकारादेवेति भावः । *न दोष
इति* । नच "नित्यं ङितः" इत्यादौ विकरणव्यवधानेऽपि प्र-
वृत्तये धातोरिति विहितविशेषणमेवास्तु उत्तमस्येति सकारे वैयधि-
करण्येन विशेषणमस्त्विति नावृत्त्युपयोग इति वाच्यम् । "क्सस्या-
चि" इत्यादावेतदप्रवृत्तये परस्येत्यस्यावृत्तेरावश्यकत्वात् । आवृत्त्या च पर-
त्वावच्छिन्नोद्देश्यताश्रयस्य यत्कार्यं तद् आदेरल इत्यर्थः । *भूतपूर्वानेकाल्त्व-
मिति* । अनुबन्धघटितबोधकवृत्तिधर्माणां बोध्ये आरोपस्वीकारात् । अ-
नेकाल्वृत्तिधर्मावच्छिन्नविधेयताश्रयः सर्वस्य स्थाने भवतीत्यनेकाल्सूत्रार्थस्वी-
काराद्वा । औश्वृत्त्यनेकाल्त्वस्य स्थानिवद्भावेन औ इत्यत्रानयनाद्धेत्यन्यत्र वि-
विस्तरः । *नालः स्थानित्वमिति* । अल इत्यस्याल्त्वव्याप्यधर्मस्येत्यर्थः।स्था-
नित्वमित्यस्य स्थानितावच्छेदकत्वमित्यर्थः। *आदेशत्वमपीति* । आदेशताव-
च्छेदकत्वमित्यर्थः। *सूत्रोपात्तस्यैवेति*। सूत्रोपात्तवृत्तिधर्मस्यैवेत्यर्थः। अन्यथा
ऽनुबन्धविनिर्मुक्तपदार्थोपस्थितिस्वीकारेणाऽऽदेशत्वं स्थानित्वम् अनुबन्धवि-
निर्मुक्तस्यैवेति यथाश्रुतशेखरो ऽसङ्गतः स्यात् । अन्ये तु बोधकावयवेष्वनुब-
न्धेषु बोध्यावयवत्वमिति स्वीकारेण सानुबन्धकादेशस्थले स्थानित्वादेशत्वयो-

र्थ्यर्थम् । विधौ निर्दिष्टो यो ऽनेकाल्स सर्वस्येति सूत्रार्थः । उद्देश्यत्वविधेयत्वाख्यविषयतया बोधविषयता तु अनुबन्धविनिर्मुक्तस्येति नाणुदित्सूत्रभाष्यविरोधः । घ्वसोरिति लोपस्य "लोपो यि" इति प्रकृते पुनर्लोपग्रहणसामर्थ्यात्सर्वादेशत्वसिद्धिः । अनुबन्धानामेकान्तत्वमेव न्याय्यमित्युक्तमिति चेन्न। "नानुबन्धकृतमनेकाल्त्वम्" इति ज्ञापनेन चारितार्थ्यात् । तेन "दिव औत्" इत्यादीनां न सर्वादेशत्वम् । अस्य च यथेत्सञ्ज्ञा तथा वक्ष्यते । नानेकाल् शिदिति तु नोक्तम्। "अनन्तरस्य" इति न्यायेन "आदेःपरस्य" इत्यस्यैव निषेधापत्तेः । परत्वादिति । आदेः परस्येत्यस्यावकाशः द्व्यन्तरुपसर्गेभ्यो-ऽप ईत् । द्वीपम् । शित्सर्वस्येदम इश् । एवम् "अतो भिस" इत्यादिविषये "अनेकाल्" इत्यनेनादेः परस्येति परत्वाद् बाध्यते । एतेन "ङिच्च" इत्यत्र ङिदेवानेकालन्त्यस्येति नियमेन सिद्धे ऽनेकाल्ग्रहणं व्यर्थम्" इत्यपास्तम् ।

---

व्यासज्यवृत्तित्वेन नालः स्थानित्वमित्यस्य नाल्पर्याप्तं स्थानित्वमित्यर्थः । आदेशत्वं सूत्रोपात्तस्यैवेत्यस्य आदेशतापर्याप्तिः सूत्रोपात्तानुबन्ध–तद्बोध्याऽऽदेश एतदुभये इत्याहुः । *विधौ निर्दिष्टो यो ऽनेकालिति* । विधावित्यस्य विधिशास्त्रे इत्यर्थः । निर्दिष्टो ऽनेकालित्यस्य निर्दिष्टवृत्तिरनेकाल्वृत्तिर्यो धर्मस्तद्धर्मावच्छिन्नविधेयताश्रय इत्यर्थः । *उद्देश्यत्वविधेयत्वाख्यविषयतयेति* । धान्येन धनवानितिवद्भेदस्तृतीयार्थः । तस्य च बोधविषयतायामन्वयः । अन्यथा शाब्दबोधे उद्देश्यताविधेयतानिरूपकत्वयोस्सत्त्वे ऽपि उद्देश्यताविधेयताविषयकत्वे मानाभावाद्यथाश्रुतमसङ्गतं स्यात् । उद्देश्यत्वविधेयत्वयोरपदार्थत्वेन शाब्दबोधासम्भवात् । पदजन्यपदार्थोपस्थित्यभावे शाब्दबोधानङ्गीकाराच्चेति दिक् । परे तु यथा ज्ञानमात्रे मितिमातृभासकत्वं मितिमातृविषयकसंशयस्य कदाप्यनुदयात् स्वीक्रियते, तथा विषयताविषयकस्य संशयस्य कदाप्यनुदयात् विषयताविषयकत्वमपि ज्ञानमात्रे स्वीक्रियते । तथाच उद्देश्यत्वविधेयत्वाख्यविषयतयेत्यत्र तृतीयार्थो विषयत्वम् । तस्य निरूपितत्वसम्बन्धेन शाब्दबोधे ऽन्वयः । प्रकृत्यर्थस्य च निष्ठत्वसम्बन्धेन तृतीयार्थविषयतायामन्वयः । तथाच उद्देश्यत्वविधेयत्वाख्यविषयतानिष्ठविषयतानिरूपकबोधीयविषयता ऽनुबन्धविनिर्मुक्तपदार्थे एवेति यथाश्रुतमेव सङ्गतमित्याहुः । *चारितार्थ्यादिति* । अनुबन्धघटितबोधकवृत्तयो ये अनुबन्धत्वघटितातिरिक्ता आनुपूर्वीव्यतिरिक्ताश्च धर्मास्तन्निमित्तके विधौ कर्तव्ये अनुबन्धानामविद्यमानवत्त्वमिति कल्पनेन चारितार्थ्यादिति भावः । *तृतीयेति* । वैशिष्ट्यं तृतीयार्थः । तथा च स्वरितत्वविशिष्टमधिक्रियते इति सूत्रार्थः । तत्फलितमाह *स्वरितत्वञ्चास्य इति* । स्वरितत्वं स्वरविशेष इति पक्षेऽप्याह अज्निष्ठं वेति । *बहिरङ्गशास्त्रीयेति* । अत्र बहिरङ्गत्वमुपलक्षणम्, न विशेषणम् । एवमुत्तरत्रान्तरङ्गत्वमप्युलक्षणम् । अतो

स्वरितेन । इत्थंभूतलक्षणे तृतीया । स्वरितत्वज्ञाप्योऽधिकारो विनियोग इत्यर्थः । स्वरितत्वञ्चेदं दोषविशेषरूपमङ्गलसाधारणं स्वरूपमधिक्रियमाणपदघटकाज्निष्ठं वा । तच्चानुनासिक्यवत्प्रतिज्ञागम्यम् । विनियोगश्च प्रायेणोत्तरत्रोपस्थितिः क्वचित्पूर्वत्रापि । कियद् दूरमधिकार इत्यत्रासति गमके व्याख्यानमेव शरणम् । किंच स्वरितेनाधिकारगतिः । "तेन गोस्त्रियोः" इत्यादौ स्त्र्यधिकारस्थप्रत्ययग्रहणमित्याद्याकरादवसेयम् । एतेन "व्याख्यानादेव निवृत्तिवदनुवृत्तिरपि भविष्यति आकाङ्क्षायान्तु सत्यामश्रुतकल्पनाया अन्याय्यत्वाच्छ्रुतापेक्षणस्य न्याय्यत्वाच्च किं सूत्रेण" इत्यपास्तम् । स्पष्टं चेदं भाष्ये । परनित्येति । परं विप्रतिषेधसूत्राद् बलवत् । नित्यं कृताकृतप्रसङ्गि तद्विपरीतमनित्यम् । तत्राक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यैव तत्कल्पनं युक्तमिति तस्य बलवत्त्वे बीजम् । अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये ऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम् । तदीयनिमित्तसमुदायाद्बहिर्भूताङ्गकं बहिरङ्गम् । तस्य बलवत्त्वे बीजमाह । असिद्धमिति । इयञ्च "वाह ऊठ्" इति सूत्रेण ज्ञापिता । यद्यपि "प्रत्यङ्गवर्त्ती लोको दृश्यते मनुष्यो ऽयं प्रातरुत्थाय प्रथमं शरीरकार्याणि करोति ततः सुहृदां ततः संबन्धिनाम्" इतिन्यायमूलकत्वमस्या "अचः परस्मिन्" इति भाष्ये उक्तं तथापि तेन न्यायेन युगपत्प्राप्तिविषयतैव स्यात् । ज्ञापकेन तु सर्वविषयता बोध्यते इति "वाह ऊठ्" इति सूत्रे कैयटे स्पष्टम् । अन्यथा वाहः संप्रसारणे पूर्वरूपे च कृते व्याश्रये गुणे "वृद्धिरेचि" इति वृद्धौ प्रष्ठौह इत्यादिसिद्धावूठ्विधानं व्यर्थं स्यात् । नाजानन्तर्यपरिभाषा तु नास्त्येवेति न अयजे इन्द्रमित्यादौ दोष इति परिभाषेन्दुशेखरे विस्तरः । अपवादस्तु वचनप्रामाण्याद् बलवान् । अकृतेति । न कृतो विशिष्ट ऊहस्तर्को निमित्तविनाशे ऽपि कार्यस्थितिरूपः, यथा दण्डविनाशे ऽपि घटस्थितिः, स यैस्ते इत्यर्थस्तदाह । निमित्तमित्यादि । तत्प्रयुक्तं कार्यं जातमपि न कुर्वन्ति नोच्चारयन्तीत्यर्थ इति कैयटादयः । अन्ये तु व्यूहो ऽन्तरङ्गशास्त्रं बहिरङ्गापोहनरूपत्वात् । तत् निमित्तविनाशं दृष्ट्वा पूर्वमपि न कुर्वन्तीत्यर्थ इत्याहुः । इयं परिभाषा निष्फला निर्मूलेति परिभाषेन्दुशेखरे निरूपितम् ।

इति परिभाषाप्रकरणम् ॥

---

नान्योन्याश्रय इति भावः । *सूत्रेण ज्ञापितेति* । नच " ऊडिदम् "

स्यादिति। कार्यशब्दवादे इदम्। संहितायां विषये इति। कार्यिनिमित्तयोः संहितायां विषयभूतायामित्यर्थः। स्थानत इति। इदं यथासंख्यसूत्रे भाष्ये स्पष्टम्। जातिपक्षे यथासंख्येनापि निर्वाह इति स्थानेऽन्तरतमसूत्रे भाष्ये स्पष्टम्। अनुनासिकस्थानेऽपि निरनुनासिक एव। विधीयमानत्वेन सवर्णाग्राहकत्वात्। गुणाभेदकत्वपक्षोऽपि न विधेयाण्विषये। दीर्घादीनामिगादिपदैरुपस्थितये प्रत्याहारेषु जातिपक्ष एवेत्यणुदित्सूत्रे भाष्ये स्पष्टम्। अत एव सर्वतकारादीनां झल्त्वादिसिद्धिः। "त्वादय" इत्यादिनिर्देशादयश्च जात्याश्रयणे मानमिति दिक्। व्याकरणस्य साध्वनुशासनत्वन्तु शब्दनित्यतापक्षे शब्दानां सिद्धत्वेन शास्त्रवैयर्थ्यापत्त्या मृजिप्रसङ्गे मार्जिः साधुर्भवतीत्यादिवृद्धिसञ्ज्ञासूत्रस्थभाष्यप्रामाण्येन यदिह

---

इत्यादिना विश्वौह इत्यादौ स्वरार्थमूठ्ग्रहणमावश्यकमिति वाच्यम्। 'वाहष्ठित्' 'वाहष्ट्' इति वा न्यासेन स्वरविधायके च ठिदिदमित्युक्त्या स्वरसिद्धेरूठ्ग्रहणस्य वैयर्थ्येन ज्ञापकत्वात्। यत्तु ह्रस्वे एव उठि विधातव्ये दीर्घोठ्ग्रहणं ज्ञापकम्। स्वरविधायकेऽपि ह्रस्व एव पाठ्यः। "ज्वरत्वर" इत्यत्र स्थानिद्वयेनाऽऽदेशद्वयकल्पनात् जूर इत्यादौ न दोषः। "एत्येधत्यूठ्सु" इत्यत्र ह्रस्व एव पठ्यते इति जनानवतीति जनौरित्यादौ न दोषः। एवं च्छ्वोरित्यादिना ह्रस्व एव विधीयते इति मव्यधातोः क्विपि मौरित्यादौ न दोष इति, तन्न। च्छ्वोरित्यादिना ह्रस्वे उठि विहिते अक्षद्यूरित्यादौ दीर्घश्रवणानापत्तेः। तद्भावितपक्षस्यैव सिद्धान्तसिद्धत्वेन हल इति दीर्घप्राप्तेः। अतद्भावितपक्षस्वीकारेतु अक्षद्यूवरुण इत्यादौ पूर्वरूपादिकं दुर्वारमेव। वार्त्तिकाद्यारम्भेण परिहारकरणे तु गौरवम्। आङ्पूर्वकादवधातोर्णिचि क्विपि णिलोपे च वकारोपधयोरादेशद्वये आ-उ-उ इति स्थिते "वार्णादाङ्गं बलीयः" इति न्यायेन पूर्वं वृद्धौ आवौरित्यापत्तेश्चेत्यन्यत्र विस्तरः। केचित्तु "ऊडिदम्" इति सूत्रे अन्वादेशे स्वरवारणाय अन्तोदात्तादित्यनुवृत्तेः भाष्यादौ स्पष्टत्वात् पूर्वरूपे कृते जातस्य "एकादेश उदात्तेनोदात्त" इति स्वरस्य त्रैपादिकत्वेनासिद्धत्वात् अन्तोदात्तोठोऽभावेनात्र स्वराप्रवृत्तिरेवेति ज्ञापकं सुस्थमेवेत्याहुः। तन्न। एकादेश उदात्तेनेत्यस्य सिद्धकाण्डे भाष्ये पाठेन असिद्धत्वाभावात् स्वरप्रवृत्तेर्दुर्वारत्वात्। अतएव वृक्षावत्रेत्यादौ आवादीनामुदात्तत्वसिद्धिः, वोऽश्वा इत्यादौ तद्विषये शेषनिघातसिद्धिश्चेति एकादेश उदात्तेनेति सूत्रे शेखरे स्पष्टम्।

नचैवमपि सम्प्रसारणस्यासिद्धत्वेऽपि पूर्वरूपस्य तत्त्वाभावान्न स्वांशे चारितार्थ्यमिति वाच्यम्। "हलः" इति ज्ञापकेन सम्प्रसारणस्थानिककार्ये सम्प्रसारणत्वातिदेशेन सम्प्रसारणस्थानिकपूर्वरूपस्याप्यसिद्धत्वादिति दिक्। *निमित्तविनाशेऽपीति*। निमित्तविशिष्टविनाशे इत्यर्थः। वै० च स्वप्रतियोगिकत्वं-स्वस्थानिकादेशप्रतियोगिकत्वमेतदन्यतरसम्बन्धेन। अत एव "समर्थानाम्" इति सूत्रे समर्थग्रहणं स्वांशे चरितार्थमिति परिभाषेन्दुशेखरे मूले ए

परिनिष्ठितत्वेन ज्ञाप्यं तत्साधुत्वित्यर्थापत्तिकल्प्यवाक्येन बोद्धव्यम् । कार्यशब्दवादे तु पूर्वभाष्योन्नीतानादितात्पर्यवशात्तत्कल्पनं बोद्धव्यम् । एतेन स्थानप्रमाणोभयान्तरतमे ह्रस्वेकारे चरितार्थो यण् दीर्घे कथं स्यादित्यपास्तम् । स्थानत आन्तर्यस्य सर्वतो बलवत्त्वात् "स्थानेऽन्तरतमे" इति सप्तम्यन्तपाठस्य चैतद्दूषणेनैव भाष्ये दूषितत्वादिति भावः ।

चो विध्यर्थः । ध्वनितश्चेदमेओङ्सूत्रे भाष्ये तदाह । द्वे वास्त इति । सूत्रकृता शाकल्यमते सर्वत्र द्वित्वाभावोक्तेरिति भावः । अवसाने द्वित्वासिद्ध्ये ऽनचीति प्रसज्यप्रतिषेधस्तदाह । न त्वचीति । इदं द्वित्वं षाष्ठद्वित्ववद् द्विः प्रयोग एव । यर इत्यादेरध्याहृतोच्चारणक्रियानिरूपितकर्मषष्ठीत्वस्यौचित्यात् । इति धस्येति । न तु द्वित्वे पूर्वधस्थाने जश्त्वनिष्पन्नदस्यापि। "लक्ष्ये लक्षणम्" इति न्यायात् । विकारान्यत्वेन न लक्ष्यभेद इत्यन्यत्र प्रपञ्चितम् ।

---

स्पष्टमिति दिक् । *निष्फलेति* । वस्तुतस्तु वैभाजित्रं घटसेतुषोरित्याद्यर्थं साऽत्यन्तमावश्यकीति परिभाषेन्दुचन्द्रिकायां विस्तरः । इति परिभाषाप्रकरणम् ॥

*अनादितात्पर्यवशादिति* । वस्तुतस्तु कार्यशब्दवादेऽपि शास्त्रस्य शब्दोत्पादकत्वासम्भवात्तात्वादेरेव शब्दोत्पादकत्वेन साधूनामसाधूनाञ्च शब्दानां सिद्धतया शास्त्रस्य साधुत्वपर्यन्तं तात्पर्यकल्पनेन नित्यशब्दवाद इव मृजिप्रसङ्गे मार्जिः साधुर्भवति इत्यवश्यं वक्तव्यम् । *स्थानत आन्तर्यस्येति* । स्थानघटितधर्मेण सादृश्यस्य सर्वतो बलवत्त्वादित्यर्थः । सादृश्यमतिरिक्तः पदार्थ इति मञ्जूषायां स्पष्टम् ।

*कर्मषष्ठीत्वस्यौचित्यादिति* । "उपपदविभक्तेः" इति न्यायादिति भावः । *न लक्ष्यभेद इति* । स्वीयप्राथमिकप्रवृत्तौ उपयोगित्वेनाऽऽश्रीयमाणो यावान्शब्दसमुदायः तदघटको यस्तद्घटकमात्रोद्देश्यकविकाशगमातिरिक्तस्तदघटितत्वे सति स्वीयप्राथमिकप्रवृत्त्युत्तरकालिकप्राप्तिभिन्नप्राप्तिविषयाघटितत्वं तल्लक्ष्यत्वमिति स्वीकारादिति भावः । प्रकृते च जश्त्वनिष्पन्नदकारस्य निरुक्तसमुदायाघटकत्वेऽपि निरुक्तसमुदायघटकमात्रोद्देश्यकाविकाराभिन्नत्वस्याभावात्तल्लक्ष्यत्वमेवेति दिक् ।

*स्थान्यादेशयोर्भेदादिति* । लौकिकस्थान्यादेशापेक्षया शास्त्रीयस्थान्यादेशयोर्वैलक्षण्यादित्यर्थः । तथाहि—यदर्थं यो यस्य स्थाने नियुज्यते स तत्कार्यमेव करोति यथा याजनार्थं गुरोः स्थाने नियुक्तः शिष्यो याजनं करोति तथाऽर्थबोधनाय शब्दप्रयोगात् स्थानिना यो ऽर्थो बोध्यते तत्स्थाने प्रयुक्त आदेशस्तदर्थमेव बोधयेत् नान्यत्कार्यमिति स्थानिवत्सूत्रम् । *स्वं रूपमित्युक्तेश्चेति* । अयं भावः । यथा गुरोः स्थाने शिष्यो याज्यकुलानि गत्वा अग्रासनादीन्येव लभते नतु स्वरूपाश्रितोच्छिष्टभोजनसंवाहनादि, एवं प्रकृतेऽपि आद्यधिष्ठ-

स्थान्यादेशयोर्भेदात् स्वं रूपमित्युक्तेश्च "तत्स्थानापन्नस्तद्धर्मं लभते, यथा गुरोः स्थाने शिष्यो याज्यकुलानि गत्वा ऽग्रासनादीनि लभते" इति लोकन्यायेन स्थानिकार्यमादेशे न स्यादतः स्थानिवत्सूत्रम् । न तु स्थान्यलेति । प्रत्यासत्तिन्यायलब्धमिदम् ।

आदेशस्य स्थानिभूतो यो ऽल् तत्स्थानिसबन्धी च योऽल्

---

त्यादौ स्वरूपाश्रितमात्मनेपदं न स्यादिति भावः। *प्रत्यासत्तिन्यायलब्धमिति* नच "स्थानिवदादेशोऽनल्विधौ" इत्यत्र स्थानिपदापेक्षयाऽऽदेशपदस्यैव प्रत्यासन्नतरत्वेनेदमसङ्गतमिति वाच्यम् । "अग्निहोत्रं जुहोति" "यवागूं पचति" इत्यत्रेव पाठक्रमादार्थक्रमस्य बलीयस्त्वेन आर्थक्रमे च स्थानिपदार्थस्यैव सन्निहितत्वात् ।

*आदेशस्य स्थानिभूतो योऽलिति* ।स्यादेतत् । रामायेत्यादौ स्थानिभूतो योऽल् एकारः तद्वृत्ति यत्सुप्त्वं तन्निमित्तकत्वेन दीर्घे कर्तव्येऽनल्विधाविति निषेधः स्यादिति चेन्मैवम्। स्थानिशब्दस्य संबन्धिशब्दत्वेनाऽऽक्षेपादादेशलाभे सिद्धे आदेशपदोपादानं स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वलाभार्थमित्यदोषात् । तथाच अल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्मनिमित्तके कार्ये कर्तव्ये न स्थानिवदित्यर्थः पर्यवस्यति । "ङेर्यः" इत्यादौ स्थानितावच्छेदकं ङेत्वं तच्च नाल्त्वव्याप्यमिति रामायेत्यादौ न दोषः । नन्वेवमपि वाक्यसंस्कारपक्षे राम ए अत्र इत्यत्र अल्त्वव्याप्यो धर्म एत्वं तदवच्छिन्नस्थानितासमानाधिकरणो धर्मः सुप्त्वं तन्निमित्तको विधिर्यादेश इति पुनरप्यनल्विधाविति निषेध इति चेन्न । अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मनिमित्तके स्थानिवन्नेत्यर्थेन एत्वावच्छिन्नस्थानितानिरूपितादेशताश्रयत्वस्य यादेशे ऽभावेनादोषात् । नन्वेवं हल्ङ्याबितिसूत्रविरोधः, "ङ्याब्ग्रहणेऽदीर्घः" इति वार्तिकविरोधः, हल्ङ्यादिसूत्रीयदीर्घग्रहणप्रत्याख्यानपरभाष्यविरोधः, "कृन्मेजन्तः" इति सूत्रस्थभाष्यविरोधः, ग्रहोऽलिटिसूत्रस्थभाष्यविरोधश्च । तथाहि—अतिखट्वो निष्कौशाम्बिरित्यादौ "गोस्त्रियोः" इति सूत्रे "अचः" इतिपरिभाषोपस्थित्या अल्त्वव्याप्याच्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिको य आरोपः ह्रस्वः आप्त्ववान् ङीत्ववानित्याकारकस्तत्प्रकारीभूताऽऽप्त्वङीत्वानिमित्तकत्वाद्धल्ङ्यादिलोपस्य तत्र कर्तव्ये स्थानिवत्त्वनिषेधस्य सिद्धत्वाद्दीर्घग्रहणस्य ङ्याब्ग्रहणे ऽदीर्घ इति वार्तिकस्य ङी ई आ आबिति प्रश्लेषस्यचोपयोगाभावात्। एवमाधये चिकीर्षवे कुम्भकारेभ्यो नगरकारेभ्य इत्यादौ "घेर्ङिति" "बहुवचने झल्येत्" इत्यत्र "अलोऽन्त्यस्य" इत्यस्योपस्थित्या स्वस्यापि स्वव्याप्यत्वमिति स्वीकारादल्त्वव्याप्याल्त्वावच्छिन्नस्थानितानिरूपिताऽऽदेशताश्रयगुणैकारधर्मिकारोपप्रकारीभूतकृत्त्वनिमित्तकत्वेन अव्ययसंज्ञाया अनल्विधाविति निषेधात् "अनिकारोकारप्रकृतिरिति वा" इति वार्तिकस्य सन्निपातपरिभाषया तत्प्रत्याख्यानस्य चासङ्गत्यापत्तिः । एवमग्रही-

दित्यादौ "ग्रहोऽलिटि" इत्यत्र "अच" इतिपरिभाषोपस्थित्या ऽल्त्वव्याप्याच्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयदीर्घधर्मिकारोपप्रकारीभूतेड्निमित्तकत्वेन "इट ईटि" इति सलोपे कर्तव्ये स्थानिवत्त्वाप्रवृत्त्या स्थानिवद्भावेन तत्र लोपकथनस्यासङ्गत्यापत्तिरिति चेन्मैवम्। अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपिताऽऽदेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्ना योद्देश्यता तदुद्देश्यताके कार्ये कर्तव्ये स्थानिवन्नेत्यर्थेन हल्ङ्यादिलोपे आप्त्वङीत्वयोः, अव्ययसंज्ञायां कृत्त्वस्य, सलोपे इट्त्वस्य चोद्देश्यतायाः साक्षादवच्छेदकत्वेन तेषाञ्चाल्त्वव्याप्यत्वाभावेनादोषात्।

नचैवं स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नेति निवेशो ऽनुपयुक्तः । रामायेत्यादौ एकाररूपाल्निष्ठस्थानितानिरूपिताऽऽदेशताश्रयधर्मिकारोपप्रकारीभूतसुप्त्वेन "सुपि च" इति दीर्घीयोद्देश्यतायाः साक्षादनवच्छिन्नत्वादिति वाच्यम्। रमायामित्यादौ याडर्थे तन्निवेशस्यावश्यकत्वात्। तथाहि—इकाररूपाल्निष्ठस्थानितानिरूपिताऽऽदेशताश्रयधर्मिकारोपप्रकारीभूतङिद्वचनत्वेन "याडापः" इतिशास्त्रीयोद्देश्यतायाः साक्षादवच्छिन्नत्वात्। नचैवमपि दाक्षी इत्यादौ द्विवचनत्वातिदेशो न स्यात्।"औङ आपः" इत्यत्र औङित्यस्यौकारविभक्तेः संज्ञात्वेन अल्त्वव्याप्यो य औत्वरूपो धर्मस्तद्धर्मावच्छिन्ना या औकारनिष्ठा स्थानिता तादृशस्थानितानिरूपिता या ईकारनिष्ठाऽऽदेशता तादृशादेशताश्रयधर्मिको य आरोप ईकारः द्विवचनत्ववान् इत्याकारकस्तादृशारोपप्रकारीभूतो यो द्विवचनत्वरूपो धर्मस्तद्धर्मेण साक्षादवच्छिन्ना या "ईदूदेद् द्विवचनम्" इति शास्त्रीयोद्देश्यता तदुद्देश्यताके विधौ स्थानिवत्त्वस्य निषिद्धत्वादिति वाच्यम्। अल्त्वव्याप्यधर्मेण साक्षादवच्छिन्ना या स्थानिता तादृशस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्ना योद्देश्यता तदुद्देश्यताके विधौ न स्थानिवत् इति अनल्विधावित्यस्यार्थेन "औङ आपः" इत्यत्र तस्मादिति परिभाषोपस्थाप्यं विशेष्यं औङ इति विशेषणमिति स्वीकारेण अल्त्वव्याप्यौत्वधर्मेण "औङ आपः" इतिशास्त्रीयस्थानितायाः साक्षादनवच्छिन्नत्वेनादोषात्।

परेतु अल्पर्याप्तस्थानितानिरूपिताऽऽदेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्ना या उद्देश्यता तदुद्देश्यताके विधौ स्थानिवन्नेत्यवार्थः स्वीक्रियते। नचैवं रमायां सर्वस्यामित्यादौ याट्स्याटौ न स्याताम्, अनुबन्धविनिर्मुक्तपदार्थोपस्थितिरिति सिद्धान्तेन स्थानिताया अल्पर्याप्तत्वादिति वाच्यम्। बोधकावयवेषु अनुबन्धेषु बोध्यावयवत्वमारोप्यते इति "एकान्ता अनुबन्धाः" इत्यस्य तात्पर्येण प्रकृते च ङकारेकारोभयपर्याप्तत्वेन स्थानिताया अल्पर्याप्तत्वाभावात्। नचैवं साम्नी लोम्नी इत्यादौ दोषो दुरुद्धरः स्थानिताया अल्पर्याप्तत्वादिति वाच्यम्। संज्ञाविधावित्यस्यानित्यत्वेन ईदूदेदित्यस्य ईदूदेदन्तं यद् द्विवचनं तदन्तं यत्तदादि तत् प्रगृह्यमित्यर्थेन साम्नी इत्यादौ स्थानिताया अल्पर्याप्तत्वेऽपि तादृशस्थानितानिरूपिताऽऽदेशताश्रयधर्मिकाऽऽरोपप्रकारीभूतद्विवचनत्वस्य प्रगृह्यसंज्ञीयोद्देश्यतायाः साक्षादनवच्छेदकत्वात्। एवं च स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वनिवेशो विफल एवेत्याहुः।

तद्वृत्तिधर्माश्रये नेत्यर्थः । अत एव रेफस्थानिकविसर्गस्य रुशब्दत्वं न स्थानिवत्त्वेनेति "भोभगो" इत्यत्र भाष्ये स्पष्टम्। ऋधातोर्द्वित्वे ऽभ्यासस्योरदत्त्वे ऽरित्यस्य हलादिः शेषस्तु अरित्यस्य पुनः "पूर्वोऽभ्यासः" इत्यनेनाभ्यासत्वात् । तस्यापि द्विरुक्तधातुपूर्वभागत्वात् । प्रक्रियाज्ञानवतां तथा ज्ञानस्य सुलभत्वात् ।

---

*तत्स्थानिसम्बन्धी च योऽलिति*। स्थानिसम्बन्ध्यल्वृत्तिधर्मनिमित्तके कार्ये स्थानिवत्त्वं नेति यावत्। नच रामायेत्यादौ "सुपि च" इति दीर्घानापत्तिः। स्थानी यकारस्तत्सम्बन्धी यो ऽल् व्यपदेशिवद्भावेन स एव तद्वृत्तिर्यो धर्मः सुप्त्वं तन्निमित्तकत्वाद्दीर्घे कर्तव्ये स्थानिवत्त्वनिषेधादिति वाच्यम् । अल्वृत्तिधर्मे अल्त्वव्याप्यत्वस्य विशेषणेनादोषात् । नचैवमपि प्रपठ्येत्यादौ वलादित्वस्यातिदेशापत्तिः । वल्त्वे स्थानिसम्बन्ध्यल्वृत्तित्वस्याल्त्वव्याप्यत्वस्य च सत्त्वेऽपि इटो वलादित्वनिमित्तकत्वेन वल्त्वनिमित्तकत्वाभावेन निषेधाप्राप्तेरिति वाच्यम् । स्थानिसम्बन्धी योऽल् तद्वृत्तिर्योऽल्त्वव्याप्यो धर्मस्तद्घटितधर्मनिमित्तके कार्ये कर्तव्ये स्थानिवन्नेति द्वितीयार्थस्वीकारेणादोषात् । नचैवमपि बभूविवेत्यादाविडनापत्तिः । स्थानी यो वस् तत्सम्बन्धी अल् वकारस्तद्वृत्तिर्यो धर्मो वलादित्वं तन्निमित्तक इडिति स्थानिवत्त्वनिषेधेनाऽऽर्धधातुकत्वस्यातिदेष्टुमशक्यत्वादिति वाच्यम् । अल्त्वव्याप्यधर्मघटितधर्मे अतिदिदिक्षित इति विशेषणदानेन अतिदेष्टव्यार्द्धधातुकत्वे अल्त्वव्याप्यधर्मघटितत्वाभावेनादोषात् । यश्चाल्त्वव्याप्यधर्मघटितो धर्मो वलादित्वं न सोऽतिदिदिक्षित इति । ननु स्थानिसम्बन्धीतिविशेषणदानं विफलमिति चेदिष्टापत्तिरेव । केचित्तु बभूविवेत्यादौ दोषवारणाय आदेशावयवाद्यल्वृत्तिरिति धर्मे विशेषणम् । तत्र चाऽऽदिग्रहणेन बभूवतुरित्यत्र न दोष इति, तन्न । कः इत्यादौ स्थानिवत्त्वेन हलन्तत्वात् "हल्ङ्याब्भ्यः" इति सुलोपापत्तेः । हल्त्वस्य चाऽऽदेशादिभूतककारवृत्तित्वेन निषेधाप्रवृत्तेरिति दिक् ।

*द्विरुक्तधातुपूर्वभागत्वादिति* । ननु देवदत्तौ पेचतुरित्यादौ देवदत्तावित्यादेरपि द्विरुक्तपूर्वभागत्वेनाभ्याससंज्ञापत्तिः । नच देवदत्तावित्यादेरभ्याससंज्ञायामपि न दोषः, अभ्यासकार्याणामभ्याससंज्ञाप्रयोजकप्रत्ययनिमित्तकत्वेन "ह्रस्वः" इत्यादेरभ्याससंज्ञाप्रयोजकप्रत्ययनिमित्तकाङ्गावयवाभ्यासस्याचो ह्रस्वो भवतीत्यर्थेन प्रकृतेरभ्यासकार्यप्राप्त्यभावादिति वाच्यम् । एवमपि ऊर्णुनाव ऊर्णुनुविषति इत्यादौ ऊर्णु इत्यस्य अभ्याससंज्ञायां ह्रस्वाद्यापत्तेरिति चेन्मैवम् । द्विर्वचनीयविधेयताश्रयद्विर्वचनीयोद्देश्यताश्रयैतदुभयमात्रारब्धसमुदायघटको यो द्विर्वचनीयविधेयताश्रयावधिकपूर्वत्वविशिष्टः सोऽभ्याससंज्ञको भवतीत्यर्थेनादोषात् । प्रकृते च अरऋ इत्यत्र एकदेशविकृतन्यायेन तादृशसमुदायत्वं बोध्यम् । अथवा द्वि-

अत एव धिन्वन्तीत्यादाविण् न । उकारवृत्त्यार्धधातुकत्वस्य वकारे ऽनतिदेशात् । यत्तु अत्रेण्निवृत्तये स्वविधावपि स्थानिवत्त्वमपरविधाविति न्यासेन साधितं भाष्ये सा त्वेकदेश्युक्तिः । असिद्धवत्सूत्रेण सिद्धस्याऽऽयन्नासन्नित्यादेस्तत्फलत्वेनोपन्यासात् । अस्यापि "अचः पूर्वत्वविज्ञानात्" इति वार्त्तिके पञ्चमीसमासेन सिद्धेः कैयटेनोक्तत्वाच्च ।

---

र्वचनीयविधेयताश्रयद्विर्वचनीयोद्देश्यताश्रयैतदुभयमात्रारब्धसमुदायसमभिव्याहृतवर्णाघटितो यो द्विर्वचनीयविधेयताश्रयावधिकपूर्वत्वविशिष्टः सोऽभ्याससंज्ञको भवतीति "पूर्वोऽभ्यासः" इत्यस्यार्थेन अरऋ इति समुदाये एकदेशविकृतन्यायेन तत्त्वानानयनेऽपि न क्षतिरिति दिक् ।

*इण्नेति* । ननु धिन्वन्तीत्यादौ न दोषः । इटो ऽपरनिमित्तकत्वेनान्तरङ्गतया तस्मिन्कर्तव्ये यणो बहिरङ्गत्वेनासिद्धत्वात् । नच परनिमित्तकापरनिमित्तकयोः शास्त्रयोराश्रीयमाणसमुदायो यत्रान्यूनातिरिक्तस्तत्रैवापरनिमित्तकमन्तरङ्गमित्यस्य विषयः । अत एव सुस्यूषति दुद्यूषति इत्यादौ यणः पूर्वं द्वित्वं न भवतीति वाच्यम् । अन्तर्भूतनिमित्तकत्वान्तरङ्गत्वस्य यणि सत्त्वेनापरनिमित्तकत्वरूपान्तरङ्गत्वस्य द्वित्वे सत्त्वेनोभयोस्तुल्यबलत्वेन परत्वाद्यणि द्वित्वे च रूपसिद्धेरितिचेन्नैवम् । अचोऽन्यानन्तर्यनिमित्तककार्यप्रवृत्त्युत्तरं यदन्तरङ्गं प्राप्नोति तत्र कर्तव्ये बहिरङ्गासिद्धत्वं नेत्यर्थकनाजानन्तर्यइतिपरिभाषया निषेधात् । अत एवाक्षद्यूरित्यादौ "लोपो व्योः" इति लोपो न ।

किञ्च यः अजो यजस्तस्यापत्यं याजिरित्यादौ "न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्" इति ऐजभाव आद्यार्थकानल्विधावित्यस्य प्रयोजनम् । तथाहि—न य्वाभ्यामिति सूत्रे पूर्वाविति विधेयविशेषणम् । तथाचाल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रययण्धर्मिको य आरोपः यण् पदान्तत्ववानित्याकारकः तादृशारोपप्रकारीभूतपदान्तत्वेन ऐच्शास्त्रीयोद्देश्यता साक्षादवच्छिन्नेति निषेधप्रवृत्तिः स्पष्टैव । नच धिन्वन्ति इत्यादौ पञ्चमीसमासेन स्थानिवत्त्वादिटः प्राप्तिरेव नेति वाच्यम् । पञ्चमीसमासेनापि स्वविधौ स्थानिवत्वाप्रवृत्तेः । अत एव भवति इत्यादाववादेशः सिद्ध्यति । अन्यथा ऽवादेशप्रतिबन्धार्थं पञ्चमीसमासेन गुणस्य स्थानिवत्त्वं स्यादिति भावः ।

अत्रेदमवधेयम् । आरेत्यादौ पुनरभ्याससंज्ञायाः प्रयोजनं चिन्त्यम् । नच अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूताभ्यासत्वनिमित्तकत्वाद्धलादिःशेषस्यानल्विधाविति निषेधः स्यादिति वाच्यम् । "हलादिः शेषः" इत्यत्राभ्यासादेरेव हल उद्देश्यत्वेन तादृशप्रकारीभूताभ्यासत्वेन उद्देश्यतायाः साक्षादनवच्छिन्नत्वात् । अभ्यासत्वावच्छिन्नमुद्दिश्य आदिर्हल् शिष्यते इत्युक्त्वा दोषदानस्य

प्रदीव्येत्यादौ च वलादिलक्षण इण्न । स्थान्यलित्युक्तेर्बभूविवेत्यादौ वलादिलक्षणेट्सिद्धिः । न हि तत्र वलादित्वं स्थानितो लभ्यं किंतु स्वाश्रयमेव ।

यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावतिदेशो मृग्यते तस्य निमित्तस्य स्थान्यलसाधारणधर्मत्व एव निषेधप्रवृत्तेः। प्रकृते चाऽऽर्द्धधातुकत्ववैकल्यप्रयुक्ता ऽप्राप्तिर्न तत्स्थान्यलसाधारणं, यच्च तादृशवल्त्वघटितं वलादित्वं न, तद्वैकल्यप्रयुक्ता ऽप्राप्तिरिति बोद्ध्यम् । प्रत्यासत्त्या च शास्त्रीयकार्ये एव स्थानिवत्त्वं तेन नायकासिद्धिः ।

प्राधान्यात्कार्यातिदेशो ऽयम् । शास्त्रातिदेशस्तु कार्यातिदेशादभिन्नरूपः । तस्यापि कार्यफलकत्वादिति तृज्वत्सूत्रे कैयटः । भाष्ये ऽपि "तत्राऽऽङ्गशास्त्रातिदेशात्सिद्धमाङ्गं यत्कार्यं तदतिदिश्यते" इत्युक्त्या तयोरभिन्नरूपत्वं सूचितम् । तत्रानपेक्षितार्थसन्निधानस्तत्तन्निमित्तरूपकार्यव्यवहार एवानेन । कार्यं तु स्वशास्त्रेणैवेति । अत एव रामायेत्यादौ "स्थानिवत्त्वेन सुप्त्वात् सुपि चेति दीर्घः" इति सङ्गच्छते। परिवीरित्यादौ परत्वात् दीर्घ इति च सङ्गच्छते । यद्वा किं चिन्निमित्तवैकल्ये ऽपि दीर्घादिकार्यमनेन क्रियते। तच्च कार्यं किमित्याकाङ्क्षायां तत्स्वरूपनिर्णयस्य विधिशास्त्रमूलकत्वेन तद्देशेनैव परशास्त्रविहितत्वरूपं परत्वं तेषां बोद्ध्यम् । एतदेवाभिप्रेत्यातिदिश्यमानकार्याणामुपदेशदेश एव देश

"पूर्वोऽभ्यासः" इत्यस्य निरुक्तार्थकरणस्य चानुचितत्वात् । अत एव चाच्छिद्यते इत्यत्र हलादिःशेषो न । अन्यथा पूर्वोक्तदिशा तुग्विशिष्टस्याभ्यासंज्ञया स दुर्वारः स्यात् । मम तु द्विर्वचनीयोद्देश्यताश्रयस्यैवाभ्याससंज्ञेति तुग्विशिष्टे सा नेति न दोषः । दीर्घस्यैव तुगिति यदागमपरिभाषायाः प्राप्तिरेव नेति तथापि न दोषः । अवयवावयवन्यायस्य लौकिकत्वेनानित्यत्वादप्रवृत्त्या तेनापि न दोषः ।

किञ्च नानलिवधावित्याद्यार्थस्योपयोगो ऽपि । नच धिन्वन्तीत्यत्रेऽभावाय स आवश्यक इति वाच्यम् । अन्तरङ्गपरिभाषया गतार्थत्वात् । नच नाजानन्तर्ये इति निषेधः । अचोऽन्यानन्तर्यनिमित्तकं यदन्तरङ्गं प्राप्नोति तदुत्तरकालिकान्तरङ्गप्राप्त्यभावेन तदप्रवृत्तेः । तस्या असत्त्वाच्च । सत्त्वे वा तस्या अनित्यत्वाच्च । अत एव जगदम्बात्रेत्यादौ ह्रस्वो न । नचैवं याजिरित्यत्रैजागमाभावाय सोऽर्थ आवश्यक इति वाच्यम् । न य्वाभ्यामित्यत्र पदान्तयकारवकारयोरुद्देश्यत्वेनाल्त्वव्याप्येकत्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतपदान्तत्वधर्मस्यैजागमीयोद्देश्यतायाःसाक्षादनवच्छेदकत्वे न पैयाजिरिति रूपस्यैवेष्टत्वात् । नचैवमपि "भोभगो" इति सूत्रस्थभाष्यविरोध इति

इत्यभियुक्ताः।

अत्राऽऽद्यपक्ष एव भाष्यसंमतः। अत एव "स्थान्यल्विधिप्रतिषेधे कुरुवधपिबां प्रतिषेधो वक्तव्य" इत्येतदुपपादनावसरे "स्थानिवद्भावादङ्गसंज्ञा स्वाश्रयं च लघूपधत्वादि, तत्र लघूपधगुणादिः प्राप्नोति" इत्यादिभाष्योक्तेरिति बोद्ध्यम्। एवं यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्यापि। अत एवेष्ठवद्भावेनातिदिष्टभत्वस्य वर्णाश्रयत्वमित्यादिव्यवहारः। सर्वातिदेशेष्विदं तुल्यम्। यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तं शास्त्रीयमेव प्रत्यासत्तेः।

---

वाच्यम्। तस्य भाष्यस्य र इत्यनुवृत्तिपरतया कथञ्चिद्योजयितुं शक्यत्वात्। तस्यैकदेशयुक्तित्वेनादोषाच्च। अत एव साम्नी इत्यादौ प्रगृह्यत्वं सिध्यति। अन्यथा संज्ञाविधाविति निषेधात्प्रगृह्यसंज्ञायां द्विवचनत्वस्य साक्षादुद्देश्यतावच्छेदकत्वेन दोषो दुरुद्धर एवेति दिक्। *स्थान्यलित्युक्तेरिति* स्थान्यल्विशिष्टधर्मघटितधर्मनिमित्तके विधौ कर्तव्ये स्थानिवन्नेत्यर्थः। वै० च स्ववृत्तित्वं स्ववृत्त्यलत्वव्याप्यत्वं-स्वस्थानिकादेशावयवालवृत्तित्वम्-एतत्रितयसम्बन्धेन। यत्तु स्ववृत्तित्वं स्वस्थानिकादेशावयवाल्वृत्तित्वं स्ववृत्त्यल्त्वव्याप्यत्वम् एतत्त्रितयसम्बन्धेनाल्विशिष्टत्वमिति। तन्न। बभूवतुरित्यादौ आदेशावयवे वल्त्वस्य सत्त्वेनानल्विधाविति निषेधाप्रवृत्त्या इडापत्तेः। एतत्सर्वमभिप्रेत्याह *बभूविवेत्यादाविति* । वस्तुतस्तु अल्त्वव्याप्यधर्मघटितधर्मे आतिदिदिक्षित इतिविशेषणदानेन सर्वसामञ्जस्येनेदं सर्वं विफलमेवेति बोध्यम्। *स्थान्यलसाधारणधर्मत्व एवेति*। धर्मे स्थान्यलो साधारण्यञ्च। स्थान्यल्वृत्तित्वे सति अल्मात्रवृत्तित्वम्। नायकसिद्धिरिति* स्यादेतत् अचः परस्मिन्नित्यत्रेवात्रापि अशास्त्रीयस्यातिदेशो भवतु, शब्दाधिकाराश्रयणे गौरवात्। स्थानिवदित्यत्रादेशे स्थानिवृत्तिधर्मसम्भावनायां यद् भवति तद्भवति यन्न भवति तन्न भवतीत्यर्थः। अत एव देवयतेः क्विपि दयूरित्यत्रायादेशप्रतिबन्धार्थमुत्तरसूत्रेण स्थानिवत्वं न। नच एषो गमयतीत्यस्यासिद्धिः, गमादेशे स्थानिवृत्तिधर्मसम्भावनायामपि गकारे हल्त्वानपायादेतत्तदोरिति लोपापत्तेरिति वाच्यम्। एष गमयतीतिरूपस्यैवेष्टत्वात्। अत एव संप्रसारणादसंप्रसारणे इति न्यासेन न संप्रसारणे संप्रसारणमिति सूत्रप्रत्याख्यानं संगच्छते। अन्यथा सूत्रसत्त्वे एव यूनः पश्येति प्रत्याख्याने च यणः स्थानिवत्त्वात्सुलोपाभावे एषो यूनः पश्येति फलभेदेन प्रत्याख्यानासंगत्यापत्तेः। मम तु एतत्तदोरिति प्रतिबन्धार्थमचः परस्मिन्निति स्थानिवत्त्वं नेति कल्पनान्न दोषः। नचैवपि इयायेत्यादौ स्थानिवत्त्वे इयङ् न स्यादिति परिभाषेन्दुशेखरस्थशङ्काया असंगतिरितिवाच्यम्। इष्टापत्तेरिति चेन्नैवम्। एकविंश इत्यादौ तिविंशतेरिति लोपस्य पररूपप्रतिबन्धार्थं स्थानिवत्त्वापत्तेः इति दिक्। *प्राधान्यादिति*। स्यादेतत्। राम ङे इत्यस्यां

स्थानिवदित्युक्तेः संबन्धिशब्दमहिम्नैवाऽऽदेशलाभे आदेशग्रहणं

---

दशायां "सुपि च" इति शास्त्रस्य तद्विहितदीर्घरूपकार्यस्य वा प्राप्त्यभावेन शास्त्रकार्यातिदेशयोरसम्भवादिदमसङ्गतम्। किञ्च पूर्वापरविरुद्धश्चायं ग्रन्थः। शास्त्रातिदेशमुपक्रम्य रामायेत्यादौ "स्थानिवद्भावेन सुप्त्वात्सुपि चेति दीर्घ" इत्यनेन निमित्तातिदेशस्यैवोक्तत्वात् इति चेत्—

अत्र केचित् । प्राधान्यात्कार्यातिदेशो ऽयमित्यतः प्राग् यद्यपीति पूरणीयम् । अभिन्नरूपत्वं सूचितमित्यनन्तरं "तथापि एतदुभयं न असम्भवात्" इति पूरणीयम्। तत्रानपेक्षितार्थसन्निधान इत्यत्र किन्त्वित्यादिः। अनपेक्षितार्थेत्यत्र अर्थपदेन सामग्री गृह्यते । तथा च यत्कार्यं प्रति या सामग्री तदभावेऽपि तत्तन्निमित्तमेवानेनातिदिश्यते इति निमित्तातिदेश एवात्रेत्याहुः ।

अन्ये तु यथाश्रुतोऽपि ग्रन्थः सङ्गत एव । नच राम ए इत्यस्यां दशायां "सुपि च" इति शास्त्रस्य दीर्घरूपकार्यस्य वा प्राप्त्यभावेन ग्रन्थासङ्गतिरिति वाच्यम् । "आदिरन्त्येन" इति शास्त्रस्य तद्विहितसुप्संज्ञारूपकार्यस्य वा प्राप्त्या ग्रन्थस्य सङ्गतत्वात् । प्रधानकार्यातिदेशासम्भवे ऽप्रधानकार्यस्याप्रधानशास्त्रस्य वाऽतिदेष्टुं शक्यत्वात्। अत एव "तत्तन्निमित्तरूपकार्यव्यवहार एवानेन" इतिग्रन्थेनाप्रधानकार्यातिदेश एवोक्तः। अत एव च रामायेत्यत्र "स्थानिवद्भावेन सुप्त्वात्सुपि चेति दीर्घ" इति ग्रन्थेन सुप्संज्ञारूपं कार्यमेवातिदिश्यते इति बोध्यते इत्याहुः।

परेतु स्थानिनि आदेशवृत्तिधर्मसंभावनया यच्छास्त्रं यत्कार्यं वा प्राप्नोति तदादेशेऽपि भवतीति स्थानिवदित्यस्यार्थः। आदेशवृत्तिधर्मप्रकारकस्थानिविशेष्यकसम्भावनाप्रयोज्यप्रवृत्तिसम्भावनाविषयीभूतं शास्त्रं कार्यं वा आदेशे प्रवर्तते इति यावत्।तथाच राम ए इत्यस्यां दशायाम् अयम् एशब्दो यदि यञादिः स्यात्तर्हि सुपिचेति शास्त्रस्य तद्दीर्घस्य वा प्रवृत्तिसम्भावना ऽस्तीति यथाश्रुतमेव सम्यक्। अत एवानपेक्षितार्थसन्निधान इत्यग्रिमः ग्रन्थः सङ्गच्छते।नच "तत्तन्निमित्तरूपकार्यव्यवहार एव" इत्युत्तरग्रन्थासङ्गतिरिति वाच्यम्। तत्तत् निमित्तं रूपमसाधारणं यस्य तादृशं दीर्घादिरूपं कार्यं तद्व्यवहार इत्यर्थकरणेनादोषात्। कार्यं तु स्वशास्त्रेणैवेत्यस्य कार्यज्ञानं स्वशास्त्रेणैवेत्यर्थः। नचैवमपि रामायेत्यादौ "स्थानिवत्त्वेन सुप्त्वात्सुपि चेति दीर्घ" इत्यग्रिमग्रन्थासङ्गतिरिति वाच्यम् । स्थानिवत्त्वेनेत्यस्य "सुपि चेति दीर्घ" इत्यत्रान्वयः, सुप्त्वादित्यस्य सुप्त्वं विहायेत्यर्थो, ल्यब्लोपे पञ्चमीस्वीकारादित्याहुः।

वस्तुतस्तु प्राधान्यात्कार्यातिदेशोऽयमित्येतदारभ्य यद्वेत्येतत्पर्यन्तो ग्रन्थो ऽन्येतुमतरीत्या योजनीयः । यद्वेत्येतदारभ्य ग्रन्थः परेतुमतरीत्या योजनीय इति दिक्।

*यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिरिति* । यन्निमित्ताभावप्रयोज्यप्रधानशास्त्राप्रवृत्तिरित्यर्थः । न च पड्भ्यामित्यादौ णिलोपे स्वादित्वाजादित्वोभयाभावप्रयुक्ता "यचि भम्" इत्युपदेशाप्रवृत्तिरिति तदतिरि-

श्रौतस्थान्यादेशभावस्यैव ग्रहणमितिशङ्कावारणद्वारा "एरुः" इत्यादौ शब्दानित्यत्ववारणाय "सर्वे सर्वपदादेशाः" इति न्यायेन कल्प्यमानस्य तेस्तुरित्यानुमानिकादेशस्य संग्रहार्थम् । तेन पचत्वित्यादेः पदत्वसिद्धिरिति भाष्ये स्पष्टम् ।

ननु तोस्तित्वमपि छिन्नपुच्छे शुनि श्वत्वव्यवहारवल्लोकन्यायेनैव सिद्धम् । तदुक्तं "प्राग्दीव्यतोऽण्" इति सूत्रे भाष्ये "दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदम्" इत्युक्त्वा "किमर्थं विकृतनिर्देश एतदेव ज्ञापयत्या-

---

क्तनिमित्तकत्वेनेष्ठवद्भावे वर्णाश्रयत्वाभावाद्भसंज्ञा स्यादेवेति कथं जश्त्वमिति वाच्यम् । यन्निमित्तवैकल्येत्यत्र निमित्तपदेन सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्य ग्रहणेनादोषात् । तथाहि–णिः इष्ठवद्भवति इत्यतिदेशीयसादृश्यप्रतियोगितावच्छेदकीभूतो य इष्ठत्वरूपो धर्मस्तद्व्यापकीभूतो धर्मः स्वादित्वरूपो धर्मः नत्वजादित्वरूपो भूयिष्ठ इत्यादौ व्यभिचारादिति न दोषः । नचैवमपि याचि भमित्यत्र यचीति द्वन्द्वनिर्देशेन भसंज्ञायां यकारादित्वाजादित्वैतदन्यतरत्वेन निमित्तत्वादन्यतरत्वे सादृश्यप्रतियोगितावच्छेदकेष्ठत्वव्यापकत्वमस्त्येवेति पुनरपि तद्दोषतादवस्थ्यमेवेति वाच्यम् । यचीत्यत्र य् इति लुप्तसप्तम्यन्तं पृथक्पदमिति स्वीकारेणादोषात् । अत एव "द्वन्द्वाच्चुदषहान्तात्समाहारे" इति टच् समासान्तो न प्रसज्यते । अथवा यन्निमित्तवैकल्येत्यत्र निमित्तपदेन सादृश्यानुयोगितावच्छेदकधर्मव्यापकीभूताभावप्रतियोगिधर्मस्यैव ग्रहणमिति न कोऽपि दोषः । तथाहि–णिः इष्ठवद्भवतीत्यत्र सादृश्यानुयोगितावच्छेदकं णित्वं तद्व्यापकीभूताभावप्रतियोगि स्वादित्वमेव नत्वजादित्वयादित्वैतदन्यतरत्, णौ अजादित्वस्य सत्त्वादिति दिक् ।

*सम्बन्धिशब्दमहिम्नैवेति* । संबन्धिशब्दत्वञ्च निरूपकांशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नबोधकत्वम् । प्रकृते च स्थानिपदस्य स्थानितावति शक्तत्वेन स्थानिता च निरूपकांशे नित्यसाकाङ्क्षेति आदेशलाभ इति भावः । *तेस्तुरिति* । इदमुपलक्षणम्–भवति इत्यादेः स्थाने भवतु इत्यादेरपि । अन्यथा एरुरित्यस्य इवर्णान्तस्य उवर्णान्त आदेशो भवतीत्यानुमानिकस्थान्यादेशभावकल्पे अवयवत्वबोधेन शब्दानित्यत्वं दुरुद्धरं स्यादिति दिक् ।

*एतदेव ज्ञापयत्याचार्य इति* । नच दीव्यतिशब्दत्वस्याक्तपरिमाणसमनियतत्वेन तस्यातिदेशासम्भवात्कथं ज्ञापकत्वमिति वाच्यम् । दीव्यतिशब्दवृत्तिबोधजनकत्वस्य तान्ते ऽतिदेशसम्भवेन ज्ञापकत्वस्य सुस्थत्वात् । अत एव "प्राग्दीव्यतोऽण्" इत्यधिकारः प्रत्ययार्थबोधकपदघटिते शास्त्रे सम्बध्यते नान्यत्र, तेनात इञ् इत्यादावण्पदासम्बन्धः सिद्ध्यति । एकदेशविकृतत्वं च यादृशसमुदायैकदेशावच्छेदेन विकारो जातस्तत्समुदायविशिष्टत्वम् । समुदायवै० च—स्वघटकोद्देश्यकविकारप्रतियोगीतरयावद्घटितत्वं—स्वघटकोद्देश्यकविकारप्रतियोग्यघटितत्वं—स्वघटकोद्देश्यकविकारघटितत्वं—स्वविशिष्टाघटि-

चार्यो भवत्येषा परिभाषा एकदेशविकृतमनन्यवत्'' इति। अत एवात्र विकारो ऽशास्त्रीयो ऽपि । अत एव श्रायसशब्दादण्णन्ताद् द्विवचने श्रायसावित्यत्र वृद्धौ कृतायां सान्तस्योगित्त्वेनानेन न्यायेनाङ्गतया प्राप्तो नुम् पूर्वसंबन्धिविधित्वेनाचः परस्मिन्निति स्थानिवत्त्वेन वारितो ऽचः परस्मिन्निति सूत्रे भाष्ये। एतन्न्यायानाश्रयणे त्वङ्गत्वमेव दुर्लभम्। अन्तादिवत्सूत्रे भाष्यकैयटयोरपि गुडोदकमित्यादावेकादेशे कृते दकशब्दस्यानेन न्यायेनोदकशब्दत्वमाश्रित्य "उदके केवले" इति पूर्वपदान्तोदात्तत्वमुक्तम् । शब्दानित्यत्वं तु रेखागवयन्यायेन समाधेयम्। अनन्यवदित्यस्यान्यवन्नेत्यर्थः। तत्रान्यसादृश्यनिषेधे ऽन्यत्वाभावः सुतरामिति चेन्न । अर्द्धस्यान्यत्वे जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तौ तित्वप्रतीतेर्न्यायेनानुपपादनात्। किं च तिङ्सञ्ज्ञायास्तिबादिसूत्रोपात्तपरिच्छिन्नपरिमाणनिष्ठतया परिच्छिन्नपरिमाणार्थवाचकशब्दानां न्यूने ऽधिके वा शास्त्रव्यापारं विना ऽप्रवृत्तेर्येन विधिरिति सूत्रे ऽङ्गसंज्ञासूत्रे च भाष्ये उक्ततया तदभावात् । न्यूनाधिकत्वञ्च वैरूप्यस्योपलक्षणम् ।

न च तण्डुलानित्यादौ स्थानिवद्भावेन प्रत्ययान्तत्वे ऽपि स्वतः प्रत्ययान्तभिन्नत्वात्प्रातिपदिकत्वापत्तिरिति वाच्यम् । अतिदेशस्व-

---

तत्वमेतच्चतुष्टयसम्बन्धेन। सम्बन्धघटकवैशिष्ट्यं च स्वाघटकत्वं-स्वघटकमात्रोद्देश्यकविकाराघटकत्वमेतदुभयसम्बन्धेनेत्यन्यत्र विस्तरः। *अत एवेति*। "प्राग्दीव्यत" इत्यत्र शास्त्रीयविकाराभावेऽपि एकदेशविकृतन्यायस्वीकारादेवेत्यर्थः। *उदकशब्दत्वमाश्रित्येति*। वस्तुतस्तु उदकशब्दत्वस्याक्तपरिमाणसमनियतत्वेनेदं भाष्यमेकदेश्युक्तिः। गुडोदकमित्यादौ "पूर्वोत्तरपदनिमित्तककार्यात्पूर्वमन्तरङ्गो ऽप्येकादेशो न" इति परिभाषया स्वरात्पूर्वं गुणाप्रवृत्तेश्च। *अन्यसादृश्यनिषेध इति*। सादृश्यं न भेदघटितामिति प्रकृते नासङ्गतिरित्यन्यत्र विस्तरः। *परिच्छिन्नपरिमाणनिष्ठतयेति*। परिच्छिन्नपरिमाणत्वं च संख्यात्वपरिमाणत्वैतदन्यतरव्याप्यधर्मप्रकारकसंशयसामान्यनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयत्वम्। यद्धर्मावच्छिन्नज्ञानोत्तरं संख्यात्वव्याप्यधर्मप्रकारकः परिमाणत्वव्याप्यधर्मप्रकारको वा संशयो नोदेति तत्त्वमिति यावत् । वस्तुतस्तु तिङ्त्वस्य परिच्छिन्नपरिमाणनिष्ठत्वेऽपि परिच्छिन्नपरिमाणसमनियतत्वाभावाच्चिन्त्यमेतत्, परिच्छिन्नपरिमाणनिष्ठधर्माणामनतिदेशे न्यायस्य निर्विषयत्वापत्तेरिति दिक्।

*प्रातिपदिकत्वापत्तिरिति* । ननु तण्डुलानित्यादौ "तस्माच्छसो न" इति नकारादेशस्य विधानसामर्थ्यादेव नलोपो न भवतीति को दोषः।

भावेनातिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावात् । अत एव जहीत्यादौ जादेशस्यासिद्धत्वे स्वाश्रयो हेर्लुग्न । सिद्धत्वासिद्धत्वयोर्विरोधात् । असिद्धवत्सूत्रं तु शाधीत्यादौ स्थानिप्रयुक्तधिभावसंपादनेन चरितार्थम् । न चाप्रत्यय इत्यस्य पर्युदासत्वे शास्त्रीयकार्याभावात्स्थानिवत्त्वं दुर्लभमिति वाच्यम् । "वेः स्कन्देरनिष्ठायाम्" इति षत्वविधायके तिङन्तेषु षत्वाभावायाऽऽवश्यकेन न्याय्येन चानिष्ठायामिति पर्युदासेन वृत्त्यादिसम्मतेन पर्युदासलभ्याशास्त्रीये ऽपि शास्त्रतात्पर्यविषये शास्त्रीयवदतिदेशबोधनात् । विस्कन्न इत्यादौ हि निष्ठान्तत्वस्य नित्यतया स्थानिवत्त्वेनैव निष्ठात्वस्य वक्तव्यत्वात् । तस्य प्रसज्यप्रतिषेधत्वे तु लक्ष्यानुसारिव्याख्यानादेवोक्तार्थसिद्धिरिति बोध्यम् ।

केचित्तु भाष्ये "तत्स्थानापन्ने तद्धर्मलाभस्य तत्कार्यस्य च लोकन्यायेनैव सिद्धेरयमतिदेशः स्वं रूपमित्येतच्छास्त्रसत्त्वाद्धन्तेः कार्यवधौ न स्यादिति" इत्युक्तम् । एवञ्च स्वंरूपमितिशास्त्राविषये तेन सिद्धिरिति सूचितम् । एवञ्चाशास्त्रीयस्यापि धर्मस्यातिदेशो भवत्येव । अतिप्रसङ्गस्तु लक्ष्यानुसारेण क्वचिल्लोकन्यायानाश्रयणेन परिहरणी-

---

नच सर्वस्मिन्नित्यादौ स्थानिवद्भावेन प्रत्ययान्तत्वेऽपि स्वतः प्रत्ययान्तभिन्नत्वात्प्रातिपदिकत्वे नलोपापत्तिः, नकारोच्चारणं तु सर्वस्मिशय इत्यादौ "शयवास" इति सप्तम्या अलुकि संज्ञाविधौ नलोपस्यासिद्धत्वात्संयोगसंज्ञायां "संयोगे गुरु" इति गुरुसंज्ञायां "गुरोरनृत" इति प्लुतार्थश्चरितार्थमिति वाच्यम् । "इकोऽचि विभक्तौ" इति सूत्रस्थभाष्यप्रामाण्येन संयोगसंज्ञायां नलोपस्यासिद्धत्वं न भवतीति, तन्निमित्तकगुरुसंज्ञामादाय "गुरोरनृत" इति प्लुतो न भवति इति वा कल्पनेनादोषात् । अन्यथा त्रपुपुशय इत्यत्र नुमि नलोपे तस्यासिद्धत्वात्संयोगसंज्ञायां गुरुसंज्ञायां गुरोरिति प्लुताभावायाचीत्यस्यावश्यकत्वेन भाष्योक्तज्ञापकता भज्येतेति चेन्मैवम् । नकारोच्चारणसामर्थ्येन शास्त्रबाधकल्पनापेक्षया ऽतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावज्ञापनस्यैवौचित्यात् । वस्तुतस्तु भूमिशय इत्यादावलुग्वारणाय शयवासेत्यत्र हलदन्तादेति सम्बन्धस्य कौमुद्यामेव स्पष्टत्वाद्भाष्यासङ्गतिशङ्कैव नास्तीति न तद्बलेन काचित्कल्पना सम्भवतीति बोध्यम् ।

*अतिदिश्यमानधर्मविरुद्धेति* । अत्र विरुद्धत्वञ्च तदभाववत्तानिश्चयमुद्रया ग्राह्यम्, नतु तदभावव्याप्यवत्तानिश्चयमुद्रया । अन्यथा ऽधुरित्यादौ "विभाषा घ्राधेट्" इतिलुगर्थमतिदिश्यमानं यद्धेट्त्वं तदभावव्याप्यं यत्स्वाश्रयमादन्तत्वं तत्प्रयुक्तः "आतः" इति जुस् न स्यादिति दिक् ।

यो यदि प्राप्नोति । एवञ्च न कश्चिद्दोषः । "न पदान्त" इति सूत्रे ब्राह्मणकण्डूतिरित्युदाहरणाच्च क्व चित्तदनाश्रयणम् । तत्र हि कण्डूयतेः क्तिचि तत्राल्लोपे तस्य स्थानिवत्त्वादुवङि यणि वाऽनादिष्टादचः पूर्वत्वे स्थानिद्वारके गृह्यमाणे ऊठ् न स्यादित्याहुः ।

अत एवार्थवत्सूत्रशेषे ऽप्रत्यय इत्यस्य पर्युदासत्वमेवोक्तं भाष्ये । तत्र पक्षे च काण्डे इत्यत्र पूर्वान्तवद्भावेन प्रत्ययान्तभिन्नत्वाद्दोषः शङ्कितो न तु स्वाश्रयाप्रत्ययान्तत्वेन । "क्षियो दीर्घात्" इति सूत्रे भाष्ये ऽपि अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभाव इति स्फुटम् । तत्र हि क्षिय इत्यत्रेयङर्थं प्रकृतिवदतिदेशे स्वाद्यनुत्पत्तिमाशङ्क्य एवं तर्हि आतिदेशिकानां स्वाश्रयाणि न निवर्त्तन्ते इति समाधायातिदिश्यमानधर्मविरुद्धस्वाश्रयानिवृत्तेरावश्यकत्वाभिप्रायेणाथाप्येतन्नेत्याशङ्क्य निर्देशसामर्थ्याद्विभक्तिरित्युक्तम् । असिद्धवत्सूत्रे च कैयटे स्फुटमेतत् । यत्तु गाङ्कुटादिसूत्रे भाष्ये "सृजिदृशोः" इत्यत्राकितीति पर्युदासात्सिसृक्षतीत्यत्र "हलन्ताच्च"इति कित्त्वातिदेशे ऽपि अमागममाशङ्क्य प्रसज्यप्रतिषेधाश्रयणेन समाहितं, तत्तु वार्त्तिकक्रदुक्तमुपायान्तरं बोद्धव्यम् । अनल्विधाविति विधिग्रहणादलाश्रये विधावित्यर्थात् यत्र विधौ शब्दतः स्थानिस्थान्यवयवान्यतराल्वृत्तिधर्मवतस्तेन तस्मात्तस्य तस्मिंस्तदादेरित्यादिप्रकारेण विशेष्यतया विशेष-

---

*यणि वेति* । द्विधा हि कण्ड्वादय इत्युक्त्वा धातुत्वकल्पे उवङ् प्रातिपदिकत्वकल्पे यणिति विवेकः । *अत एवेति* । पर्युदासलभ्याशास्त्रीयेऽपि शास्त्रीयवदतिदेशस्वीकारादेवेत्यर्थः । *काण्डे इत्यत्रेति* । नच लक्ष्येलक्षणन्यायेन पुनर्हस्वाप्राप्त्या इयमाशङ्का ऽयुक्तैवेति वाच्यम् । गुणस्य स्वीयप्राथमिकप्रवृत्तौ उद्देश्यतावच्छेदकत्वेनाश्रीयमाणसमुदायघटकमात्रोद्देश्यकविकारभिन्नत्वेन तल्लक्ष्यत्वाभावात । *अलाश्रये विधावित्यर्थादिति*। अल्विशिष्टविधावित्यर्थः। वै० च साक्षात्स्ववृत्त्यल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मावच्छिन्नोद्देश्यताकत्व-स्ववृत्त्यल्त्वव्याप्यधर्मघटितातिदिदिक्षितधर्मनिमित्तकत्वैतदन्यतरसम्बन्धेन। साक्षादित्यस्य अवच्छिन्नेत्यत्रान्वयः। निरूपितं चैतत् पुरस्तात्।

शब्दतः स्थानीत्यस्य अल्त्वव्याप्यधर्मावच्छिन्नस्थानिताश्रय इत्यर्थः, अल्पर्याप्तस्थानिताश्रय इत्यर्थो वा । *अन्यतराल्वृत्तिधर्मेति*। तादृशस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्देश्यतासामानाधिकरण्यं-स्ववृत्त्यल्त्वव्याप्यत्वम्-एतदन्यतररूपं धर्मेऽन्य-

णतया वा अलाश्रयणं तत्र निषेधः। व्यूढोरस्केन, द्यौः, द्युभ्यां, क इष्टः, प्रपठ्येत्युदाहरणानि। शब्दत इत्युक्तेरग्रहीदित्यादौ "इट ईटि" इति सिद्ध्यति। दीर्घविधावत्र च इट इतिसमुदायाश्रयणात्। अन्यथा ट-स्यानुबन्धत्वादिकारस्यैवोभयत्राश्रयणमित्यल्विधित्वं स्यात्। अत्र सूत्रे विशेषातिदेशो ऽपि। अन्यथा इडादेरपि क्त्वः सत्त्वात् वलादित्व-स्य तद्विशेषधर्मत्वात् उपस्थितधर्मैस्तद्व्यापकधर्मैश्च विध्याकाङ्क्षापूरणे स-ति तदतिरिक्तविशेषग्रहणे मानाभाव इत्येतन्न्यायमूलकेन सामान्या-तिदेशे विशेषानतिदेशेन सिद्धौ विशेषणतया ऽलाश्रयणे निषेध इत्ये-तत्प्रतिपादकस्यानल इत्येव सिद्धे कृतस्य विधिग्रहणस्य वैयर्थ्यं स्या-त्। हलादिक्ङिन्निमित्तकेत्वप्रतिषेधकान्न ल्यपीति लिङ्गाच्च। अनुब-न्धकार्ये त्वनल्विधाविति निषेधो न, अनुबन्धानामनेकान्तत्वात्। ए-कान्तत्वे ऽपि शिद्ग्रहणेन तेषामल्व्यवहाराभावज्ञापनात्। "नानुबन्धकृ-तमनेकाल्त्वम्" इति ज्ञापयतीति भाष्ये ऽल्त्वव्यवहाराभावबोधनद्वारेति शेषः। ध्वनितश्चेदं "क्ङिति च" "गाङ् लिटि" "हलः श्नः" इति सूत्रेषु भाष्ये। तत्राऽऽद्ये यासुटो ङिद्वचनात् ङिदादेशा ङितो न इति ज्ञाप्यते इ-त्युक्तम्। द्वितीये गाङो ङित्त्वस्य सानुबन्धकादेशे इत्कार्याभावज्ञापकतोक्ता,

---

तराल्वृत्तित्वं विवक्षितमिति भावः। *इट ईटीति सिध्यतीति*। ग्रहोऽलिटी-तिसूत्रीयस्थानिताया इट्त्वावच्छिन्नत्वेन स्थानितावच्छेदके ऽल्त्वव्याप्यधर्म-त्वस्य अल्पर्याप्तस्थानितावच्छेदकत्वस्य वाऽभावात्, तादृशस्थानितानिरूपि-तादेशताश्रयधर्मिकारोपप्रकारीभूतेट्त्वस्य च इट ईटीतिशास्त्रीयोद्देश्यतायाः साक्षादनवच्छेदकत्वाच्चेति भावः।

*विशेषानतिदेशेनेति*। सादृश्यप्रतियोगितावच्छेदकधर्मव्याप-कधर्मस्यैवातिदेशो भवति न तु सादृश्यप्रतियोगितावच्छेदकधर्मा-व्यापकधर्मस्येत्यर्थः। *न ल्यपीति लिङ्गाच्चेति*। वस्तुतस्तु वि-शेषानतिदेशेऽपि न क्षतिः। "स्थानिवदादेश" इत्यस्य संग्रहवाक्यतया तदा-देशस्तत्स्थानिवद्भवति इत्यतिदेशवाक्यकल्पनाया आवश्यकत्वेन प्रदायेत्या-दौ "अयं ल्यप् एतत्क्त्वावद्भवति" इत्यतिदेशवाक्ये सादृश्यप्रतियोगितावच्छे-दकैतत्क्त्वात्वव्यापकत्वस्य कित्त्वे सत्त्वेन नल्यपीत्यस्य वैयर्थ्याभावात्। अत एव जजागरतुरित्यादौ गुणः सिध्यति। अन्यथा ऽऽहतुरित्यादौ अतुसः स्थानितसो ङितोऽपि सत्त्वेन त्वन्मते ऽतुस् तस्वद्भवति इ-त्यतिदेशवाक्यकल्पनया विशेषधर्मातिदेशस्वीकारेण च अविचिणल्ङित्स्वि-त्युक्त्या गुणनिषेधो दुर्वारः स्यात्। *अल्त्वव्यवहाराभावज्ञापनद्वारेति*। अ-

तिबाद्यादेशेषु पित्त्वासिद्ध्या दूषितं च ज्ञापकम् । अन्त्ये शानचः शित्त्वस्य सार्वधातुकादेशे अनुबन्धास्थानिवत्त्वज्ञापकत्वमुक्तम्, उक्तदूषणैरेव दूषितञ्च । अन्यथा ऽनल्विधाविति निषेधेन तत्त्वाप्राप्त्या ज्ञापकत्वासङ्गतिः, तिबाद्यादेशेषु पित्त्वाद्यसिद्धिश्चेति बोद्ध्यम् ।

अचः पर ॥ आदेशग्रहणमनुवर्त्तते तदनुरोधादच इति स्थानषष्ठी, परस्मिन्नित्यादेशविशेषणं तदाह । परनिमित्त इत्यादि । अच एवादेश इत्यर्थः । तेन मरुतमाचष्टे मारयतीत्यादौ वृद्धिः । अत्र सूत्रे प्रयोगे यो ऽच्स्थानिक इत्यर्थः । न तु सूत्रे स्थानित्वेनोपात्ताच्स्थानिक इत्यर्थस्तेन णिलोपादेरनेन स्थानिवत्त्वं सिद्ध्यति । अत एव चङ्परनिर्ह्रासे ण्यन्तात् णिचि अवीवदददित्यादिसिद्ध्यर्थो निषेधः सार्थकः । अच इति किम् । आगत्य । मलोपस्य स्थानिवत्त्वात् "ह्रस्वस्य" इति तुग्न स्यात् । परस्मिन्निति किम् । युवजानिः । निङः स्थानिवत्त्वेन यलोपो न स्यादिति । पूर्वविधाविति किम् । नैधेयः । निपूर्वाद्धाञः किप्रत्यये आतो लोपे तस्य स्थानिवद्भावाद् त्र्यच्त्वव्यपदेशविरोधात्स्वाश्रयद्व्यच्त्वानिवृत्तौ ढगनापत्तेरिति दिक् । अत्र स्थानिनि सति यद्भवति तदादेशे ऽपि भवति स्थानिनि यन्न भवति तदादेशे ऽपि नेति भावाभावयोरुभयोरप्यतिदेशः । तत्र

---

नुबन्धघटितबोधकवृत्तयो ये ऽनुबन्धत्वघटितातिरिक्ता आनुपूर्वीभिन्नाश्च धर्माः तन्निमित्तके कार्ये अनुबन्धानामविद्यमानवत्त्वमितिज्ञापनद्वारेत्यर्थः । तथा च प्रकृते कित्त्वस्यानुबन्धत्वघटितत्वेन तद्व्यतिरिक्तोऽल्त्वव्याप्यधर्मघटितो धर्मोऽल्विधित्वरूपो धर्मस्तद्धर्मनिमित्तके ऽनल्विधाविति निषेधे कर्तव्ये ऽनुबन्धककारस्याविद्यमानत्वान्न दोष इत्यर्थः । वस्तुतस्तु नल्यपीति लिङ्गेनइत्पदार्थनिष्ठविशेष्यतानिरूपितप्रकारतावच्छेदकातिरिक्तत्वेनाल्त्वव्याप्यधर्मे विशेषणदानान्न दोष इति दिक् ।

*अच एवाऽऽदेश इति* । अच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानिताक आदेश इत्यर्थः । अच्त्वप्रतियोगिका या पर्याप्तिस्तदीया या ऽनुयोगिता तदवच्छेदको यो धर्मस्स एव स्थानिताप्रतियोगिका या पर्याप्तिस्तदीयानुयोगितावच्छेदकोऽप्यपेक्षित इति यावत् । यथा निगाल्यते कथयतीत्यादौ अच्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकीभूतो धर्म इकारवृत्तितद्व्यक्तित्वम् अकारवृत्तितद्व्यक्तित्वञ्च तदेव णिलोपीयस्थानितापर्याप्त्यनुयोगितावच्छेदकमिति लक्षणसमन्वयः । यत्तु अच्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रय इति अच एव आदेश इत्यस्यार्थ इति, तन्न निगाल्यते इत्यादौ णिलोपस्य स्थानिवत्त्वानापत्तेः । अत एवाच इति चरितार्थम् ।

भावोदाहरणं निगाल्यते इति, अन्त्योदाहरणं पटयतीत्यादि । स्थानिनिमित्तकं भवत्यादेशनिमित्तकं नेति च तदर्थः । लघूपधत्वसम्पादनद्वारा लोपनिमित्तिका वृद्धिरित्याहुः ।

स्थानिभूतादच इति । सूत्रे श्रवणाद्व्याख्यानाच्च तस्यैव पूर्वत्वेऽवधित्वमिति भावः । पूर्वविधावित्यस्य पूर्वसम्बन्धिन्येव शास्त्रविधेये कर्त्तव्ये इत्यर्थस्तेन पूर्वपरयोर्विधौ न । तेनाऽऽस्तुरित्यादौ "ऋच्छत्यृृताम्" इति गुणस्य सवर्णदीर्घे न स्थानिवत्त्वम् । वस्तुतोऽत्र पूर्वविधिशब्दे तन्त्रमम् । एस्योक्तोऽर्थः । द्वितीये भावे किः । संबन्धसामान्यषष्ठ्यन्तपूर्वशब्देन समासः । विधिर्भावः पूर्वसंबन्धिभावे तत्स्थितौ स्थानिवदित्यर्थः । अत एवैनेय इत्यादौ "यस्येति च" इति लोपे तस्य स्थानिवत्त्वात्सन्नियोगशिष्टन्यायप्राप्तनिवृत्तिप्रतिबन्धेन नकारस्थितिः । अत एव नपदान्तसूत्रे पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इति लुकि न स्थानिवदित्यस्योदाहरणं दत्तं भाष्ये । अन्यथा तत्र पूर्वत्वेन दृष्टस्य संबन्धिनः कस्य चिद्विधेयस्याभावात्स्थानिवत्त्वाप्राप्तिरेवेति तदसङ्गतिः स्पष्टैव । प्रकृतसूत्रे ऽपि भाष्ये "कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्टं संगृहीतामिति भावसाधनो विज्ञास्यते पूर्वस्य विधानं प्रति पूर्वस्य

---

अन्यथा यायावर इत्यादौ यलोपस्य स्थानिवत्त्वे नैव "आतो लोप इटि च" इति लोपानापत्त्या वरे—ग्रहणवैयर्थ्येन, "धिन्विकृण्व्योर च" इति लोपेनैव सिद्धे अकारविधानेन च हलादेशो न स्थानिवदिति कल्पनेन सर्वसामञ्जस्ये तद्वैयर्थ्यं स्पष्टमेव । यदि च पिस्भासोरिगुपधलक्षणे के तदन्तादाचारक्विपि तदन्तात्कर्तरि क्विपि तस्मात् आचारक्विबन्तात् "स्थेशभास" इति वरचि गुणार्थमतो लोपस्य स्थानिवत्त्वाभावाय वरे इति चरितार्थम्, एवं धिन्विकृण्व्योर चेत्यत्रत्याकारविधानं "यथोत्तरं मुनीनां प्रामाण्यम्" इति ध्वननायाऽऽवश्यकमिति, तर्हि हत इत्यादौ नलोपस्य स्थानिवत्त्वेनैव अतो लोपाप्राप्त्या तत्र लोपवारणाय कृतस्यार्धधातुके इत्यस्यावृत्त्याऽऽर्धधातुकोपदेशे यदकारान्तमित्यर्थस्य वैयर्थ्येन हलादेशो न स्थानिवदित्युक्त्यैव सामञ्जस्ये अज्ग्रहणसामर्थ्येन निरुक्तार्थलाभ इति । यदि तत्रापि राधातोः क्ते तस्माण्णिचि चङि अरीरतत् इत्यादौ वृत्रहभ्यामित्यादौच लोपवारणायार्धधातुकोपदेशकाले यदकारान्तमित्यर्थस्यावश्यकत्वम् । नच नाग्लोपीति सूत्रे प्रत्याहारग्रहणं ज्ञापकम्, अन्यथाऽज्झलादेशस्यापि स्थानिवद्भावेनैव ह्रस्ववारणे तद्वैयर्थ्यं स्पष्टमेवेति वाच्यम् । चङ्परनिर्ह्रासे स्थानिवत्त्वस्य प्रतिषिद्धत्वात् प्रत्याहारग्रहणसार्थक्यात् । एवं तर्हि चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधस्यैव प्रकृतार्थज्ञापकत्वसम्भवात् । न चापीपटदित्यादौ

पठादिधातोर्णिचि तदन्तात्पुनर्णिचि लुङि ह्रस्वार्थत्वं तस्येदानीं संभवति, ल्यादेशस्य चङः स्थानिवद्भावेऽभावातिदेशेन ह्रस्वप्रवृत्तेः कर्तुमशक्यत्वात् । नचारम्भसामर्थ्यात्तस्यापि स्थानिवद्भावस्य निषेध इति वाच्यम् । अचः परस्मिन्नित्यत्र अच्पदाकरणलाघवानुरोधेन हलादेशो न स्थानिवदित्येतत्कल्पनस्यैवोचितत्वात् । तस्मात् अतिरिक्तमज्ग्रहणम् अच एवादेश इत्यर्थे ज्ञापकमिति । अन्ये तु "न सम्प्रसारणे सम्प्रसारणम्" इति हलादेशो न स्थानिवदित्यत्र ज्ञापकम् । अन्यथा सम्प्रसारणस्य स्थानिवद्भावे सम्प्रसारणपरकत्वाभावान्निषेधाप्रवृत्त्या तद्वैयर्थ्यं स्पष्टमेवेत्याहुः । परेतु गमहनेत्यत्र अनङीति पर्युदासस्तत्र ज्ञापकः । अन्यथा अङादेशस्य स्थानिवद्भावेऽजादिपरकत्वाल्लोपाप्राप्त्या स व्यर्थ इत्याहुः । वस्तुतस्तु पर्याप्तेरौत्सर्गिकत्वेन भाष्यकारेण स्पष्टमुक्तेश्च निरुक्तार्थलाभे तत्र तत्र ज्ञापकानुसरणं वृथैवेति दिक् ।

*मरुतमाचष्टे इति* । ननु "वृद्धेर्लोपो बलीयान्" इत्यत्र नाग्लोपीतिसूत्रस्थप्रत्याहारग्रहणज्ञापकपरभाष्यप्रामाण्येनेदुदुपधेभ्य आचक्षाणणिचोऽनभिधानस्याऽऽवश्यकत्वेनेदमुदाहरणमसङ्गतम्, स्पष्टञ्चेदं तिङन्तशेखरे–इति चेन्न । प्राचीनैः लुङ्येवानाभिधानस्वीकारेण तदनुसारेणास्योदाहरणस्य दानात् । लाघवात् सामान्यतोऽनभिधानकल्पने तु मरमेतीति मरेत् तमाचष्टे मारयतीत्याद्युदाहरणं बोध्यम । नचात्र स्रजयति कनयति इति भाष्योदाहरणकल्पितः "णिज्जिनमित्तककार्यप्रयोज्योपधात्ववतो वृद्धिर्न" इति वृद्धिनिषेधः शङ्क्यः । कथयतीत्यत्र स्थानिवद्भावेन वृद्धिवारणपरभाष्यप्रामाण्येन तत्र कार्ये लोपेतरत्वविशेषणात् । स्रग्विणमाचष्टे स्रजयतीत्यत्र वृद्धिवारणाय लोपेऽपि लुगितरत्वं लोपपदप्रयोज्यविधेयताश्रयत्वं वा विशेषणं देयम् । तथाच लुगितरः लोपपदप्रयोज्यविधेयताश्रयो वा यो लोपस्तदितरकार्यप्रयोज्योपधात्ववतो वृद्धिर्नेति समुदायार्थः । नचैवं वृत्रहणमाचष्टे वृत्रहयतीतिहोहन्तेरितिसूत्रस्थोदाहरणदानपरशेखरग्रन्थविरोधः, तत्र वृद्धेर्दुर्वारत्वादिति वाच्यम् । वृक्षव्रं वृक्षवृश्चं वाऽऽचष्टे वृक्षवयति वृक्षवयतेरप्रत्यये इति भाष्योदाहरणेन पदद्वयघटिताङ्गघटकोपधाया वृद्धिर्नेति कल्पनेन वृत्रहयतीत्यत्र वृद्धेरप्राप्तेः ।

केचित्तु वृद्धेर्लोपो बलीयानित्यस्य नित्यत्वमूलकत्वमङ्गीकृत्य वृत्रहयतीत्यत्र लोपवृद्ध्योरुभयोरपि नित्यत्वे परत्वाद्वृद्धौ पश्चाल्लोपे लक्ष्येलक्षणन्यायेन न वृद्धिः, मरुतं मरेतं वाऽऽचष्टे मारयतीत्यादौतु पूर्वं वृद्धेरप्राप्त्या लोपे वृद्धिः । अतएव आयमित्यत्र "यस्येतिलोपात् परत्वादादिवृद्धिः" इति कौमुदीग्रन्थः संगच्छते । आदिवृद्धिलोपयोरुभयोरप्यनित्यत्वेन परत्वाद्वृद्धेः सुवचत्वात् । लोपबलवत्त्वस्य सार्वत्रिकत्वेतु तदसंगतिः स्पष्टैवेत्याहुः ।

तन्न कस्येत्सूत्रस्थशेखरग्रन्थविरुद्धम् । तत्र हि तत्सूत्रस्थभाष्यादिप्रामाण्येन लोपबलवत्त्वस्य सार्वत्रिकत्वं व्यवस्थापितमिति तत्रैव द्रष्टव्यं, विस्तरभयान्नेह प्रतन्यते । अतएव जगदाचष्टे जागयतीत्यादौ वृद्धिः सिध्यतीति तत्त्वम् । देवदत्त ऋद्ध इत्यस्माण्णिचि टिलोपे देवदत्तापयतीत्यादौ पुक्प्रतिबन्धार्थं टिलोपस्य स्थानिवत्त्वापत्तिरपि "अच एवादेश, इत्यर्थास्वीकारे दूषणं बोध्यमिति दिक् ।

*प्रयोगे योऽच् तत्स्थानिक इति*। अच्त्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानिताक इत्यर्थः । *ननु सूत्रे स्थानित्वेनोपात्ताजिति* । अच्त्वव्याप्यधर्मावच्छिन्नस्थानिताक इत्यर्थो नेत्यर्थः । *आगत्येति* । नच सूत्रे आदेशपदश्रवणात्स्थानिभूतादचः पूर्वत्वेन दृष्टस्याऽऽदेशविधौ स्थानिवदित्यर्थ इति नायं दोष इति वाच्यम् । वेभिदि ब्राह्मणकुलानीत्यादौ नुमापत्तेस्तथा स्वीकर्तुमशक्यत्वात् । युवजानिरिति* । नच निङादेशे स्थानिवद्भावेनाऽऽकारबुद्धावपि नकारे वलत्वानपायाल्लोपो निर्बाधः । किञ्च जायायो निरितिन्यासेनादोषः, जायाशब्दावयवयाशब्दस्य स्थाने निरित्यादेशः स्यादित्यर्थेन न्यादेशस्याच्पर्याप्तस्थानिताकत्वाभावात् इति वाच्यम् । वैयाघ्रपद्य इत्यादौ पदादेशप्रतिबन्धार्थं "पादस्य लोपोऽहस्त्यादिभ्य" इति लोपस्य स्थानिवत्त्वापत्तेरिति दिक् । *ऽयच्त्वव्यपदेशविरोधादिति* । संख्यात्वव्याप्यकिञ्चिद्धर्मप्रकारकनिश्चयस्य संख्यात्वव्याप्यधर्मान्तरप्रकारकज्ञानसामान्यप्रतिबन्धकत्वात् इत्यर्थः । *यन्न भवतीति*। स्यादेतत् । देवयतेः क्विपि द्यूरित्यादौ स्थानिनि वकारे सति अभवतो ऽयादेशस्य लोपादेशोऽप्यभावापत्तिः । नचादेशे स्थानिवृत्तिधर्मसम्भावनायां यद् भवति तद् भवति यन्न भवति तन्न भवतीत्यर्थेन न दोषः, अत एव प्रकृतसूत्रस्थं "परस्मिन्निति किं युवजानिः, नैतदस्ति प्रयोजनं न्यादेशघटकं नकारमादाय लोपो भविष्यति" इति भाष्यं सङ्गच्छते इति वाच्यम् । एषो गमयतीत्यादावेतत्तदोरिति सुलोपापत्तेरिति चेन्मैवम् । स्थानी न निवृत्त आदेशो न जात इति सम्भावनायां यद्भवति तद् भवति यन्न भवति तन्न भवति इत्यर्थेनादोषात् ।

परेतु आदेशे स्थानिवृत्तिधर्मसम्भावनायां यद् भवति तद् भवति यन्न भवति तन्न भवति इत्येवार्थः । अत एव परस्मिन्निति किं युवजानिरित्येतत्फलखण्डनपरभाष्यं सङ्गच्छते । नच एषो गमयति इत्यादौ सुलोपापत्तिरिति वाच्यम् । इष्टत्वात् । अत एव एष यूनः पश्येत्यादौ न सम्प्रसारणे इति सूत्रसत्त्वे सम्प्रसारणादसम्प्रसारणं इति कल्पे च न फलभेदः । नचेयायेत्यादौ स्थानिवद्भावेनेयङ् स्यादिति शङ्कया असङ्गतिरिति वाच्यम् । युक्तिबलाद्वस्तुसिद्धौ कस्य चिद्ग्रन्थकृतो विपरीतलेखनस्याबाधकत्वेनेष्टापत्तेरित्याहुः ।

*आरतुरित्यादाविति* । ननु पूर्वस्यैव विधावित्यर्थाभावेऽपि प्रकृते न दोषः । तथाहि ऋ अतुस् इत्यस्यां दशायां द्वित्वं बाधित्वा पूर्वं गुणे पश्चाद् द्वित्वे स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावेन स्थानिवत्त्वाप्राप्तेः । नच "द्विर्वचनेऽचि" इति निषेधात्कथं द्वित्वात्पूर्वं गुणप्रवृत्तिरिति वाच्यम् । द्वित्वनिमित्ततापर्याप्त्यधिकरणीभूतसमुदायघटकाच्पर्याप्तनिमित्तताकत्वस्य गुणे ऽभावेन "द्विर्वचनेऽचि" इति निषेधस्याप्राप्तेः । नच चिकीर्षामीत्यादौ चिकीर्ष अ मि इति स्थिते वार्णपरिभाषया दीर्घे पूर्वस्यैव विधावित्यर्थाभावे "अतो गुणे" इतिपररूपापत्तिरिति वाच्यम् । "नहि रजतत्वभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयति" इति न्या-

भावं प्रति स्थानिवत्" इत्युक्तम् । तत्र भावसाधन इत्यस्य सो ऽपीत्यर्थः । पूर्वत्वञ्च व्यवहिताव्यवहितसाधारणम्, अव्यवहितग्रहणे मानाभावात्, स्वरे निषेधाच्च । तेन पटयतीति सिद्धम् । प्रकृते च द्वित्वनिषेधे स्थानिवत्त्वप्राप्तिः ।

न पदान्त । अत्र द्विर्वचनसवर्णादिग्रहणं वतिघटितान्यातिदेशानां त्रिपाद्यामपि प्रवृत्तिबोधनार्थम् । तेन राम इत्यादौ विसर्गादिसिद्धिः । अत्र विधिशब्दो भावसाधनः । पदान्तेत्यत्रान्तशब्दश्चरमावयववाची । कर्मषष्ठ्या समासः । तेन एषो यन् हसतीत्यादौ "एतत्तदोः" इति सुलोपो न । इणः शतरि यन्निति रूपम् । तत्र यणः स्थानिवत्त्वात् । उत्वे च न स्थानिवत् अनेन निषेधात् । स्पष्टश्चेदं भाष्ये इति भाष्यप्रदीपोद्द्योते निरूपितम् ।

अत्र पदे ऽन्त इति सप्तमीसमासो भाष्ये उक्तस्तेन प्रत्यासत्त्या पदे परतः चरमावयवे कार्ये कर्तव्ये परपदस्थाजादेशस्यैवानेन स्थानिवत्त्वनिषेध

---

येन पररूपे ऽपि आकारस्यैव जायमानत्वादिति चेन्मैवम् । अन्धातोर्विचि पटुशब्देन समासे तस्माच्छासि पट्वन इत्यादौ "अचः परस्मिन्"इति स्थानिवद्भावेन संयोगसंज्ञाया अभावेन "न संयोगाद्वमन्तात्" इति निषेधानापत्तेः । पूर्वस्यैव विधावित्युक्तौ तु न दोषः । पूर्वस्यैव विधावित्यस्य पूर्वत्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकोद्देश्यताके विधौ इत्यर्थेन संयोगसंज्ञायाः पूर्वपरोभयोद्देश्यकत्वादिति दिक् ।

*सोऽपीत्यर्थ इति* । वस्तुतस्तु स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ स्थितौ कर्तव्यायामित्यर्थास्वीकारेऽपि न क्षतिः । नच "लुकि न स्थानिवत् पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः" इति भाष्यासङ्गतिः, स्थानिभूतादचः पूर्वत्वेन दृष्टस्याऽऽनुकः कस्यापि विधेरभावात्, किञ्च ऐनेय इत्यादौ स्थानिभूतादचः पूर्वत्वेन दृष्टस्य नकारस्य कस्यापि विधेरभावेन स्थानिवत्त्वाप्रवृत्त्या तन्निवृत्त्यापत्तिरिति वाच्यम् । स्थानिभूतादचः पूर्वत्वेन दृष्टयोरानुग्नकारयोः "सन्नियोगशिष्टानामन्यतरापाये" इति शास्त्रेण लोपे कर्तव्ये तत्प्रतिषेधार्थं स्थानिवद्भावप्रवृत्तेः सूपपादत्वात् । अत एव "कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्टं संगृहीतमिति भावसाधनो विज्ञास्यते" इति भाष्ये अपिशब्दो न श्रूयत इति बोध्यम् ।

*अन्यातिदेशानामिति* । इदं फलितार्थकथनं, ज्ञाप्यांशस्तु वतिघटितातिदेशास्त्रिपाद्यां प्रवर्तन्ते इत्येव । अन्यथा ऽन्यातिदेशानां वतिघटितानां त्रिपाद्यां प्रवृत्तावपि स्वांशे चारितार्थ्यं दुर्निरूपं स्यात् । *भावसाधन इति* । वस्तुतस्तु कर्मसाधनत्वेऽपि कर्मधारयसमासस्वीकारेण पदचरमावयवादिरूपे विधेये कर्तव्ये इत्यर्थे न कोऽपि दोष इति बोध्यम् । *परपदस्थाजादेशस्यैवेति* । अत एव प्रत्यैषिषन् देवदत्ता इत्यादौ जुस्प्रति-

इति वेतस्वानित्यादौ न दोषः। न चैवमपि "पूर्वत्रासिद्धीये न स्थानिवत्" इति निषेधोऽत्र दुर्वारः। पदेऽन्त इत्यर्थेन तत्र स्थानिवत्त्वनिषेधव्यावृत्तिपरभाष्यप्रामाण्येन पूर्वत्रासिद्धे इत्यत्र पदचरमावयवविधायकातिरिक्तस्यैव त्रैपादिकस्य ग्रहणात्। अत एव महिष्मानित्यत्र जश्त्वं न। सूत्रे

---

बन्धार्थे पररूपस्य न स्थानिवत्त्वनिषेध इति बोध्यम्। *वेतस्वानित्यादाविति*। नच "तसौ मत्वर्थे" इति भसंज्ञया पदसंज्ञायाः बाधात् पुनरपि रुत्वशङ्का भाष्योक्ताऽसङ्गतेति वाच्यम्। अस्मादेव भाष्यप्रामाण्यात्परम्परया पदचरमावयवसाधकस्य स्थानिवत्त्वस्यानेन न निषेध इति कल्पनेनादोषात्। तथाहि—तसाविति भसंज्ञायां कर्तव्यायां टिलोपस्थानिवद्भावस्य भसंज्ञाप्रतिबन्धद्वारा पदसंज्ञासम्पादनद्वारा रुत्वसम्पादकत्वेन परम्परया पदचरमावयवरुत्वसम्पादकत्वेन परम्परया पदचरमावयवसाधकत्वेन निषेधाऽप्रवृत्त्या स्थानिवत्त्वेन भसंज्ञाया अप्रवृत्तिः। पदसंज्ञाप्रतिबन्धार्थं स्थानिवत्त्वन्तु न भवति। अस्मादेव भाष्यप्रामाण्यात् परम्परया पदचरमावयवप्रतिबन्धकस्याप्यनेन निषेध इति कल्पनेन पदसंज्ञाप्रतिबन्धद्वारा रुत्वप्रतिबन्धकत्वेनानेन निषेधात्। अत एव षडिक इत्यादौ जश्त्वसिद्धिः। तथाहि—षडङ्गुलिदत्तशब्दाट्ठचि "ठाजादावूर्ध्वं द्वितीयादचः" इति ङ्गुलिदत्तस्य लोपे यस्येति चेति अल्लोपे भसंज्ञाप्रतिबन्धार्थमल्लोपस्थानिवद्भावस्य पदसंज्ञासम्पादनद्वारा जश्त्वसाधकत्वेनानेन निषेधाभावे स्थानिवत्त्वेन भसंज्ञाया अप्रवृत्तेस्तत्सिद्धिः। पदसंज्ञाप्रतिबन्धकस्थानिवत्त्वं तु न, तस्य पदसंज्ञाप्रतिबन्धद्वारा जश्त्वप्रतिबन्धकत्वेनानेन निषेधात् इति दिक्।

*पदचरमावयवविधायकातिरिक्तस्यैवेति*। ननु पिपठीर्भ्यामित्यादौ रुत्वप्रतिबन्धकस्थानिवत्त्वस्य निषेधो न स्यात्, "ससजुषो रुः" इत्यस्य पदचरमावयवविधायकत्वेन पूर्वत्रासिद्धीये नेत्यस्याप्रवृत्तेः। नच वेतस्वानितिभाष्यप्रामाण्येन तद्धितनिमित्तकपदसंज्ञावच्चरमावयवविधायकातिरिक्तत्वेन पूर्वत्रासिद्धीये न स्थानिवदित्यत्र सङ्कोचान्नायं दोष इति वाच्यम्। पिपठीष्ठमित्यादौ तद्धितानिमित्तकपदसंज्ञाया एव सत्त्वेन रुत्वप्रतिबन्धार्थे स्थानिवत्त्वप्रवृत्तौ र्वोरिति दीर्घानापत्तेः—इति चेन्न। प्रत्ययविशिष्टपदसंज्ञावच्चरमावयवविधायकातिरिक्तत्वेन संकोचस्य विवक्षणीयत्वात्। वै०—च स्वप्रयोज्यत्व—स्वप्रयोज्यकार्यप्रयोज्यत्वोभयसंवन्धेन। अस्ति च वेतस्वानित्यादौ पदसंज्ञायां ड्मतुप्प्रयोज्यत्व—ड्मतुप्प्रयोज्यटिलोपप्रयोज्यत्वोभयसबन्धेन वैशिष्ट्यमिति न दोषः। पिपठीर्भ्यां पिपठीष्ठमित्यादौ तु पदसंज्ञायां भ्यामप्रयोज्यत्वस्य सत्त्वेऽपि तत्प्रयोज्यकार्यप्रयोज्यत्वस्याभावात्, क्विप्प्रयोज्यातोलोपरूपकार्यप्रयोज्यत्वस्य सत्त्वेऽपि क्विनिमित्तकत्वस्याभावान्न दोषः। मूलन्तु लोपनिमित्तप्रत्ययनिमित्तकपदसंज्ञावत्परं पदचरमावयवेत्यत्रत्यं पदपदमिति रीत्या योज्यमिति दिक्।

लोपनिमित्तप्रत्ययनिमित्तकपदसंज्ञावच्चरमावयवविधायकातिरिक्तत्वेन पूर्वत्रासिद्धीये इत्यत्र सङ्कोचे फलमाह *महिष्मानिति*। महि-

जश्पदेन "झलां जश् झशि" इत्यस्यैव ग्रहणं, चर्सन्निहितस्यैव ग्रहणौचित्यात् । कार्यकालपक्षे ऽपि त्रिपाद्यामन्तरङ्गपरिभाषा न प्रवर्त्तत इति वक्ष्यते इति न तयाऽस्य सिद्धिः । गोचेत्यादौ "गतिकारकोपपदानाम्" इत्यस्यानित्यत्वेन सुबुत्पत्त्यनन्तरमेव समासः । "उत्तरपदत्वे च" इति प्रत्ययलक्षणप्रतिषेधश्च प्रत्यासत्त्योत्तरपदस्य कार्यित्वे एवेति न दोषः । पदे इति पदत्वयोग्योपलक्षणं वा । अत्रेदं भाष्यमपि मानम् ।

अत्र पदचरमावयवादिसाधकः प्रतिबन्धकश्च स्थानिवद्भावो निषिद्ध्यते विनिगमनाविरहात् । एतत्सूत्रभाष्यकर्मोर्णिङित्यादिसूत्रभाष्यैः

---

श्मानित्यादौ नपदान्तसूत्रेण जश्विधौ स्थानिवत्त्वनिषेधमाशङ्क्याह *"झलां जश् झशि" इत्यस्यैवेति* । ननु अतद्धित इत्यस्यारम्भप्रत्याख्यानयोः फलैक्याय "पदव्यवाये ऽपि" इत्यत्र पदपदं पदत्वयोग्यप्रातिपदिकपरमित्यवश्यं वक्तव्यत्वेन माषकुम्भवापेनेत्यादौ दोषाभावेन उत्तरपदत्वे चेत्यत्र कार्थित्वनिवेशो विफलः । तथाच गोचा इत्यादौ सुबुत्पत्त्यनन्तरं समासेऽपि उत्तरपदत्वे चेति निषेधात्कथं नपदान्तेति निषेध इत्याशङ्क्याह *पदत्वयोग्योपलक्षणं वेति । *साधक इति* । अत्र साधकत्वं साक्षाद्विवक्षितम् । अत एव वेतस्वानित्यादौ रुत्वशङ्कापरं भाष्यं सङ्गच्छते । अन्यथा भसंज्ञाप्रतिबन्धकस्य तत्प्रतिबन्धद्वारा रुत्वसम्पादनेन परम्परया रुत्वसाधकस्य स्थानिवत्त्वस्याप्यनेन निषेधे तदसङ्गतिः स्पष्टैव । *प्रतिबन्धकश्चेति* । अत्र च प्रतिबन्धकत्वं साक्षात्परम्परया च ग्राह्यम् । अत्रापि वेतस्वानित्यत्र रुत्वशङ्कापरभाष्यमेव मानम् । अन्यथा पदसंज्ञाप्रतिबन्धकस्य तत्प्रतिबन्धद्वारा पदचरमावयवप्रतिबन्धकस्थानिवत्त्वस्यानेन निषेधाभावे पदसंज्ञाया एवाभावेन तदसङ्गतिः स्पष्टैवेति ।

अत्रेदं बोध्यम् । साक्षात्पदचरमावयवसाधकः, परम्परया पदचरमावयवसाधकः, साक्षात्पदचरमावयवप्रतिबन्धकः, परम्परया पदचरमावयवप्रतिबन्धकश्चेति चतुर्विधः स्थानिवद्भावः प्राप्नोति । तत्र द्वितीयं वर्जयित्वा त्रिविधोऽपि स्थानिवद्भावोऽनेन निषिध्यते । तत्र साक्षात्पदचरमावयवसाधकस्थानिवत्त्वनिषेधे सध्रीच इत्युदाहरणम् । अत्र हि "अचः" इत्यल्लोपस्य स्थानिवद्भावः साक्षात्पदचरमावयवयण्साधकः । साक्षात्पदचरमावयवप्रतिबन्धकस्थानिवत्त्वनिषेधस्य फलम् एषो यन् हसतीति । अत्र इणो यणादेशस्य स्थानिवत्त्वं साक्षात्पदचरमावयवोत्वप्रतिबन्धकम् । ननु पदसंस्कारपक्षे तत्र स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावात्स्थानिवत्त्वाप्राप्तिः । नच देवदत्तस्य नः देवदत्तनः तस्मादाचारक्किबन्तात्किपि तस्मादौप्रत्यये देवदत्तन् औ इति स्थिते साक्षात्पदचरमावयवदीर्घप्रतिबन्धकस्थानिवत्त्वस्य निषेधः फलमिति वाच्यम् । दीर्घविधौ तन्निषेधात्, "क्वौ लुप्तं न स्थानिवत्" इति निषेधाच्च । नच दीर्घपदेन त्रैपादिकदीर्घस्यैव ग्रहणादिदं फलं सम्यगेवेति वाच्यम् । मानाभावात्-इति चेन्मैवम् । यशस्क्रइत्यस्मादाचारक्किबन्तात् "अ-

"पूर्वत्रासिद्धे न स्थानिवत्" इत्यवष्टभ्य वरेयलोपस्वरदीर्घग्रहणवर्जं द्विर्वचनादि प्रत्याख्यातमिति लभ्यते । निषेध इति । द्विर्वचनग्रहणात्पूर्वत्रासिद्धे इति निषेधाद्वेति भावः ।

दकार इति । स्थानत आन्तर्यादिति भावः ।

अदर्शनम् । स्थाने इति वर्त्तते, प्रसङ्गे सतीति तदर्थस्तदाह प्रसक्तस्येति । शास्त्रतो ऽर्थतो वेति भावः । अत्र दृशिर्ज्ञानसामान्ये । तत्र ज्ञानस्यावर्जनीयत्वेन तत्सामग्र्यन्तर्गता उच्चारणकृता सत्ता निषिद्ध्यते । तत्र प्रत्ययलोपे शास्त्रतो ऽर्थतश्च प्रसक्तोच्चारणस्य लोपविधानेन तस्य तस्मिन् विषये ऽनुत्पत्तेरेवान्वाख्यानं प्रत्ययलक्षणार्थमिति बोद्ध्यम् । अर्थस्यैषा सञ्ज्ञा व्याख्यानात् । यत्तु "प्रसक्तस्येति किं ग्रामे तिष्ठतीत्यादौ

---

प्रत्ययात्" इत्यनेन अप्रत्यये गुणे तस्य स्थानिवद्भावः साक्षात्पदचरमावयवोत्वप्रतिबन्धक इति यशोऽरा इति फलस्य विवक्षणेनादोषात् । परम्परया पदचरमावयवप्रतिबन्धकस्थानिवत्त्वनिषेधस्य फलं दध्यारः दध्यर्च इति । अत्र हि "कर्मण्यण्" इति अण्निमित्तकवृद्धिगुणयोः स्थानिवद्भावः "ऋत्यक" इति प्रकृतिभावसम्पादनद्वारा यण्प्रतिबन्धकः। परम्परया पदचरमावयवसाधकस्थानिवत्त्वस्य निषेधो न भवतीत्यस्य फलं षडिक इति । अत्र हि भसंज्ञाप्रतिबन्धार्थं स्थानिवद्भावः पदसंज्ञासम्पादनद्वारा पदचरमावयवरुत्वसम्पादकः । नच "पूर्वत्रासिद्धीये न" इति निषेधः शङ्क्यः । प्रत्ययविशिष्टपदसंज्ञावच्चरमावयवविधायकातिरिक्तत्वेन सङ्कोचस्योक्तत्वात् । नचैवमपि वागाशीर्दत्तो वाचिक इत्यादौ जश्त्वापत्तिरिति वाच्यम् । "एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्यः" इति आशीर्दत्तशब्दस्य लोपेनादोषात् । षडिक इत्यादौ 'षषष्ठाजादिवचनात्सिद्धम्' इति कुलिदत्तस्य लोप इति जश्त्वम्भवत्येवेति दिक् ।

*दीर्घग्रहणवर्जमिति* । नच जनावित्यादौ दीर्घविधौ स्थानिवद्भावनिषेधात् "सर्वनामस्थाने च" इति दीर्घापत्तिरिति वाच्यम् । आयसावित्यत्रेवाङ्गसंज्ञाप्रतिबन्धार्थं स्थानिवत्त्वेन नान्ताङ्गाभावेन दीर्घाप्राप्तेः । "स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत्" इति प्रतिप्रसववार्त्तिकाद्वा । अत एव ण्यन्ताण्णौ अहीडि इत्यादौ "चिण्णमुलोः" इति दीर्घे कर्तव्ये स्थानिवत्त्वं नेति दिक् ।

*सत्ता निषिध्यते इति* । वस्तुतस्तु उच्चारणाभाव एव अदर्शनपदार्थः । सत्ताया अवर्जनीयत्वात् । *अनुत्पत्तेरन्वाख्यानमिति* । नचाऽकृतेत्यादौ "ह्रस्वादङ्गात्" इति सिचो लोपे च्लेः श्रवणापत्तिरिति वाच्यम् । "च्लेः सिच्" इत्यस्य च्लित्वावच्छिन्नस्य स्थाने झलादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टं यत् ह्रस्वान्तमङ्गं तदव्यवहितोत्तरत्वाभाववान् सिच्त्वावच्छिन्नो भवतीत्यर्थात् । ह्रस्वाद-

"ल्यब्लोपे" इति पञ्चम्यापत्तेः । अस्ति चात्र ल्यपो ऽदर्शनम् । शास्त्रतो ऽर्थतश्च न तत्प्रसक्तिरिति न दोष" इति, तन्न । तेन प्रत्यासत्त्या ल्यबन्तार्थकर्माधिकरणयोरेव पञ्चमीविधानेन तस्यात्राप्राप्तेः । तत्त्वे तु अस्त्येवार्थतो ल्यबन्तस्य प्रसक्तिः । तस्मात् त्रपु इत्यत्र क्विपो ऽदर्शनसत्त्वेन प्रत्ययलक्षणेन तुगापत्तिर्दोषः । कृत्प्रत्ययेन प्रकृत्याक्षेपस्तु न । अत्रैव प्रकृतिं विना ऽतिदेशतः प्रत्ययज्ञानसत्त्वेन व्यभिचारात्तदाक्षेपासंभवात् ।

इति पक्षे इति । विनिगमनाविरहादिति भावः । द्वित्वस्य त्रैपादिकत्वात्तत्र न यणो बहिरङ्गासिद्धत्वम् । अत एव दद्ध्यत्रेति भाष्ये उदाहृतम् । धकारयकारयोरिति । तेन विसर्गादिद्वित्वेनाऽऽधिक्ये ऽपि न क्षतिः । द्विधमिति । द्विधत्वं प्रक्रियायां बोद्ध्यम् । "एकस्या आकृतेश्चरितः प्रयोगो न द्वितीयस्या भविष्यति" इति "कृञ्चानुप्रयुज्यते" इति सूत्रभाष्योक्तन्यायेनैकस्य द्वित्वे परस्य तदभावो ऽनुचित इति न वाच्यम् । सार्थकानेकविषये तन्न्यायाङ्गीकारात् । यत्रान्याकृतिकरणे भिन्नार्थत्वसंभावना तद्विषयत्वाच्च । "हलो यमाम्" इति लोपे द्वित्वाभावे चैकमेव रूपम् ।

नादिन्या । "यरो ऽनुनासिके" इत्यतो यर इति वर्त्तते । पुत्रशब्दस्येत्यवयवषष्ठी । आदिनीशब्दे परे इति च प्राधान्याद् यर एव विशेषणम् । सूत्रे आदिनीति ङ्यन्तानुकरणं लुप्तसप्तमीकम् । अत एव "तत्परे च" इत्यस्याऽऽदिनीशब्दो यस्मात्परस्तत्र परे इत्यर्थं हरदत्तो व्याख्यत् । अद्धातौ माधवो ऽप्येवमेव । ईदृशाक्रोशस्य स्त्रीष्वेव दर्शनाच्च । आक्रोशो निन्दा—तदाह पुत्रादिनीति । तादृशाक्रोशस्य स्त्रीष्वेव दर्शनादाह पुत्रहतीति ।

---

ङ्गादिति च तात्पर्यग्राहकमिति प्रागेवावोचाम । वस्तुतस्तु भावरूपादेश इव अभावरूपादेशेऽपि स्थानिघटितेऽसाधुत्वं आदेशघटिते साधुत्वमित्यन्यत्र विस्तरः । *त्रपु इत्यत्रेति* । नच प्रत्ययलक्षणेन पित्कृद्बुद्धावपि ह्रस्वान्ततदादित्वाभावात्कथं तुगापत्तिरिति वाच्यम् । लिट्त्रपु इत्यादौ प्रत्ययलक्षणेन कृत्परत्वस्य स्वतश्च पित्कनिरूपिततदादित्वस्य च सत्त्वेन प्रसक्तस्येतिपदाभावे तुगापत्तेः । मूलं तु लिट्त्रपु इत्यादेरुपलक्षणमिति योजनीयम् । *विनिगमनाविरहादिति* । चिन्त्यमिदम् । विनिगमनाविरहेण तात्पर्यानिर्णये शाब्दबोधस्यैवानुत्पत्तेः । किन्तु भाष्ये उभयथा व्याख्याकरणेन आवृत्त्याऽर्थद्वयं स्वीक्रियते इति बोध्यम् । ननु पूर्वधस्य जश्त्वेन दकारे द्विधमित्यनुपपन्नमित्यत आह *प्रक्रियायां बोध्यमिति* । *तद्विषयत्वाच्चेति* । चो हेतौ । यतो ऽन्याकृतिकरणे भिन्नार्थत्वसम्भावनाविषयोऽयं न्यायो ऽतः सार्थकानेकव्यक्तिविषयोऽयं न्याय इति भावः । . . . . . . . . . .

अनचि चेति सिद्धे पुत्रस्य क्तान्ते चेद्धतजग्धयोरेव, आक्रोशे एवेति नियमार्थमिदम् ।

संयुक्तेष्विति । "त्रिप्रभृतिषु" इति सूत्रे वर्णानां सजातीयानामेव ग्रहणं परस्परसाहचर्यात् । न च तथाऽचः संभवति । अत एव "अचो रहाभ्याम्" इति सार्थकम् । निर्धारणे सप्तमी, अच इत्यनुवर्त्तते, त्रिप्रभृतिसंयुक्तवर्णमध्ये ऽचः परस्य यरो द्वे वा न स्त इत्यर्थः । तेनेन्द्रः राष्ट्रमित्यत्र नकारषकारयोः प्राप्तद्वित्वस्यैव निषेधविकल्पः । "अनचि च" "सर्वत्रशाकल्यस्य" इत्येव सिद्धे इदं सूत्रद्वयं विकल्पस्य मतभेदप्राप्तव्यवस्थाबोधनार्थमिति बोध्यम् । "यरो ऽनुनासिके" इत्यतो वेत्यनुवृत्त्या ऽनचीत्येव सिद्धे तु सूत्रत्रयमपि तथेति बोद्ध्यम् ।

अचो र । अच इति श्रुतत्वाद्व्याख्यानाच्च रहाभ्यां संबध्यते । "तस्मादित्युत्तरस्य" इत्येतल्लभ्यमाह अचः पराभ्यामिति । वा यमीति । "झयो ह" इत्यतो ऽन्यतरस्यामित्यनुवृत्तेरिति भावः । "दीर्घादाचार्याणाम्" इत्युत्तरम् "अनुस्वारस्य ययि" "वा पदान्तस्य" "तोर्लि" "उदः स्था" "झयो हो" "शश्छोऽटि" इति षट्सूत्रीपाठोत्तरं "झलां जश् झशि" "अभ्यासे चर्च" "खरि च" "वाऽवसाने" "अणो ऽप्रगृह्यस्य" इति पञ्चसूत्र्याः पाठ इति भाष्यसंमताष्टाध्यायीपाठे तु वाऽवसाने इत्यतो ऽनुवृत्तिर्बोद्ध्या । स्पष्टश्चास्य वैकल्पिकत्वं लण्सूत्रे भाष्ये । आदित्य इति । आदित्यशब्दाच्छेषार्थण्यान्तादेवतार्थे ण्यः । "यस्येति च" इत्यल्लोपे ऽनेन यलोपः । "आपत्यस्य" इति तु न । आपत्यत्वाभावात् । हल इति किम् । शय्या । यमामिति किम् । आर्घ्नोत् । यमीति किम् । रामाभ्याम् ।

---

*अचो रहाभ्यामिति सार्थकमिति* । नचाग्रे त्रिप्रभृतिवर्णमध्ये ऽचः परस्य यरो द्वे वा न स्त इति वक्ष्यमाणत्वेन "अचो रहाभ्याम्" इत्यनेन चाऽचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वित्वविधानेनोभयोरेकविषयत्वाभावेन सजातीयत्रिप्रभृतिवर्णग्रहणेऽपि न "अचो रहाभ्याम्" इत्यस्य वैयर्थ्यमिति वाच्यम् । "नेमौ रहौ कार्यिणौ किन्तर्हि निमित्तं द्विर्वचनस्य" इति भाष्यप्रामाण्येन निमित्तविषयत्वेतरद्विर्वचनीयविषयताश्रयत्वेन ग्रहणे कर्तव्ये रेफस्याविद्यमानवद्भावेनोभयोरेकविषयत्वसत्त्वेनादोषात् । *भाष्यसम्मताष्टाध्यायीपाठ इति* । अत एव उत्कन्दो रोग इत्यादौ "उदः स्थास्तम्भोः" इति सूत्रस्थेन "उत्पूर्वस्कन्देरुपसंख्यानम्" इति वार्त्तिकेन पूर्वसवर्णे "खरि च" इति चर्त्वसिद्धिः । अन्यथा चर्त्वं प्रति थस्यासिद्धत्वात्तद् दुर्लभमिति बोध्यम् । *शेषार्थण्यान्ता-

एचो ऽय । "इचोऽचि यणयवायावः" "अवावौ यि प्रत्यये" इति सूत्रयितुमुचितमित्याहुः । यथासंख्यसूत्रलब्धमर्थमाह । क्रमादिति । उदात्तादिगुणयुक्तानामन्यगुणकव्यावृत्तिस्तु स्थानेऽन्तरतमपरिभाषया बोध्या । एतदेवाभिप्रेत्य यथासंख्यसूत्रे भाष्ये प्रकृतसूत्रे स्थानेऽन्तरतमसूत्रेण व्यवस्थोक्ता "संवृतावर्णस्य संवृतावर्णो विवृतावर्णस्य विवृतावर्ण"इति । एतद्भाष्यप्रामाण्येन एओइत्यनयोरकारांशे संवृतत्वम् इतरांशे विवृततरत्वं, तदुपरागाच्च न संवृतत्वस्य पृथग् ग्रहणम् । ऐऔ इत्यनयोस्त्वकारांशे ऽपि विवृतत्वमेवेति बोध्यम् ।

तस्य लो । "उपदेशे ऽज्" इत्यत इदित्यनुवृत्त्या विभक्तिविपरिणामेन च सिद्धौ तस्यग्रहणं सर्वलोपार्थम् । तेन ञिटुडूनामन्त्यस्य लोपो न । "नाऽनर्थके" इति परिभाषा तु भाष्ये प्रत्याख्यातैवेति दिक् । न भवतीति । फलाभावादिति भावः ।

वान्तो । "येन विधिः" इत्यस्यापवादभूतया "तस्मान्नुडचि" इत्याद्यर्थमा-

---

दिति* । अपत्यार्थण्यान्ताद्देवतार्थे ण्ये "आपत्यस्य" इति यलोपे स्वतो द्वियकारकत्वं दुर्लभमिति भावः । *संवृतावर्णस्य संवृतावर्ण इति* । तालुस्थानिकघटितसंवृतावर्णघटितस्य तालुस्थानिकघटितसंवृतावर्णघटितः, ओष्ठस्थानिकघटितसंवृतावर्णघटितस्य ओष्ठस्थानिकघटितसंवृतावर्णघटित इत्यर्थः । एवं "विवृतावर्णस्य विवृतावर्ण" इत्यस्य तालुस्थानिकघटितविवृतावर्णघटितस्य तालुस्थानिकघटितविवृतावर्णघटितः, ओष्ठस्थानिकघटितविवृतावर्णघटितस्य ओष्ठस्थानिकघटितविवृतावर्णघटित इत्यर्थः । यथाश्रुतं तु न युक्तम् । विवृतावर्णघटितत्वादौ स्वेतरयावदादेशावृत्तित्वस्याभावेन स्थानेऽन्तरतमसूत्रोक्ताऽऽन्तरतम्यस्यासम्भवात् । नच "अ अ" इतिसूत्रविहितसंवृतस्यासिद्धत्वेन संवृतावर्णस्य संवृतावर्ण इत्याद्यसङ्गतमिति वाच्यम् । संवृतस्यासिद्धत्वेऽपि संवृतप्रयत्नजन्यत्वस्यासिद्धत्वाभावात् संवृतप्रयत्नजन्यत्वविशिष्टघटिततालुस्थानजन्यघटितस्य संवृतप्रयत्नजन्यत्वविशिष्टघटिततालुस्थानजन्यघटित आदेशो भवतीत्यादिक्रमेणार्थेनादोषात् ।

*तस्मान्नुडचीत्याद्यर्थमावश्यिकयेति* । यत्तु यान्तप्रत्ययासम्भवादेव यादौ प्रत्यये इत्यर्थो भविष्यतीति तस्मान्नुडचीत्याद्यर्थमावश्यिकयेत्युक्तमिति, तन्न । गोमयमततीति गोमयात् तस्माण्णिचि टिलोपे लटि गोमययतीत्यादौ यान्तप्रत्ययसम्भवात् ।

यदपि प्रत्ययाव्यवहितपूर्वत्वविशिष्टौ यकाराव्यवहितपूर्वत्वविशिष्टौ च यावोदौतौ तयोरवावाविति सूत्रार्थ इति नात्र परिभाषाऽऽवश्यकत्वमिति, तद्-

वदियकया वाचनिक्या "यस्मिन्विधिस्तदादावल्ग्रहणे" इति वार्त्तिककृदुक्तप-रिभाषया लब्धमर्थमाह। यकारादाविति। ओदौतोरिति। "ओदौतो-रिति वक्तव्यम्" इतिवार्त्तिकमूलाद्व्याख्यानादिति भावः। "पूर्वसूत्रे वान्तौ प्रति तयोरेव स्थानित्वनिर्णयात्" इति स्थानेऽन्तरतमसूत्रस्थकैयटोक्तं तु न युक्तम्। वान्तज्ञानाय सूत्रपर्यालोचनस्याऽऽवश्यकत्वे ऽपि तद्वाक्यार्थपर्या-लोचने मानाभावात्। यथासंख्यसूत्रसहकारेण बोधोत्तरं तयोस्तत्त्वनिर्ण-यात्। अन्तरतमपरिभाषया निर्वाहे तु लक्ष्यपर्यालोचनकाले तन्निर्णयः। अत एव "पूर्वसूत्रे स्थानिविशेषलाभो यथासंख्यसंबन्धात्, इह तु निमित्ता-

---

पि न। भानो यातीत्यादौ प्रत्ययलक्षणेन प्रत्यया व्यवहितपूर्वत्वस्य स्वतश्च यका-राव्यवहितपूर्वत्वस्य सत्त्वेनावादेशापत्तेः।

यदपि सर्वत्र वैयधिकरण्यान्वयेनोपपत्तौ इयं परिभाषैव ना-ऽऽवश्यकीति, तदपि न। सम्भवति सामानाधिकरण्येनान्वये वैयधिकरण्यान्वयस्यान्याय्यत्वात्। उष्ट्रगोयुगमित्यादौ अवादेशस्य परम-काव इत्यादौ "कोः कत्तत्पुरुषेऽचि" इति कदादेशस्य चाऽऽपत्तेश्च। परमकाव इति तु कुत्सितः उः कुः तस्मादणि तदन्तेन परमशब्देन समासे बोध्यम्।

वस्तुतस्तु गव्युगजिति वक्तव्ये ओकारोच्चारणान्नोष्ट्रगोयुगमित्यत्रा-ऽवादेशापत्तिः। नचोष्ट्रगोयुगमततीत्युष्ट्रगोयुगात् तस्माण्णिजन्तांण्णिचि टि-लोपयोस्ततः क्विपि यलोपे तच्चरितार्थमिति वाच्यम्। इदुदुपधेभ्य आचक्षा-णणिचोऽनभिधानेनैतादृशरूपस्यैवाभावात्। कोः कदितिसूत्रे रथादिसाहचर्येण कुशब्दाघटितस्यैवोत्तरपदस्य ग्रहणेन परमकाव इत्यत्रापि न दोष इति दिक्।

*वाचनिक्येति*। भाष्ये वचनरूपेण पठितयेत्यर्थः। अत्र "न ल्यपि" इति, कोः कत्तत्पुरुषे इत्येव सिद्धे रथवदयोश्चेति, अनेकवचने झल्येदित्येव सिद्धे बहुवचने झल्येत् ओसि चेति सूत्रद्वयकरणञ्च ज्ञापकमित्यन्यत्र विस्तरः।

*परिभाषयेति*। तदर्थस्तु अभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वेन सम्भावितमल्मात्रवृत्तिविषयताप्रयोजकं सप्तम्यन्तं पदं स्वबोध्यार्थनिष्ठाऽऽद्यव-यवतानिरूपकसमुदायस्य संज्ञा भवतीति।

*बोधोत्तरमिति*। वस्तुतस्तु "एचोऽयवायावः" इत्यादेर्यथा-संख्यसूत्रसहकारेण स्वस्थानिकत्वम्—स्वविशेष्यकापेक्षाबुद्धिविशेषविषयता-सजातीयापेक्षाबुद्धिविशेषविषयतावत्त्वम् एतदुभयसम्बन्धेन एचोऽयादिषु सम्बन्धः। विषयतासाजात्यं च विषयतायां स्वनिरूपकापेक्षाबुद्धि-निष्ठजनकतानिरूपितजन्यतावच्छेदकसंख्यात्वव्याप्यजात्यवच्छिन्नजन्यतानिरू-पितजनकतावच्छेदकत्वम्—स्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितध-र्मितात्वैकत्वावच्छिन्नधर्मितात्वैतदन्यतरवत्त्वम् एतदुभयधर्मेण इति पुनर्य-थासंख्यसूत्रसहकारेण बोधान्तरस्य नापेक्षेति चिन्त्यमेतत्। नच सहविवक्षाया अभावात् अन्वासाधुत्वमिति वाच्यम्। एकरूपावच्छिन्नस्यैकरूपावच्छिन्न-

भावात्तच्छाभाभावः" इति षष्ठे प्रकृतसूत्रे कैयटः । गव्यमिति । भत्वाद्वलोपो न । यीति किम् । गोभ्याम् । प्रत्यये किम् । गोयानम् ।

ननु गव्यूतिरित्यत्र वस्य "हलि सर्वेषाम्" इति "लोपः शाकल्यस्य" इति वा लोपः स्यादत आह वान्त इत्यत्रेति । न च विशेषविहितेन कार्यित्वेन लोपे वस्य निमित्तत्वबाध इति वाच्यम् । निमित्तत्वानाक्रान्ते विषये कार्यित्वस्य चारितार्थ्यात् । तक्रकौण्डिन्यन्यायश्चानवकाशविषयो विधेयविषयश्चेति स्पष्टं तद्धितेष्वचामिति सूत्रे यङ्विधायके च भाष्ये । अन्त्ये "उत्तरयोर्विग्रहेण विशेषासंप्रत्यया-त्रित्यग्रहणानर्थक्यं क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यम्" इति भाष्ये चेन विशेषासंप्रत्यादित्यनुकृष्यते । अन्यथा तक्रकौण्डिन्यन्यायेन सिद्धे विशेषासंप्रत्ययादित्यनुकर्षकचकारवैयर्थ्यापत्तिः । निरूपयिष्यते चेदं यङन्ते । तस्य च वार्त्तिके ऽनुवृत्त्या यूतौ श्रूयमाणवकारान्त आदेश इत्यर्थः । सूत्रे तु न फलं, गव्यादौ भत्वेन वान्तस्य पदत्वाभावात्; लव्ये स्वत एव तदभावात् लोपाप्राप्तेः । गोशब्दादिभ्यः क्यजादावपि "नः क्ये" इति नियमेन पूर्वस्य पदत्वाभावात् । एवं तर्हि वार्तिके एव प्रश्लेष उचित इत्याशयेनाह छकाराद्वेति । लोपो व्योरिति सूत्रे वकारप्रत्याख्यानं तु लौकिकोदाहरणाभावेन तदर्थतया बोध्यम् । अत एव "इको गुण" इति सूत्रे "अतो लून्तस्य" इत्यत्र लुप्तनिर्दिष्टो वकार इत्युक्तं भाष्ये । शास्त्रीयसौत्रप्रयोगार्थं तदिति तदाशयः । न चैवं विष्णवे इत्यादौ तस्य लोप इति

---

संसर्गेण एकरूपावच्छिन्ने ऽन्वयसत्त्वेन तस्याः सत्त्वात् । *प्रकृतसूत्रे कैयट इति* । एवञ्च पूर्वपरविरुद्धत्वात् पूर्वकैयटश्चिन्त्य इति भावः । "हलि सर्वेषाम्" इत्यत्र यकारस्यैवानुवृत्तिमभिप्रेत्याह *लोपः शाकल्यस्येति वेति* ।

*कार्यित्वस्य चारितार्थ्यादिति* । वस्तुतस्तु विषयतयोर्यत्र व्याप्यव्यापकभावस्तत्रैव तक्रन्यायप्रवृत्तौ वल्पदप्रयोज्यनिमित्तविषयतायाः व्योरित्येतत्प्रयोज्यस्थानितायाश्च सामानाधिकरण्यस्यैव दुरुपपादत्वेन नात्र तक्रन्यायविषय इति लेखनीयम् । *विधेयविषयश्चेति* । विभिन्नविभिन्नविधेयतानिरूपितोद्देश्यदलीयविषयतयोर्यत्र व्याप्यव्यापकभावस्तद्विषय इत्यर्थः । अथवा विधेययोर्यत्र व्याप्यव्यापकभावस्तद्विषय इत्यर्थः । व्याप्यतावच्छेदको व्यापकतावच्छेदकश्च सम्बन्धः उद्देश्योद्देश्यतावच्छेदकादेर्विधेयेन साकं यः सम्बन्धः तत्तुल्यवित्तिवेद्यसम्बन्धो बोध्य इत्यन्यत्र विस्तरः ।

दुर्वारं, गव्यूतावुच्चारणस्य चारितार्थ्यादिति वाच्यम्। "गत्रि च युक्ते" इत्यादिनिर्देशैर्वारणात्।

परे तु सा पूर्वपक्ष्युक्तिरिति न वकारप्रश्लेषो लोपेनोचितः। किञ्च छन्दसि सर्वविधीनां व्यवस्थितत्वान्न वलोपप्रसक्तिस्तत्रत्ये गव्यूतौ। अध्वपरिमाणे ऽपि सञ्ज्ञाशब्दो ऽयम्, तत्र सञ्ज्ञात्वभङ्गापत्तेर्न वलोपः। यथा रघुनाथेति सञ्ज्ञाशब्दे नित्यस्यापि णत्वस्याभावः, सर्वनामशब्दे णत्वाऽऽशङ्का तु तस्य सञ्ज्ञिविशेषे आधुनिकविनियोगात् शास्त्रानुसारिशब्दस्यैव विनियोग उचित इत्यभिप्रायेण। निरूपितश्चैतत्सर्वादिसूत्रे भाष्यप्रदीपोद्द्योते इत्याहुः। निरूपयिष्यते चेदं "पूर्वपदात्सञ्ज्ञायाम्" इति सूत्रे।

धातोस्त। धातोरित्यस्याभावे प्रातिपदिकमात्रविषयो नियमः

---

अत्रेदं तत्त्वम्। एकविनियोगोद्देशेन प्रयुक्तवाक्यकदम्बघटकव्यापकधर्मावच्छिन्नबोधकपदप्रतिपाद्यतावच्छेदकावच्छिन्ने तद्वाक्यकदम्बघटकव्याप्यधर्मावच्छिन्नबोधकपदार्थतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचो भवतीत्येतत्तात्पर्यग्राहकेण धर्मयोर्यत्र व्याप्यव्यापकभावस्तद्विषयेण माठरपरिवेषणन्यायेन कार्यित्वेन निमित्तत्वबाधः कस्मान्नेति शङ्कितुं युक्तम्। समाधानन्तु तस्यानित्यत्वम्, विभिन्नवाक्यघटकपदप्रतिपाद्यतावच्छेदकधर्मयोर्यत्र व्याप्यव्यापकभावस्तद्विषयोऽयं न्याय इति वा वक्तुं युक्तमिति दिक्।

*संज्ञात्वभङ्गापत्तेरिति*। नच "पूर्वपदात्संज्ञायाम्" इत्यस्य कृतणत्वेन यत्र संज्ञात्वाऽवगमस्तत्रैव णत्वमित्यर्थेन संज्ञात्वभङ्गभिया रघुनाथादिशब्दे णत्वाभावेऽपि हलि सर्वेषां लोपः शाकल्यस्येत्यत्र संज्ञायामित्यस्याभावेन निरुक्तार्थालाभाद् दृष्टान्तदार्ष्टान्तिकयोर्वैषम्येण लौकिकगव्यूतौ लोपो दुर्वार इति वाच्यम्। अध्वपरिमाणबोधकत्वमुपजीव्य प्रवृत्तस्यावादेशस्य अध्वपरिमाणबोधकत्वविघातकलोपप्रवृत्तिं प्रत्यनिमित्तत्वेन सन्निपातपरिभाषया लोपाप्राप्त्या वकारप्रश्लेषो व्यर्थ इत्यदोषात्। त्रिपाद्यां सन्निपातपरिभाषाया अप्रवृत्त्या लोपो व्योरिति लोपेन वकारप्रश्लेष आवश्यक एवेति परे। आतथेत्यादौ कृते थत्वे ईडादिवारणाय त्रिपाद्यमपि क्वचित् तस्याः प्रवृत्तिरित्यन्ये।

*धातोस्तन्निमित्तस्यैव*। नच "न याकि" इत्येव सूत्रमस्त्विति वाच्यम्। भूधातोर्विचि तस्माद्धितार्थे यति भोयमित्यादौ वान्तादेशापत्तेः। *प्रातिपदिकविषयो नियमः स्यादिति*। स्यादेतत्। नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो भवति इति सिद्धान्तः। तथाच प्रातिपदिकमात्रविषय इति ग्रन्थेन यकारादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टप्रातिपदिकावयवैच्त्वं सङ्कोच्यतावच्छेदकमिति लभ्यते। नच यकारादिप्रत्ययाऽव्यवहितपूर्वत्वविशिष्टधात्ववयवै-

स्यात्तथा च गव्यमित्यत्र न स्यात्, ओयते इत्यत्र च स्यात्। तदभावे सामान्यतोनियमापादनन्तु योगविभागैवकारवैयर्थ्यापत्तेरयुक्तम्। तन्निमित्तस्य चेद्धातोरेवेति नियमे बाभ्रव्यासिद्धेस्तद्वारणायैवकारः। लव्यमित्यादि। अत्र गुणवृद्ध्योर्यण्यन्निमित्तकत्वेनैचो यादिप्रत्ययनिमित्तकता। तन्निमित्तस्येति किमिति। सूत्रमेव किमर्थमिति प्रश्नः। ओयत इति। वेञः कर्मणि लटि यकि यजादित्वात्संप्रसारणे ऽकृत्सार्वेति दीर्घे आङा सहाऽऽद्गुणः। नधातुलोपसूत्रभाष्यरीत्या बहिर्भूतधातूपसर्गकार्यस्य बहिरङ्गत्वाद्वान्तादेशे गुणोऽसिद्ध इत्यरुचेराह। औयतेति। तस्मादेव कर्मणि लङि अडागमे वृद्धिः पूर्ववत्।

क्षय्यज। क्षि क्षये, जि जये, इत्यनयोरेव ग्रहणं न तु क्षीष् हिंसायाम्, क्षै ज क्षये,इत्यनयोर्व्याख्यानात्। अत एव"क्षिज्योरेवैचः"इति भाष्ये उक्तम्। तस्मै प्रेति। क्रयार्थे वस्तुनि क्रय्य इति निपात्यते इत्यर्थो, व्याख्यानात् गुणभूतस्यापि तदा परामर्शः। क्रयार्थत्वञ्च फलोपधानरूपं, तदर्थ इति विशेषणात्तदाह क्रेतार इति। योग्यतामात्रग्रहणे त्वव्यावर्त्तकं तत्स्यादिति भावः। केचित्तु स्वीयं धान्यादि दत्त्वा यत्र तन्मूल्यग्रहणं तत्र धान्यं क्रय्यम्। यत्र तु स्वयं द्रव्यं दत्त्वा परकीयधान्यादिग्रहणं तत्र धान्यं क्रेयम्। द्रव्ये तु न क्रय्यत्वं नापि क्रेयत्वं किं तु धान्यादेरेव शक्तिस्वभावाद। भाष्यस्वरसो ऽप्येवमेवेत्याहुः।

---

त्त्वं सङ्कोच्यतावच्छेदकं कस्मान्नेति वाच्यम्। बाभ्रव्यादौ व्यभिचारेण निरुक्तरूपे नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकत्वाभावात्। एवं च "वान्तो यि प्रत्यये" इत्यत्र तद्रूपावच्छिन्नातिरिक्तत्वेन सङ्कोचे वान्तो यीति सूत्रमेव व्यर्थं स्यादिति चेन्नैवम्। ओयते औयतेत्यत्र वान्तादेशार्थं तच्चारितार्थ्येनादोषात्। नचैवमपि धातुग्रहणसत्त्वे धातोरेचश्चोदित्यादिमूलग्रन्थतः धात्ववयवत्वविशिष्टयादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टैच्त्वावाच्छिन्नातिरिक्तत्वेन सङ्कोच इति फलति, तथाच गव्यतीत्यादौ वान्तादेशानापत्तिरिति वाच्यम्। यादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टैजन्तधातोश्चेत्तर्हि तन्निमित्तस्यैवेति नियमस्वीकारेणादोषात्। नच तथासति एजन्तस्थाने वान्तादेशापत्तिः। निर्दिश्यमानपरिभाषया वारणात्। *इत्यरुचेराहेति*। वस्तुतस्तु "नाजानन्तर्ये" इति निषेधादियमरुचिरसङ्गतेति केचित्।

*द्रव्ये तु न क्रय्यत्वं नापि क्रेयत्वमिति*। वस्तुतस्तु द्रव्येऽपि क्रय्यत्वक्रेयत्वव्यवहारोऽस्त्येव। अत एव लोके आपणे प्रसारिताः पणाः क्रय्या विक्रेतुः, क्रेतुश्च क्रेया इति लोके व्यवहारो दृश्यते। एवं रजतसुवर्णादावपि। अत एव केचिदित्युक्तम्।

लोपः शा।भोभगोअघोअपूर्वस्येत्यशीति चानुवर्त्तते, तत्रौकारान्ते- ऽत्रोतो गार्ग्यस्येति बाधकमित्याशयेनाह । अवर्णपूर्वयोरिति। व्योरि- त्यनुवृत्तावपि वर्णसमाम्नाये यकारस्य प्राक्पाठात्तत्क्रमेणाह । यवयोरि- ति। "स तस्मा आचष्ट" इत्यादिभाष्यप्रयोगादत्र रोरित्यस्यासंबन्धः। इदं सूत्रं लघुप्रयत्ने न। शाकटायनमते तयोर्विधानेन शाकल्यमते तदभावात्। अवर्णेति किम्। गौर्यत्र। पदान्तयोः किम्। हरये।

अशि किम्। वृक्षं वेतीति वृक्षवीः क्विप्। तमाचष्टे इति ण्यन्ताद्विच्। वृक्षव् करोति। क्विपि तुट् स्यात्। विज्निमित्तको लोपो व्योरिति लोपस्तु न। णिलोपटिलोपयोः स्थानिवत्त्वात्। प्रातिपदिकाण्णिजुत्पत्त्या पदत्वा- भावेन परपदस्थाजादेशाभावेन च लोपस्य पदचरमावयवत्वाभावेन च "न पदान्त"इतिनिषेधाप्रवृत्तेः।एतेन वनिमित्तको वलोपो ऽत्र दुर्वार इत्यपास्त- म्। किं च स्थानिवत्त्वनिषेधं विनाऽस्य पदान्तत्वासिद्ध्याऽत्र निषेधाप्रवृ- त्तिः। स्थानिवत्त्वनिषेधज्ञाने पदान्तत्वज्ञानं तन्निर्णये च स्थानिवत्त्वाभाव- ज्ञानमित्यन्योन्याश्रयस्तत्राप्रवृत्तौ मानम्। इदञ्च नपदान्तसूत्रे भाष्ये स्पष्ट- म्। न च पदसञ्ज्ञायां टिलोपस्य स्थानिवत्त्वाद्वस्य पदान्तत्वमेव नास्ती- त्यशीति व्यर्थमिति वाच्यम्। पूर्वत्रासिद्धीय इति निषेधात्। साक्षात्पदत्वा- दिद्वारकपरम्परया वा पूर्वत्रासिद्धीयप्रापकस्य तत्प्रतिबन्धकस्य वा ऽतिदे- शस्य तेन निषेधादिति केचित्।

---

*शाकटायनमते इति*। अयं भावः। ऋषिविशेषघटितशास्त्रबो- धितं साधुत्वं ऋषिविशेषो न जानाति, सामान्यतो बोधितं साधुत्वं सर्वे एव जानन्ति। तथा च व्योर्लघ्वितिशास्त्रबोधितं साधुत्वं शा- कल्यो न जानातीति तयोर्लोपो न। *एतेनेति*। णिलोपटिलो- पयोः स्थानिवत्त्वेनेत्यर्थः।

*निषेधादिति*। साक्षात्पूर्वत्रासिद्धीयसाधकस्य, परम्परया पूर्व- त्रासिद्धीयसाधकस्य, साक्षात्पूर्वत्रासिद्धीयप्रतिबन्धकस्य, परम्परया पूर्वत्रासि- द्धीयप्रतिबन्धकस्य च स्थानिवद्भावस्यानेन निषेधः। तत्र साक्षात्साधकस्यो- दाहरणम्। किमु सन्ति। अत्र "श्नसोरल्लोपः" इत्यल्लोपस्य स्थानिवद्भावः पूर्वत्रासिद्धीयस्य"मय उञो वो वा"इति वत्वस्य साक्षात्साधकः। एवं वृक्षस्य वः वृक्षवः तस्मात् ण्यन्ताद्विचि वृक्षव् इत्यत्र णिलोपटिलोपयोः स्थानिवद्भावः साक्षात्पूर्वत्रासिद्धीयस्य लोपः शाकल्यस्येति वलोपस्य साधकः। परम्प- रया पूर्वत्रासिद्धीयसाधकस्योदाहरणं पिपठीस्तत्रेति। अल्लोपस्य स्थानिवद्भावः पदसंज्ञाप्रतिबन्धद्वारा षत्वसाधकः। साक्षात्प्रतिबन्धकस्योदाहरणं राज्ञ इति।

परे तु "न पदान्ता हलो ऽणः सन्ति" इति लण्सूत्रस्थभाष्याद् वृक्षवादेरनभिधानमेव । भोभगो इति सूत्रे ऽशूग्रहणमनर्थकमन्यत्राभावादिति वार्त्तिकाच्च । अशो ऽन्यत्र तन्निमित्तकार्यिणो ऽभावादिति तदर्थः । न ह्यन्यत्र रुरस्तीति तद्व्याख्यानभाष्ये रुग्रहणमुपलक्षणम् । एतदाशयमजानानैकदेशिना "उत्तरार्थं हलि सर्वेषामिति वृक्षव् करोतीत्यत्र मा भूत्" इत्युक्तम् । अस्य चैकदेश्युक्तित्वं लण्सूत्रस्थोक्तभाष्यविरोधेन स्पष्टमेव कैयटेनोक्तम् । अत एव भाष्ये उत्तरार्थमित्युक्त्वा हलि सर्वेषामित्यत्रैव प्रयोजनमुक्तम् । हलि सर्वेषामित्यत्र वकारनिवृत्त्यैवात्र तद्वारणसंभवान्न तत्राप्यशूग्रहणस्य प्रयोजनमिति तद्भाष्यमेकदेश्युक्तिरेवेत्याहुः ।

कानि सन्तीति । वाक्यसंस्कारपक्षे ऽपि पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वमादायान्तरङ्गाणां पूर्वं प्रवृत्तिरितीकारादेः स्थानिभूतादचः पूर्वत्वं बोध्यम् ।

एकः पूर्व । गुण इत्यादेर्विधेयसमर्पकत्वेन तत्रैकत्वसंख्याया विवक्षणेनोभयोः पूर्वपरयोरेकवाक्यतयैव विधेयान्वयेन चानयोः पूलयोः कटं कुर्वित्यादित इवोभयसंबन्ध्येकविधेयस्यैव प्रतीतेरेकग्रहणं स्पष्टार्थम् ।

---

अत्राल्लोपस्य स्थानिवद्भावः साक्षात् श्चुत्वप्रतिबन्धकः । एवं पौरोहित्यं काव्यमित्यादौ यस्येति लोपस्य स्थानिवद्भावः साक्षात् "अनचि च" इति द्वित्वप्रतिबन्धकः । एवं शो तनूकरणे इत्यस्मात् घञर्थे कविधानमिति कप्रत्यये वाक्शब्देन समासे तस्मात् ण्यन्तात् क्विपि "तितुत्र" इतीडागमनिषेधे वाक्श्चिरित्यादौ टिलोपादेः स्थानिवद्भावः साक्षात्पूर्वत्रासिद्धीयस्य श्चुत्वस्य प्रतिबन्धकः । परम्परया प्रतिबन्धकस्योदाहरणम् पिपठीरिति । अत्राल्लोपस्य स्थानिवद्भावः पदसंज्ञाप्रतिबन्धद्वारा रुत्वप्रतिबन्धक इति दिक् । *हलोऽणः सन्तीति* । अत एव कर्त्रादेरनभिधानम् । नचैवमपि रेफान्तानां गिरादीनामनभिधानं स्यादिति वाच्यम् । पदान्ताः हलूरूपाः "अणोऽप्रगृह्यस्य" इत्येतदनुनासिककार्यभाजः परेऽणो न सन्तीति भाष्याशयेनादोषात् ।

*विधेयसमर्पकत्वेनेति* । नच "सूत्रे लिङ्गवचनम्" इति परिभाषया एकत्वाविवक्षा कर्तुं न शक्यते इति वाच्यम् । तस्या अनुवाद्यविषयकत्वात् । अत एवात्रत्यैकग्रहणप्रत्याख्यानपरं भाष्यं सङ्गच्छते । *एकग्रहणं स्पष्टार्थमिति* । नचैकत्वसंख्याविवक्षणेऽपि एकत्वसंख्यायाः केवलान्वयित्वेनाव्यावर्तकत्वात्पूर्वपरयोः स्थाने गुणद्वयं दुर्वारं स्यादिति वाच्यम् । स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वस्यैकवचनार्थत्वेनादोषात् । साजात्यञ्च स्वप्रकृत्यर्थतावच्छेदकवत्त्व-स्वसमभिव्याहृतपदार्थसंसर्गित्वोभयधर्मेण । तथा च गङ्गोदकमित्यादौ गुणद्वये एकवचनस्य स्वप्रकृत्यर्थतावच्छेदकं यत् सङ्केतसम्बन्धेन

उरण् । उः स्थाने इति "षष्ठी स्थाने" इतिपरिभाषया लब्धम्, "उदात्तस्वरितयोर्यणः" इतिवत् । स्थाने ऽन्तरतम इत्यतः स्थानेग्रहणमनुवर्त्तते, तस्य लक्षणया प्रसङ्गावस्थायामित्यर्थस्तदाह । रपरः सन्नेवेति । रपर इत्यवयववाचिना परशब्देन षष्ठ्यर्थे बहुव्रीहिस्तेनास्यावयवत्वात् यदागमा इति न्यायेन विशिष्टस्य गुणवृद्धित्वेन ऋकारस्य गुणवृद्धी अरारावेवेति नियमोपपत्तिः। अत एव "रदाभ्याम्"इति सूत्रे "थलि च सेटि"इति सूत्रे च भाष्ये "गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसञ्ज्ञको ऽभिनिर्वर्त्तते" इत्युक्तम् । उः स्थाने ऽण् प्रसज्यमान एव रपरो भवति, पूर्वभक्तश्च रेफ इत्यर्थ इति कैयटः । अवयवत्वं वाचनिकमेव तत्सादृश्यबोधनपर्यवसायि । अन्यथा वर्णस्य वर्णान्तरावयवत्वं हलन्ताचेतिसूत्रभाष्योक्तरीत्या ऽसङ्गतं स्यात् । पञ्चम्यर्थे बहुव्रीहिणा ऽनवयवत्वे तु गुणवृद्धिशब्देनाकारादेरेव रेफपरस्यैतदेकवाक्यतया विधानं स्यात् । गुणत्वादिकन्त्वकारादिनिष्ठमेव स्यादित्युक्तनियमानुपपत्तिः । अत एव वव्रे इत्यादौ हलादिःशेषसिद्धिः। अभ्यासावयवस्यैवानादेस्तेन निवृत्तेः। एतेनाणमनूद्य रपरत्वं विधीयते इति परास्तम् । उक्तनियमानुपपत्तेः । अत्र पक्षे क्व रप-

---

गुणपदं तद्वत्त्वं, स्वसमभिव्याहृतपदार्थौ यौ पूर्वपरौ तत्संसर्गित्वमेतदुभयधर्मेण स्वसजातीयं गुणद्वयं भवतीति तन्निष्ठो यो भेदः पूर्वगुणवृत्तिः परगुणवृत्त्येकत्ववान्नेत्याकारको भेदस्तादृशभेदीयप्रतियोगितावच्छेदकं तदेकत्वं जातम्, एवं चालनीन्यायेन परगुणवृत्तियों भेदः पूर्वगुणवृत्त्येकत्ववान्नेत्याकारकस्तादृशभेदप्रतियोगितावच्छेदकं तदेकत्वं जातमिति न पूर्वपरयोः स्थाने गुणद्वयम् । एकस्मिन् गुणे तु स्वसजातीयस्स एव गुणो जात इति स्वस्मिन् स्ववृत्त्येकत्ववान्नेत्याकारकभेदाभावाद् गुणे "घटो न" इत्यादिभेदस्यैव सत्त्वेन तादृशभेदप्रतियोगितावच्छेदकं घटत्वादिकमनवच्छेदकमेवैकत्वं जातमिति लक्षणसमन्वयः । अत एव "पशुना यजेत" इत्यादावनेकपशुकरणकयागान्नादृष्टसिद्धिः ।

ननु स्वप्रकृत्यर्थतावच्छेदकपशुत्वस्य स्वसमभिव्याहृतयागसंसर्गित्वस्य च यागीयपशुषु सर्वेषु सत्त्वात्स्वसजातीयाः सर्वेऽपि यागीयपशवो जाताः । तथाच चालनीन्यायेन सर्वाण्येवैकत्वानि स्वसजातीयनिष्ठभेदप्रतियोगितावच्छेदकानि जातानीति कथमेकैकपशुकरणकनानायागाददृष्टसिद्धिरिति चेदत्र केचित् । "पशुना यजेत" इत्यादावेकवचनार्थैकत्वस्य स्वाश्रयपशुकरणत्वं-स्वानाश्रयपश्वकरणत्वमेतदुभयसम्बन्धेन धर्मिपारतन्त्र्येण यागेऽन्वयस्वीकारेणैकपशुकरणकयागादृष्टसिद्धिः, अनेकपशुकरणकयागान्नादृष्टासिद्धिश्चेत्याहुः ।

परे तु साजात्यघटकं स्वसमभिव्याहृतपदार्थसंसर्गित्वञ्च स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नसंसर्गित्वं विवक्षितम् । तथा च "पशुना यजेत" इत्यादौ स्वसमभिव्याहृतपदार्थतावच्छेदकं यत् यागत्वं तत्पर्याप्त्यनुयोगितावच्छेदकं तद्व्यक्तित्वं तदवच्छिन्नसंसर्गित्वं तद्यागीयपशावेव न तु यागान्तरीयपशाविति एकैकपशुकरणकनानायागादृष्टसिद्धिः । नन्वेवमपि यागत्वपर्याप्त्यनुयोगितावच्छेदकं यागान्तरगतं तद्व्यक्तित्वमपि तदवच्छिन्नसंसर्गित्वं यागान्तरीयपशावप्यस्त्येवेति दोषस्तदवस्थ एवेति वाच्यम् । एकत्वविशिष्टपदार्थसंसर्गित्वस्य विवक्षितत्वात् । वै० स्वनिष्ठविषयतानिरूपितविषयताश्रयत्वतात्पर्यविषयत्वसम्बन्धेन । यागान्तरस्य च एतदेकत्वविषयतानिरूपितविषयताश्रयत्वतात्पर्यविषयत्वाभावान्न दोषः । यद्यपि एतदेकत्वविशिष्टयागीयपशुपदार्थनिष्ठभेदप्रतियोगितावच्छेकत्वं यागान्तरीयपशुगतैकत्वस्यापद्यते एव, तथा तदेकत्वविशिष्टयागान्तरीयपशुनिष्ठभेदप्रतियोगितावच्छेकत्वमेतदेकत्वस्यापीति नैतावताऽपि दोषोद्धारः सम्भवति तथापि स्वसजातीयनिष्ठभेदप्रतियोगितावच्छेदकत्वस्वतात्म्योभयाभाववत्त्वस्य एकत्वे विवक्षणान्न दोषः । एतदेकत्वे तदेकत्वविशिष्टयागान्तरीयपशुनिष्ठभेदप्रतियोगितावच्छेकत्वस्य सत्त्वेऽपि तत्तादात्म्याभावेन उभयाभावस्य सुलभत्वात् । नन्वेवमनेकपशुकरणकयागादप्यदृष्टसिद्ध्यापत्तिः, सर्वेषां पशुगतानामेकत्वानां निरुक्तोभयाभावस्य सुलभत्वादितिचेत्, अत्रोच्यते । स्वसमभिहृतपदार्थतावच्छेदकधर्मपर्याप्त्यनुयोगितावच्छेदकधर्मविशिष्टान्यत्वम् एकत्वे विशेषणीयम् । वै० स्वविशिष्टनिष्ठभेदप्रतियोगितावच्छेदत्वस्वविशिष्टवृत्तित्वोभयसम्बन्धेन । उभयत्र स्ववै० स्वावच्छिन्नसंसर्गित्वस्वसमभिव्याहृतप्रकृत्यर्थतावच्छेकत्वोभयसंबन्धेन । एकयागीयानेकपशुसमवेतानां सर्वेषामेकत्वानां यागगततद्व्यक्तित्ववैशिष्ट्यस्य निरुक्तोभयसम्बन्धेन सत्त्वान्न तद्विशिष्टान्यत्वमिति नानेकपशुकरणकयागाददृष्टसिद्धिः । एकैकपशुकरणकानेकयागेभ्यश्चादृष्टसिद्धिः सुलभा । तत्र भिन्नभिन्नयागसम्बन्धिपशुसमवेतानामेकत्वानां तत्तद्यागगततद्व्यक्तित्ववैशिष्ट्यस्यासत्त्वेन तदन्यत्वस्य सुलभत्वात् । यत्तद्व्यक्तित्वमादाय भेदप्रतियोगितावच्छेदकत्वं तदादाय न तद्विशिष्टपदार्थवृत्तित्वं, यदादाय तद्विशिष्टपदार्थवृत्तित्वं तदादाय न तद्विशिष्टनिष्ठभेदप्रतियोगितावच्छेदकत्वमिति न कस्यापि एकत्वस्य तद्विशिष्टत्वमिति । न चैवमेकस्यां शालायां यत्र बहवो ब्राह्मणा भुञ्जते तत्रास्यां शालायां ब्राह्मणो भुङ्क्ते इति प्रयोगापत्तिः । भोजनत्वस्य प्रत्येकपर्याप्तत्वेन भोजनत्वपर्याप्त्यनुयोगितावच्छेदकतद्व्यक्तित्वावच्छिन्नसंसर्गित्वस्य प्रकृत्यर्थतावच्छेदकब्राह्मणत्वस्य च प्रत्येकं ब्राह्मणे एव सत्त्वेन किञ्चिद्भोजनगततद्व्यक्तित्ववैशिष्ट्यस्य पूर्वोक्तरीत्या कस्मिन्नपि एकत्वेऽसत्त्वेन तदन्यत्वस्य सुलभत्वादिति वाच्यम् । स्वसमभिव्याहृतपदार्थतावच्छेदको योयो धर्मस्तत्पर्याप्त्यनुयोगितावच्छेदकधर्मविशिष्टान्यत्वस्य विवक्षणेन प्रकृते च शाला-

स्वस्यापि तथात्वात् तत्पर्याप्त्यनुयोगितावच्छेदकतद्व्यक्तित्ववैशिष्ट्यस्यैव ब्राह्मणगतेषु सर्वेषु एकत्वेषु सत्त्वेन तदन्यत्वस्याभावादापत्तेरयोगात्। नचैवमपि यत्र शालायामेको ब्राह्मणो भुङ्क्तेऽपरश्च स्वपिति तत्रास्यां शालायां ब्राह्मणो भुङ्क्ते इति प्रयोगो न स्यात्, ब्राह्मणद्वयस्यापि पूर्ववत्स्वसजातीयत्वादिति वाच्यम्। स्वसमभिव्याहृतप्रकृत्येत्यादिप्रथमसम्बन्धस्थाने स्वसमभिव्याहृतैकवचनार्थनिष्ठप्रकारतानिरूपितधर्मितावच्छेदकवत्त्वस्य विवक्षणात्। तथा च प्रकृते भोजनकर्तृत्वविशिष्टब्राह्मणत्वस्यैवानतिप्रसक्ततया धर्मितावच्छेदकत्वेन तस्य च स्वापकर्तृत्वविशिष्टब्राह्मणेऽसत्त्वेनाऽदोषः। *नन्वेवमपि सम्पन्नो व्रीहिरित्यादौ स्वप्रकृत्यर्थतावच्छेदकव्रीहित्वस्य स्वान्वयितावच्छेदकत्वेन तात्पर्यविषयीभूतक्षेत्रत्वपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नसंसर्गित्वस्य च सर्वव्रीहिव्यक्तिषु सत्त्वात्स्वसजातीयनिष्ठभेदप्रतियोगितावच्छेदकान्येव सर्वाण्येकत्वानि जातानीति तत्रैकवचनार्थैकत्वानुपपत्तिः। न च येन सम्बन्धेनैकत्वान्वयस्तत्सम्बन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदो विवक्षितः। तथा च प्रकृते स्वाश्रयव्रीहित्ववत्त्वसम्बन्धेनैकत्वस्य व्रीहावन्वयेन तत्र स्वाश्रयव्रीहित्ववत्त्वसम्बन्धेन स्ववृत्त्येकत्ववान्नेति भेदस्याभावेन न दोष इति वाच्यम्। तथासति सम्पन्नो व्रीहिरित्यादौ स्वसजातीयनिष्ठतादृशभेदस्याप्रसिद्ध्या दोषतादवस्थ्यादिति चेन्न। स्वसजातीयनिष्ठभेदप्रतियोगितावच्छेदकताऽनवच्छेदकसंसर्गनिष्ठावच्छेदकतानिरूपकप्रकारताश्रयैकत्वमेकवचनार्थ इति वक्तव्यत्वात् इति। ननु व्रीहिगोधूमोभयसम्पत्तिदशायां सम्पन्नो व्रीहिरिति प्रयोगो दुर्वार एव, गोधूमे प्रकृत्यर्थतावच्छेदकवत्त्वस्य अन्वयितावच्छेदकवत्त्वस्य वाऽभावेन तमादाय भेदप्रतियोगितावच्छेदकत्वस्य व्रीहिनिष्ठैकत्वे उपपादयितुमशक्यत्वादिति चेन्मैवम्। स्वप्रकृत्यर्थतावच्छेदकवत्त्वञ्च स्ववाचकविभक्तिप्रयोगप्रयोजकबुद्धिविषयतावच्छेदकावच्छिन्नधर्मवत्त्वमिति विवक्षणेनादोषात्। तथाहि उप्तेषु धान्येषु किं किं सम्पन्नमिति प्रश्ने धान्यत्वव्याप्यजात्यवच्छिन्नं बोधयानीति तात्पर्येण सम्पन्नो व्रीहिरिति वाक्यप्रयोगात्स्ववाचकविभक्तिप्रयोगप्रयोजकबुद्धिविषयतावच्छेदकं यद् धान्यत्वव्याप्यजातित्वं तदवच्छिन्नधर्मवत्त्वस्य निरुक्तस्वसमभिव्याहृतपदार्थसंसर्गित्वस्य च व्रीहाविव गोधूमेऽपि सत्त्वेन तन्निष्ठभेदप्रतियोगितावच्छेदकत्वस्यैव व्रीहिगतैकत्वेषु सत्त्वात्।

निरुक्तैकत्वमेवैकपदप्रवृत्तिनिमित्तं बोध्यम्। तथा चैतच्छङ्कासमाधानादिकं प्रकृतेऽप्यतिदेष्टव्यमित्याहुः। विस्तरस्तु व्युत्पत्तिवादटिप्पणे द्रष्टव्यः। स्वसमभिव्याहृतपदार्थसंसर्गित्वेनैव साजात्योक्तौ तु "पशुना यजेत" इत्यादौ स्वसमभिव्याहृतपदार्थयागसंसर्गित्वस्य पुरोडाशादावपि सत्त्वेन स्वसजातीयं यत् पुरोडाशादिकं तन्निष्ठभेदप्रतियोगितावच्छेदकमेवैतत्पशुवृत्त्येकत्वं जातमित्येकपशुकरणकयागादप्यदृष्टसिद्धिर्न स्यात्। स्वप्रकृत्यर्थतावच्छेदकवत्त्वमात्रोक्तौ स्वप्रकृत्यर्थतावच्छेदकपशुत्वस्य सर्वपशुषु सत्त्वेन अयागीयपशुनिष्ठभेद-

* इत उत्तरं यथाश्रुतव्युत्पत्तिवादोक्तपरिष्कारमनुसृत्यैव दोषोपन्यासोऽविदोषादिति बोध्यम्।

रत्वं क्व लपरत्वमिति व्यवस्थाऽनुपपत्तिस्तु न । रेफवत्स्थानिकस्य रेफपरत्वं, लकारवत्स्थानिकस्य लपरत्वमितिव्यवस्थासंभवात् । तत्रान्तरतम्यादिति । स्थानत इति भावः । रेफादिद्वारा ऽऽदेशस्यापि मूर्धादिस्थानत्वात् । तत्र तत्राऽऽदेशानेव रलपरानुच्चार्येदं सूत्रं न कार्यमिति तु न वाच्यम् । "आप्ज्ञप्यृधामीत्" "भृज्ञामित्" इत्यादौ दोषापत्तेः । अत्राण् पूर्वेणैव, प्रशास्तॄणामिति निर्देशात् । वस्तुतो रप्रत्याहाराभावेन रपर इत्यस्य स्थाने लपर इति पठनीयमिति "लपरत्वं वक्ष्यामि" इति तुल्यास्यसूत्रभाष्याल्लभ्यते ।

---

प्रतियोगितावच्छेदकमेव यागीयपशुगतमेकत्वं स्यादिति एकपशुकरणकयागाद्दृष्टसिद्धिर्न स्यादिति दिक् ।

*यण इतिवदिति* । अनेन "विधौ परिभाषोपतिष्ठते नानुवादे" इति परिभाषाऽसङ्गतेति ध्वनितम् । *अवयववाचिनेति* । अवयवत्वविशिष्टपरत्वावच्छिन्नवाचिनेत्यर्थः । *षष्ठ्यर्थे बहुव्रीहिरिति* । तथा च रपर इत्यस्य रेफनिष्ठावयवतानिरूपकः रेफनिष्ठपरत्वावधितावांश्च प्रसङ्गावस्थायामण् भवतीति सूत्रार्थः । *नियमोपपत्तिरिति* । वस्तुतस्तु रेफविशिष्टे गुणत्वाद्यभावेऽपि न क्षतिः । ऋकाराकारयोर्मूर्धन्यावयवकत्वस्य सत्त्वेन तेनैवाऽऽन्तर्येण ऋकारस्याऽराराववेति नियमोपपत्तेरित्यन्यत्र विस्तरः । *उक्तनियमानुपपत्तिरिति* । अत्रेदं तत्त्वम् । "उरण् रपर" इत्यत्र परशब्दः शुद्धपरत्वावच्छिन्नवाचकः । रः परो यस्मादिति पञ्चम्यर्थे बहुव्रीहिः । नच ऋकारस्य गुणवृद्धी अराराववेति नियमानुपपत्तिरिति वाच्यम् "अनान्तर्यमेवैतयोरान्तर्यम्" इति भाष्येण दत्तोत्तरत्वात् । न चैकारादावप्यनान्तर्यसत्त्वेन सोऽपि स्यादिति वाच्यम् । स्ववृत्तित्वम्-स्वेतरयावदादेशावृत्तित्वम्-स्वदलभिन्नदलीयवृत्तित्वम्-एतत्त्रितयसम्बन्धेन स्वविशिष्टस्थानप्रयत्नजन्यत्वाद्यान्तर्यसत्त्वेनाऽनान्तर्यस्य एकारादावभावात् । नचैवमपि "अचो ञ्णिति" इत्यादावकारनिरूपिताऽऽन्तर्यस्याऽऽकारे सत्त्वेनानान्तर्याभावादृकारस्याऽऽरित्येवेति नियमो न स्यादिति वाच्यम् । "अचो ञ्णिति" इत्यत्र "अत उपधाया" इति सूत्रादत इत्यनुकृष्य माठरपरिवेषणन्यायेनाच्पदार्थे ऽकारातिरिक्तत्वेन सङ्कोचं कृत्वा वाक्यभेदेन वृद्धिविधानेनादोषात् । नचैवमपि "गुणो भवति वृद्धिर्भवति रेफशिरा गुणवृद्धिसंज्ञको ऽभिनिर्वर्तते" इतिभाष्यविरोध इति वाच्यम् । गुणवृद्धिसंज्ञकः रेफशिरस्कः सन्नभिनिर्वर्तते इत्यर्थकरणेनाविरोधात् । नचैवमपि ववृ इत्यादौ रेफस्याभ्यासानवयवत्वेन हलादिःशेषानापत्तिरिति वाच्यम् । स्थानिवत्सूत्रस्थशेखरोक्तदिशा वरित्यस्य पुनरभ्याससंज्ञायां हलादिःशेषस्य सुवचत्वादिति दिक् । *भृज्ञामिदित्यादाविति* । "भृज्ञामिर्" इत्युच्यमाने ऽपि हलादिःशेषेण रूपसिद्धौ चिन्त्योऽयं दोषः इति केचित् । वस्तुतस्तु तथोक्तौ

झरो झ । "झयो ह" इत्यतो "वा ऽवसाने" इत्यतो वा विकल्पो ऽनुवर्त्तते। हयवरट्सूत्रशेषे भाष्ये स्पष्टमिदम् । लोपे इति । ऋध धातोर्झर इति भावः । असतीति । द्वित्वाभाव इत्यनुकृष्यते । त्रिधमिति । त्रिधकारत्वं प्रक्रियाभिप्रायेण । न च द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्ध-मित्यर्थकेन "पूर्वत्रासिद्धमद्वित्वे" इत्यनेन धातुधकारस्य जश्त्वे दस्य द्वित्व-मिति इदमयुक्तमिति वाच्यम् । फले विशेषाभावेन तदनादरणात् । न ह्यत्र जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषो ऽस्ति । तदनन्तरञ्जश्त्वप्रवृत्तेः । तस्य परिभाषात्वेन फलविशेषे एव प्रवृत्तेरित्यन्यत्र विस्तरः । पञ्चमी-ति । विनिगमकाभावादिति भावः । अत एवास्य वैकल्पिकत्वम् ।

कृष्णैकेति। कृष्णेति संबुद्ध्यन्तं पृथक्पदमिति कश्चित्। एत्येध । ऊठ् अत्राऽऽदेश एव व्याख्यानात् । एचीति नोठो विशेषणमूठस्तत्त्वासंभवात् । एत्येधत्योरिति योगं विभज्य तयोरेवैचीति विशेषणस्य भाष्ये कृतत्वाच्च । तदाह एजाद्योरिति । एतिरत्र इणेव प्रसिद्धत्वात् । उपैतीत्यादौ वृद्धि-रेचीत्यनेन गतार्थत्वमाशङ्क्याह पररूपगुणेति । एत्येधत्योरेङि पररूप-स्योठि चाऽऽद्गुणस्येति विवेकः । उपैधते इति । अत्र न सर्वादेशः ।

---

अनेकाल्त्वेन सर्वादेशत्वापत्तिः । किन्तु तत्र सिद्धान्तेऽपि हलादिःशेषेण रेफ-स्यापहारान्न रेफविधानफलमिति दोषोपन्यासोऽयुक्त एवेति बोध्यम् ।

*वाऽवसाने इत्यतो वेति* । भाष्यसंमताष्टाध्यायीपाठरीत्येदमुक्तम् । *प्र-क्रियाभिप्रायेणेति* । परिनिष्ठिते "झलां जश्" इति जश्त्वेन दस्यैव श्रवणादिति भावः । *तदनादरणादिति* । नच "पूर्वत्रासिद्धम्" इति द्वित्वस्यासिद्धत्वा-ज्जश्त्वे दस्यैव द्वित्वमिति मूलासङ्गतिरिति वाच्यम् । तस्या अपि परिभाषात्वेन फलाभावादप्रवृत्तेः । नचैवमपि "विप्रतिषेधे परम्" इति परत्वाज्जश्त्वे पुनरपि मूलासङ्गतिरिति वाच्यम् । तस्या अपि परिभाषात्वेन फलाभावादप्रवृत्त्या प्र-थमोपस्थितद्वित्वप्रवृत्तौ बाधकाभावादिति दिक् । *विनिगमकाभावादिति* । चिन्त्यमिदम् । विनिगमकाभावेन तात्पर्यनिर्णयाभावाच्छाब्दबोधस्यैवानापत्तेः । तस्माद्भाष्ये पक्षद्वयस्यापि स्थितत्वेनाऽऽवृत्त्या "यणो मय" इति वार्तिकस्या-र्थद्वयस्वीकारादिति बोध्यम् । *अत एवेति* । पक्षद्वयस्यापि भाष्ये स्थित-त्वादेवेत्यर्थः ।

ननु कृष्णैकत्वमित्यादौ "पूरणगुण" इति निषेधात्षष्ठीसमासो न स्यादित्याशङ्क्याऽऽह *पृथक् पदमिति* । *कश्चिदिति* । अत्रारुचिबीजन्तु अनित्योऽयं गुणेन निषेधः "तदशिष्यं संज्ञाप्रमाणत्वात्" इति निर्देशादित्यस्य मूले एव स्फुटीकरणादिति बोध्यम् । *तत्त्वासम्भवादिति* । नचावयतेः क्विपि औरित्यादावेजादिरूठ् सम्भवतीति वाच्यम् । एत्येधत्योरिति योगं

एत्येधत्याद्यवयवेऽचीत्येवं क्रमेण सूत्राणामर्थात् । अयमेवार्थ इति प्रत्ययलक्षणसूत्रस्थभाष्यस्वरसः । वृक्षे शाखेतिवदेत्येधत्यूठ्स्विति सप्तमी बोध्या । प्रष्ठौह इति । प्रष्ठं वहतीत्यर्थे वहेण्वौ ततः शस्यूठि संप्रसारणे पूर्वरूपे ऽनेन वृद्धिः ।

प्रेदिधदिति । परे तु "इणीकारादौ प्रतिषेधः" इति वार्तिके एधत्यनुपादानात् "न त्वेधतेरव्यभिचारात्" इतिवृत्तेश्चास्यानभिधानमेव। "एत्येधत्योरेचीति विशेषणम्"इति भाष्यस्यैधत्यंशे संभवमात्रेणोपरञ्जकतया विशेषणमित्याशय इत्याहुः । उपैधयत इत्यादावपि वृद्धिर्भवत्येव । प्रकृतिभागस्यैध्रूपत्वात् । किं च एत्येधत्यवयवे ऽचीत्यर्थः प्रत्ययलक्षणसूत्रभाष्यसम्मत इति अत्र न दोषः । पुरस्तादिति । पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरानिति न्यायः । अवश्यं स्वपरस्मिन्बाधनीये भेदेनापेक्षायां प्रथमोपस्थितबाधेनाऽऽकाङ्क्षानिवृत्तिर्हि तद्बीजम् । असाधुरेवेति । आङिणोरेकादेशस्य पूर्वान्ततयाऽऽङि पररूपेण बाधादिति भावः। अर्थवद्ग्रहणे इति । अस्या बीजं "स्वं रूपम्" इति सूत्रे उक्तम् । पररूपे प्राप्ते इति । पूर्वं धातुः साधनेन युज्यत इति सिद्धान्तादिति भावः ।

उपसर्गादृति । तपरकरणादुपऋकारीयतीत्यादौ "वा सुपि" इति न वृद्धिः । सौत्रऋतिस्तु न गृह्यते व्याख्यानात् । आदित्यनुवृत्तेन तदन्तविधिरित्याह अवर्णान्तादिति । यस्मिन्विधिरिति परिभाषयाऽऽह । ऋ-

---

विभज्य एचीत्यस्य तत्रैवविशेषणपरभाष्यप्रामाण्येनैतस्यानभिधानात् । विश्वौह इत्यादौ वृद्ध्यर्थं भगवता एचीत्येत्येधत्योरेव विशेषणमित्युक्ततया चैतस्यानभिधाने न मानमिति परे। *सूत्राणामर्थादिति* । केचित्तु एजाद्येत्येधत्योरित्येव सूत्रार्थः । न च सर्वादेशत्वापत्तिरिति वाच्यम् । "अलोऽन्त्यस्य" "आदेः परस्य" इत्याभ्यां सर्वादेशत्ववारणात्सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वाच्च मूलोक्तमेव युक्तमिति प्राहुः । *इत्याहुरिति* । परे तु "यथोत्तरं मुनीनां प्रामाण्यम्" इति परिभाषया "इणीकारादौ" इति वार्तिके इणीत्येधतेरप्युपलक्षणम् । मूलोक्तं तु न युक्तम् । वार्तिकानुसारेणैधत्यंशे एचीत्युपरञ्जकमितिकल्पनापेक्षया भाष्यानुसारेण वार्तिके उपलक्षणतया व्याख्यानस्यैव ज्यायस्त्वात् । तथा च इदिधत् इत्यस्यानभिधाने न मानमित्याहुः । *भेदेनेति* । विशेषेणेत्यर्थः । *आकाङ्क्षानिवृत्तिरिति* । "विप्रति" इतिसूत्रबाधे मानाभाव इत्यपि बोध्यम् ।

*उपऋकारीयतीत्यादाविति* । उपऋकारयति उपऋकारति इत्यस्या-

यरोऽनु । पदान्तस्येति किम् । वेद्मि, *बध्नाति । स्पर्शे चरितार्थ इति । उपलक्षणमिदं वलयो*रपि प्रवृत्तेः । एतच्च जातिपक्षे स्पष्टमेव । व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थस्य एतद्व्यक्तिविषयतयोपप्लव एव नेति बोद्धव्यम् । स्पष्टश्चेदम् "इको यणचि" इत्यत्र कैयटे । परे तु स्थानेऽन्तरतमसूत्रे सप्तम्यन्तपाठस्य भाष्यकृता दूषितत्वेनैतद्युक्तेरुक्तिसम्भव एव न । तस्मात् "अनुस्वारस्य" इति सूत्रात्सवर्णग्रहणमपकृष्य परः सवर्णोऽनुनासिको भवतीत्यर्थान्न दोषः । तदुक्तं भाष्ये, "रेफेऽनुनासिकपरसवर्णत्वयोः प्रतिषेधो वक्तव्यो,न वक्तव्यो रेफोष्मणां सवर्णा न *सन्ति" इति । चिन्मयमिति । स्वार्थिकः "तत्प्रकृतवचने" इति मयट् । तत्र तदिति वाक्यभेदेन क्व चित्प्राचुर्यरूपप्रकृतवचनाभावेऽपि मयडर्थम् । अत एव चिन्मयं ब्रह्मेति सामानाधिकरण्यम् । चिन्मात्रमिति क्वाचित्कोऽपपाठः । मात्रचः प्रत्ययस्यात्रोपपत्त्यभावात् । मयूरव्यंसकादिष्वेवार्थमात्रशब्देनात्र समासस्य वक्ष्यमाणत्वात् । निपातनादिति । यवादिगणे ककुद्मानिति प्रकृतिप्रत्ययसमुदायः पठ्यते इति मतेनेदम् ।

---

*वेद्मि बध्नातीति* । इदमुपलक्षणं चख्नतुः जग्मतुरित्यादेः । यत्तु "रदाभ्याम्" इति दकारस्य नत्वविधानं व्यर्थं सद् अपदान्तस्य यद्यनुनासिकस्तर्हि निष्ठाऽव्यवहितपूर्वस्यैवेति नियमान्नोक्तदोष इत्यरुचेराह बध्नातीति, तन्न । दस्य यदि भवति तर्हि निष्ठायामेवेति नियमस्य, दस्य यदि भवति तर्ह्यपदान्तस्यैवेति विपरीतनियमस्य चाप्यापत्तेः । क्षुण्ण इत्यादौ णत्वार्थं दस्थाने नकारादेशस्य चारितार्थ्याच्च । अन्यथा "प्रत्यये भाषायाम्" इत्यनुनासिकस्यासिद्धत्वाण्णत्वं न स्यादिति दिक् ।

*वलयोरपीति* । इदमुपलक्षणं यकारस्यापि । अत एव भवाँश्छिनोषि कमलाँश्छिनोषि दध्याँश्छिनोषीत्यादौ "नश्छव्यप्रशान्" इति रुत्वे अनुनासिके च अनेन विकल्पो भवति । न च सप्तम्यन्तपाठे एतद्ग्रन्थप्रवृत्त्या तत्पाठे स्ववृत्तित्व-स्वदलभिन्नदलीयस्थानित्वाभिमतेतरयावत्स्थान्यवृत्तित्व-स्वदलभिन्नदलीयवृत्तित्वैतत्त्रितयसम्बन्धेन आदेशविशिष्टधर्मवत्त्वरूपान्तर्यस्य ग्राह्यतया इदमसङ्गतम्, तालुस्थानजन्यत्वादौ निरुक्तवैशिष्ट्याभावादिति वाच्यम् । एतन्मुरारिरित्यादौ घोषप्रयत्नवत्त्वविशिष्टाल्पप्राणवत्त्वविशिष्टस्पृष्टप्रयत्नवत्त्वविशिष्टदन्तस्थानजन्यत्वादौ, दध्याँश्छिनोषीत्यादौ घोषप्रयत्नवत्त्वविशिष्टाल्पप्राणवत्त्वविशिष्टेषत्स्पृष्टप्रत्यत्नवत्त्वविशिष्टतालुस्थानजन्यत्वादौ च आदेशवैशिष्ट्यसत्त्वेनादोषात् । *सवर्णा न सन्तीति* । अनुनासिका इति शेषः । एतेन रेफस्य रेफ एव सवर्णोऽस्तीतीदमसङ्गतमिति परास्तम् ।

उदः स्था । "तस्मादित्युत्तरस्य" इति परिभाषालभ्यमर्थमाह । उदः परयोरिति । अत्राघोषस्येति । समनियतत्वेनान्यतमाग्रहणे बाधकाभावेन श्वासविवारयोस्त्यागे ऽपि न *न्यूनतेति बोध्यम् । थस्यासिद्धत्वादिति । त्रिपाद्यां परत्वादिति भावः । "हलो यमाम्" इतिसूत्रोक्तभाष्यसंमताष्टाध्यायीपाठे तु थस्यासिद्धत्वाभावेन चर्त्वं भवत्येव । अत एव "उत्पूर्वस्कन्दे रोगे उपसंख्यानम्, उत्त्कन्दो रोग" इति भाष्यं सङ्गच्छते । मूलन्तु प्राचामनुरोधेनेति परे । न चेदं सूत्रं व्यर्थं "झलो झलि" इत्यनेन सस्य लोपे उत्थानस्य सिद्धेरिति वाच्यम् । झलादौ प्रत्यये तेन लोप इत्यर्थस्यानेन *ज्ञापनात् । उदस्थादित्यत्र तु निर्दिश्यमानपरिभाषया निर्दिश्य-

---

अत्रेदमवधेयम् । प्रथमान्तपाठे स्ववृत्तित्व–स्वदलभिन्नदलीयवृत्तित्वस्वदलभिन्नदलीयादेशत्वाभिमतेतरयावद्वृत्तित्वैतत्त्रितयसम्बन्धेन स्थानिविशिष्टधर्मवत्त्वरूपमान्तर्यं ग्राह्यम् । "अनान्तर्यमेवैतयोरान्तर्यम्" इत्यत्र प्रतियोगिभूतमान्तर्यञ्च निरुक्तत्रितयसम्बन्धेन स्थानिविशिष्टत्वे सति आदेशविशिष्टो यो धर्मस्तद्वत्त्वं ग्राह्यम् । तादृशश्च धर्मः सार्वधातुकार्धधातुकयोरित्यादौ तालुस्थानजन्यत्वादिः । तदभावश्च ऋकाराकारयोः । "अचो ञ्णिति" इत्यादौ अत इत्यपकर्षणेन माठरपरिवेषणन्यायेन अकारातिरिक्ताचो ग्रहणमिति न कण्ठजन्यत्वस्य स्थान्यादेशोभयवैशिष्ट्यस्य सत्त्वेन तदभावस्य ऋकाराकारोभयवृत्तित्वाभावाद्दोषापादनसम्भवः । न च तालुजन्यत्वकण्ठतालुजन्यत्वादौ अभावप्रतियोग्यान्तर्यघटकस्थानिवैशिष्ट्यसत्त्वेऽपि आदेशवैशिष्ट्याभावाद् ऐकारौकारयोरपि स्थान्यादेशोभयविशिष्टधर्मवत्त्वाभावेनानान्तर्यरूपान्तर्यसत्वात् तद्धर्मं गृहीत्वा ऋकारस्याऽऽकारएवेतिनियमानुपपत्तिरिति वाच्यम् । ऐकारनिष्ठविवृतावर्णसदृशघटितत्वविशिष्टकण्ठतालुजन्यत्वे औकारनिष्ठविवृतावर्णसदृशघटितत्वविशिष्टकण्ठोष्ठस्थानजन्यत्वे च स्थानिवैशिष्ट्यस्य आदेशवैशिष्ट्यस्य च सत्त्वेन तद्वत्त्वस्य च ऐकारौकारयोः सत्त्वेनान्तर्याभावस्याभावादिति दिक् । केचित्तु अनान्तर्यं तत्तच्छास्त्रीयस्थानिविशिष्टो यो यो धर्मस्तदभावकूटवत्त्वम् । एवं च तालुजन्यत्वादीनां तद्वैशिष्ट्यस्य सुलभत्वात् ऐकारादेः तद्वत्त्वस्य सत्त्वेन तदभावस्य दुर्लभत्वात् मूर्धस्थानजन्यत्वादेश्च स्थानिवैशिष्ट्याभावेन स्थानिविशिष्टतालुस्थानजन्यत्वादिधर्माभावकूटवत्त्वस्य ऋकाराकारयोः सत्त्वेन नियमोपपत्तिः । अचो ञ्णिति इत्यत्र तु पूर्वोक्त एव परिहार इत्याहुः ।

*नन्यूनतेति* । अशोकवनिकान्यायेन अन्यतमलेखनमिति भावः । *अनेन ज्ञापनादिति* । अनेन "सनीति वक्तव्यम्" इति वार्तिकं नापूर्वमिति सूचितम् । वस्तुतस्तु सूत्रसत्त्वे एकतकारथकारद्वयघटितं रूपं, सूत्राभावे "झलो झलि" इति लोपे थकारतकारोभयमात्रघटितं रूपमिति फलभेदेन "उदः स्था" इतिसूत्रासिद्धं सनीति वार्तिकं न भवतीति

झानादेरेव स्थानित्वान्न *दोषः। झय इति पञ्चमीत्याह झयः परस्येति। पूर्वस्येत्यनुवर्त्तते। घोषवत इति। समनियतत्वे ऽपि विनिगमना*विरहात्स्वरूपप्रतिपादनाय च त्रितयग्रहणम्।

झय इति। पदान्तादित्यपि बोद्ध्यम्। तेन विरप्श*मित्यादौ छत्वं न। जकारे कृते इति। छत्वमिति शेषः। पूर्वोक्तभाष्यसंमताष्टाध्यायीपाठे चर्त्वस्य छत्वं प्रत्यसिद्धत्वात्।

मोऽनु। पदस्येत्याधिकृतं म इत्यनेन विशेष्यत इत्याह मान्तस्येति। "हलि सर्वेषाम्" इत्यतो हलीत्यनुवर्त्तते। हलि किम्। राममाश्रय।

नश्चा। चेन मो ऽनुकृष्यते। अपदान्तस्य किम्। राजन्पाहि। यशांसीति। यशस्शब्दाद् जसः शौ "नपुंसकस्य" इति नुमि सान्तेति दीर्घः। आक्रंस्यते इति। क्रमेर्लृट् "आङ उद्गमने" इति तङ् स्यः।

अनुस्वारस्य। परेति लुप्तषष्ठीकं पृथक्पदम्। अत एव "उदः स्था" इत्यादौ सवर्णग्रहणानुवृत्तिः "यरो ऽनुनासिक"इत्यत्र तदपकर्षश्च सिद्धः। ययीति स्पष्टार्थम्। दंशनमित्यादौ तु न दोषः। शकारसवर्णाप्रसिद्धेः*। प्रयत्नभेदेनाज्झलोः सावर्ण्याभावात्। अचि अनुस्वाराभावात्।

---

बोध्यम्। नव्यञ्जनादितिन्यायाश्रयणेन मूलमिति परे। *न दोष इति*। न च "उदः स्थास्तम्भोः" इत्यत्र विशिष्टरूपोपादानसत्त्वेन अर्थवत्परिभाषोपस्थितया आगमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वादुदस्थादित्यादौ स्थाशब्दे स्थापदप्रयोज्यार्थवत्त्वस्थाशब्दत्वावच्छिन्नशाब्दबोधीयविषयताया अभावेन, अस्थाशब्दे षष्ठीप्रकृतिजन्यशाब्दबोधीयविषयताश्रयत्वविशिष्टषष्ठीप्रकृतिजन्यशाब्दबोधीयविषयताश्रयसमभिव्याहृतवर्णाघटितत्वरूपनिर्दिश्यमानत्वस्य सत्त्वात्कथं न दोष इति वाच्यम्। यदागमपरिभाषा लक्षणाग्राहिकेति स्वीकारेण सूत्रे स्थापदं स्थाविशिष्टे लाक्षणिकम्। वैशिष्ट्यञ्च स्वघटितत्व-स्वविशिष्टाघटितत्वैतदुभयसम्बन्धेन। सम्बन्धघटकवैशिष्ट्यञ्च स्वाघटकत्व स्वनिष्ठोद्देश्यतानिरूपितावयवत्वसम्बन्धावच्छिन्नाविधेयताश्रयाघटकत्वोभयसम्बन्धेन। तथा च षष्ठीप्रकृतिजन्यविषयतायां मतकमतका निरुक्तोभयसम्बन्धावच्छिन्नप्रकारताख्यशाब्दबोधीयविषयतायाः स्थाशब्दे एव सत्त्वेन अस्थाशब्दे निरुक्तनिर्दिश्यमानत्वाभावेनादोषादिति दिक्।

*विरहादिति*। व्याप्तिन्यायादिति भावः।

*विरप्शमिति*। इदमुपलक्षणम् चक्शावित्यादेरपि। अन्यथा विरप्शमित्यादौ छान्दसत्वादेव दोषाभावेन पदान्तादित्यस्य वैयर्थ्यापत्तेः। *अप्रसिद्धेरिति*। यरो ऽनुनासिके इत्यतो ऽनुनासिक इत्य-

**मो राजि** ॥ नेति सिद्धे म इत्युक्तिः "हे मपरे" इत्येतद्विषये प्रशाम्म्लयतीत्यादौ "मो नो धातोः" इतिनत्वबाधनार्था, निषेधस्त्वनन्तरत्वादनुस्वारस्यैव स्यात्। ध्वनितश्चेदम् "एतदोऽन्" "अमो मश्" इति सूत्रयोर्भाष्ये।

**हे मपरे** ॥ मपरे इति बहुव्रीहिः* । न तु तत्पुरुषोऽसंभवात् । "मोऽनुस्वारः" इत्यतो म इत्यनुवर्त्तते ।

**यथासंख्य***। सम्यक् ख्यानं संख्या क्रमवैशिष्ट्येन* ज्ञानम्। "यत्सां-

---

स्यात्रानुवृत्त्या शर्रेफसवर्णानुनासिकाप्रसिद्धेरिति भावः । *बहुव्रीहिरिति*। पञ्चम्यर्थे इति भावः॥

*यथासंख्य*। अनुपूर्वकदिशधातोः पश्चाद्भवज्ञानमर्थः । एवम् उत्पूर्वकदिशधातोः सिद्धज्ञानमर्थः । एवं प्रतिनिर्पूर्वकदिशधातोरपूर्वज्ञानमर्थः। अस्मात्करणे घञ् । अनुदेशोद्देशप्रतिनिर्देशशब्दानां क्रमेणाकाङ्क्षाभास्यसम्बन्धोद्देश्यताश्रयविधेयताश्रया अर्थाः । तथा च सूत्रे अनुदेशपदेनोपस्थितिपश्चाद्भवशाब्दबोधविषयीभूताकाङ्क्षाभास्यसम्बन्ध उच्यते । अनोः पश्चादर्थकत्वाद्दिशेः ज्ञानार्थकत्वात् । समानामिति चावर्तते । एकत्रानुयोगित्वमपरत्र प्रतियोगित्वञ्च षष्ठ्यर्थः। समानामित्यस्य तुल्यसंख्यावतामित्यर्थः।

यथासंख्यमित्यस्य संख्याकर्मकातिक्रमणकर्तृत्वाभाववानित्यर्थः । तथा च तुल्यसंख्यप्रतियोगिकः तुल्यसंख्यानुयोगिकश्चाऽऽकाङ्क्षाभास्यसम्बन्धः संख्याकर्मकातिक्रमणकर्तृत्वाभाववान् भवतीति वाक्यार्थः। संख्याऽत्र क्रमः। क्रमश्चापेक्षाबुद्धिविशेषविषयता। आकाङ्क्षाभास्यसम्बन्धे संख्याकर्मकातिक्रमणकर्तृत्वं च स्वप्रतियोगिवृत्त्यपेक्षाबुद्धिविशेषविषयताविजातीयापेक्षाबुद्धिविशेषविषयतावदनुयोगिकत्वम्। तदभावश्च स्वप्रतियोगिवृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावदनुयोगिकत्वम्। साजात्यञ्च स्वनिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसंख्यात्वव्याप्यजात्यवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्वं, स्ववृत्ति-स्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वविशिष्टत्वावच्छिन्नधर्मितात्व-स्ववृत्ति-स्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वानवच्छिन्नधर्मितात्वैतदन्यतरवत्त्वम्-एतदुभयधर्माभ्याम्। यथा "समूलाकृतजीवेषु हन्कृञ्ग्रहः" इत्यादौ तुल्यसंख्यावत्समूलाकृतजीवप्रतियोगिकः तुल्यसंख्यावद्धन्कृञ्ग्रहानुयोगिकश्च य आकाङ्क्षाभास्याव्यवहितोत्तरत्वादिसम्बन्धस्तत्र स्वप्रतियोगिसमूलवृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावद्धनानुयोगिकत्वं, एवम् स्वप्रतियोग्यकृतवृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावत्कृञनुयोगिकत्वम्, एवं स्वप्रतियोगिजीववृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावद्ग्रहानुयोगिकत्वमिति संख्याकर्मकातिक्रमणकर्तृत्वाभावः । संख्याकर्मकातिक्रमणकर्तृत्वञ्च स्वप्रतियोगिसमूल-

ख्यैः प्राप्यते स्थानम्" इत्यत्र संख्याशब्दस्य ज्ञानार्थताया दृष्टत्वात् । तामनतिक्रम्य यथासंख्यम् । अनुदेशः पश्चाद्भववाक्यार्थबोधकालिकः *सम्बन्धः ।

---

वृत्त्यपेक्षाबुद्धिविशेषविषयताविजातीयापेक्षाबुद्धिविशेषविषयतावत्कृञ्ग्रह्यतदन्यतरानुयोगिकत्वम् । हन्निष्ठापेक्षाबुद्धिविशेषविषयतायाः समूलनिष्ठापेक्षाबुद्धिविशेषविषयतासजातीयत्वात्, कृञ्ग्रह्निष्ठापेक्षाबुद्धिविशेषविषयतयोश्च समूलनिष्ठापेक्षाबुद्धिविशेषविषयताविजातीयत्वाच्च ।

तथा हि—कृञ्निष्ठापेक्षाबुद्धिविशेषविषयतायां "समूल इत्येकः एतद्विशिष्टोऽकृत इत्येकः" इत्याकारकापेक्षाबुद्धीयसमूलनिष्ठापेक्षाबुद्धिविशेषविषयतानिरूपकानिरुक्तापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदिका या संख्यात्वव्याप्यद्वित्वत्वजातिः तदवच्छिन्नहन्कृञ्निष्ठद्वित्वनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वस्य सत्त्वेऽपि समूलवृत्त्यपेक्षाबुद्धिविशेषविषयतावृत्तेः अन्यतरस्य पूर्वोक्तापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वानवच्छिन्नधर्मितात्वस्याभावात् नोभयरूपेण साजात्यमिति नातिप्रसङ्गः । एवं ग्रह्निष्ठापेक्षाबुद्धिविशेषविषयतायां समूलवृत्त्यपेक्षाबुद्धिविशेषविषयतावृत्ति—स्वनिरूपकनिरुक्तापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वानवच्छिन्नधर्मितात्वस्यान्यतरस्य सत्त्वेऽपि समूलनिष्ठापेक्षाबुद्धिविशेषविषयतानिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसंख्यात्वव्याप्यद्वित्वत्वजात्यवच्छिन्नहन्कृञ्वृत्तिद्वित्वनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वस्याभावात् । हन्निष्ठापेक्षाबुद्धिविशेषविषयतायां च समूलवृत्त्यपेक्षाबुद्धिविशेषविषयतानिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदकसंख्यात्वव्याप्यद्वित्वत्वजात्यवच्छिन्नहन्वृत्तिद्वित्वनिष्ठजन्यतानिरूपितजनकतावच्छेदकत्वस्य समूलवृत्त्यपेक्षाबुद्धिविशेषविषयतावृत्तिस्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वानवच्छिन्नधर्मितात्वस्य च सत्त्वात् लक्षणसमन्वयः । एवमन्यत्राप्यूह्यमिति।

अथवा समसंख्यावतां सम्बन्धः संख्यात्वव्याप्यजातिविशिष्टो भवतीत्यर्थः । वै०-स्वावच्छिन्नसंख्यानिष्ठजन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वावच्छिन्नविशेष्यताश्रयप्रतियोगिकत्व—स्वावच्छिन्नसंख्यानिष्ठजन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वावच्छिन्नविशेष्यताश्रयानुयोगिकत्वैतदन्यतरवत्त्वम्—स्वावच्छिन्नसंख्यानिष्ठजन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वावच्छिन्नप्रकारताश्रयप्रतियोगिकत्व-स्वावच्छिन्नसंख्यानिष्ठजन्यतानिरूपितजनकतावदपेक्षाबुद्धीयैकत्वावच्छिन्नप्रकारताश्रयानुयोगिकत्वैतदन्यतरवत्त्वम्-एतदुभयसम्बन्धेनेति दिक् ।

*क्रमवैशिष्ट्येन ज्ञानमिति* । वस्तुतस्तु संख्याऽत्र क्रमः । क्रमश्चापेक्षाबुद्धिविशेषविषयतेति लेखनीयम् । क्रमवैशिष्ट्येन ज्ञानपर्यन्तानुधावने फलाभावात् । *बोधकालिक इति* । बोधविषय इत्यर्थः । *सं-

साम्यं संख्यया* योग्यत्वाद्व्याख्यानाच्च । एवञ्च *समसंख्यानां सम्बन्धी येन क्रमेण पदज्ञानं *पदादुपस्थितिर्वा तेनैव क्रमेण वाक्यार्थबोधविषयः सम्बन्धस्तेषामित्यर्थः । फलितमाह । समसम्बन्धीति । यद्यपि *स्थानाख्यलौकिकप्रमाणादेव सिद्धं, तथापि "परस्मैपदानाम्" "एचो ऽयवायावः" इत्यादौ शब्दतः सूत्रान्तरस्थक्रममादाय सम्बन्धबोधार्थम्, "आद्यन्तौ टकितौ" इत्यादौ समासनिर्देशे साहित्ये द्वन्द्वविधानादप्राप्तक्रमान्वयबोधनार्थञ्चेदम् । एवञ्च तत्र यथासंख्येनान्वयबोधकवाक्यकल्पना* एतत्प्रामाण्यात्, ततश्च बोध इति बोद्धव्यम् । अत्र स्वरितेनेत्यपकृष्यते इति "ख्यत्यात्" इत्यादौ नातिप्रसङ्गः* । तत्र प्रतिपत्तिकालिकमेव संख्यासाम्यमेतच्छास्त्रप्रवृत्त्युपयोगीति "अमङ्णनम्" इति सूत्रे भाष्ये स्पष्टम् ।

एते यवला निरनुनासिका एव । विधीयमानत्वेन सवर्णाग्राहकत्वात् । जातिग्रहणप्राप्तस्येव गुणाभेदकत्वप्राप्तस्यापि अप्रत्यय इत्यनेन

---

ख्ययेति* । अपेक्षाबुद्धिविशेषविषयतयेत्यर्थः । *समसंख्यानामिति* । तुल्यापेक्षाबुद्धिविशेषविषयतावतामित्यर्थः । *पदादुपस्थितिरिति* । पदनिष्ठशक्तिग्रहप्रयोजकशास्त्रे येन क्रमेण पदज्ञानमित्यर्थः । यथा "परस्मैपदानाम्" इत्यादौ परस्मैपदपदनिष्ठशक्तिग्रहप्रयोजकं यत् "तिप्तस्झि" इति शास्त्रं तत्र येन क्रमेण पदविषयकं श्रावणप्रत्यक्षं तेनैव क्रमेण णलादयो भवन्ति । एवं येन क्रमेण पदज्ञानमित्यस्यापि येन क्रमेण पदविषयकं श्रावणप्रत्यक्षमित्यर्थो बोध्यः । यथाश्रुतन्तु न युक्तम् । परस्मैपदपदेन सङ्केतसम्बन्धेन परस्मैपदवतामुपस्थित्या क्रमेणोपस्थितेरभावात् । *स्थानाख्यलौकिकप्रमाणेनेति* । यथा प्रतिपदि सुवर्णं दीयताम्, द्वितीयायां रजतम्, तृतीयायां वस्त्रम्, चैत्रेण प्रतिपदि गन्तव्यम्, मैत्रेण द्वितीयायाम्, विष्णुमित्रेण तृतीयायामित्युक्ते एतस्मै इदं दीयतामित्यनुक्तावपि चैत्राय सुवर्णमेव दीयते मैत्राय रजतमेव, विष्णुमित्राय वस्त्रमेव दीयते, यथा वा "शत्रुं मित्रं विपत्तिञ्च जय रञ्जय भञ्जय" इत्यत्र शत्रोः कर्मत्वसम्बन्धेन जय एवाऽन्वय इत्यादि तद्वदिति भावः । *कल्पनेति* । वस्तुतस्तु टित आद्यवयवे कितो ऽन्तावयवे ऽन्वये ऽपि एकरूपावच्छिन्नस्यैकरूपावच्छिन्नसंसर्गेणैकरूपावच्छिन्ने ऽन्वयबोधेच्छारूपसहविवक्षायाः सत्त्वाद् द्वन्द्वस्य सूपपादत्वेन नास्ति वाक्यान्तरकल्पनोपयोग इति बोध्यम् । *नातिप्रसङ्ग इति* । स्वरितत्वाभावादिति भावः । अत्रेदं तत्त्वम् । इदं सूत्रं धर्मसाम्ये एव प्रवर्तते न तु व्यक्तिसाम्ये व्यक्तीनामानन्त्येन तत्साम्यस्य दुरुपपादत्वात् । अत एव "स्थानेऽन्तरतम" इति सूत्रस्थं "संख्यातानुदेशेनाप्येतत्सिद्धम्" इति भाष्यं सङ्गच्छते । अन्यथा षट्पद्येरिकां सप्तानाञ्च वर्णानां सत्त्वेन साम्याभावेन तदसङ्गतिः स्पष्टैव । इदानीन्तु द्वयत्वादीनां साम्येन तत्सङ्गतिरित्यन्यत्र विस्तरः ।

निषेधाच । एवं "मय उञ" इत्यत्रापि* । अत एव मतोर्मस्य नानुनासिको वकारः । अन्यथा "*तद्वानासाम्" इत्यादौ नित्यानुनासिकापत्त्या तन्निर्देशासङ्गत्यापत्तिरित्याहुः ।

चयो द्वितीया इति । "नादिन्याक्रोशे" इत्यत्र भाष्ये इदम् । एतत्सामर्थ्यादेतत्कृतद्वितीयस्य न चर्त्वम् । "ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजम्" इति प्रातिशाख्ये ऽपदान्तभाजमिति चर्त्वासिद्धत्वलब्धार्थानुवादः । पदान्ते जश्त्वप्रवृत्त्या चयो ऽलाभात् । अत्र तु कृते न जश्त्वप्राप्तिरस्यासिद्धत्वात् । अफ्सरा वथ्सा इति भाष्योदाहृते छान्दसत्वाचर्त्वस्यासिद्धत्वं न । एवञ्च प्रातिशाख्ये ऽपदान्तभाजमित्युत्सर्गः । यद्वा तयोरव्युत्पन्नत्वं, न त्वप्पूर्वात् सर्त्तेरसिर्वेदः सो वेत्यन्यत्र विस्तरः ।

डः सि । सीति सप्तमी षष्ठ्यर्थे* व्याख्यानात् । तदाह सस्येति । पदस्येत्यनुवर्त्तमानस्य वैयधिकरण्येनान्वयात्पदावयवस्य सस्येत्यर्थः । षट्त्सन्त इति । धुटि धस्य चर्त्वे *लक्ष्यभेदात्पुनर्डस्य चर्त्वम् ।

नश्च । नकारान्तादिति* । पदस्येत्यनुवृत्तं पञ्चम्या विपरिणम्यत इति भावः । *वैयधिकरण्येनैवान्वय इति ङ्मुट्सूत्रस्थभाष्यस्वरसः । नस्य पदान्तस्येति । अपदान्तनकारे ऽनुस्वारप्रवृत्त्या फ-

---

*इत्यत्रापीति* । अत एव 'किम् ऊँ इति' इत्यादावनुनासिकस्यापि स्थाने "मय उञ" इति वकारो निरनुनासिक एवेति भावः । *तद्वानासामिति* । न च "तसौ मत्वर्थे" इत्यत्र दकारप्रश्लेषाद्भत्वेन पदत्वबाधादनुनासिकाप्राप्त्या नेदं प्रमाणमिति वाच्यम् । "प्रत्ययस्थात्" इति सूत्रस्थस्य "असुब्वत" इति भाष्यप्रयोगस्य प्रमाणत्वात् । अन्यथा "प्रत्यये भाषायाम्" इति नित्यानुनासिको दुर्वारः स्यात् ।

*षष्ठ्यर्थे इति* । षष्ठ्यंशविकलतस्मिन्निति परिभाषोपस्थित्या सकाराव्यवहितपूर्वत्वविशिष्टो यो डकारस्तदव्यवहितोत्तरत्वविशिष्टस्य धुडित्यर्थेन सामञ्जस्यात्फलितार्थकथनमिदम् । *लक्ष्यभेदादिति* । स्वीयप्राथमिकप्रवृत्तावुद्देश्यतावच्छेदकावच्छिन्नत्वेनाश्रीयमाणो यावान् शब्दसमुदायस्तद्घटको यः तद्घटकमात्रोद्देश्यकविकारागमातिरिक्तस्तदघटितत्वे सति स्वीयप्राथमिकप्रवृत्त्युत्तरकालिकप्राप्तिभिन्नप्राप्तिविषयाघटितत्वम् तल्लक्ष्यत्वम्, तस्याभावादिति भावः ।

*नकारान्तादितीति* । सकाराव्यवहितपूर्वत्वविशिष्टो यो नकारस्तदन्ताव्यवहितोत्तरत्वविशिष्टस्य धुडित्यर्थः । *वैयधिकरण्येनैवेति* । न च पयांसि यशांसीत्यादावपि धुडापत्तिरिति वाच्यम् । धुटोऽसिद्धत्वादनुस्वारे कृते नकाराभावेन धुटो ऽप्राप्तेः ।

लितार्थप्रदर्शनमिदम् । नान्तस्य पदस्येत्युचितम् । चतुष्टयमिति । वक्ष्यमाणविकल्पैरिति भावः । तेन तुकश्चुत्वे छत्वस्यासिद्धत्वाच्चयो द्वितीया इति पक्षे चस्य छत्वेन छकारछकारछकारशकारघटितरूपद्वया-धिक्ये ञशानुस्वारविसर्गाणां द्वित्वविकल्पेनाऽऽधिक्ये ऽपि न क्षतिः ।

ङमो । पदस्येत्यनुवृत्तं सामानाधिकरण्यानुरोधात्पञ्चम्या वि-परिणम्यते इत्याह तदन्तं यत्पदं तस्मादिति । तत्र ङम् स्वयं ह्रस्वादितिविशेषणसबन्धमनुभूय* पदविशेषणत्वेन तदन्तपर इति भावः । ङम इति पञ्चमीवलादचीति सप्तमी षष्ठ्यर्थे* तदा-ह । अच इति । सप्तमीनिर्देशस्तु लाघवार्थः । "ङम उत्त-रस्याचः" इति तस्मिन्निितिसूत्रस्थभाष्यात् । ङमन्तं यत्पदमिति किम् । अनितीत्यादौ ङमुण्मा भूदिति । भाष्ये तु विभक्तिव्यत्ययकल्पने गौरवात्पदावयवङमः परस्येति *वैयधिकरण्यमेवोक्तम् । दण्डिनेत्यत्र ङमु-डभावो–मण्डूकप्लुत्या "ञि च पदे" इत्यतः पदे इत्यनुवर्त्याजादेः पदस्य

---

ङमो ह्रस्वात् । *सम्बन्धमनुभूयेति* । गभीरायां नद्यां घोष इ-त्यत्र नदीपदं गाम्भीर्यविशिष्टनदीतीरे लाक्षणिकम् । गभीरायामिति तात्पर्यग्राहकमिति यथा, तथा ङम्पदमेव ह्रस्वात्परत्वविशिष्टङमन्ते लाक्षणिकम्, ह्रस्वादिति तात्पर्यग्राहकमिति भावः । *षष्ठ्यर्थे इति* । वस्तुतस्तु अजव्यवहितपूर्वत्वविशिष्टो यो ङम् तदन्तं यत्पदं तदव्यवहि-तोत्तरस्य ङमुडित्यर्थेन सामञ्जस्यात्फलितार्थकथनमेतत् ।

*वैयधिकरण्यमेवेति* । वस्तुतस्तु इदं भाष्यमेकदेश्युक्तिः । अनितीत्यादौ पदावयवङमव्यवहितोत्तरत्वविशिष्टाचः सत्त्वेन ङमुडापत्तेः । न च "ञि च पदे" इति सूत्रात्पदे इत्यनुवर्त्य अजादिपदाव्यवहितपूर्वत्वविशिष्टः पदावयवो यो ङम् तदव्यवहितोत्तरत्वविशिष्टस्य ङमुडित्यर्थेन न दोष इति वा-च्यम् । अश्वस्य पुत्रो ऽश्वपुत्रः न अश्वपुत्रोऽनश्वपुत्र इत्यादौ ङमुडापत्तेः । अश्व इत्यस्याजादिपदत्वान्नुटश्चानश्वपुत्र इतिपदावयवत्वा च्च । न च ङम इत्यस्यावृत्तिं कृत्वा ङमन्तपदावयवो यो ङम्—अजा-दिपदाव्यवहितपूर्वत्वविशिष्टः, तदव्यवहितोत्तरस्य ङमुडित्यर्थेन न दोष इति वाच्यम् । एवमप्यनश्वपुत्रराजन्नित्यादौ ङमुटो दुर्वारत्वात् । ङमन्तमनश्वपुत्रराजन्निति पदं तदवयवत्वस्य नुटि सत्त्वादश्व इ-त्यस्याजादिपदत्वाच्च । अजादौ पदे इत्यस्य ङमन्तपदेऽन्वयविवक्षणेनाश्वपुत्र-राजन्नित्यादिदोषवारणेऽपि वैयधिकरण्येनान्वये गौरवं स्फुटमेव । तस्माद् ह्रस्वात्परो यो ङम् तदन्तं यत्पदमिति सामानाधिकरण्येनैवान्वय इति निष्कर्षः । न च भाष्योक्तायाः पदेइत्यस्यानुवृत्तेर्वैयर्थ्यमिति वाच्यम् ।

ङमुडित्यर्थेन बोद्धव्यः। पदस्येत्यस्याऽऽवृत्त्या सम्बन्धेऽपि विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्वे एव तदादिविधिप्रवृत्त्या तदलाभः स्यात्*। एतदर्थमेवाचीति सप्तमीनिर्देशः। ङमन्तं यत्पदमित्यर्थे ऽपि परमदण्डिनेत्यादावेतद्वारणाय 'पदे' इत्यनुवृत्तिरावश्यक्येव। अन्तर्वर्त्तिविभक्त्या दण्डिन्नित्यस्य पदत्वात्। "उत्तरपदत्वे च"इति प्रत्ययलक्षणनिषेधस्तु न। माषकुम्भवापेनेत्यादौ पदव्यवाये ऽपीतिनिषेधसिद्धये तस्य यत्रोत्तरपदस्य कार्यित्वं* तत्रैव प्रवृत्तेः। "तेन निषेधेन सिद्धम्" इत्येतत्सूत्रस्थभाष्योक्तिस्त्वेकदेशिन

---

परमदण्डिनावित्यादौ कार्यित्वनिवेशेन "उत्तरपदत्वे च" इति निषेधाप्रवृत्त्या तदनुवृत्तेः ङमुडभावायावश्यकत्वात्।

*तदलाभः स्यादिति* । सामानाधिकरण्येनान्वयबोधं प्रति समानविभक्तिकत्वस्य कारणत्वेन पदे ङम इत्यनेन तादृशबोधालाभादिति भावः। अत एव "आर्द्धधातुकस्येट्" इति सूत्रे आदिग्रहणं चरितार्थम्। न च यत्र विशेषणविशेष्ययोरुभयोः सप्तम्यन्तत्वं तत्रैव यस्मिन्विधिरिति परिभाषाप्रवृत्तिरित्यस्य नोपयोग इति वाच्यम्। तस्यैतत्फलितार्थपरत्वात्।

*कार्यित्वमिति* । न च पूर्वदण्डिप्रिय इत्यादौ दण्डिन्नित्यत्र नलोपकरणाय "उत्तरपदत्वे" इतिनिषेधाप्रवृत्तये उत्तरपदं मध्यमपदत्वानाक्रान्तमिति विवक्ष्यते। तथाच माषकुम्भवापेनेत्यादौ कुम्भेत्यस्य मध्यमत्वाक्रान्तत्वादुत्तरपदत्वे चेतिनिषेधाप्रवृत्त्या णत्वनिषेधस्य सूपपादत्वेन कार्यित्वनिवेशो विफल इति वाच्यम्। यद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वं मध्यमपदत्वमिति परिष्कारेणादोषात्। वै०-स्वघटकार्थवदव्यवहितपूर्वत्वं-स्वघटकार्थवदव्यवहितोत्तरत्वं-स्वघटकत्वमेतत्त्रितयसम्बन्धेन। तथा हि पूर्वदण्डिप्रिय इत्यादौ पूर्व सु दण्डिन् सु प्रिय सु एतद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा दण्डिन्नित्यस्य चिकीर्षिता तद्वृत्तिघटकप्रियाव्यवहितपूर्वत्वस्य तद्वृत्तिघटकपूर्वाव्यवहितोत्तरत्वस्य तद्घटकत्वस्य च सत्त्वाद्दण्डिन्निति निरुक्तमध्यमत्वाक्रान्तमेवेति न प्रत्ययलक्षणनिषेधः। माषकुम्भवापेनेत्यादौ तु वृत्तिद्वयम्। तत्र कुम्भपदे माष आम् कुम्भ सु इत्येतद्वृत्तिघटकाव्यवहितपूर्वत्वस्याभावान्न पूर्वोक्तवृत्तिवैशिष्ट्यम्। माषकुम्भ अस् वाप इत्याकारवृत्तिवैशिष्ट्यस्य कुम्भपदे निरुक्तोभयसम्बन्धेन सत्त्वे ऽपि न तद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञा चिकीर्षितेति कुम्भेत्यत्र प्रत्ययलक्षणत्वार्थमुत्तरपदत्वे इतिनिषेधाप्रवृत्तये कार्यित्वनिवेश आवश्यकः।

नचैवमपि "अतद्धिते" इतिवार्तिकप्रत्याख्यानाय पदे यो व्यवाय इति सप्तमीसमास आश्रितो भाष्ये, तथा च माषकुम्भवापेन, क्षीरपकुम्भेनेत्यादौ फलभेदवारणाय पदपदं पदत्वयोग्योपलक्षणमित्यवश्यं वक्तव्यम्। अन्यथा "गतिकारकोपपदानाम्" इति सुबुत्पत्तेः प्रागेव समासेन आद्योदाहरणे पदे परतो यो व्यवायस्तस्याभावेन, अन्त्ये पदेन व्यवायस्या-

इति दिक्। "इको यणचि" इति सौत्रो निर्देशः।

---

भावेनाऽऽरम्भप्रत्याख्यानयोः फलभेदो दुर्वारः स्यात्। तथा च माषकुम्भवापेनेत्यादौ कुम्भेत्यत्र पदत्वयोग्यत्वस्य सत्त्वाण्णत्वनिषेधसिद्ध्या कार्यित्वनिवेशो विफल इति वाच्यम्। अटतीत्यट् परमश्चासावट् च परमाट् तस्मादाचारक्विबन्तात् क्विचि "तितुत्र"इतीडभावे परमाट्तिरित्यादौ ष्टुत्वनिषेधाय कार्यित्वनिवेशस्यावश्यकत्वात्।

नचैवमपि यद्वृत्त्यारम्भकेत्यादि नोच्यते, किन्तु सामान्यतः स्वघटकार्थवदव्यवहितपूर्वत्वं—स्वघटकार्थवदव्यवहितोत्तरत्वं—स्वघटकत्वमेतत्त्रितयसम्बन्धेन वृत्तिविशिष्टत्वं मध्यमत्वमित्युच्यते। तथा च परमाट्तिरित्यादौ वृत्तिघटकतिप्रत्ययाव्यवहितपूर्वत्वस्य वृत्तिघटकपरमाव्यवहितोत्तरत्वस्य च सत्त्वान्मध्यमत्वमेवेति परमाट्टिरित्येव स्यान्नतु परमाट्तिरिति, उत्तरपदत्वे इति निषेधाप्रवृत्तेः, तथा च कार्यित्वनिवेशो विफल इति वाच्यम्। परमलोम्निशयः परमलोम्निचर इत्यादौ उत्तरपदत्वेतिनिषेधप्रवृत्तये निरुक्तोभयसम्बन्धेन यद्वृत्त्यारम्भकसुम्भन्निमित्तिका पदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वस्यावश्यकत्वात्। अन्यथा लोमन्नित्यस्य मध्यमत्वाक्रान्तत्वेन निषेधाप्रवृत्त्या नलोपो दुर्वारः स्यात्। पञ्चगवधन इत्यादौ पञ्चन् जस् गो जस् धन सु एतद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञायां चिकीर्षितायां तद्वृत्तिघटकटजव्यवहितपूर्वत्वस्य सत्त्वेऽपि तस्यानर्थकत्वेन तद्घटकार्थवद्धनाव्यवहितपूर्वत्वस्य च गोशब्देऽभावात् गोपदं मध्यमत्वानाक्रान्तमेवेति न पूर्वरूपापत्तिः। न च परमदण्डिप्रिय इत्यादौ दण्डिन्नित्यस्य निरुक्तमध्यमत्वानाक्रान्तत्वात्कथं नलोप इति वाच्यम्। परमदण्डिप्रकृतिकसुपः प्रत्ययलक्षणेन तत्सिद्धेः। परमदण्डिन्नित्यस्य मध्यमत्वानाक्रान्तत्वेऽपि उत्तरपदत्वस्याभावात्। नचैवमत्रयो भृगव इत्यादावत्रिशब्दात् षष्ठ्यन्तादपत्येऽर्थे "इतश्चानिञः" इति ढकि तस्य "अत्रिभृगु" इति लुकि तस्माज्जसि "जसि च" इति गुणे उत्तरपदत्वाभावादुत्तरपदेतिनिषेधाप्रवृत्त्या षष्ठ्याः प्रत्ययलक्षणेन पदान्तत्वेन पूर्वरूपापत्तिदुर्वारेति वाच्यम्। वार्त्तिके पदत्वे इत्यस्य पृथक्पदत्वेन उत्तरपदशब्दोपादानाभावेन केवलस्य 'उत्तर' इति पदस्य समासचरमावयवे रूढत्वाभावेन वृत्तिचरमावयवपरत्वमिति स्वीकारेणादोषात्।

वृत्तिचरमावयवत्वञ्च यद्वृत्त्यारम्भकसुब्निमित्तिका पदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वम्। वै० च स्वघटकत्वं—स्वघटकार्थवदव्यवहितपूर्वत्वाभाववत्त्वमेतदुभयसम्बन्धेन। अत्रयो भृगव इत्यादौ स्वघटकत्वं व्यपदेशिवद्भावेनेति तत्रापि लक्षणसमन्वयः। यद्वृत्त्यारम्भकेत्युक्त्या परमलोम्निशयः परमलोम्निचर इत्यादावर्थवन्ङिप्रत्ययाव्यवहितपूर्वत्वस्य सत्त्वेऽपि परम सु लोमन् सु इत्येतद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञायाः चिकीर्षितत्वेन ङौ तद्वृत्तिघटकत्वस्याभावेन न लोमन्नित्यस्य वृत्तिचरमावयवत्वहानिः। द्वितीयसम्बन्धदानेन पूर्वदण्डिप्रिय इत्यत्र दण्डिन्नित्यस्य नोत्तरत्वम्। अर्थवदित्युक्त्या पञ्चगवधन

रुप्रकरणे इति। अत एव "समः सुटि" इत्यादौ प्रश्लेषेण सविधानमिति भाष्ये उक्तम्। रोः पूर्वस्येत्युपलक्षणं रुप्रकरणविधेयस्य* । एवमुत्तरत्र रोः पूर्वस्मादित्यपि। अयमधिकारः। तेनोत्तरसूत्रविषये एवास्य प्रवृत्तिः। न तु "मतुवसोः" इत्यत्र, तत्सूत्रस्थवार्त्तिकयोश्च* । अत्रेति तु–रुप्रकरण एवास्य सम्बन्धो, न त्वग्रे "ढो ढे लोप" इत्यादावित्यर्थसूचनार्थं, स्पष्टार्थमेव। तुशब्दः परस्य नित्यं रुत्वं पूर्वस्य वाऽनुनासिक इति विशेषद्योतनार्थः । पूर्वस्येत्यस्य च रुस्थानिनः *पूर्वस्येत्यर्थो बोद्धव्यः ।

अनुनासिकात्पर इत्यत्रानुनासिकादिति ल्यब्लोपे पञ्चमी व्याख्यानात् । अयमागमो ऽनवयव एव अवयवत्वे मानाभावात्* ।

खरीति । विसर्गाक्षिप्तस्याप्यवसानस्य न सम्बन्धो व्याख्याना-

---

इत्यादौ गोइत्यस्य नोत्तरत्वहानिः । पञ्चन् जस् गो जस् धन सु इत्येतद्वृत्त्यारम्भकसुब्निमित्तकपदसंज्ञायाश्चिकीर्षितत्वेऽपि तद्वृत्तिघटके टचि अर्थवत्त्वाभावात् । तद्वृत्तिघटकार्थवद्भनाव्यवहितपूर्वत्वाभावस्य सत्त्वाच्च । तेन बहुसेचावित्यादौ बहुच्पूर्वकसेच्इत्यस्योत्तरपदत्वसिद्धिरिति "बहुच्पूर्वस्य चापदादिविधौ" इति वार्तिकमेतत्तात्पर्यग्राहकम् । एवञ्च कार्यित्वनिवेशो विफल एव । माषकुम्भवापेनेत्यादौ यथा णत्वनिषेधः स्यात्तथा पूर्वमेवोपपादितम् । अत एव प्रकृतसूत्रार्थप्रतिपिपादयिषया प्रवृत्तं प्रकृतसूत्रस्थं परमदण्डिनावित्यादौ "उत्तरपदत्वे" इति निषेधान्ङमुण्णेति भाष्यं सङ्गच्छते ।

न च "उभि च पदे" इतिसूत्रस्थभाष्यासङ्गतिरिति वाच्यम् । तस्यैकदेश्युक्तित्वेनादोषात् । प्रकृतसूत्रस्थभाष्यस्यैकदेश्युक्तित्वकल्पनापेक्षया तस्य तदुक्तित्वस्य न्याय्यत्वात् । अन्यथा राजन्कैदित्यत्राकचो मध्यपतितत्वाभावेन तद्विशिष्टस्यातिङन्तत्वात्पदत्वाभावेन नुडनापत्तेः । न च परमाट्तिरित्यादौ कार्यित्वानिवेशाभावे ष्टुत्वनिषेधो न स्यादिति वाच्यम् । अस्य लक्ष्यस्याप्रमितत्वेनेष्टापत्तेः कर्त्तुं शक्यत्वात् । लेढीति लिट् । परमश्चासौ लिट्च परमलिट् तस्मादाचारक्विबन्ताद्वनिपि परमलिड्हेत्यादीनामिवास्याप्यारम्भप्रत्याख्यानयोः फलभेदवारणायानभिधानस्यैव न्याय्यत्वाच्च । अन्यथा "उत्तरपदत्वे" इत्यारम्भकल्पे परमलिड्हेति, प्रत्याख्याने च परमलिड्ढेति फलभेदः स्यादिति दिगित्याहुः ।

*रुप्रकरणविधेयस्येति* । रुप्रकरणीयविधेयाव्यवहितपूर्वस्येत्यर्थः । *वार्त्तिकयोश्चेति* । अत एव "हरिवो मेदिनं त्वा" "भोभगोअघो" इत्यादौ नानुनासिक इति भावः । *रुस्थानिनः पूर्वस्येति* । अत एव "समः सुटि" इत्यनेन सकारादेशकल्पे अनुनासिकसिद्धिरिति भावः ।

त्।*। स्सो वक्तव्य इति। "समः सुटि" इत्यादिसूत्रत्रये स इत्युपसंख्याय, "समः सुटि" इत्यत्र सकारं प्रश्लिष्य वा एतैः सकार एव विधेय इत्यर्थः। एवञ्चास्यासिद्धत्वाद्रुत्वाभावेन विसर्गाभावे तत्तद्विधीनामप्राप्तिरेवेति भावः। स्पष्टं चेदं भाष्ये। विसर्गस्यानेन सत्वविधाने तु गौरवं स्फुटम्। लोपस्यापीति। यत्तु "उपधारञ्जनं कुर्यान्नमो रुकरणे सति। लोपे प्रकृतिभावे वा नोपधारञ्जनं मतम्"। उपधारञ्जनमनुनासिकानुस्वारागमरूपम्। नमोर्नकारमकारयोः। प्रकृतिभावोदाहरणं नॄन्पाहीति। तत्तु प्रातिशाख्यत्वात्तच्छाखामात्रविषयमिति भावः। अत एव भाष्ये "समादिषु सत्वं वक्तव्यम्" इत्युक्तम्। रुत्वपक्षे चानुनासिकाद्यापत्तिर्दोषत्वेन नोक्ता। ननु लोपपक्षे एव द्वित्वेन द्विसकारस्य सिद्धत्वात् "समः सुटि" इति व्यर्थमित्यत आह त्रिसकारकमपीति। स्कोरिति लोपस्तु न अस्यासिद्धत्वात्। पुनर्द्वित्वेन त्रिसकारस्य सिद्धिरिति तु न युक्तं, लक्ष्येलक्षणस्येति न्यायात्। एतेन समः सुटीत्यत्र वेति पाठेनैव पक्षे मोऽनुस्वारेण सिद्धे "अनुनासिकात्परः" इति व्यर्थमित्यपास्तम्।

ननु व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चारणे विशेषाभावोऽत आह। अनुनासिकवतामिति। तत्रोच्चारणे विशेषाभावकल्पने इदं वचनं व्यर्थमेव स्यादिति भावः। हयवरट्सूत्रभाष्योक्ते शर्षूपसंख्याने फलमाह। अनुस्वारवतामिति। अपिना कस्य सङ्ग्रहः। लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेराह। वचनान्तरेणेति। "यणो मयः" इत्यनेन। एकस्यैव शास्त्रस्य पुनः प्रवृत्तौ हि स न्याय इति भावः। पूर्वत्रासिद्धत्वेन पूर्वद्वित्वस्य पूर्वं प्रवृत्त्या तेन द्वितीयस्य साधुत्वे बोधिते तदनन्तरं परद्वित्वप्रवृत्त्या तयोर्मध्ये पुनरन्यस्य साधुत्वं बोध्यत इति त्रितस्य निर्वाहो बोद्ध्यः। "अनाचि च" इत्यत्र "यणो मयः" इत्यस्योपसंख्यानात् "अचो रहाभ्याम्" इत्यतस्तस्य परत्वं बोद्ध्यम्।

---

वस्तुतस्तु एतत्प्रकरणविधेयाव्यवहितपूर्वत्वविशिष्टस्येत्यर्थो बोध्यः। अत एव "समो वा लोपः" इति कल्पे ऽप्यनुनासिकासिद्धिः। अन्यथा रुस्थान्यव्यवहितपूर्वत्वस्याभावात्स न स्यात्। *मानाभावादिति*। चिन्त्यमिदम्। सूत्रे परशब्दस्यावयवत्वविशिष्टपरत्वावच्छिन्नवाचकत्वेन "उरण्रपरः" "नव्याभ्याम्" इत्यत्रेवानुस्वारे ऽवयवत्वावच्छिन्नविधेयताश्रयत्वरूपागमत्वस्वीकारे बाधकाभावात्। अत एव महाँ इन्द्र इत्यादौ भोभगो इति यत्वं सिद्ध्यति। अन्यथा ऽनुस्वारविशिष्टस्यापदत्वेन यदागमन्यायेन ग्रहणाभावे यत्वं दुरुपपादं स्यादिति दिक्। *व्याख्यानादिति*। खरवसानयोः स इ-

पुमः ख । अम्परइति बहुव्रीहिः* । ×क×पयोरिति । "कुप्वोः" इतिसूत्रविधेययोरित्यर्थः । "इदुदुपधस्य" इति सूत्रे ऽप्रत्ययस्येत्यस्य प्रत्ययावयवभिन्नस्येत्यर्थादिति भावः । अव्युत्पत्तीति । तत्पक्षे *प्रकृतिप्रत्ययविभागाभावादिति भावः । षत्वेति । इदमनुनासिकपक्षे । अनुस्वारपक्षे तु "कुप्वोः" इत्यस्यैव प्राप्तिः । अनुस्वारव्यवधानेनोदुपधत्वाभावात् । पुंक्षीरमिति । क्षरधातोरुपधाया ईत्वे ऽच्प्रत्यये क्षीरमिति भावः ।

नश्छवि । अप्रशानिति षष्ठ्यर्थे प्रथमा । नॄन्पे । नॄनिति द्वितीयान्तानुकरणम् । षष्ठ्याः सौत्रो लुक् । नलोपस्तु सौत्रत्वान्न । एवं कानित्यत्रापि । चाद्विसर्ग इति । "शर्परे" इति सूत्राच्चदनुकर्षश्चेनेति भावः ।

येन नेति । "येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधकः" इति न्यायेनेत्यर्थः । येन नेत्यादेर्यत्कर्तृका*वश्यप्राप्तावित्यर्थः । नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् । प्राप्त इति भावे क्तः । *तदप्राप्तियोग्यविषये ऽचारितार्थ्यं हि बाधकत्वे बीजम् । तदुक्तं "शर्पूर्वाः" इति सूत्रे भाष्ये "शर्पूर्वा इत्येतद्धलादिःशेषस्य बाधकम् । ननु विषयभेदे कथं बाधकत्वम् । इदं तावदयं प्रष्टव्यः, यदि तन्नोच्येत कि-

---

त्येव सिद्धे "विसर्जनीयस्य सः" इत्यारम्भसामर्थ्यादिति भावः । *बहुव्रीहिरिति* । पञ्चम्यर्थे इति भावः । *प्रकृतिप्रत्ययविभागाभावादिति* । प्रकृतिप्रत्ययविभागज्ञानप्रयोज्यकार्याभावादित्यर्थः ।

*अवश्यप्राप्ताविति* । अवश्यंशब्दपर्यायावश्यशब्दस्य प्राप्तिशब्देन समासः । अत एव "आवश्यकाधमर्ण्ययोः" इति निर्देशः सङ्गच्छते । अन्यथा योपधत्वाभावाद् वुञ् न स्यात् ।

*तदप्राप्तियोग्यविषयेऽचारितार्थ्यमिति* । इदं सामान्यं सर्वानुगतं रूपं, तद्विशेषाश्च सङ्कोचविशेषप्रयोजकाः—तदप्राप्तियोग्ये ऽचारितार्थ्येन विशिष्टं कृते चारितार्थ्यम्, तदप्राप्तियोग्येऽचारितार्थ्येन विशिष्टः कृते चारितार्थ्यस्याभावः, तदप्राप्तियोग्ये ऽचारितार्थ्येन विशिष्टा कृतेऽचारितार्थ्येन विशिष्टोत्सर्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्याऽपवादशास्त्रवैयर्थ्यसम्भावना, तदप्राप्तियोग्ये ऽचारितार्थ्येन विशिष्टा उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्याऽपवादशास्त्रप्रवृत्तिसम्भावना च । तत्र सामान्येन प्रथमबीजेन स्वप्रवृत्तियोग्यातिरिक्तत्वेन, द्वितीयचतुर्थाभ्यां स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविधेयघटितातिरिक्तत्वेन च, तृतीयेन स्वप्रवृत्तियोग्यस्वीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन, पञ्चमेन भविष्यदपवादविषयातिरिक्तत्वेन च उत्सर्ग-

मिह स्यात्, हलादिःशेषश्चेत्—नाप्राप्ते तस्मिन्नारम्भादिदं तद्बाधकं भविष्यति" इति। "अजादेर्द्वितीयस्य" इति सूत्रे भाष्ये ऽपि स्फुटमेतत्।

न तु शर्पर इति। न चास्य विसर्गस्य ≍क≍पौ दुर्वारौ, किं चास्यैव तौ स्यातां, "खरवसानयोः" इति विहितस्य तु एतयोरसिद्धत्वात्सत्वमेव स्यादिति वाच्यम्। "शर्परे" इति सूत्रं कुप्वोरित्यत्रानुवर्त्य शर्परयोः कुप्वोः ≍क≍पयोरपवादो विसर्गस्य विसर्ग इति वाक्यभेदेन व्याख्यानेनादोषात्। स्पष्टश्चेदं भाष्ये। वार्त्तिके कान्ग्रहणं शक्यमकर्तुमित्याह। यद्वेति। एवं सम्ग्रहणमपि त्यक्तुं शक्यम्। पुम्ग्रहणं त्वावश्यकमेव। अनुनासिकपक्षे इणः परत्वेन षत्वापत्तेः। एष्विण इति। गणे कृतसत्वषत्वानामेव पाठादिति भावः। ≍क≍पयोरपवाद इति। तद्विहितविसर्गस्यापीत्यपि बोद्ध्यम्। काँस्कानिति वीप्सायां द्वित्वम्।

संहितायाम्। संहिता च स्वारसिकार्धमात्राकालव्यवायेनोच्चारणम्*। ततो ऽधिकार्धमात्राकालेनोच्चारणे एतदधिकारोक्तकार्यव्यावृत्तये इदं, तदधिककालव्यवाये तु न साधुत्वं नापि बोध इष्यते इति वृद्धा इति तेषां शास्त्रविषयतैव नेति भावः।

छे च। छे इत्यकार उच्चारणार्थस्तेनाच्छिन्नमित्यत्र तुक्। "ह्रस्वस्य पिति" इत्यतो ह्रस्वस्येति तुगिति च वर्त्तते। जश्त्वेनेति। स्वशब्दे उपपदे छ्यतेः के स्वच्छशब्दो निर्मले रूढः, एवं नञ्पूर्वाच्छादयतेर्डे अच्छशब्द इति पदान्तत्वं बोद्ध्यम्। स्पष्टश्चेदममरटिप्पणे।

आङ्माङोः। आङ्साहचर्यान्माङव्ययमेव। दीर्घस्यायमिति।

---

शास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो बोध्यः। वस्तुतस्तु सामान्यमात्रस्य प्रथमस्य पृथग् बाधप्रयोजकत्वकल्पनं निष्फलमेवेति बोध्यम्। विस्तरस्त्वन्यत्र द्रष्टव्यः।

बाध्यत्वे बीजं तु—बाधकत्वेन जिघृक्षितशास्त्रीयोद्देश्यदलीयविषयताविशिष्टान्यतमत्ववद्विषयताप्रयोजकपदघटितत्वम्। वैशिष्ट्यञ्च स्वव्यापकतावच्छेदकत्वं—स्वव्यापकतावच्छेदकवैशिष्ट्याभाववत्त्वमेतदुभयसम्बन्धेन। द्वितीयसम्बन्धे वै० च-स्वव्यापकत्वं-स्वव्याप्यत्वाभाववत्त्वं-स्वाश्रयव्यधिकरणविषयतावृत्तित्वमेतत्त्रितयसम्बन्धेन। प्रकृतमूलं तु प्राचामनुसारेण। वासः क्षौममित्यादौ यथा जिह्वामूलीयो न भवति तथा शर्परे इति सूत्रमित्यादिना शेखरे एव स्पष्टम्।

*उच्चारणमिति*। अर्धमात्राधिककालाव्यवायेनोच्चारणमित्यर्थः।

*वक्ष्यमाणज्ञापकाद्व्याख्यानाद्वा* दीर्घादिति षष्ठ्यर्थे *पञ्चमीति भावः। एओङ्सूत्रभाष्ये ध्वनितमेतत्। चेच्छिद्यते इति । तुको हलादिःशेषस्तु न। अभ्याससञ्ज्ञाप्रवृत्तिकाले स्थानिद्वारा साक्षाद्वा संनिहितानां हलामेव तेन निवृत्तेः*। अत एव "नुगत" इत्यादि चरितार्थम्।

दीर्घात्पदान्तादिति । *पदान्तस्य दीर्घस्येत्यर्थः । योगविभागोऽनयोः "एओङ्" इति सूत्रे भाष्ये स्पष्टः। दीर्घान्तस्य पदस्येत्यर्थेन सिद्धेऽन्तग्रहणं पदान्तविधित्वमस्य, न पदविधित्वमितिबोधनद्वारा समर्थपरिभाषानुपस्थित्यर्थम्। तेनासामर्थ्येऽप्यस्य प्रवृत्तिरिति समर्थसूत्रे कैयटः* ।

इति हल्सन्धिः॥

---

* वक्ष्यमाणज्ञापकादिति* । सुराच्छायेति ज्ञापकादित्यर्थः। ननु नैतज्ज्ञापकं सम्भवति "दीर्घात्" इति सूत्रस्यापदान्तविषयत्वादुक्तलक्ष्यस्य च पदान्तविषयत्वादत आह *व्याख्यानाद्वेति* । वर्णैकदेशानां वर्णग्रहणेन ग्रहणमिति पक्षे 'अग्ने इन्द्र' इत्यत्र सवर्णदीर्घे ह्रस्वाक्षराश्रयमाल्लूयेत्यादौ "ह्रस्वस्य पिति" इति तुकश्चाशङ्क्य "दीर्घे ह्रस्वाक्षराश्रयो विधिर्न भवति" इत्यर्थे "यदयं दीर्घाच्छे तुकं शास्ति" इत्युक्तं भाष्ये। यदि छस्यायं तुक्स्यात्तदा ह्रस्वस्य पूर्वेण, छस्य त्वनेनेति विशेषस्य स्पष्टत्वात्तस्य ज्ञापकत्वासङ्गतिरिति एओङ्सूत्रस्थभाष्यमूलकादित्यर्थः ।

*षष्ठ्यर्थे पञ्चमीति* । वस्तुतस्तु षष्ठ्यंशविकलतस्मादितिपरिभाषोपस्थित्या दीर्घाव्यवहितोत्तरत्वविशिष्टो यश्छकारः तदव्यवहितपूर्वत्वविशिष्टस्य तुगित्यर्थेन सामञ्जस्यात्फलितार्थकथनमेतत् ।

*निवृत्तेरिति*।न च चेच्छिद्यते इत्यादौ स्थानिवत्सूत्रोक्तदिशा तुग्विशिष्टे द्विर्वचनीयविधेयताश्रयावधिकाव्यवहितपूर्वत्वस्य, एकदेशविकृतन्यायेन द्विर्वचनीयोद्देश्यताश्रय—द्विर्वचनीयविधेयताश्रयैतदुभयमात्रारब्धसमुदायघटकत्वस्य च सत्वेन पुनरभ्याससंज्ञायाः सुलभत्वेनाभ्याससंज्ञाप्रवृत्तिकाले संनिहितत्वात्तुको हलादिःशेषो दुर्वार इति वाच्यम् । "नुगतोऽनुनासिकान्तस्य" इतिशास्त्रारम्भसामर्थ्येन हलनुबन्धकागमानां हलादिःशेषो न भवतीति कल्पनेनादोषात्। हलनुबन्धकेत्युक्त्या चकारेत्यादौ रेफागमस्य हलादिःशेषो भवत्येवेति दिक् ।

*पदान्तस्य दीर्घस्येति* । वस्तुतस्तु पदान्तदीर्घाव्यवहितोत्तरत्वविशिष्टो यश्छकारस्तदव्यवहितपूर्वत्वविशिष्टस्य तुगित्यर्थो बोध्यः । *कैयट इति* । अनेन पदसंज्ञाप्रयोजकप्रत्ययोत्पत्तिप्रयोजकसंज्ञाशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नसम्पादकत्वरूपपदविधित्वस्याभावात्समर्थपरिभाषानुपस्थित्या एकार्थीभावाभावेऽपि तुग्भवत्येवेति अन्तग्रहणं स्पष्टार्थमेवेत्ययं कैयटाभिन्नाय एवेति बोधितमिति दिक् ।

इति हल्सन्धिः॥

विसर्जनीयस्य सः । प्राग्व्याख्यातमपि विसर्जनीयपदानुवृत्तिप्रदर्शनाय स्मारितम् । शर्परे इति बहुव्रीहिः । विशेष्यश्चावध्यवधिमतोः साजात्याद्विसर्जनीयाक्षिप्तः खरेव । विसर्गस्य विसर्गविधौ फलमाह । न त्वन्यदिति । अन्यदेव विवृणोति । इहेति । त्रैरूप्यमिति । विकल्पद्वयसामर्थ्यादिति भावः ।

सोप । अपदाद्योरिति। सूत्रे सौत्रत्वादेकवचनम् । अनव्ययस्येति । अत्राव्ययीभावातिरिक्ताव्ययस्यैव ग्रहणं व्याख्यानात्* । तेनोपपयस्काम्यतीत्यादौ सत्वसिद्धिरिति स्पष्टम् "अव्ययीभावश्च" इत्यत्र भाष्ये । गीः काम्यतीति । वाः काम्यतीत्यस्याप्युपलक्षणमिदम्* ।

इणः षः ॥ "इदुदुपधस्य" इत्यस्यासिद्धत्वात्सर्पिष्पाशमित्यादौ सत्वनिवृत्त्यर्थं, गीष्पाशं दोष्कल्पमित्याद्यर्थश्चेदम् । अत्रानव्ययस्येत्यपदादाविति काम्ये इति च संबद्ध्यते । तेनोच्चैःकल्पं, दोः पश्य, गीः काम्यतीत्यादौ षत्वं न । अत एवात्र प्रकरणे सर्वत्र सत्वमेव विधेयमिण उत्तरस्य विसर्गस्थानिकसस्यानेन षत्वमिति भाष्योक्तपक्षान्तरं सङ्गच्छते । विसर्जनीयस्थानिकेत्युक्त्या पुंस्पुत्र इत्यादौ न दोषः । तत्र हि मस्थानिकः सः । अत्र विसर्जनीयस्येत्यनुवृत्त्यैतदर्थलाभः । अनव्ययस्येत्यादि त्वत्र पक्षेऽत्र न संबद्ध्यते, तेन द्विष्कृतं दुष्काम्यतीत्यादौ षत्वसिद्धिः । गीः काम्यतीत्यादौ सकाराभावादेव न दोषः । अपदादाविति च न संबद्ध्यते । तेन दुष्करोतीति षत्वसिद्धिः । परन्त्वयं पक्षो ऽसङ्गतः* । उत्तरसत्व-

---

अथ विसर्गसन्धिः । *व्याख्यानादिति* । "अव्ययीभावस्याव्ययत्वे लुङ्मुखस्वरोपचारा" इति भाष्ये परिगणनरूपादित्यर्थः । *उपलक्षणमिदमिति* । वस्तुतस्तु "सो ऽपदादौ" इत्यत्र 'काम्येरोरेव" इत्यस्य "इणः षः" इत्यत्र "काम्येरोरेव" इत्यस्य चैकमेव 'गीः काम्यति' इति फलम् । अन्यथा "सो ऽपदादौ" इत्यत्र तदभावे सत्वम्, "इणः षः" इत्यत्र च तदभावे षत्वं दुर्वारं स्यात् । एवञ्चोपलक्षणतया व्याख्यानं निष्फलमेवेति दिक् ।

*असङ्गत इति* । परे तु 'इडाया वा" इत्यतः प्राक् "इणः षः" इतिसूत्रं कर्तव्यम् । इण उत्तरस्य विसर्गस्थानिकसकारस्य षो भवतीति तदर्थः । विसर्गस्थानिकेत्युक्त्या पुंस्पुत्र इत्यादौ मकारस्थानिकविसर्गस्य न षः । "समः सुटि" "पुमः खय्यम्परे" "कानाम्रेडिते" इति सूत्रत्रयेण सकारस्यैव विधानेन तस्यासिद्धत्वाद्रुत्वाद्यभावे विसर्गस्थानिकसकारस्याभावात् । "सो ऽपदादौ" इत्यारभ्य "इणः ष" इत्यतः प्राक्तनैः सर्वैः सूत्रैः सकार एव विधेयः । तथा च कुत्रचित् स एव कुत्रचित् ष एव कुत्रचिदुभयमनुवर्तते इति कल्पना न कर्तव्या

स्यासिद्धत्वेन निष्कृतमित्यादौ षत्वासिद्धेः । "प्रकरणे प्रकरणमसिद्धं न योगे योग" इति पक्षस्तु नास्त्येव* ज्ञापकासम्भवादिति "उपसर्गादसमासेऽपि" इत्यत्र निरूपयिष्यामः । विसर्जनीयस्यैव षत्वमिति मूलोक्तपक्षे तु सकारषकारयोः स्वरितत्वेऽपि यथायोगं सम्बन्धो मण्डूकप्लुत्येत्यन्यत्र विस्तरः ।

नमस्पु ॥ इत उत्तरमपदादाविति न सम्बद्ध्यते व्याख्यानात्* । साक्षात्प्रभृतित्वादिति । ऊर्यादित्वाद्गतित्वं स्वरादिपठितस्य तु गतित्वाभावस्तेन साक्षात्प्रभृतिषु च्व्यर्थवचने ऽपि न क्षतिरित्यन्ये ।

इदुदु ॥ अप्रत्ययस्येति पर्युदासो लाघवात् । तत्र प्रत्ययपदं तत्सम्बन्धिपरं, तेन प्रत्ययसम्बन्धिभिन्नस्येत्यर्थः । अत एव कविभिः कृतमित्यादौ न षत्वं, स्पष्टञ्चेदं भाष्ये इत्यन्यत्र विस्तरः* । एकादेशशास्त्रेति* । एकादेशशास्त्रसम्पन्नरेफस्थानिकत्वेन विसर्जनीयस्यैकादेश-

---

भवति । किञ्च इणः ष इत्यत्र 'अनव्ययस्य' 'काम्येरोरेव' इति वार्तिकद्वयसम्बन्धश्च न कर्तव्यो भवति, अपदादावित्यत्र स्वरितत्वं च न कल्पनीयं भवतीति महल्लाघवम् । उच्चैःकल्पम्, दोः पश्य, गीः काम्यतीत्यादौ विसर्गस्थानिकसकारस्यैवाभावेन षत्वाप्राप्तेः । एतेन परत्त्वयं पक्षोऽसङ्गत इत्युक्तिरेवासङ्गतेति प्राहुः ।

*नास्त्येवेति* । भोश्छिन्धि भगोश्छिन्धि अघोश्छिन्धि हरिवश्छिन्धि इत्यादौ "विभाषा भवत्" "वन उपसंख्यानम्" इति वार्तिकदृष्ट्या "नश्छवि" इति सूत्रस्यासिद्धत्वाभावात्परत्वात्तेनैव रुत्वे अवस्यौकारादेशानापत्तेरनुस्वारानुनासिकयोरापत्तेश्च दुर्वारत्वेन "प्रकरणे प्रकरणम्" इति पक्ष आश्रयितुं न शक्यते इति भावः । व्याख्यानादिति* । 'नारायणं नमस्कृत्य' इत्यादिलक्ष्यदर्शनमूलकादित्यर्थः ।

*अन्यत्र विस्तर इति* । वस्तुतस्तु प्रत्ययभिन्नविसर्गस्येदुदुपधस्य ष इति सामानाधिकरण्येनान्वयेऽपि न क्षतिः । न च कविभिः कृतमित्यादौ षत्वं दुर्वारं स्याद्भिसः प्रत्ययत्वेऽपि विसर्गस्य तद्भिन्नत्वादिति वाच्यम् । "प्रत्ययस्य लुक्" इति सूत्रात्प्रत्ययस्येत्यनुवृत्त्यैव सिद्धे "प्रत्ययलोपे" इति सूत्रे प्रत्ययग्रहणसामर्थ्येन षष्ठीप्रकृतिप्रयोज्यप्रत्ययत्वावच्छिन्नविषयता प्रत्ययावयवेऽपि स्वीक्रियते इत्यर्थेन प्रकृते विसर्गेऽपि तद्विषयतासत्त्वेन प्रत्ययभिन्नविसर्गाभावेनादोषात् । स्पष्टं चेदं प्रत्ययलोपसूत्रे शेखरे । 'प्रत्ययपदं तत्सम्बन्धिपरम्' इति शेखरस्तु यत्र पर्युदस्यमानो वर्णः, पर्युदाससमर्पकञ्च समुदायबोधकपदं,तत्र तत्पदं तदवयवे लाक्षणिकम्, यथा "नश्छव्यप्रशान्" "शेषो ध्यसखि" "अत्वसन्तस्य चाधातोः" इत्यादौ,एवं प्रकृतेऽपीत्याशयेन योजनीयः ।

*एकादेशशास्त्रेतीति* । मातुः कृपेत्यादौ विसर्गस्य "अन्तादि-

शास्त्रनिमित्तकत्वं बोद्धव्यम् । स्पष्टश्चेदमत्र सूत्रे "उरण् रपर" इति सूत्रे च भाष्ये इत्यन्यत्र विस्तरः । प्रत्ययभिन्नसम्बन्धिन इति तु नार्थः । अग्निः करोतीत्यादावपि प्रत्ययभिन्नसमुदायसम्बन्धित्वेन षत्वापत्तेः* । तपरकरणं किम् । गीः करोति । उपधाग्रहणं व्यर्थम् । "उपधाग्रहणं न करिष्यते, इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्याम" इति हयवरट्सूत्रभाष्योक्तेः ।

तिरसो ऽन्य ॥ अत्र गतिग्रहणं नानुवर्त्तते पराभवे तिरस्कारशब्दप्रयोगात् । अन्तर्धावेव तिरसो गतित्वात् ।

द्विस्त्रि ॥ कृत्वोऽर्थ इति न विसर्गविशेषणं चतुःशब्दे ऽसंभवात्, किं तु द्विरादीनामित्याह । वर्तमानानामेषामिति । इसुसोरितिसूत्रवक्ष्यमाणरीत्या "सुचः" इति सूत्रयितुमुचितम्* । सुजन्तान्तस्य पदस्येत्यर्थात् । चतुष्कपाल इति । इदुदुपधस्येति नित्यं षः । चतुःशब्दो ऽव्युत्पन्न इति अप्रत्ययस्येति पर्युदासो न । अत एव "चतुष्पाद्भ्यो ढञ्" इत्यादिनिर्देशाः सङ्गच्छन्ते । चतुष्पश्वाशादित्यत्रापि षत्वं भवत्येव । न चेदुदुपधस्य सस्य यो विसर्ग इति हयवरट्सूत्रभाष्योक्तेः कथमत्र षत्वमिति वाच्यम् । विसर्गस्य पाठाभावेनोपधात्वासम्भवात्तत्स्थानिनिमित्तमुपधात्वं ग्राह्यमिति भाष्यतात्पर्यात् । अत एव "समः सुटि" इतिसूत्रभाष्ये संपुङ्कानामित्यनेन रुविधिरेवास्त्वित्याशङ्क्य पुंस्कामेत्यत्र षत्वापादानं सङ्गच्छते ।

---

च" इतिसूत्रसहायेन प्रत्ययसम्बन्धित्वेन षत्वाप्राप्त्यैतज्ज्ञापनस्य नोपयोग इति तत्त्वम् । *षत्वापत्तेरिति* । न च प्रत्ययभिन्नसम्बन्धिविसर्गस्य ष इत्यर्थे सर्वत्रैव प्रत्ययभिन्नसम्बन्धित्वाद्विसर्गस्य षत्वं स्यादित्यप्रत्यय इति व्यर्थं स्यात्, तत्सार्थक्याय प्रत्ययभिन्नप्रातिपदिकावयवेदुदुपधस्य विसर्गस्य ष इत्यर्थेनाग्निः करोति, कविभिः कृतमित्यादौ न दोषः प्रत्ययभिन्नसमुदायसम्बन्धित्वेऽपि विसर्गस्य प्रातिपदिकावयवत्वाभावादिति वाच्यम् । ओजोभिः कृतं, सख्युः पुत्र इत्याद्यलुक्समासे प्रत्ययभिन्नसम्बन्धित्वात्प्रातिपदिकावयवत्वाच्च विसर्गस्य षत्वापत्तेः ।

*"सुच" इति सूत्रयितुमिति* । न च चतुष्करोति चतुः करोतीत्यादौ "द्विस्त्रिश्चतुः" इति षत्वस्यासिद्धत्वात् "इदुदुपधस्य" इति नित्यषत्वापत्तिः । "सुच" इति सूत्रस्य तु नापवादत्वम् । विसर्गस्य प्रत्ययसम्बन्धित्वेन "इदुदुपधस्य" इति षत्वाप्राप्त्या द्विष्करोति द्विः करोतीत्यादौ चारितार्थ्यात्, इति वाच्यम् । "द्वित्रिभ्यां सुच्, चतुरो लोपश्च" इति न्या-

न च कृत्वोऽर्थे विद्यमानस्य पदस्येदुदुपधस्य यो विसर्ग इत्यर्थान्न पञ्चकृत्वः करोतीत्यादौ दोषो, नापि चतुष्करोतीत्यादावव्याप्तिरिति द्विस्त्रिश्चतुरिति व्यर्थमिति वाच्यम् । कृत्वोऽर्थे इत्यस्यासिद्धत्वेन चतुःशब्दे इदुदुपधस्येति नित्यषत्वापत्तेः । प्रकरणे प्रकरणमसिद्धमिति पक्षस्तु "उपसर्गादसमासे ऽपि" इति सूत्रे कैयटे "पूर्वपदात्" इति सूत्रे भाष्ये च दूषित एव* । उपसर्गादिति सूत्रे चोपपादयिष्यते । किं च पूर्वत्रेति पूर्वशब्देन प्रकरणग्रहणे ऽव्यवहितप्रकरणे एव त्रिपाद्यसिद्धत्वं स्यात्, न सम्पूर्णसपादसप्ताध्याय्याम् । किं *चास्याधिकारत्वात्प्रतिसूत्रमुपस्थित्या प्रतियोगमसिद्धत्वं *दुर्वारमित्यन्यत्र विस्तरः ।

इसुसोः ॥ अत्रेसुसोः *प्रातिपदिकावयवयोर्ग्रहणम् । तेन पेचुः काष्ठैः, सख्युः पाकः, कविभिः कृतमित्यादौ षत्वं न । "नित्यं समासे" इति सूत्रोदाहरणे समासविषये तयोरेव सम्भवेनार्थाधिकारानुरोधात्*साहचर्याच्च । इसुसन्तपदावयवविसर्गस्येत्यर्थः । पदस्येत्यधिकारात् । न च प्रत्ययग्रहणपरिभाषया परमसर्पिष्करोतीत्यादौ *षत्वानापत्तिरवयवस्येसुसन्तत्वे ऽपि

---

स्तेन चतुष्करोतीत्यादौ विसर्गस्य प्रत्ययसम्बन्धित्वेन नित्यषत्वाप्राप्त्या ऽदोषादिति दिक् । *दूषित एवेति । भोश्छिन्धि भगोश्छिन्धि अघोश्छिन्धि हरिवश्छिन्धीत्यादावनुनासिकानुस्वारयोरापत्तेरवस्यौकारादेशानापत्तेश्चेति भावः ।

ननु अव्यवहितप्रकरणस्यैव पूर्वदृष्ट्या ऽसिद्धत्वे "अ अ" इत्येतत्पर्यन्तानुवृत्तिप्रयोजकस्वरितत्वकरणं व्यर्थं स्यात् । किञ्च प्रतियोगासिद्धत्वकल्पे ऽप्ययं दोषस्तुल्य इत्यत आह । *किञ्चेति* । *दुर्वारमिति* । यथा "प्राग्दीव्यत" इत्यादौ अवधिसाजात्यादर्थपुरस्कारेण प्रत्ययविधायकेष्वेवाणादेरधिकारः एवं "प्रकरणे प्रकरणे एवानुवर्तते" इत्येतज्ज्ञापकलिङ्गाभावात् "स्त्रियाम्" इत्यादेरिवास्यापि प्रतिसूत्रमनुवृत्तिर्दुर्वारेति भावः ।

*प्रातिपदिकावयवयोरिति* । इस्साहचर्यादुस्तिङनवयवो गृह्यते, तादृशोस्साहचर्याच्चेस्सुबनवयवो गृह्यते । तेन प्रातिपदिकावयवयोर्ग्रहणमित्यर्थाल्लब्धमिति भावः । *साहचर्यादिति* । निरुक्तसाहचर्यादिति भावः । *षत्वानापत्तिरिति* । इसन्ततदादेरुसन्ततदादेर्विसर्गस्य ष इत्यर्थेन षत्वानापत्तिः । अधिकृतपदस्येत्यनेन सामानाधिकरण्येनान्वयेऽपि धर्मिणः सिद्धत्वेन तदादित्वधर्ममात्रोपस्थित्येसन्तमुसन्तम्-इसुस् च यस्मादिहितौ तदादित्वविशिष्टं यत्पदं तत्सम्बन्धिविसर्गस्य ष इत्यर्थेन तदनापत्तिरस्त्येवेति भावः । ननु परमसर्पिष्करोतीत्यादौ प्रत्ययलक्षणेन सर्पिरिति पदमिस् यस्माद्विहित-

"उत्तरपदत्वे च" इति* निषेधेनापदत्वादिति वाच्यम्। अनुत्तरपदस्थस्येति निषेधेन क्वचिदुपात्तविशेष्यसत्त्वे ऽपि *शब्दरूपं विशेष्यमादाय तदन्तविधिज्ञापनेन शब्दरूपं विशेष्यमादाय प्रत्ययग्रहणपरिभाषया लब्धतदन्तार्थकस्य पदविशेषणतया *इसुसन्तान्तस्येत्यर्थेनादोषात्। अत एव "वनोर च" इत्यादौ न दोषः*। ब्राह्मणस्य सर्पिष्करोतीत्यादौ सापेक्षत्वेनासामर्थ्यं नाशङ्क्यं तस्यैकार्थीभाव *सामर्थ्यविषयत्वात्। *"अधात्वभिहितं समानाधिकरणसमर्थवत्" इत्युक्तेः सर्पिः कालकमित्यादौ न षत्वम्। अधात्वभिहितमित्युक्तेः सर्पिष्पीयते इत्यत्र षत्वसिद्धिः। धातुसहचरित *प्रत्ययाभिहितार्थेन *समानाधिकरणमसमर्थवन्नेति तदर्थः।

यदा तु सर्पिरादिकमव्युत्पन्नं प्रातिपदिकं—पाणिनेरुणादिष्वव्युत्पत्तिपक्ष एवेति "आयनेयीनी" इति सूत्रे भाष्ये स्पष्टमुक्तेः। तत्र हि शङ्क इत्यादावादेशानाशङ्क्य "उणादीनां प्रतिषेधो वक्तव्यः, प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेः सिद्धम्" इत्युक्तम्। "अयामन्ताल्वाय्येत्न्वि" ष्णुषु इति सूत्रं व्याकरणान्तररीत्यैव, सर्वनामस्थानमितिमहासञ्ज्ञा-

---

स्तदादित्वविशिष्टश्चेति षत्वविकल्पो दुर्वार इत्यत आह। *उत्तरपदत्वे चेति*। *शब्दरूपं विशेष्यमिति*। तदादिरूपं शब्दमित्यर्थः। *इसुसन्तान्तस्येति*। इसन्तमुसन्तं च यत्तदादि तदन्तं यत् पदं तस्येत्यर्थः। *न दोष इति। *वन्नन्तं यत्तदादि तदन्तात्प्रातिपादकादित्यर्थादिति भावः।

*मूले व्यपेक्षेति*। तत्त्वञ्च यत्किञ्चित्पदविशिष्टत्वम्। वै० स्वघटितत्वं—स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकपदघटितत्वं—स्वप्रयोज्यविषयतानिरूपितत्वाभाववद्विषयताप्रयोजकपदाघटितत्वं—स्वनिष्ठशक्तिग्रहप्रयोज्यशक्तिग्रहविषयभूतशक्तिपर्याप्त्यनधिकरणत्वमेतच्चतुष्टयसम्बन्धेन। प्रत्येकपदे ऽतिव्याप्तिवारणायाद्यसम्बन्धद्वयम्। तिष्ठतु सर्पिः पिब त्वमुदकमित्यादावतिव्याप्तिवारणाय तृतीयसम्बन्धोपादानम्। समासे ऽतिव्याप्तिवारणाय चतुर्थसम्बन्धोपादानमिति दिक्।

*एकार्थीभावेति*। तत्त्वञ्च यत्किञ्चिच्छक्तिविशिष्टत्वम्। वै० स्वपर्याप्त्यधिकरणघटितत्वं—स्वनिरूपकेतरनिरूपितशक्तिपर्याप्त्यधिकरणघटितत्वं—स्वग्रहप्रयोज्यग्रहविषयीभूतशक्तिपर्याप्त्यधिकरणत्वमेतत्त्रितयसम्बन्धेन। यथा राजपुरुष इत्यादौ राजत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणराजपदघटितत्वम्—राजत्वावच्छिन्ननिरूपितशक्तिनिरूपकेतरपुरुषत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणघटितत्वं—राजत्वावच्छिन्ननिरूपितशक्तिग्रहप्रयोज्यशक्तिग्रहविषयीभूतराजसम्बन्धिपुरुषत्वावच्छिन्ननिरूपितशक्तिपर्याप्त्यधिकरणत्वञ्च वर्तते इति लक्षणसमन्वयः।

वत् । अत एव भाष्ये उणादयो ऽव्युत्पन्नानीत्येवोक्तम् । न तु "अनेकार्था अपि धातव" इतिवदव्युत्पन्नान्यपीत्युक्तं, तदा "इदुदुपधस्य"इति नित्ये षत्वे प्राप्ते ऽनेन विकल्प इति । प्रत्ययग्रहणाभावात्तत्परिभाषानुपस्थितेः परमसर्पिष्करोतीत्यादौ षत्वविकल्पः सिद्धः । "नित्यं समासे" इति सूत्रमनुत्तरपदस्थस्येतिप्रतिषेधार्थम् । नित्यग्रहणं तु न कर्त्तव्यमेव । समासे नित्यषत्वस्य इदुदुपधस्येत्येव सिद्धेः । सर्पिषेत्यादौ षत्वं त्वत्र पक्षे क्व चिदन्यदेवेत्यर्थकाद् बहुलग्रहणादिति स्पष्टं भाष्ये । व्यपेक्षेति । व्याख्यानात्* । एकार्थीभावसामर्थ्यग्रहणे परमसर्पिःकुण्डिकेत्यादौ समासे विकल्पापत्तिः । अनुत्तरपदस्थस्येति निषेधादुत्तरसूत्रस्य न प्रवृत्तिरिति भावः ।

नन्वनेनैव सिद्धे कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठो व्यर्थ इत्यत आह । कस्कादिष्विति । एतेन तत्सामर्थ्यादुत्तरपदस्थस्यापि *षत्वमित्यपास्तम् । व्यपेक्षाविरहे ऽपीति । आनय सर्पिष्कुण्डिका तिष्ठतीत्यादौ । व्यपेक्षायामिति । इदं सर्पिष्कुण्डिकाया इत्यत्र । प्रत्ययभिन्नविसर्गस्येत्यर्थम्—"इदुदुपधस्य" इत्यत्र व्याचक्षाणानां व्याख्यावशेक्तृतां मते ऽव्यपेक्षायां तेन सिद्धेरिति भावः । एतेन

---

आद्यसम्बन्धद्वयं स्वरूपकथनपरं न तु व्यावर्तकम् । तृतीयसम्बन्धोपादानं वाक्ये ऽतिव्याप्तिवारणायेति दिक् ।

*अधात्वभिहितं समानाधिकरणमसमर्थवदिति* । धातुप्रकृतिकप्रत्ययप्रयोज्यत्वाभाववती या विशेष्यता तन्निरूपिता या (अभेदसम्बन्धावच्छिन्ना) सम्बन्धानवच्छिन्ना प्रकारता तत्प्रयोजकं तन्निरूपितविशेष्यताप्रयोजकं वा व्यपेक्षारूपसामर्थ्याभाववदित्यर्थः । धातुप्रकृतिकप्रत्ययप्रयोज्यत्वाभाववत्त्वस्य विशेष्यतायां विशेषणदानेन सर्पिष्पीयते इत्यादौ नासामर्थ्यम् । तेपदप्रयोज्यविशेष्यतानिरूपिताभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वस्य सर्पिःपदे सत्त्वेऽपि तेपदार्थकर्मनिष्ठविशेष्यतायां धातुप्रकृतिकतिङ्प्रत्ययप्रयोज्यत्वाभावस्याभावात् । *धातुसहचरितेति* । धातुप्रकृतिकेत्यर्थः । सामान्यतः प्रत्ययपदोपादानात् सर्पिष्पेयमित्यादावपि षत्वसिद्धिरिति दिक् । *समानाधिकरणमिति* । कालकादिपदप्रयोज्यविशेष्यतानिरूपितसम्बन्धानवच्छिन्नप्रकारतायाःप्रयोजकं तन्निरूपितविशेष्यताप्रयोजकं वेत्यर्थः ।

*व्याख्यानादिति* । उत्तरसूत्रे समासग्रहणस्य सत्त्वेन तस्यैकार्थीभावविषयकतया "इसुसोः" इति सूत्रे सामर्थ्यस्य व्यपेक्षाविषयकत्वमित्येवंरूपादित्यर्थः । अन्यथा इत एव सामर्थ्यपदस्य तत्रानुवृत्तौ तत्र समासग्रहणस्य वैयर्थ्यं स्यादिति भावः । *षत्वमित्यपास्तमिति । अत एव "अनुत्तरपदस्थस्येति

कस्कादिपाठस्याव्यपेक्षायां चारितार्थ्येन व्यपेक्षायां तस्यासिद्धत्वाद्विकल्प* एवोचित इत्यपास्तम् । प्रत्ययसंबन्धिभिन्नविसर्गस्येत्यर्थे तु तदप्राप्तिरेवेति व्यपेक्षायां विकल्प एवेति बोद्धयम् ।

अतः कृ ॥ कृशब्देन *तदादिग्रहणं, समासाक्षिप्तोत्तरपदस्य विशेष्यत्वात् । "विष्वग्देवयोः" इति सूत्रे वप्रत्ययग्रहणेन धातो*र्विशेषणत्वे तदादिविधिज्ञापनात् । अयस्कुम्भीत्यादौ लिङ्गविशिष्टपरिभाषया सत्वं बोद्धयम् ।

भास्कर इति । तपरकरणात् "अतः कृ" इत्यस्याप्राप्तिः ॥

इति विसर्गसन्धिः ॥

यत्तु स्वौजसित्यत्र रुरेव पाठ्यः, सर्वत्र सुग्रहणे रुग्रहणमेवास्त्विति, तन्न । यशोऽत्रेत्यादौ रोरसिद्धत्वादुत्वानापत्तेः*, "अतो रोः" इत्यस्य प्रथमैकवचने चारितार्थ्यात् । तद् ध्वनयन्नाह । स्वौजसेति । पदस्येत्यनुवृत्तं ससजूर्भ्यां विशेष्यते तेन तदन्तविधिः । आदेशस्त्वलोऽन्त्यस्येत्यन्त्यस्य । तत्फलितमाह । पदान्तस्येत्यादिना । सजूरित्यत्र व्यपदेशिवद्भावे-

---

किमर्थम् । परमसर्पिःकुण्डिका" इति भाष्यं सङ्गच्छते । *विकल्प एवेतीति* । अव्युत्पत्तिपक्षेऽपि "इणुसोः" इत्यस्य "इदुदुपध" इतिषत्वापवादत्वादिसुसोरित्येतदुदृष्ट्या "कस्कादिषु च" इत्यस्यासिद्धत्वाच्च विकल्प एवेति भावः । एवं च "व्यपेक्षायां नित्यार्थश्च" इति मूलग्रन्थो व्याख्यादर्शमते एव बोध्यः । अन्यथा कस्कादिषु तत्पाठस्य व्यपेक्षाविरहे ऽसमासे चारितार्थ्येनासिद्धत्वाद्व्यपेक्षायां विकल्पो दुर्वारः स्यात् इति दिक् ।

*तदादिग्रहणमिति* । सम्बन्धानवच्छिन्ना (अभेदसम्बन्धावच्छिन्ना) या प्रकारता तत्प्रयोजकं धातुबोधकसप्तम्यन्तं पदं स्वबोध्यार्थावयवकपरं बोध्यमित्यर्थिकया "धातुग्रहणे तदादिविधिः" इतिपरिभाषयेति भावः । *धातोरिति* । धातुबोधकसप्तम्यन्तस्येत्यर्थः । *विशेषणत्वे इति* । सम्बन्धानवच्छिन्नविशेषणताप्रयोजकत्वे इत्यर्थः ।

*अधःशिरसी पदे* । अधः, शिर इति च पदे पदशब्दे परे सत्वं लभेते इति सूत्रार्थः ।

इति विसर्गसन्धिः ।

*उत्वानापत्तेरिति* । न च "स्वौजसमौट्" इति न्यासे राम र् इत्यस्यां दशायां विसर्गस्यासिद्धत्वात् "सुपि च" इति दीर्घो दुर्वार इति स एव दोषो देय इति यशोऽत्रेत्यादावुत्वानापत्तिरूपदोषपर्यन्तानुधावनं किमर्थमिति वाच्यम् । "सुपि च" इत्यस्य स्थाने "आपि च" इति अपि च इति वा न्यासेन दीर्घापत्तिरूपदोषवारणसंभवात् । एवं सति रविधानेनैव सिद्धे

बोद्धुस्त्वावृत्तिरेवेति बोद्धव्यम् ॥

एकविभक्ताविर्त्यत्रैकपदं तु स्पष्टार्थम् । एकस्यामपि विभक्तौ यानि त्रिरूपाणि नेत्यर्थं स्पष्टं बोधयितुम् । ध्वनितश्चेदं विभक्तिः सारूप्ये उपलक्षणमिति भाष्ये एकपदानुच्चारणेन । समाहारद्वन्द्व-विषये तु नैकशेषः । 'एकवच्चास्यान्यतरस्याम्' इत्यनेनैकशेषविषयप-दानां समाहारे *वृत्त्यभावबोधनात् । 'न ब्राह्मणं हन्यात्' इत्यादौ तु जातिपक्षेणैव निर्वाहः* । अत एव तत्र व्यक्तिपक्षे 'यं कञ्चिद् ब्राह्मण-महत्वा कृती स्यात्' इति दूषणं* भाष्ये उक्तम् ।

शेषशब्दार्थश्चेतरनिवृत्तिपूर्वकमवस्थानं तदाह—एक एवेति । एकेति लुप्तविभक्त्यन्तं पृथक्पदम् । अत एव तत्र सरूपाणामित्यस्यान्वयः । तत्रावस्थानस्य सिद्धतया निवृत्तिरेव विधेया । तत्र "शिष्यमाणं लुप्य-मानार्थाभिधायि" इति न्यायेन श्रूयमाणपदवृत्त्या बोधः । धातुषु तु नास्य प्रवृत्तिः । एकनिष्ठानेकव्यापाराणामिवानेकानिष्ठानामप्येकधातुत एव निवृत्तभेदानां प्रतीत्या ऽनेकधातुप्रयोगाप्रसक्तेः ।

सरूपाणां किम् । घटपटौ । शेष इत्येतन्मात्रोक्तौ द्विबहोरपि शेषः प्रसज्येत । एक इत्येतावदुक्तौ त्वेक आदेश इत्यर्थः स्यात् । तथा चाश्वश्चाश्वश्चेत्यादौ कदाचित् द्व्युदात्तवत्त्वद्व्यनुदात्तवत्त्वरूपसाम्यमादायो-भयस्वरितैकादेशः* प्रसज्येत । न च "अक्षस्यादेवनस्य" इति फि-

---

वर्थौ प्रति यदर्थानर्थान् प्रति चेति* । अत्राप्यर्थपदेन प्रवृत्तिनिमित्तनिष्ठप्रकारतैव ग्राह्या । *वृत्त्यभावबोधनादिति* । नचान्यतरस्यांग्रहणसामर्थ्येन इतरेतरयोग-विषये एव वृत्तिर्नेति कस्मान्न कल्प्यते, तावतापि अन्यतरस्यामित्यस्य सार्थ-क्यसम्भवादिति वाच्यम् । सरूपाणामित्यादिनिर्देशाऽन्यथाऽनुपपत्त्या एक-शेषविषयपदानां समाहारे वृत्तिर्नेति कल्पनाया एवोचितत्वात् । *नि-र्वाह इति* । 'न ब्राह्मणं हन्यात्' इत्यादौ ब्राह्मणत्वनिष्ठैकप्रकारतानि-रूपितनानाविशेष्यताकबोधतात्पर्येणेदं ब्राह्मणपदमुच्चरितमित्यर्थतन्त्रेण नि-र्वाह इत्यर्थः । *दूषणमिति* । आवृत्तिमकृत्वा तन्त्रं चानङ्गीकृत्य ब्राह्म-णत्वनिष्ठैकप्रकारतानिरूपितैकविशेष्यताकबोधपरत्वे इत्यर्थः । *स्वरितैकादेश इति* । ननु इश्च इश्चेत्येकशेषे इकारैकादेशस्यालरूपत्वाद् "अलोऽन्त्यस्य" इत्य-न्त्यस्यैव कृते सवर्णदीर्घे च पूर्वसवर्णस्य "दीर्घाज्जसि च" इति निषेधेन य-णादेशे 'यौ' इति स्यात् । शेषग्रहणसत्त्वे तु 'ई' इति भवतीति लक्ष्यदोष-सत्त्वे किमर्थं स्वरदोषपर्यन्तानुधावनमिति चेन्न । लोपश् इतिवत् एकश् इति विवक्षणेन शित्वात्सर्वादेशे 'ई' इति लक्ष्यस्य निर्बाधात् । विवरणकारास्तु

दूसूत्रेण शकटाक्षे आद्युदात्तस्य देवनाक्षे "फिष" इत्यन्तोदात्तस्य चैकशेषे कदाचिदन्तोदात्तस्यापि शेषः स्यादिति वाच्यम् । *'स्वरभिन्नानां यस्योत्तरस्वरविधिः' इति वचनेनैव निर्वाहात् । एकादिदशान्तसंख्यावाचिनामेकशेषद्वन्द्वाव*नभिधानान्न भवतः । विंशत्यादौ त्विष्ट एवैकशेष इत्यलम् ॥

चुटू॥ "आदिर्ञिटुडवः"इत्यत आदिरिति"षः प्रत्ययस्य"इत्यतः प्रत्ययस्येति चानुवर्त्तते तदाह-प्रत्ययाद्याविति*। तेन वाचाटे नेत्त्वम् । प्रत्ययेति किम् । चामरादाविन्त्वं मा भूदिति* । चुञ्चुप्चणपोर्यादित्वात्* परनिमित्तयलोपस्य बहिरङ्गासिद्धत्वात्प्रत्ययादित्वाभावान्नेत्त्वम् ॥

न विभक्तौ ॥ "हलन्त्यम्" इत्यस्य निषेधोऽयम्* । अनित्यमिदं थमोर्मकारपरित्राणार्थादुदित्करणात् । तेन "किमोऽत्" क्व इति सिद्धम् । प्राग्दिशीयत्वादयं विभक्तिः । अत एव दानीमो मस्य नेत्त्वमिति नव्याः । भाष्ये तु प्राग्दिशीयेष्वस्याप्रवृत्ताबुदित्त्वं ज्ञापकमित्युक्त्वा "दानीञ्च" इति सूत्रे लोपोव्योरिति लोपेन यकारं प्रश्लिष्येत्सञ्ज्ञा वारिता । अन्यत्रानित्यत्वस्य *फलाभावाच्चैवमेवोक्तम् । लोपस्यासिद्धत्वाच्च नान्त्यत्वमिति बोद्धव्यम् । विभक्तौ किम् । "अचो यत्" ।

---

रमागमन्यायेन सरूपाणामिति बहुवचनश्रुत्या प्रत्येकं स्थानित्वात्सर्वनिवृत्तेरदोष इत्याहुः । *स्वरभिन्नानामिति* । स्वरा भिन्ना येषामिति विग्रहः । भिन्नस्वरकाणामिति यावत् । *अनभिधानादिति* । सङ्कलितसंख्यातात्पर्येणेत्यर्थः । अत एव "ऊकाल" इतिसूत्रे शेखरे 'एकद्वित्रिमात्राणाम्' इति प्रयोगः सङ्गच्छते इत्यादि तत्रैव निरूपितम् ।

चुटू । *प्रत्ययाद्याचितीति* । प्रत्ययबोधकाद्यावित्यर्थः । *माभूदितीति* । न च चामरशब्दचकारस्येत्सञ्ज्ञायामपि चितः प्रत्ययस्यैवान्तोदात्तत्वविधानान्न दोष इति वाच्यम् । चित्त्वसामर्थ्येन प्रत्ययत्वाभावेऽपि अन्तोदात्तत्वं भविष्यतीति कल्पनापत्त्या दोषात् । *यादित्वादिति* । तथा च प्रत्ययबोधकाऽऽदित्वस्य चुञ्चुप्चणवादौ चकारेऽभावान्न दोष इति भावः । समाधानान्तरमप्याह-*परनिमित्तेत्यादि* । वस्तुतस्तु बहिरङ्गासिद्धत्वस्य नोपयोगः । प्रत्ययबोधकाऽऽदित्वस्याभावादेवेत्सञ्ज्ञाया अप्राप्तेः ।

*निषेधोऽयमिति* । अनन्तरस्य विधिरिति न्यायादिति भावः । *फलाभावादिति* । नच "इटोऽत्" "औत्" इत्यादौ "न विभक्तौ" इति निषेधाप्रवृत्तये सामान्यतः थमोरुकारोच्चारणेन नविभक्ताविति निषेधानित्यत्वं कल्पनीयमिति वाच्यम् । "तपरस्तत्कालस्य"इति शास्त्रेण 'अत्' 'औत्'इत्यादी-

अतो गुणे ॥ "उस्यपदान्तात्" "इत्यतो ऽपदान्तादिति" एङि पररूपम्" इत्यतः पररूपमिति चानुवर्त्तते ।पुरस्तादिति। अत एव "नादिचि" इतीज्ग्रहणं चरितार्थम् । तद्धि रामाः रामानित्यादौ निषेधाभावाय । पररूपेण पूर्वसवर्णदीर्घबाधे हि तद्वैयर्थ्यं स्पष्टमेव । नोत्तरानिति । अनन्तरापेक्षयोत्तरान् *व्यवहितानित्यर्थः ।

एकवचनं सं ॥ "सुः सम्बुद्धिः" इत्युचितम्* । "सम्बोधने च" इत्यतः सम्बोधन इत्यनुवृत्तेः सप्तमीबहुवचने न दोषः* । सम्बुद्धौ अङ्गस्य गुण इति व्यवहारान्न तदन्तस्य सञ्ज्ञा* । तस्मात्पारायणादावदृष्टार्थमेवं न्यास इति बोध्यम् । सम्बुद्ध्याक्षिप्तस्येति । सम्बुद्धेः प्रत्ययत्वेन यस्मात्स विहितस्तदादीत्यंशोपस्थितिः । स चात्र योग्यतया पञ्चम्यन्त इति भावः। प्रत्यये गृह्यमाणे यस्मात्स विहित इत्याद्युपतिष्ठतइति "प्रत्ययग्रहणे यस्मात्स विहित" इत्यादिपरिभाषार्थ इति "अङ्गस्य" इति सूत्रे

---

नां सञ्ज्ञात्वेनादोषात् । *व्यवहितानिति*। उत्सर्गकर्तृकव्यवधानवत इत्यर्थः । *उचितमिति*। नच सप्तमीबहुवचनसुपोऽपि "सुः सम्बुद्धिः" इति न्यासे सम्बुद्धिसञ्ज्ञापत्तिरिति वाच्यम् । तदनुबन्धकपरिभाषया दोषाभावात्।*न दोष इति* । वस्तुतस्तु सुः सम्बुद्धिरित्यत्रानुनासिकोकारनिर्देशेन बहुवचनसुपो व्यावृत्त्या तन्न्यासकल्पे सम्बोधन इत्यनुवृत्तेः फलं राम इत्यत्र प्रथमैकवचनस्य लोपो नेति बोध्यम । *न तदन्तस्य सञ्ज्ञेति* । यादृशसञ्ज्ञापुरस्कारेण प्रत्ययानामङ्गाधिकारे निमित्तत्वेनोपादानं तत्सञ्ज्ञाशास्त्रे तदादिविशेष्यकतदन्तविधिर्न भवतीति ज्ञापनादिति भावः । नच सञ्ज्ञाविधाविति तदन्तविधिनिषेधादेतत्कल्पनाया नोपयोग इति वाच्यम । इयं परिभाषाऽनुपयुक्तेति तात्पर्येणैतद्ग्रन्थप्रवृत्तेः । अत एव "अर्थवदधातुरप्रत्ययः" "प्रथमचरमतया" "विभाषा प्रकरणे तीयस्य" "कृत्तद्धित" "कृन्मेजन्तः" "तद्धितश्च" "क्त्वातो" "सामन्त्रितम्" इत्यादिषु तदन्तविधिः सिध्यति । अन्यथा निरुक्तस्थलेषु तदन्तविधिसिद्धये महान् यत्नः कर्त्तव्यः स्यादिति गौरवं स्यात् ।

नच "कृदतिङ्" "ते तद्राजाः" "ञ्यादयस्तद्राजाः" "तिङ्शित्सार्वधातुकम्" "आर्धधातुकं शेषः" "लिट् च" इत्यादौ एतत्परिभाषाऽभावे तदन्तविधिः स्यादिति वाच्यम् । चतुर्थपञ्चमयोः प्रातिपदिकादित्यधिकारसत्त्वेन तृतीयाध्याये धातोरित्यधिकारसत्त्वेन च "प्रत्ययग्रहणे चापञ्चम्या" इतिपरिभाषया तदन्तविधिनिषेधस्य सिद्धत्वात् । नच "क्तक्तवतू निष्ठा" इत्यादौ तदन्तविधिः स्यादिति वाच्यम् । क्तपदस्य प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वाभावेन क्तवतुपदस्य च प्रत्ययबोधकत्वाभावेन प्रत्ययग्रहणपरिभाषायास्तत्राप्रवृत्तेः।

भाष्ये स्पष्टम् । अनुमानरूपाऽऽक्षेपस्तु नात्र फलाभावात् । यथा पीनत्वानुपपत्त्या ऽनुमीयमानरात्रिभोजनस्य पीनत्वोपपत्तिः फलं, न तथा एतत्सूत्रे तदनुमानेन सम्बुद्ध्युपपत्तिर्भवति । किं च प्रत्ययस्योत्पत्तावङ्गापेक्षत्वेऽपि ज्ञाने तदपेक्षत्वाभावेन शास्त्रे तदाक्षेपे मानाभावः । अत एवाङ्गस्येति सूत्रे तत्स्थाने प्रत्यय इत्यधिकारः कार्य इति पक्षे प्राकरोदित्यादौ उपसर्गात्पूर्वमडादिः स्यादित्याशङ्क्य प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरिति परिभाषोपस्थित्या समाहितं भाष्ये न त्वङ्गाक्षेपेणेति दिक्* ॥

अङ्गस्य—उक्तार्थस्य । हल्ङ्याबिति सूत्राद्धालित्यनुवर्त्तते । हेकतरदिति । प्रकृत्यंकारस्य टिलोपेनापहारादिति भावः । न न्वङ्गात्परस्याः संबुद्धेरवयवस्य हलो लोप इत्युचितम्, संबुद्ध्याक्षिप्तस्य संबुद्ध्यैवान्वयस्योचितत्वादत आह—कुलेतीति । अत्र परत्वात्पूर्वरूपे

---

नचैवमपि "षः प्रत्ययस्य" इत्यादौ तदन्तविधिः स्यादिति वाच्यम् ।तत्र प्रत्ययपदस्य प्रत्ययबोधकपरत्वेन प्रत्ययबोधकबोधकत्वेऽपि प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वरूपप्रत्ययबोधकत्वाभावेन प्रत्ययग्रहणपरिभाषाया अप्रवृत्तेः । नचैवमपि "ईदूदेद् द्विवचनम्" इत्यादौ तदन्तविधिप्रसङ्ग इति वाच्यम् । श्रुतानुमितपरिभाषया ईदूदेदित्यस्य द्विवचने एव विशेषणेन सत्यपि तदन्तविधौ क्षत्यभावात् । नचैवमपि "तरप्तमपौ घः" इत्यादौ तदन्तविधिप्रसङ्गो दुर्वार इति वाच्यम । "परौ तरप्तमपौ घः" इतिन्यासेन कस्मात् पराविति नियतावध्याकाङ्क्षायामुपस्थितप्रातिपदिकादित्यस्यान्वयेन प्रत्ययग्रहणे चेति परिभापया तदन्तविधेरभावादिति दिक् ।

*दिगिति* नन्वङ्गस्याऽऽक्षेपाभावे कतरदित्यादौ दोषो दुरुद्धरः । ह्रस्वान्ततदाद्यव्यवहितोत्तरत्वविशिष्टस्य सम्बुद्ध्यवयवहलः सत्त्वात् । भवामि भविष्यामीत्यादौ दीर्घसम्पत्तये तदादेरित्यत्र स आदिर्यस्येति बहुव्रीहेरावश्यकत्वात् । नच ह्रस्वान्ततदादेरित्यस्य सम्बुद्धौ विशेषणत्वेन न दोष इति वाच्यम् । कुलेत्यादौ मकारस्य लोपानापत्तेः; इतिचेन्मैवम् । एङ्साहचर्य्यात् ह्रस्वस्यापि सम्बुद्ध्यनवयवस्य ग्रहणेनादोषात् । वस्तुतस्तु एवं साहचर्य्येण कतरदित्यादौ दोषवारणे तदादेरित्यस्योपस्थित्या शेखरोक्तमङ्गाक्षेपस्य खण्डनं वृथैव स्यात् । तस्मात् अङ्गसंज्ञासूत्रे तदादिपदेन प्रत्ययाव्यवहितपूर्वस्यैव ग्रहणात् तन्मूलकपरिभाषायामपि प्रत्ययाव्यवहितपूर्वस्यैवादितानिरूपकस्य ग्रहणम् । ततश्च कतरत् इत्यादौ अकारान्तस्य तदव्यवहितपूर्वत्वाभावान्न दोषः । भवामीत्यादौ मिप्रत्ययाव्यवहितपूर्वत्वं प्रकृतिनिष्ठाऽऽदितानिरूपकत्वं च शबाद्यन्तसमुदायस्य स्पष्टमेवेति दिक् ।

अत्रेदं बोध्यम् । अव्यवहितोत्तरत्वसम्बन्धेन अङ्गत्वव्याप्यत्वस्य सम्बुद्धौ सत्त्वेन तया ऽङ्गाक्षेपेऽपि आक्षिप्तस्य शाब्दबोधे ऽनन्वयात् कतरदित्यादौ दो-

उभयत आश्रयणे ऽन्तादिवद्भावाभावात्तत्स्वीकारे ऽपि* ह्रस्वसंबुद्ध्योः पौर्वापर्यव्यवहारासम्भवात्, *ताद्रूप्यानतिदेशाच्च ह्रस्वान्ताङ्गात्परसम्बुद्धेरभावान्मलोपो न स्यात् । एवञ्च लक्ष्यानुरोधादन्याक्षिप्तस्याप्यन्यत्रान्वय इति भावः । एतदर्थमेव "हल्लुप्यते सम्बुद्धेश्चेत्" इति व्याख्यातम् । मस्य सम्बुद्धित्वाभावाद् । अर्द्धविकारेणैकदेशविकृतन्यायेनापि न संबुद्धित्वम् । एकवचनसञ्ज्ञासंबुद्धिसंज्ञयोरक्तपरिमाणनिष्ठतया त-

---

षवारणं साहचर्यमन्तरा न सम्भवतीति परममूलोक्तं न सम्यक् । शेखरोक्तखण्डनं तु न सम्यक् । अनुमाने व्याप्तिज्ञानस्यैव कारणत्वेन व्याप्येन व्यापकानुमाने बाधकाभावात् । न च श्रुतार्थापत्त्या ऽङ्गस्येत्यस्याक्षेप इति परममूलोक्तं सङ्गतमेवेति वाच्यम् । तदभाववत्तानिश्चयमुद्रया तदभावव्याप्यवत्तानिश्चयमुद्रया वा परस्परविरुद्धयोर्धर्मयोर्विरोधपरिहारस्यैवार्थापत्तेः फलत्वेन तादृशविरुद्धधर्मद्वयोपादानस्याभावेनार्थापत्तिविषयत्वस्यात्राभावात् । शेखरोक्तं फलाभावेन परममूलोक्तखण्डनं तु न युक्तम् । पीनो देवदत्त इत्यादौ पीनत्वोपपत्तिरूपफलवद् अङ्गाक्षेपेण प्रत्ययत्वोपपत्तिरूपफलस्य सत्त्वात् । किञ्चेत्याद्युक्तं शेखरोक्तमसङ्गतमेव । धूमोत्पत्तौ वह्नेरपेक्षासत्त्वेऽपि धूमज्ञाने वन्हेरनपेक्षणेन धूमेन वन्हेरनुमानस्यासङ्गत्यापत्तेरिति दिक् ।

अत्रेदं तत्त्वम्—कतरदित्यादौ अद्डि डित्करणसामर्थ्यादेव अद्डादेशाकारमादाय प्राप्तसम्बुद्धिलोपवारणम् । न चाद्डो डित्करणं "प्रथमयोः पूर्वसवर्णः" इति पूर्वसवर्णदीर्घबाधनार्थमिति वाच्यम् । लुकि विधातव्ये अदादेशविधानसामर्थ्येन पूर्वसवर्णदीर्घवारणेन डित्करणवैयर्थ्यस्य सुस्थत्वात् ।

अन्ये तु एङ्साहचर्य्याद् ह्रस्वः प्रकृत्यवयवो गृह्यत इति कतरदित्यादौ न दोषः । सम्बुद्ध्यनवयवत्वेन साहचर्य्यं स्वीकृत्य कतरदित्यादौ दोषवारणं तु न सम्यक् । कुलेत्यादौ परादिवद्भावेन सम्बुद्धित्वात् सम्बुद्ध्यनवयवह्रस्वाभावेन लोपानापत्तेरित्याहुः ।

*तत्स्वीकारेऽपीति* । "उभयत आश्रयणे" इति परिभाषाया अनङ्गीकारेण एकस्मिन्नादेशे अन्तवत्त्वादिवत्त्वोभयस्वीकारेऽपि व्यपवर्गबुद्धेरभावादित्यर्थः ।*ताद्रूप्यानतिदेशादिति* ।अन्तादिवृत्तिर्यो वर्णत्वव्याप्यो धर्मः तद्घटितधर्मस्यानतिदेशादित्यर्थः । वस्तुतस्तु चिन्त्यमिदम् । क्षीरपेणेत्यादौ पे इत्यत्रैकाज्युत्तरपदत्वस्यातिदेशाय "अन्तादिवृत्तिर्वर्णमात्रवृत्तिस्तत्स्थानिकादेशावृत्तिश्च यो धर्मस्तद्घटितो धर्मो नायाति" इति 'ताद्रूप्यानतिदेशाद्' इत्यस्यार्थस्य वक्तव्यतया ह्रस्वत्वे ऽन्तादिवृत्तित्ववर्णमात्रवृत्तित्वोभयसत्त्वेऽपि तत्स्थानिकादेशावृत्तित्वस्याभावेन ह्रस्वान्तत्वस्यातिदेष्टुं शक्यत्वात् । निरूपितश्चायमर्थोऽन्तादिसूत्रव्याख्यावसरे विस्तरेणेति तत एवावधार्यताम् ।

योस्तेन न्यायेनालभाच्च । मकारस्यादेशत्वाभावाच्च* नात्र स्थानिवद्भावः । अत एव राममित्यादौ "सुपि च" इति दीर्घो न । न च संबुद्धित्वस्य सकारमात्रनिष्ठत्वेन स्थानिभूतालधर्मत्वेनामः संबुद्धित्वाभावे* कथं मस्य संबुद्ध्यवयवत्वमिति वाच्यम् । सुप्सञ्ज्ञाया उकारविशिष्टे सत्त्वेन तदुपस्थाप्ये जायमानैकवचनसञ्ज्ञाया विशिष्टे सत्त्वेन संबुद्धिसञ्ज्ञायामित्सञ्ज्ञोकारविशिष्टस्यैवोद्देश्यत्वेन तस्यानल्विधित्वात् । एतेनादड्डादेशेनैव नपुंसकत्वाभिव्यक्तौ कुलेतीति व्यर्थमित्यपास्तम् ।

---

*आदेशत्वाभावादिति* । ननु "अतोम्" इत्यत्र 'म्' इतिच्छेदः क्रियत इति कल्पे स्थानिवद्भावेन सम्बुद्धित्वमायास्यत्येव । एतत्कल्पे ज्ञानमित्यादौ "सुपि च" इति दीर्घापत्तिस्तु "अदन्तमङ्गं निमित्तीकृत्य जायमानो मादेशस्तद्विघातकं "सुपिच" इतिदीर्घं प्रति निमित्तं न भवति" इत्यर्थकसन्निपातपरिभाषया वारणीया। न च रामायेत्यादौ "सुपिच" इतिदीर्घसम्पत्तये "सुपिचेति दीर्घविषये सन्निपातपरिभाषा न प्रवर्तते" इति कल्पनाज् ज्ञानमित्यादौ दीर्घो दुर्वारः स्यादिति वाच्यम् । कष्टायेतिनिर्देशेन सन्निपातपरिभाषाप्रयोज्ये"स्वोपजीव्यविघातकत्वाभाववान्"इति सङ्कोचे "ङेर्यः" इत्येतन्मात्रभिन्नत्वेन सङ्कोचं कृत्वा सङ्कुचितसङ्कोचस्य "सुपिच" इत्यत्र करणेन ज्ञानमित्यादौ दीर्घवारणात् । अत एव 'सुपिचेति दीर्घो यद्यपि परस्तथापीह न प्रवर्तते' इति कौमुदीग्रन्थस्सङ्गच्छते, इति चेन्न । सुपिचेत्यत्र सन्निपातपरिभाषाप्रयोज्ये "स्वोपजीव्यविघातकत्वाभाववान्" इति सङ्कोचे "ङेर्यः" इत्येतन्मात्रभिन्नत्वेन सङ्कोचं कृत्वा सङ्कुचितसङ्कोचे प्रमाणाभावेन ज्ञानमित्यादौ सुपिचेति दीर्घापत्तेस्तदवस्थतया "म्" इतिच्छेदस्य कर्तुमशक्यत्वात् । अत एव मादेशकल्पे "कुण्डाम्" इति प्राप्नोति इति दीर्घापत्तिरुक्ता भाष्ये । "न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति" इति "उच्चैरुदात्त" इतिसूत्रस्थभाष्येण मकारमात्रस्यादेशत्वासम्भवाच्च ।

*सम्बुद्धित्वाभावे इति । "अतोऽम्" इत्यत्र स्थानितायाः सुत्वावच्छिन्नत्वेनाल्त्वव्याप्यधर्मावच्छिन्नत्वस्याभावाद्, सम्बुद्धित्वस्य 'हे कतरद्' इत्यादौ अदितिसमुदाये सत्त्वेनाल्त्वव्याप्यत्वाभावाच्च अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिमकारोपप्रकारीभूतधर्म्मेण साक्षादवच्छिन्ना या उद्देश्यता तदुद्देश्यताके कार्ये कर्तव्ये स्थानिवन्न भवतीत्यर्थकानल्विधावित्यस्य, अतिदिदिक्षितालत्वव्याप्यधर्म्मघटितधर्म्मस्यातिदेशो न भवतीति द्वितीयार्थकानल्विधावित्यस्य च प्राप्त्यभावेन सम्बुद्धित्वैकवचनत्वे स्थानिवद्भावेनायास्यत एवेति चिन्त्यमिदम् । आरोपप्रकारीभूतसम्बुद्धित्वेन "एङ्ह्रस्वात्सम्बुद्धेः" इतिशास्त्रीयोद्देश्यतायाः साक्षादनवच्छिन्नत्वाच्च ।

एङ्ग्रहणं किमिति । हरे विष्णो इत्यादावङ्गाधिकारस्थात् *परनिमित्तापेक्षाच्च गुणात्पूर्वं ह्रस्वान्तत्वादेव सिद्धिः । सेप्रभृतीनां सम्बोधने प्रयोगसत्त्वे* एग्रहणेनैव सिद्धेः प्रत्याहारग्रहणं व्यर्थमिति प्रश्नः । हरे इति । सामर्थ्यादेवात्र सन्निपातपरिभाषा न । गुणात्संबुद्धेरिति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्याच्च । अत एव 'हे लक्ष्मि' इत्यादौ लोपसिद्धिः । "परत्वात्" इति अभ्युच्चयः । "नित्यत्वाच्च" इति चेनानवकाशत्वसङ्ग्रहः* । नपुंसके त्रपो इत्यादावस्यापि लुका बाध इत्यन्यत् ॥

अमि पूर्वः ॥ पूर्वसवर्ण इत्यनुवृत्त्यैव सिद्धे पूर्वग्रहणं तु राममित्यादौ द्विमात्रवारणाय ॥

लशक्व ॥ समाहारद्वन्द्वः । अतद्धिते किम् । "कर्णललाटात्कनलङ्कारे" कर्णिका । किरवफलन्त्वादिवृद्धिः स्यात् । आदिग्रहणाद् वृङः षाकनो न । तस्य कित्त्वे गुणो न स्यात् ।

तस्माच्छ ॥ पुंसीति पञ्चम्यर्थे सप्तमी । पुंसो विहितस्येत्यर्थः, *तत्र विद्यमानाद्विहितस्येत्यर्थो वा । तस्मादिति किम् । एतान् गाः प-

---

*परनिमित्तापेक्षाच्चेति । चिन्त्यमिदम् । "एङ्ह्रस्वाद्"इत्यत्रापरनिमित्तकत्वस्य सत्त्वेऽपि "अचस्तास्वद्" इत्यादिसूत्रस्थभाष्यसङ्गमनाय 'अपूर्वनिमित्तकत्वे सति'इत्यस्य 'अपरनिमित्तकत्वमन्तरङ्गत्वम्'इत्यत्रावश्यं निवेशनीयतया लोपस्याऽपूर्वनिमित्तकत्वाभावात् । अपरनिमित्तकैङ्ह्रस्वादितिशास्त्रस्य, परनिमित्तकस्य "ह्रस्वस्य गुणः" इतिशास्त्रस्य चाश्रीयमाणशब्दसमुदायस्य अन्यूनानतिरिक्तत्वाभावाच्च । निरूपितं चेदमन्तरङ्गपरिभाषाटिप्पणे । *प्रयोगसत्त्वे इति* । 'नहि पदान्तादेङो रुरस्ति'इतिभाष्यप्रामाण्येन एकारान्तानामनभिधानमेवेतिबोधनायेदम् । *अनवकाशत्वसङ्ग्रह इति । तदप्राप्तियोग्येऽचारिताथ्यरूपबाधबीजस्य सत्त्वादिति भावः । वस्तुतस्तु सम्बुद्धिलोपे कृते प्रत्ययलक्षणेन गुणस्य चारितार्थ्यादनवकाशत्वादित्यसमञ्जसमेव ।

*अमि पूर्वः* । प्रत्ययग्रहणपरिभाषया "यस्मात्प्रत्ययविधिस्तदादि" इत्युपतिष्ठते, तच्च पञ्चम्यन्तं षष्ठ्यन्तं वा । आद्ये तदादेः परीभूतो योऽम्यच् तस्मिन् परतः पूर्वरूपमित्यर्थः । अन्त्ये अगन्ततदादेरम्याचि परतः पूर्वरूपमित्यर्थः । अत एव 'हे देवदत्त अम्' इत्यादावनेन पूर्वरूपं न ।

*तत्र विद्यमानाद्विहितस्येति । पुंस्त्वावच्छिन्नमुख्यविशेष्यताकबोधतात्पर्य्येणोच्चरिताद्विहितस्येत्यर्थः । 'प्रधानाप्रधान–' इति न्यायात् । अत एव राजकुमारीः पश्येत्यादौ नानेनादेशः । अन्यथा राजकुमारीशब्दस्य पुंस्त्वावच्छिन्नविषयताकबोधतात्पर्य्येणोच्चरितत्वेन तस्माच्छसो नकारो दुर्वारः स्यात् । एतान् गाः पश्येति* । "अकः सवर्णे" इति सूत्राद्दीर्घपदमं-

स्य* । पुंसि किम् । मतीः ॥

अट्कु ॥ बाधितुमिति । तेन पर्याणद्धमित्यत्र "उपसर्गादसमासेऽपि" इति णत्वसिद्धिरिति भावः । अयोगवाहानामिति । न विद्यते योगो वर्णसमाम्नाये येषान्ते ऽयोगाः । अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाच्चेत्यर्थः । ते च ते वाहयन्ति प्रयोगं निर्वाहयन्ति ते वाहाः । ते चानुस्वारविसर्गजिह्वामूलीयोपध्मानीययमाः । अत एवोरःकेणेत्यादौ विसर्गव्यवधाने ऽपि णत्वसिद्धिः । तदुक्तं भाष्ये–"नार्थो नुम्ग्रहणेनानुस्वारे कृतेऽड्व्यवाये इत्येव सिद्धम्" इति । आदर्शेनेत्यादौ तु नातिप्रसङ्गः । अडतिरिक्तव्यवायात् । "तस्माद्" इत्युपस्थितं निर्दिष्टग्रहणमेतत्समभिव्याहारे *अडादिव्यतिरिक्ताव्यवहितपरम् । तदुक्तं–"णत्वे ऽन्यव्यवाये प्रतिषेधो वक्तव्यो, न वा ऽन्येन व्यवेतत्वात्" इति ग्रन्थेन । एतदुत्तरम् "अटा व्यवायसत्त्वात्प्राप्नोत्येव, अटैव व्यवाये इत्यर्थात्" इत्यादिभाष्यमेकदेशिनोरुक्तिप्रत्युक्तिपरम् । "चुटुतुलशर्व्यवाये न" इति प्रतियोगिज्ञानसापेक्षनिषेधबोधकगुरुन्यासेन सिद्धे "अट्कुप्वाङ्"इत्युक्त्वा "एतैरेव व्यवाये" इत्यर्थं वदता तस्यास्तदुक्तित्वध्वननात् । एतद्वार्तिकमतम् ।

भाष्ये तु "रषाभ्याम्" इति सूत्रे "ऋवर्णान्नस्य" इत्यस्य

---

नुवर्त्य पञ्चम्यन्तत्वेन विपरिणमय्य दीर्घात्परीभूतो यश्शसः सकारस्तस्य नकारादेशः स्यादित्यर्थेन लिह इत्यादौ दोषो नास्तीति प्रश्नकर्तुराशयः । वस्तुतस्तु दीर्घपदमनुवर्त्य पञ्चम्यन्तत्वेन विपरिणामेऽपि तस्य शस्येवान्वयः स्यात् श्रुतत्वात् । तथा च रामानित्यादौ दीर्घात्परीभूतशसो ऽभावेन अव्याप्तिः स्यादिति नायं प्रश्नकर्तुराशयः । किन्तु दीर्घपदमनुवर्त्य सकारं च प्रश्लिष्य दीर्घात्परीभूतो यः शसः सकारस्तस्य नः स्यादित्यर्थकरणेन न दोष इति प्रश्नाशय इति ।

*अडादिव्यतिरिक्ताव्यवहितपरमिति* । चिन्त्यमिदम् । "अट्कुप्वाङ्" इति सूत्रे अव्यवहितत्वांशस्य बाधात् तद्विकलांशस्योपस्थित्या अडादीतरत्वेनाव्यवहितपदार्थे सङ्कोचस्य कर्त्तुमशक्यत्वात् । "तस्मिन्"इति "तस्मात्"इति परिभाषे हि योंऽशो बाधितः सिद्धो वा तमंशं परित्यज्य अन्यांशविशिष्टे उपतिष्ठेते । यथा प्रत्ययविधौ परश्चेत्यधिकारेण उत्तरत्वांशस्य सिद्धत्वात् तदंशरहिता "तस्माद्"इत्युपतिष्ठते । यथा च "प्रत्ययस्थात्" इत्यादौ पूर्वस्येत्युक्त्योत्तरत्वांशस्य बाधितत्वात्तदंशरहितोपतिष्ठते । एवं व्यवायेऽपीत्युक्त्या ऽव्यवहितत्वांशस्य बाधितत्वात्तदनुपस्थितौ तत्र कथमडादीतरत्वेन सङ्कोच इति विभाव्यताम् । तथा चादर्शेनेत्यादौ णत्वं दुर्वारमेवेति बोध्यम् ।

प्रत्याख्यानाय "व्यवाये"इति योगं विभज्य "अट्कुप्वाङ्नुम्भिः"इत्येतत् "एतैरेवाक्षरसमाम्नायिकैर्व्यवाये नान्यैः"इत्यर्थकं व्याख्यातम् । तदा त्वादर्शेनेत्यादौ *प्राप्तिरेव नेति बोद्धव्यम्। णत्वे इति। णकारे इत्यर्थः* ।

---

*प्राप्तिरेव नेति* । इदमपि चिन्त्यमेव । नियमस्थले हि नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रे सङ्कोचं कृत्वा नियमशास्त्राणां विधिमुखेन प्रवृत्तिरित्येकः कल्पः । अथ वा निरुक्तरूपावच्छिन्ने नियामकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचं कृत्वा नञमध्याहृत्य नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरित्यपरः। तथा च प्रकृते आद्यकल्पे "व्यवायेऽपि"इत्यत्र नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्य-अट्कुप्वाङितिनियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकाक्षरसमाम्नायिकत्वावच्छिन्नातिरिक्तत्वेन सङ्कोचं कृत्वा "अट्कुप्वाङ्" इत्यस्य विधायकत्वे आदर्शेनेत्यादौ अडादिव्यवधानसत्त्वात् "अट्कुप्वाङ्" इत्यनेन, "अट्कुप्वाङ्" इत्यत्र वा ऽडादिकर्तृकव्यवधानवद्भिन्नो य आक्षरसमाम्नायिककर्तृकव्यवधानवान् तस्य नस्य णत्वं न भवतीति निषेधमुखेन प्रवृत्तौ "व्यवायेऽपि" इत्यनेन वा आदर्शेनेत्यादौ णत्वस्य दुर्वारत्वात्। अत एव "रषाभ्याम्"इतिसूत्रभाष्ये मातॄणामित्याद्यर्थे "णत्वे ऋकारग्रहणं कर्तव्यम्"इति वार्तिकमुक्त्वा "अट्कुप्वाङ्"इति योगविभागेन नियमं च स्वीकृत्य तद् वार्त्तिकं प्रत्याख्याय "अट्कुप्वाङ्"इति सूत्रे आदर्शेनेत्यादौ णत्ववारणाय "अटा व्यवाये णत्वे अन्यव्यवाये प्रतिषेधो वक्तव्यः" इति वार्त्तिकमुक्तम् । अन्यथा पूर्वसूत्रे एव आदर्शेनेत्यादौ नियमेनैव णत्ववारणादेतद्वार्त्तिकानुत्थानं स्यात् । भाष्यकारेण चोक्तम्— "व्यवायेऽपीति योगो विभज्यते, अट्कुप्वाङिति नियमार्थम्"इत्यादि । अग्रे च "अटैव व्यवधाने भवति। किं वक्तव्यमेतत् ?। नहि । कथमनुच्यमानं गंस्यते, अड्ग्रहणसामर्थ्यात् । यदि हि अटा चान्येन च व्यवाये स्याद्, अड्ग्रहणमनर्थकं स्यात्, व्यवाये नो णो भवतीत्येव ब्रूयात् । अस्ति चान्यदड्ग्रहणस्य प्रयोजनम् । किम् ?, यो ऽनिर्दिष्टैरेव व्यवायस्तत्र मा भूत्—कृत्स्नम्, तृप्नोति। यद्येवं प्रयोजनं स्यात् शर्व्यवाये नेत्येव ब्रूयात्" इति भाष्ये समाहितम् । "चुटुतुलशर्व्यवाये न" इति मूलोक्तं चिन्त्यमेव। भाष्ये अदर्शनात्। तस्माच्छर्व्यवाये नेत्येव सिद्धे अट्कुप्वाङिति गुरुन्यासकरणादट्कुप्वाङ्नुम्भिरेव व्यवाये णत्वं भवतीति सूत्रार्थे इत्यादर्शेनेत्यादौ णत्वं न भवतीति । नच शर्व्यवाये नेति न्यासकल्पे आर्ग्नोदित्यादौ णत्वं स्यात्, यथाश्रुतन्यासे चाडादिव्यवधानाभावाण्णत्वं न स्यादिति फलभेद इति वाच्यम्। तुशर्व्यवायेनेत्येव सिद्धे अट्कुप्वाङ् इतिगुरुन्यासकरणेन निरुक्तार्थस्य लाभात्। भाष्ये शर्व्यवाये नेत्यपि तुशर्व्यवाये नेत्यस्यैवोपलक्षणमिति दिक् ।

*णकारे इत्यर्थ इति* । अयं भावः—णपदस्य णत्वावच्छिन्नाभिसो

पदान्तस्य ॥ "न भाभू-" इति सूत्रान्नेति वर्त्तते । अत्र सूत्रे "अनन्तरस्य"इत्यादिव्यवस्थापकन्यायानामप्रवृत्तिर्बोध्या* । "अपदान्तस्य" इत्यनुवर्त्यैतस्य भाष्ये प्रत्याख्यानात् ।

यस्मात्प्र ॥ "यस्माद्"इति "तदादि"इतितच्छब्दाकाङ्क्षापूरणाय । तदादीति । तत्-प्रकृतिरूपमादिर्यस्येत्यर्थः* । प्रत्यासत्तिन्यायलब्धार्थमाह-तस्मिन्प्रत्यये* इति । 'गुणः कृतात्मसंस्कारः' इति न्यायेनात्रापि "तस्मिन्"इति परिभाषाप्रवृत्तिः* । प्रकृतिमात्रस्य तु व्यपदेशिवद्भावेन तदादित्वं बोध्यम् । स्त्री इयतीति । इदम्शब्दाद्वतुपि वस्य "किमिदंभ्यां वो घः"इति घादेशे तस्येयादेशे "इदं किमोः" इतीशि "यस्य"इति लोपे ङीपि इयतीति रूपम् । न च तत्र परतः स्त्रीशब्दस्येयङाद्यापत्तिरूपो दोषो न, यस्येतिलोपस्याभीयत्वादसिद्धत्वेनात्र तदप्राप्तेरिति वाच्यम् । व्याश्रयत्वेनाभीयासिद्धत्वाप्राप्तेः । तत्र हि समानाश्रयत्वमसिद्धत्वाश्रयशास्त्रसम्बन्धिनिमित्तसमुदायान्यूनानतिरिक्ताश्रयकत्वम्* । अस्ति च यस्येतिलोपापे-

---

यो णपदवाच्यः तत्र शक्तिः । तथा च प्रत्ययप्रकृतिणपदजन्यबोधे णत्वावच्छिन्नस्य प्रकारीभूतत्वात् त्वप्रत्ययार्थोऽपि णकार इति । अत एव "कुत्वं कस्मान्न भवति"इति भाष्येऽपि कुपदस्य कवर्गाभिन्नो यः कुपदवाच्यः तत्र शक्त्या कुत्वं कस्मान्न भवतीत्यस्य कवर्गः कस्मान्न भवतीत्यर्थः । तथा च "वृद्धिरादैज्" इत्यादौ "कुत्वं कस्मान्न भवति"इत्यस्य सङ्केतसम्बन्धेन कुपदं कस्मान्न तिष्ठति इति प्रश्नाशय इत्याहुः ।

परे तु शब्दब्रह्मवादिमते धर्म्मी सर्वत्रैक एव सत्यज्ञानानन्दस्वरूपो ऽखण्डोऽखण्डानन्दैकरसः सर्वज्ञः सर्वशक्तिमानिति तस्य विधातुमशक्यत्वात् धर्म्मा एव विधेयाः । तथा च कुत्वं कस्मान्न भवतीति यथाश्रुतमेव समीचीनम् । प्रत्युत कुर्भवतीत्यादेरेव कुत्वं भवतीत्यर्थः कर्त्तव्यः । तथा च णत्वे इत्यस्य णकार इत्यर्थ इति व्याख्यानमसमञ्जसमेवेत्याहुः ।

*अप्रवृत्तिर्बोध्येति* । सर्व्वणत्वविधिकाण्डानन्तरं णत्वनिषेधकाण्डारम्भादिति भावः । प्रमाणान्तरमप्याह-अपदान्तस्येत्यादि । *यस्येत्यर्थइति* । प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताश्रयनिष्ठाद्यवयवतानिरूपक इति भावः । *तस्मिन्प्रत्यय इति* । तथा च स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाद्यवयवकत्वं-स्वाव्यवहितपूर्व्वत्वमेतदुभयसम्बन्धेन प्रत्ययविशिष्टत्वमङ्गत्वमिति फलितम् । *परिभाषाप्रवृत्तिरिति* । औपश्लेषिकाधिकरणबोधकसप्तम्यन्तघटितत्वरूपतस्मिन्नितिपरिभाषाशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वादिति भावः ।

*अन्यूनानतिरिक्ताश्रयकत्वमिति* । तत्त्वञ्च यत्किञ्चिदाभीयशास्त्रविशिष्टत्वम् । वैशिष्ट्यंच स्वविशिष्टत्वं-स्वीयोद्देश्यतावच्छेदकावच्छिन्नत्वेन आश्रीय-

क्षया "स्त्रियाः" इति सूत्रे ऽधिकस्य स्त्रीशब्दस्यापेक्षा। प्रत्यासत्त्या ऽजादिप्रत्ययनिरूपिताङ्गे एवेयङ्प्रवृत्त्या स्त्रीशब्दस्य सुनिरूपिताङ्गत्वे ऽपि न दोषः। विधिग्रहणादेव *भनक्तीत्यादौ "अतो दीर्घो यञि" इति न । तदादिग्रहणं करोमीत्यादौ विकरणस्य गुणार्थम् । प्रत्ययविशिष्टस्येति । तथा सत्यङ्गेन प्रत्ययपरत्वलाभानापत्तौ वव्रश्चेत्यस्यासिद्धिः । किं च राजपुरुष इत्यादौ "न लुमता"इति *निषेधात्पूर्वपदे पदत्वाभावेन नलोपानापत्तिरिति भावः। ततो ऽप्यधिकस्य वेति। देवदत्त ओदनमपाक्षीदित्यादौ देवदत्तादिशब्दोत्तरसुपं निमित्तीकृत्य लुङ्पर्यन्तमङ्गत्वात्तस्य लुङ्परत्वेन देवात्पूर्वमप्यडापत्तिः। अङ्गसञ्ज्ञायाः प्रत्ययनिमित्तत्वाभावेन लुङादिनिरूपिताङ्गस्येत्यर्थस्य दुर्लभत्वादिति भावः ॥

टाङसि ॥ अङ्गस्येति षष्ठ्या "अतो भिसः" इत्यतोऽनुवृत्तेनात

---

माणो यावान् शब्दसमुदायः तत्समभिव्याहृतो यः तदघटितशब्दसमुदायाश्रयकत्वमेतदन्यतरसम्बन्धेन। प्रथमसम्बन्धवैशिष्ट्यं च स्वीयोद्देश्यतावच्छेदकरूपावच्छिन्नोद्देश्यताकत्व–स्वीयविधेयतावच्छेदकरूपावच्छिन्नविधेयताकत्वोभयसम्बन्धेन । प्रथमसम्बन्धानुपादाने चिणोलुग्दृष्ट्या चिणोलुको ऽसिद्धत्वं न स्यात् । द्वितीयसम्बन्धे 'शब्दसमुदायः' इति विशेषणानुपादाने जहीत्यादौ "अतो हेः" इति दृष्ट्या,"हन्तेर्जः" इत्यस्यासिद्धत्वं न स्यात् । तयोरर्थे न्यूनाधिकभावस्य सत्त्वात् । समभिव्याहृतइत्युपादानात् स्थान्यादेशयोः भिन्नस्वरूपमादाय न दोषः । एतेन यथाश्रुतमूलरीत्या जहीत्यादौ हेर्लुकि कर्त्तव्ये जादेशस्यासिद्धत्वानापत्तिः, चिणोलुग्दृष्ट्या चिणोलुकोऽसिद्धत्वानापत्तिश्चेति परास्तम् । मूलोक्तान्यूनानतिरिक्तसमुदायाश्रयकत्वमित्यस्य निरुक्तलक्षणोपलक्षणत्वात्। चङ्क्रायिता इत्यादौ यङन्तात्लुटि "यस्य हलः" इति लोपे कर्त्तव्ये "ये विभाषा" इत्यात्वस्यासिद्धत्वं न, तस्य लोपापेक्षया न्यूननिमित्तकत्वात्। पपुष इत्यादौ "वसोः संप्रसारणम्" इति संप्रसारणस्य "आतो लोपः" इत्यालोपे कर्तव्ये नासिद्धत्वम्। संप्रसारणस्य अधिकापेक्षत्वात्।

*भनक्तीत्यादाविति* । अयम्भावः–प्रत्ययेऽङ्गमित्येव सिद्धे यस्मात् प्रत्ययस्तदादि प्रत्ययेऽङ्गमिति करणाद् यदवधिकपरत्वावच्छिन्नविधेयताश्रयो यः प्रत्ययः तस्मिन् परतः तदादि अङ्गसञ्ज्ञं स्यादिति स्त्री इयतीत्यादौ स्त्रीशब्दावधिकाव्यवहितपरत्वावच्छिन्नविधेयताश्रयत्वस्य वतुप्यभावात् स्त्रीशब्दस्याङ्गसञ्ज्ञा न प्राप्नोतीति विधिग्रहणं किमर्थमिति प्रश्नः। भनक्तीत्यादौ "मिदचोऽन्त्यात्पर"इति परिभाषया भकारोत्तराकारावधिकपरत्वावच्छिन्नविधेयताश्रयत्वस्य श्नमि सत्त्वेनाकारस्याङ्गसञ्ज्ञायाम् "अतो दीर्घो यञि"इति दीर्घापत्तिरिति भावः। *निषेधादिति । लुप्तप्रत्ययाव्यवहितपूर्वत्वनिमित्तके इत्यर्थलाभेनेति शेषः ।

इत्यनेन पञ्चम्यन्तेन सामानाधिकरण्यानुरोधात्पञ्चम्या विपरिणाम इत्याह–अकारान्तादिति। अकारात्परेषामङ्गसञ्ज्ञानिमित्तटादीनामित्यर्थ इति पक्षान्तरं भाष्ये। किं चादन्तादङ्गादित्यर्थेऽपि ब्राह्मणभिस्सेत्यादावतिप्रसङ्गः। ब्राह्मणेत्यस्यापि "युवोरनाकौ"इतिसूत्रभाष्योक्तरीत्या ऽन्तर्वर्तिविभक्त्याऽङ्गत्वात्। अर्थवत्परिभाषया प्रत्ययग्रहणपरिभाषया वा प्रत्ययस्यैव भिसो ग्रहणे त्वेषामङ्गाधिकारे पाठो व्यर्थः। भिसः प्रत्ययस्यैव ग्रहणे हि प्रत्यासत्त्या तन्निरूपिताङ्गस्य ग्रहणमिति युज्यते वक्तुं, नान्यथा। इदमेव हि "अतो भिसः" इत्यत्राङ्गाधिकारस्य प्रयोजनं भाष्ये दत्तमित्यलम्॥

सुपि च॥ "अतो दीर्घो यञि"इत्यनुवर्त्तते। यञीत्यनेनाल्त्वात्तदादिविधिरित्याह–यञादाविति।

ङेर्यः॥ चतुर्थ्येकवचनस्यैव ग्रहणं व्याख्यानादित्याह–ङे इत्येतस्येति। सन्निपातेति। उपजीव्यविरोधन्यायमूलैषा। सन्निपातः *संश्लेषस्तन्निमित्तको यो विधिः स तं सन्निपातं यो विहन्ति स तद्विघातस्तस्यानिमित्तमित्यर्थः। न च यञादित्वसापेक्षदीर्घस्य बहिरङ्गतया ऽसिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम्। आरोपितासिद्धत्वे ऽपि वस्तुतस्तद्विघातस्य जायमानत्वेन तत्प्रवृत्तेः। *किं चान्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वेऽपि तत्र कृते ऽसिद्धत्वे मानाभावः। *किं चातिदेशिक*संनिपातविघाताभावमादायैतदप्रवृत्तौ गौरीत्यादौ संबुद्धिलोपे ऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तविघाताभावात्तत्रैतस्या अतिव्याप्तिपरभाष्याऽसङ्गतिः। सन्निपातस्याशास्त्रीयत्वान्नात्र स्थानिवत्त्वमिति चेत्तत्रासिद्धत्वमपि कथमिति वद।

---

*संश्लेषइति। उपजीव्यमात्रस्योपलक्षणमिदम्। ननु शास्त्रे ज्ञानमेव प्रवृत्तिनिवृत्तिनियामकम्। अन्यथा अतिदेशशास्त्रप्रणयनं व्यर्थं स्यात्। तथा च "सुपिच" इति दीर्घस्य बहिरङ्गासिद्धत्वे तद्धर्म्मिकस्योपजीव्यविघातकत्वप्रकारकज्ञानस्य अभावात् "ङेर्यः"इतिशास्त्रं "सुपिच"इति शास्त्रस्याऽभ्यनुज्ञां दद्यात्येवेत्यरुचेराह *किञ्चेति*। ननु रामायेत्यादौ यादेशस्य जातत्वेऽपि "ङेर्यः" इति शास्त्रस्य—'स्वप्रवृत्त्युत्तरकालिकप्रवृत्तिमता शास्त्रेण यस्य साधुत्वं बोध्यते तदपि साधु'इति अभ्यनुज्ञादानसमये तत्समानकालप्राप्तिकसुपिचेतिशास्त्रस्याऽसिद्धत्वं वक्तुं शक्यते इत्यरुचेराह *किञ्चेति*। आतिदेशिकेति*। आतिदेशिकपदा-

कार्यस्य निमित्तं *यथोः सन्निपातस्तयोः* सूत्रे उपादानमपेक्षितमिति तु नाग्रहः । अत एव दाक्षिरित्यत्राकारान्तप्रकृतीञ्सन्निपातनिमित्ताऽङ्गसञ्ज्ञा ऽनया परिभाषया ऽल्लोपस्य निमित्तं न स्यादित्याशङ्क्यानित्यत्वेन समाहितं भाष्ये कृन्मेजन्तसूत्रे । न ह्यङ्गसंज्ञायामदन्तस्याङ्गसञ्ज्ञेत्युक्तमस्ति । न च कृष्णायेत्यस्य "अकृत्सार्व"इतिदीर्घेणोपपत्तेरनित्यताज्ञापकत्वं कथमिति वाच्यम् । तस्यापि सन्निपातपरिभाषयाऽप्राप्तेः । *विरोधाभावात्फले* विशेषाभावाच्च परत्वेऽप्यकृदिति नोपन्यस्तम् * । तस्याकृदित्यादिपर्युदासेनाप्राप्त्येव प्रवृत्तिरित्यन्ये ।

---

र्थतावच्छेदकातिदेशपदार्थे यदागमन्यायसिद्धातिरिक्तत्वेन एकदेशविकृतन्यायसिद्धातिरिक्तत्वेन च सङ्कोचः कर्त्तव्यः । अत एव येषाम्, तेषाम्, शैवः, गार्ग्य इत्यादौ सुडागमयस्येतिलोपौ सिद्धौ । अन्यथा विभक्तिं निमित्तीकृत्य जायमानमत्वं तदानन्तर्यविघातकसुट्प्रवृत्तिं प्रति, शिव(गर्ग)रूपप्रातिपदिकं निमित्तीकृत्य जायमानोऽण्(यञ्) तादृशप्रातिपदिकविघातकयस्येतिलोपं प्रति च निमित्तं न स्यात् । मम तु यदागमन्यायेन सामित्यत्र विभक्तित्वस्य, एकदेशविकृतन्यायेन यस्येतिलोपे ऽपि शिव(गर्ग)प्रातिपदिकत्वस्य सत्त्वान्नोपजीव्यविरोधः । अत एव "स एषां ग्रामणीः" इति निर्देशो, "वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तम्"इति वार्त्तिके वर्णाश्रयविशेषणं च सङ्गच्छते । *ययोरिति* । यद्रूपावच्छिन्नयोरित्यर्थः । *तयोरिति* । तद्रूपावच्छिन्नयोरित्यर्थः ।

*विरोधाभावादिति* । चिन्त्यमिदम् । रामायेत्यादौ "सुपि च" इति "अकृत्सार्वधातुकयोर्दीर्घः" इत्युभाभ्यामेकस्य दीर्घस्य विधातुमशक्यत्वादेकस्य शास्त्रस्य विधायकत्वमपरस्यानुवादकत्वञ्च वक्तव्यम्, तथा च कस्य विधायकत्वं कस्यानुवादकत्वमित्यत्र विनिगमकाभावाद् विरोधस्य सत्त्वात् । इत एवारुचेराह *फले इति । *नोपन्यस्तमिति* । केचित्तु अकृत्सार्वधातुकयोरिति पर्युदासाद्धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रये यादौ प्रत्यये परतस्तेन दीर्घ इति नात्र तस्य प्राप्तिरित्याहुः । तन्न । कृष्णायेत्यादौ दीर्घानापत्तेः ।

ननु "सुपि च"इति सूत्रं माऽस्तु, रामायेति सार्वधातुके इत्यस्याननुवृत्त्या "अतो दीर्घो यञि"इति दीर्घेण सिद्धम्; इति चेन्न । तत्र तदनुवृत्त्यभावे केशवः, अङ्गनेत्यादौ दीर्घापत्तेः । न च आरकनि आकारोच्चारणसामर्थ्येन तद्धितेषु "अतो दीर्घो यञि" इत्यस्याप्रवृत्तिज्ञापनान्न दोषः । अन्यथा शृङ्गवृन्दशब्दाभ्यां "शृङ्गवृन्दाभ्यामारकन्" इति सूत्रेण रकन्मात्रविधाने तस्य यञादित्वेनोक्तसूत्रेण दीर्घे शृङ्गारकः, वृन्दारक इत्यनयोः सिद्धौ तद्वैयर्थ्यं स्पष्टमेव; इति वाच्यम् । शृङ्गशब्दात् णिजन्तात्क्विपि ततः प्रत्यये तत्राकारश्रवणार्थं तस्यावश्यकत्वात् । न चैतादृशरूपाणां रका सिद्धे आकारोच्चारणस्यान्य-

झलि किमिति। "उतो वृद्धिः" इत्यतो हलीत्येवानुवर्त्य सन्निपातपरिभाषया रामाणामित्यत्र न दोष इति प्रश्नः। झल्ग्रहणमेत्वे सन्निपातपरिभाषाया अप्रवृत्तिज्ञापनार्थम्। तेन सर्वेषामित्यादावेत्वसिद्धिरित्युत्तरम्। एतेन "बहुवचने किं रामस्य" इति व्याख्यातम्। *रामाभ्यामित्यपि प्रत्युदाहरणं बोध्यम्। "बहुवचने झलीत्" इति तु न सूत्रितम्। ज्ञानयोरित्यादौ*नुमापत्तेः।

---

तो विधानार्थत्वज्ञापनपरभाष्यप्रामाण्येन णिजन्तप्रकृतिकक्विबन्तात्तद्धिताभावकल्पनेनानभिधानमेव। अन्यथा गोधाशब्दाण्णिचि ततः क्विबन्ताड्ढ्रकि आरकि च फलभेदस्य स्पष्टतया भाष्यासङ्गत्यापत्तेः, इति वाच्यम्। वासुदेवार्जुनाभ्यां कन्विधानेन वासुदेवक इत्यादीनां सिद्धौ वुन्विधानस्य व्यर्थतापत्तेः। तद्धि वासुदेवशब्दाण्ण्यन्तात्क्विबन्ताद्वासुदेवक इत्यर्थम्। न चेदानीं तदभिधानं, यदर्थं तत्सार्थकं स्यात्। किञ्च "आरगुदीचाम्" इति सूत्रस्थं भाष्यम् "आरगुदीचाम्" इत्यत्र आकारप्रश्लेषतात्पर्यकम्। तेन आकारान्तात् गोधाशब्दादित्यर्थः। तेन क्विबन्तेऽपि न फलभेदः। अन्यथा गोधाशब्दस्य ऋशब्देन समासे तस्य पूर्वान्तवत्त्वेन गोधाशब्देन ग्रहणे तत आरकि 'गौधरार' इत्यर्थमाकारस्यावश्यकत्वेन फलभेदावश्यंभावादिति दिक्।

*मूले बहुवचने किम् राम इति*। ननु स्वौजसित्यत्र वौंजसिति न्यासेन रामशब्दादुप्रत्यये तस्य झलादित्वाभावेन नात्र दोषः। न चैवं तस्य यञादित्वेन "सुपि च" इति दीर्घापत्तिरिति वाच्यम्। सुपि चेत्यस्य स्थाने "आपि च" इति न्यासेन तस्य च तृतीयादिविभक्तावित्यर्थेन तदप्राप्तेः। न च छन्दसि प्रथमायाः "सुपां सुलुक्" इति यादेशे दीर्घानापत्तिः। छान्दसत्वेन तत्राऽऽपाद्यमानरूपाभावेनादोषात्, इतोऽरुचेराह *रामस्येति*। नन्वत्रापि "टाङसि" इति सूत्रेऽकारं निर्दिश्याऽस्यादेशे 'अतो गुणे' इति पररूपेण न दोषः। न चास्यादेशविधानेऽमुष्येत्यत्र सकारस्येणःपरत्वाभावात्षत्वानापत्तिः। अद अस्येत्यत्र मुत्वस्यासिद्धत्वात्पूर्वं पररूपे पश्चान्मुत्वे इणः परत्वेन सस्य षत्वसिद्धेः। नापि 'अस्य' इत्यत्र प्रत्ययस्य हलादित्वाभावेन हलिलोपानापत्तौ तदसिद्धिः। "आपि लोपोऽकः" "अन् टौसोः" इति न्यासेन सिद्धेः। इत्यरुचेराह *रामाभ्यामिति*।

*नुमापत्तेरिति। ज्ञान ओसिति स्थिते "ओसि च" इत्यनेन इगागमे वार्णादाङ्गमितिपरिभाषया "इकोऽचि" इति नुमापत्तिरिति भावः। न च वार्णशास्त्रीयस्थानितावच्छेदकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकस्थानिताकत्वरूपसमानस्थानिकत्वस्य "इकोऽचि विभक्तौ" इत्यत्राभावाद् वार्णपरिभाषाया अप्रवृत्तौ अन्तरङ्गत्वाद् गुणे इगन्तत्वाभावान्नुमो ऽप्रा-

जश्त्वमिति । बाधित्वेति शेषः । अवसाने चर्त्वस्य पदान्तजश्त्वापवादत्वात्* । द्वित्वे रूपेति । 'पूर्वत्रासिद्धमद्वित्वे' इति न्यायाच्चर्त्वोत्तरं द्वित्वं बोद्धव्यम् । तादेश इति । अन्यथा "खरि च"इति चर्त्वेन

---

तथा ज्ञानयोरित्यादौ न दोष इति वाच्यम् । ज्ञानशब्देन अशब्देन समासे तस्मादाचारक्विबन्तात्कर्तरि क्विपि नपुंसकह्रस्वे परमशब्देन समासे परमज्ञान ओसिति स्थिते इकि जाते इयङि निरुक्तसमानस्थानिकत्वस्य सत्त्वेनेयङादेशापत्तेः । न च "एरनेकाच" इति यणि निरुक्तं परमज्ञानयोरिति रूपं सिध्यतीति वाच्यम् । सपूर्वपदस्य चेद् गतिकारकपूर्वपदस्यैवेति नियमपरेण "गतिकारकपूर्वस्यैवेष्यते"इति वार्त्तिकेन यणोऽप्राप्तेरिति दिक् ।

टि० *सम्बुद्धिलोपानापत्तिरिति । न च गङ्गे इत्यादौ पञ्चमीसमासस्यानित्यत्वादप्रवृत्तौ एङन्तत्वादेव सम्बुद्धिलोपः सिद्ध्यतीति न दोष इति वाच्यम् । एभिरित्यादौ भिस इटि हलादित्वाभावेन हलिलोपानापत्तेः । केचित्तु "आपि लोपोऽकः" "अन् टौसोः" इति न्यासः क्रियते । हलीति न क्रियते । तथा च एभिरित्यादौ न दोष इति 'बहुवचने झलीट्' इति न्यासः सम्यगेव । "हलि लोप" इत्यत्र हल्ग्रहणाभावे प्रथमैकवचने "इदोऽय् पुंसि" "यः सौ" इत्याभ्याम्, औ-जस्-अम्-औट्-शस्सु "दश्च"इति बाधात् न तत्रातिप्रसङ्ग इत्याहुः ।

*अपवादत्वादिति* । तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टस्य कृतेऽचारितार्थ्यस्य सत्त्वादिति भावः । ननु "वाऽवसाने"इति चर्त्वस्य जश्त्वापवादत्वे "रत्नमुट्"इति रूपं न स्यात् । 'रत्नमुष्'इति दशायां जश्त्वचर्त्वयोः प्राप्तावपवादत्वात्पूर्वं चर्त्वप्रवृत्त्या महाप्राणप्रयत्नसाम्येन षकाररूपे चर्त्वे तदभावपक्षे जश्त्वे लक्ष्येलक्षणन्यायेन पुनश्चर्त्वाप्रवृत्तेः । "ष्णान्ता षट्"इतिनिर्देशानुपपत्त्या इष्टापत्तिस्तु कर्त्तुं न शक्यते; इति चेन्न । उद्देश्यदलप्रविष्टविषयतावच्छेदकधर्मयोर्यत्र व्याप्यव्यापकभावः तत्र माठरकौण्डिन्यन्यायप्रवृत्तौ तेन न्यायेन एकविनियोगोद्देशप्रयुक्तवाक्यकदम्बघटकव्यापकधर्मावच्छिन्नबोधकपदप्रतिपाद्यतावच्छेदकावच्छिन्ने तद्वाक्यकदम्बघटकव्याप्यधर्मावच्छिन्नबोधकपदप्रतिपाद्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सङ्कोचात् । प्रकृते "जश्त्वचर्त्वे करवाणि"इति विनियोगोद्देशेन प्रयुक्तः"झलां जश् झशि" "अभ्यासे चर्च" "खरि च" "वाऽवसाने" इति वाक्यकदम्बस्तद्घटकव्यापकधर्मावच्छिन्नबोधकं झल्पदं तत्प्रतिपाद्यतावच्छेदकझल्त्वावच्छिन्ने चर्पदार्थतावच्छेदकचर्त्वावच्छिन्नातिरिक्तत्वेन सङ्कोचे 'रत्नमुष्'इति दशायां चरतिरिक्तझलोऽभावात् "वाऽवसाने" इत्यस्याप्रवृत्तौ जश्त्वे "वाऽवसाने" इति चर्त्वे रत्नमुट् रत्नमुड् इतिरूपद्वयसिद्धेः । अत एव शसिदद्योरेत्वाभ्यासलोपनिषेधः सङ्गच्छते । चरतिरिक्तझलामभावेन

---

(१) इटि तु गङ्गे इत्यादौ गुणे तस्य पञ्चमीसमासेन स्थानिवत्त्वात् "एङ्" इत्यस्याप्राप्तौ व्यवधानाद् "हल्ङ्याब्" इत्यस्य चाप्राप्तौ *संबुद्धिलोपानापत्तिरिति केषु चित्पुस्तकेष्वधिकः पाठः ।

सिद्धाविदं व्यर्थं*स्यादिति भावः ॥

ह्रस्वन ॥ ह्रस्वनद्याप इति पञ्चमी । "आमि सर्वनाम्न" इत्यत आमीति वर्त्तते । तच्च षष्ठ्या*विपरिणम्यते नामीति लिङ्गादित्याह—ह्रस्वान्तादित्यादि । आमत्र षष्ठीबहुवचनमेव न तु ङेरामादीति स्पष्टं भाष्ये ।

यत्तु नुडिति विभज्य सामान्येन नुड् विधेयः । नद्याप इति दीर्घान्ताच्चेन्नद्याप एवेति नियमार्थमिति दीर्घेषु न दोषः । हलन्ताच्चेत् षट्चतुर्भ्य एवेति नियम इति हलन्तेषु न दोषः । एवञ्च ह्रस्वग्रहणं न कार्य-

---

"अभ्यासे चर्च" इत्यस्याप्रवृत्तेः । तथा च अनादेशादेरित्यत्र 'आदेशो वैरूप्यसम्पादक एव गृह्यते' इत्यादि न वक्तव्यम् । एतदर्थज्ञापकताया एव तस्योचितत्वादिति दिक् ।

*इदं व्यर्थं स्यादिति* । न च "अच उपसर्गात्तः" इति सूत्रात्त इत्यनुवृत्त्या "सः स्यार्धधातुके" इति तादेशे घत्स्यतीन्यादौ 'चयो द्वितीया' इति द्वितीयादेशो भवति, चर्त्वे तु तस्यासिद्धत्वाद् द्वितीयादेशो न स्यादिति वाच्यम् । तावन्मात्रप्रयोजनकत्वे तपदे एतत्सूत्रपर्यन्तानुवृत्तिप्रयोजकस्वरितत्वमकृत्वा "सः स्यार्धधातुके" इत्यनेनादेशमात्रविधाने स्थानेऽन्तरतमपरिभाषया सस्य स्थाने अर्थादेव तो भवतीति तस्यासिद्धत्वाभावाद् द्वितीयादेशसम्पत्तेः । एतत्सूचनायैव 'सः सीति तादेश आरभ्यते" इति तादेशपक्षोपादानम् । तादेशो न कर्त्तव्यः । तत्स्थाने आदेशमात्रं विधातव्यमान्तरतम्यात् त एव भवतीति कौमुद्यर्थः । नचैवमपि "सः स्यार्धधातुके" इत्यत्र तपदस्यानुवृत्त्यभावेन सकारस्य स्थाने कदाचित्तकारः कदाचित्सकारश्चाऽऽन्तरतम्याद्भविष्यति । त इत्यस्यानुवृत्तौ तु स एव भविष्यतीति फलभेद इति वाच्यम् । सकारादेशे तकारादेशे वा "खरि च" इति चर्त्वस्य दुर्वारतया तकारघटितस्य घत्स्यतीत्यस्य सम्पत्त्या तपदानुवृत्तौ अननुवृत्तौ वा फलभेदाभावादिति दिक् । "अन्तरतम" इत्यस्य "सदृशतम" इत्यर्थात् सादृश्यस्य भेदघटितत्वेन सस्य स्थाने तकार एव भविष्यति न तु सकार इति वैयाकरणसिद्धान्तानभिज्ञस्य कस्यचित् शङ्कां दूरीकर्तुं "सादृश्यं न भेदघटितम्" इति सिद्धान्तमभिप्रेत्य ज्ञापकमुपन्यस्यति *अत एव सः सीति तादेश इति । इत्थं च आदेशमात्रविधाने कदाचित् सकारोऽपि स्यादिति शङ्का नोचिता । सादृश्यस्य भेदघटितत्वपक्षे सकारस्य स्थाने सकाराप्राप्तेः । वस्तुतस्तु पूर्वोक्तमाठरकौण्डिन्यन्यायेन चरातिरिक्तत्वेन झल्पदार्थे सङ्कोचे सकारस्थाने चर्त्वं नैव प्राप्नोति । सः सीति तादेशविधानमपि न्यायप्रवृत्तावेवोपोद्बलकमित्याहुः ॥

*विपरिणम्यत इति* । वस्तुतस्तु विपरिणामाभावेऽपि "उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्" इति परिभाषया षष्ठ्यंशसहितायास्तस्मादितिपरिभाषाया उपस्थित्या षष्ठ्यंशविकलायास्तस्मिन्नितिपरिभाषाया उपस्थित्या

मिति; तन्न । नद्याप इत्यस्य*स्त्रीलिङ्गानाश्चेन्नद्याप एवेति नियमपरतया ऽपि व्याख्यातुं शक्यत्वेन, नदीत्वाप्त्वयोर्ह्रस्वेऽ पि दृष्टत्वेन त्वदुक्तनियमे दृढतरमानाभावेन च मतीनामित्यादौ नुडनापत्तेः ॥

नामि॥ "ढ्रलोपे"इत्यतो दीर्घ इत्यनुवर्त्तते। अङ्गस्येति किम्। चर्मणाम्।

नन्वामीत्येवास्तु—नित्यत्वात्पूर्वं दीर्घेऽपि ह्रस्वान्तान्नुडित्येतत्सामर्थ्यात्*भूतपूर्वह्रस्वान्तत्वमादाय नुट्सिद्धेः । न च "नृ च"इति दीर्घविकल्पान्नृणामित्यत्र नुट् चरितार्थः । *नृनद्याप इत्येव सिद्धेः । तदुक्तं

---

चामव्यवहितपूर्वत्वविशिष्टं यद्ध्रस्वान्तमाबन्तं नद्यन्तञ्चाङ्गं तदव्यवहितोत्तरत्वविशिष्टस्य नुड् भवतीत्यर्थेन सामञ्जस्यम् । *स्त्रीलिङ्गानां चेदिति* । वस्तुतस्तु कुमारीशब्दात्क्यजन्तात् क्विपि तस्मादामि कुमारीणां ब्राह्मणानामित्यत्र कुमारीशब्दे स्त्रीलिङ्गत्वस्याभावेन नद्यन्तत्वस्य च सत्त्वेन, वनिताशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि वनितानां ब्राह्मणानामित्यादौ वनिताशब्दे स्त्रीलिङ्गत्वस्याभावादाबन्तत्वस्य च सत्त्वेन स्त्रीलिङ्गाव्यवहितोत्तरत्वविशिष्टाम्त्वे नियम्यनुडितिशास्त्रीयोद्देश्यतावच्छेदकाम्त्वव्याप्यत्वस्य सत्त्वेऽपि नियामकनद्यापइतिशास्त्रीयोद्देश्यतावच्छेदकनद्यन्ताबन्ताङ्गाव्यवहितोत्तरत्वविशिष्टाम्त्वव्यापकत्वस्य—नद्यन्ताबन्ताङ्गाव्यवहितोत्तरत्वविशिष्टाम्त्वाधिकरण—कुमारीणांवनितानांब्राह्मणानाम्इत्येतद्घटक-वृत्त्यभावप्रतियोगित्वस्य स्त्रीलिङ्गाव्यवहितोत्तरत्वविशिष्टाम्त्वे सत्त्वेन अभावात् स्त्रीलिङ्गानां चेन्नद्यन्ताबन्तानामेवेति नियमो न सम्भवतीति मतीनामित्यादौ न दोषः । तस्मान्नियमद्वयाश्रयणे गौरवान्नद्याप इति न्यासः कर्त्तुं न शक्यत इत्येव वक्तव्यम् ।

*भूतपूर्वह्रस्वान्तत्वमिति* । पञ्चमीसमासेन स्थानिवद्भावाद् ह्रस्वान्तत्वातिदेशेनेति भावः । *नृनद्याप इत्येव सिद्धेरिति* । ननु ह्रस्वनद्याप इति कल्पे नृ-आमिति स्थिते परत्वात् "नृ च"इतिदीर्घे ह्रस्वान्तत्वाभावान्नुटोऽप्राप्तया यणि न्रामिति, दीर्घाभावे नृणामिति रूपद्वयम् । नृनद्याप इति न्यासकल्पे तूभयत्र नुटि नृणां नृणामिति फलभेदः । एवं नृशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि तुकि तस्मादामि नृत् आमित्यत्र ह्रस्वनद्याप इति कल्पे नुण्न भवति, नृनद्याप इति न्यासे च भविष्यतीति फलभेदः । एवं नृशब्दस्य ऋशब्देन समासे तत आमि सूत्रपक्षे नुडभावो, न्यासपक्षे च नुडिति फलभेद इति चेत्; अत्र केचित् । नृनद्याप इति न्यासे शेखरतात्पर्यं, तपरकरणसामर्थ्याच्च ह्रस्वऋकारान्तस्यैव नृशब्दस्य ग्रहणं न तु दीर्घान्तस्य तुगन्तस्य वेति न पूर्वोक्तफलभेदा इत्याहुः । परेतु "नद्यापो नुट्" "नुर्वा" इति आमीतिसूत्रकल्पे न्यासः क्रियते । नृचेति सूत्रं च न क्रियते । "नुर्वा" इति च तक्रकौण्डिन्यन्यायेनामीत्येतदप्राप्तियोग्ये ऽचारितार्थ्यस्य कृतेचारितार्थ्यस्य च सत्त्वाद्दीर्घस्य बाधकमिति नुट्कल्पे नृणामिति तदभावे न्रामिति न फलभेदः । नन्वेतन्न्यासकरणे

भाष्ये*"नैकमुदाहरणं योगारम्भं प्रयोजयति" इति। तिसृणामिति षडित्यत्र त्रेरित्यनुवृत्त्या*सिद्धमिति भाष्ये एव स्पष्टम्। एतेन ऋन्नद्याप इति न्यासे भाष्यतात्पर्यमित्यपास्तम्। चतसृणां प्रियचतसृणामित्यत्र "षट्चतुर्भ्यः" इति सिद्धम्। गौणे तदप्रवृत्तौ तु न मानम्। बहुवचनन्तु लाघवार्थम्। द्विवचने हि चतुर्भ्यामिति गुरुनिर्देशः स्यात्। नैकमुदाहरणमिति प्रकृतसूत्रस्थभाष्यविरोधश्च। समाहारद्वन्द्वेन निर्देशे कार्ये बहुवचननिर्देशस्तदर्थ इति तु न युक्तम्। "अस्थिदधि" "तिसृभ्यो जसः" इत्यादौ व्यभिचारात् *।

न च—"अङ्गाधिकारे पञ्चम्या यदुच्यते गृह्यमाणविभक्तेस्तद्भवति" इति सर्वादिसूत्रभाष्याद् गृह्यमाणाद्विहितविभक्तेरित्यर्थकादस्य नुटो गौणेऽप्रवृत्तिः। 'षड्भ्य' इत्यत्रापि विहितविशेषणमेवेत्याशयेन परमपञ्चेत्यादौ लुगभावमाशङ्क्य षट्प्रधान एष समास इत्युक्तम्। समासस्य षट्प्रधानत्वेन *संख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकत्वेन षट्त्वसत्त्वान्न

---

योगद्वयकरणप्रयुक्तं गौरवमेवेति चेन्न। नृचेतिसूत्राकरणेन सिद्धान्तसिद्धसमयोगद्वयेन ह्रस्वपदाकरणप्रयुक्तलाघवस्यैव सत्त्वात्। एवं नद्याप्साहचर्यान्नृशब्दो ऽप्यजन्तो गृह्यते इति नृतामित्यत्रापि न फलभेदः। पञ्चमीसमासेन स्थानिवद्भावान्नृऋशब्दयोः समासेऽपि नुण्न भवतीति न तत्रापि फलभेद इत्याहुः।

*नैकमुदाहरणमिति* । सामान्यधर्मावच्छिन्नोद्देश्यताकं शास्त्रमेकमुदाहरणं न प्रयोजयतीत्यर्थः। तेन अग्नेर्ढगित्यादिकरणेऽपि न दोष इति भावः। *सिद्धमिति* नचामीति कल्पे "ह्रस्वनद्यापः" इति सूत्रे ह्रस्वग्रहणसत्त्वे त्रिशब्दादामि त्रयादेशे परत्वाद्दीर्घे ह्रस्वान्तत्वाभावान्नुडभावे त्रयामिति, ह्रस्वग्रहणाभावे "षट्चतुर्भ्यः" इत्यत्र त्रेरित्यनुवृत्तिकल्पे त्रयादेशे दीर्घे स्थानिवद्भावेन त्रिशब्दत्वस्य सत्त्वान्नुटि त्रयाणामिति च रूपमिति फलभेद इति वाच्यम्। षट्चतुर्साहचर्येणानकारान्तत्रिशब्दस्यैव ग्रहणे त्रयादेशे नुटो ऽप्राप्त्या त्रयामित्येव रूपं भवतीति फलभेदाभावात्। त्रितामित्यादावपि साहचर्यादिना फलभेदः परिहरणीय इति दिक्।

*व्यभिचारादिति*। "अस्थिदधि" इत्यस्य बहुवचननिर्देशेन गौणेऽप्रवृत्तौ प्रियसक्थ्ना ब्राह्मणेनेत्यादावनङाद्यनापत्तिरिति भावः। सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकत्वेनेति* । न च सङ्ख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकत्वरूपसङ्ख्यावाचकत्वस्य राजान इत्यादौ बहुत्वप्रकारकबहुत्वविशिष्टविशेष्यकबोधजनकत्वस्य राजन्शब्दे सत्त्वेन सत्त्वात् षट्त्वापत्तिरिति

वाच्यम्। सङ्ख्याप्रकारकसङ्ख्येयमुख्यविशेष्यकोपस्थितिजनकत्वं सङ्ख्यावाचकत्वमिति परिष्कारेणादोषात्। अत एव सङ्ख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठमुख्यविशेष्यताकोपस्थितिजनकत्वरूपसंख्यावाचकत्वस्य प्रियपञ्चा द्रौपदीत्यादौ पञ्चन्शब्दे सत्त्वेन "न षट्" इति निषेधः सिध्यति। नन्वेवं "दण्डिन इव त्रयः त्रिदण्डिन" इत्यादौ संख्याप्रकारकसंख्येयमुख्यविशेष्यकोपस्थितिजनकत्वस्य सत्त्वेन संख्यावाचकत्वात्षट्सञ्ज्ञापत्तिः। न चेष्टापत्तिः। "स्वं रूपम्" इतिसूत्रस्थाशब्दसंज्ञेत्यस्य प्रत्याख्यानपरभाष्यविरोधापत्तेः। तत्र हि "शब्दशास्त्रीयसंज्ञाविषये स्वरूपग्रहणं न भवति षान्तस्य षट्सञ्ज्ञाविधानसामर्थ्यात्। अन्यथा "षड्भ्यो लुक्" इत्यादौ स्वरूपस्य, संज्ञाविधानसामर्थ्यात् षट्सञ्ज्ञकनान्तस्य च ग्रहणे ष्णान्तेत्यत्र षेति व्यर्थं स्यादित्युक्तम्। उक्तस्य च सङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठमुख्यविशेष्यताकोपस्थितिजनकत्वरूपसङ्ख्यावाचकत्वस्य परमषडित्यादावपि सत्त्वेन तस्य षट्सञ्ज्ञार्थं षान्तग्रहणस्यावश्यकत्वेन स्वरूपग्रहणपक्षे च विशिष्टाद्विहितत्वेन षष् इति स्वरूपाद्विहितत्वाभावेन जश्शसोर्लुगनापत्तेरिति भाष्यासङ्गतिः स्पष्टैवेति चेन्न। यस्य सङ्ख्यावाचकत्वं वक्तव्यं तदन्तपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती या विशेष्यता तादृशविशेष्यतानिरूपितप्रकारत्वासमानाधिकरणा या सङ्ख्यानिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठविशेष्यता तादृशविशेष्यताप्रयोजकतापर्याप्त्यधिकरणत्वं सङ्ख्यावाचकत्वमिति परिष्कारेणादोषात्। प्रियपञ्चा द्रौपदीत्यादौ पञ्चन्नित्यत्र बहुव्रीहिप्राक्कालिकस्य निरुक्तसङ्ख्यावाचकत्वस्य सत्त्वात् "न षड्"इति निषेधः सिध्यति। तत्र भूतपूर्वषट्त्वग्रहणस्य परिभाषेन्दुशेखरे अन्तरङ्गपरिभाषाव्याख्यानावसरे स्पष्टत्वात्। प्रियपञ्चान इत्यादौ बहुव्रीहिप्रयोज्यविशेष्यतानिरूपितप्रकारतासामानाधिकरण्यमेव संख्येयनिष्ठविशेष्यताया इति नातिव्याप्तिः। त्रिदण्डिन इत्यादौ च संख्येयनिष्ठविशेष्यताप्रयोजकतापर्याप्तिः त्रिइत्येतन्मात्रस्य न तु त्रिदण्डिन् इत्यस्येति न तत्राप्यतिप्रसङ्गः। न चैवं परमषडित्यत्र षष्शब्दस्य षट्सञ्ज्ञायामपि ततो विहितत्वाभावात् परमषडित्यत्र लुगनापत्तिरिति वाच्यम्। षड्भ्यो विहितयोर्जश्शसोरित्यस्य षट्सञ्ज्ञकनिष्ठोद्देश्यतानिरूपितविधेयताश्रययोरित्यर्थकरणेन तत्र चोद्देश्यताया अपर्याप्ताया अपि ग्रहणेन परमषडित्यादौ षषि अपर्याप्तोद्देश्यतायाः सत्त्वेनादोषात्।

परे तु सङ्ख्याविशिष्टत्वं सङ्ख्यावाचकत्वम्। वैशिष्ट्यं च स्वनिष्ठप्रकारतानिरूपितसङ्ख्येयनिष्ठनिरवच्छिन्नविशेष्यताप्रयोजकतापर्याप्त्यधिकरणान्तत्वं—स्वावच्छिन्नप्रकारतानिरूपितविशेष्यताप्रयोजकतापर्याप्त्यनधिकरणत्वमेतदुभयसम्बन्धेन। तथा च परमपञ्चन्नित्यस्य प्रियपञ्चन्घटकपञ्चन्नित्यस्य च सङ्ख्यावाचकत्वं सिध्यति। द्वितीयसम्बन्धदानात्प्रियपञ्चन्निति विशिष्टस्य न षट्सञ्ज्ञा। संख्यावच्छिन्नप्रकारतानिरूपितान्यपदार्थनिष्ठविशेष्यताप्रयोजकतापर्याप्तेः विशिष्टे सत्त्वात्। प्रियपञ्चा द्रौपदी इत्यत्र पञ्चन् इत्ये-

दोष इति तदर्थः। ष्णान्तेत्यत्र लोके गणनायां प्रसिद्धानामेव ग्रहणमित्यत्र न मानम्। प्रकृते ऽपि तथैव, षड्भ्य इत्यादौ पञ्चम्या विरुद्धविभक्तित्वादङ्गस्येत्यनेन संबन्धायोग्यत्वात् विहितेत्यध्याहारेण प्रत्ययविशेषणतैवेति भाष्योक्तेः, इति गौणे नुटो ऽप्रवृत्तिरिति वाच्यम्। नामीतिसूत्रस्थोक्तभाष्यप्रामाण्यान्नुड्विधायके विहितपदानध्याहारेण षडादिभ्यः परस्याङ्गसञ्ज्ञानिमित्तस्यामो नुडित्यर्थेन गौणे ऽपि प्रवृत्तेः। "अतो भिस" इत्यादावङ्गस्येत्यस्यैवमन्वयस्यैवाङ्गसञ्ज्ञासूत्रे भाष्ये उक्तत्वात्। अत एव परमचतुर्णामित्यादौ नुट्।

यद्यप्येवं षड्भ्योऽद्ड् डतरादिभ्य इत्यनयोरपि वक्तुं शक्यं, तथापि लक्ष्यानुसारात्तत्र विहितविशेषणम्। विरुद्धविभक्तित्वादिति भाष्योक्तयुक्तिस्त्वेकदेशिन इति बोध्यम्। "अद्ड् डतरादिभ्यः" "षड्भ्यो लुक्" इत्यनयोरेवसर्वादिसूत्रे भाष्ये उपन्यासाच्च। "षड्भ्य" इत्यादेः षडर्थगतसंख्याभिधायिजश्शसोरित्यादिक्रमेणार्थ इति कैयटोक्तं तु "अद्ड् डतरादिभ्य" इतिसूत्रेभाष्यविरोधादिभिर्दूषयिष्यते। न च पदां दतामित्यादावतिप्रसङ्गः। ह्रस्वत्वं नाम मात्राकालिकाच्त्वं, तत्र सामर्थ्याद्विशेष्यभूतमात्राकालिकत्वांशे एव भूतपूर्वगत्याश्रयणं न तु विशेष्यभूताच्त्वांशेऽपीत्यदोषात्; इति चेन्न। "नोपधाया" इत्युत्तरार्थत्वात्। तेन चर्मणामित्यादौ दीर्घाभावः सिद्ध इति दिक्*।

---

*तन्मात्रस्य तादृशविशेष्यताप्रयोजकतापर्याप्तेरसत्त्वेन तन्मात्रस्य षट्त्वं सिध्यतीति तदन्तत्वाद्विशिष्टे निषेधः सिध्यति। स्त्रीप्रत्यये तदन्तविधेः सत्त्वात्। प्रथमसम्बन्धदानात् त्रिदण्डिन्नित्यादेः न षट्सञ्ज्ञा। तत्र दण्डिसाहश्यस्यापि अवच्छेदकत्वेन समासार्थविशेष्यताया निरवच्छिन्नत्वाभावात्। त्रिपदमात्रस्य तथा सत्त्वेऽपि तस्य नान्तत्वाभावेन विशिष्टे त्रिपदान्तत्वाभावेन च नातिप्रसङ्गः। परमपञ्चन्नित्यत्र तु पञ्चन् इत्यस्य तादृशविशेष्यताप्रयोजकत्वस्य सत्त्वेन तदन्तत्वात् षट्त्वसिद्धिः। एवं च न कश्चिद् दोषः। स्वं रूपम् इति सूत्रस्थाशब्दसंज्ञेत्यस्य प्रत्याख्यानाय ष्णान्तेत्यत्रत्यषग्रहणस्य शब्दशास्त्रीयसंज्ञायां स्वरूपग्रहणं न भवति इत्येतज्ज्ञापकतापरं भाष्यं तु "षड्भ्यो लुक्" इत्यत्र विहितविशेषणाश्रयणेऽपि स्वरूपनिष्ठोद्देश्यताया अपर्याप्त्या ग्रहणेन योजनीयम्। तथा सति प्रियषष इत्यादौ अतिव्याप्तिः षट्संज्ञकसाहचर्यात् अन्यपदार्थनिष्ठविशेष्यताप्रयोजकतापर्याप्त्यनधिकरणस्यैव षष् इति स्वरूपस्य ग्रहणेन निरसनीयेत्याहुः।

परिभाषाविरोधादिति । सर्वत्रानित्यत्वाश्रयणे मानाभाव इति भावः । कृताकृतप्रसङ्गित्वात् "नामि"इति नित्यम् । न च विशेषाभावेन फलाभावान्न कृते तत्प्राप्तिरिति वाच्यम् । विशेषाभावे ऽपि पर्जन्यन्यायेन

*दिगिति* । तदर्थस्तु "येन विधिस्तदन्तस्य" इति शास्त्रप्रवृत्तिं विना संख्यावाचकत्वशरीरे प्रयोजकतापर्याप्त्यधिकरणान्तत्वनिवेशो न मानम् । ततश्च परमपञ्चन्नित्यादेः षट्त्वं दुर्लभम् । पञ्चन्नित्यादेः तत्सम्भवेऽपि ततो-विहितत्वाभावात् परमपञ्चेत्यादौ षड्भ्य इति लुगनापत्तिः । 'षड्भ्य' इत्यत्र स्वनिष्ठोद्देश्यताया अपर्याप्ताया ग्रहणे प्रियपञ्चान इत्यत्रापि पञ्चन्शब्दस्य संख्यावाचकत्वेन तत्रापर्याप्त्योद्देश्यतायाः सत्त्वाज्जसो लुगापत्तिः । द्वितीयसंबन्धे प्रयोजकताऽनधिकरणत्वमात्रनिवेशे प्रियपञ्चा द्रौपदी इत्यत्रापि उत्तरपदस्य षट्त्वानापत्तौ "न षट्"इति डाबनिषेधानापत्तिः । तत्र भूतपूर्वषट्त्वमित्यस्य पूर्वं जातषट्त्वस्यारोप इत्यर्थः, न तु बहुव्रीहिप्राक्कालिकस्य तस्य ग्रहणे प्रमाणम् इति न तेन निर्वाहः । अतो गृह्यमाणविभक्तेरित्यस्य गृह्यमाणार्थान्वयिन्या विभक्तेरित्यर्थः । अर्थद्वारकं च विधानमाश्रयणीयमिति भावः । तथा च "षड्भ्य" इत्यस्य षडर्थान्वयिनोर्जश्शसोर्लुगित्यर्थः । षडर्थगतसंख्याभिधायिनोरिति यावत् । एवञ्च परमषडित्यत्र जश्शसोः षडर्थगतसंख्याभिधायित्वेन लुक् सिद्धः । प्रियपञ्चान इत्यत्र च जसोऽन्यपदार्थगतसंख्याभिधायकत्वादन्यपदार्थस्य च षडर्थत्वाभावान्न दोषः । न चैवं षट् ब्राह्मणा इत्यत्र ब्राह्मणपदोत्तरजसो लुगापत्तिः, तस्य षडर्थगतसंख्याभिधायित्वात्, इति वाच्यम् । षडर्थतावच्छेदकावच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकजश्शसोर्लुगित्यर्थस्य विवक्षितत्वेन ब्राह्मणपदोत्तरजस्प्रयोज्यसंख्यानिष्ठप्रकारतानिरूपितधर्मितायाः ब्राह्मणत्वावच्छिन्नत्वेन षडर्थतावच्छेदकावच्छिन्नत्वाभावेनादोषात् । नन्वेवमपि षट्काः, षट्कल्पा इत्यादौ प्रत्ययार्थस्य प्रकारत्वेन जसः षडर्थगतसंख्याभिधायित्वाल्लुग् दुर्वारः । न च षडर्थतावच्छेदकमात्रावच्छिन्नेतिविवक्षणेन प्रकृते जसर्थसंख्यानिष्ठप्रकारतानिरूपितधर्मितायाः षडर्थातिरिक्तप्रत्ययार्थतावच्छेदकावच्छिन्नत्वेन न दोष इति वाच्यम् । परमपञ्चेत्यत्रापि तादृशधर्मितायाः परमत्वावच्छिन्नत्वेन लुगनापत्तेः, इति चेन्न । षड्विशिष्टविभक्तेर्लुगित्यर्थेनादोषात् । वैशिष्ट्यञ्च स्वार्थतावच्छेदकावच्छिन्नधर्मितानिरूपितसंख्यानिष्ठप्रकारताप्रयोजकत्वं–स्वाव्यवहितत्वमेतदुभयसम्बन्धेन । षट्काः, षट्कल्पा इत्यादावाद्यसम्बन्धसत्त्वेऽपि द्वितीयस्यासत्त्वान्न दोष, इति । किञ्च बहुवचनान्तविरुद्धविभक्त्युपादाने अङ्गाधिकारे सर्वत्र गृह्यमाणार्थगतसंख्याभिधायिविभक्तेर्ग्रहणे "अतो भिस ऐस्" इत्यादौ न कुत्रापि दोष इति "षट्चतुर्भ्यः" इत्यत्रापि तादृशविभक्तेरेव ग्रहणमुचितम् । ततश्च गौणे तदप्रवृत्तौ प्रियचतसृणामित्याद्यसिद्धिरिति क्लन्यापि इति न्यासे एव भाष्यतात्पर्यम् । अत एव धाता धातृणाम् इति तैत्तिरीयपाठे नुट्सिद्धिरिति ह्रस्वग्रहणवैयर्थ्यमुपपद्यते । नैकमुदाहरणमिति भाष्यं तु

शास्त्रप्रवृत्तेः "इको झल्"इति सूत्रे भाष्ये उक्तत्वात्। "आयादय"इति सूत्रे भाष्ये स्यादिभिः परत्वादायादिबाधमाशङ्क्य* "अनवकाशत्वादायादयः। न च गोपायतीत्यादिरवकाशः । अत्रापि शपः स्यादेः प्राप्तेः । न च नास्ति विशेषः। अन्यदिदानीमिदमुच्यते नास्ति विशेष इति । यदुक्तम्—आयादीनां स्यादिभिरव्याप्तो ऽवकाश इति, स नास्त्यवकाशः" इति *भाष्योक्तेश्चेत्यपि बोद्धव्यम्।

आरम्भेति। यत्तु—कतीनामित्यत्र "षट्चतुर्भ्य" इति नुटि सन्निपातपरिभाषाया अप्राप्तेः सावकाशत्वमस्त्येवेति; तन्न। न ह्येकमित्युक्तन्यायेन "कतेर्नामि"इत्येव सिद्धे* सामान्यसूत्रारम्भेत्यर्थात्। एवञ्च "न तिसृचतसृ" इत्यकरणेन लाघवमिति भावः। नुटीति तु नोक्तम्*।

---

"व्याप्यधर्मावच्छिन्नोद्देश्यताकं लक्ष्यं व्यापकधर्मावच्छिन्नोद्देश्यताकशास्त्रप्रणयनप्रयोजकं न भवति" इत्यर्थकम् इति ह्रस्वत्वस्य ऋत्वव्यापकत्वात् सुयोजम्। परमकतरत् इत्यादौ अद्डादेशो भवत्येव। अङ्गाधिकारे इति भाष्यस्यैकदेश्युक्तित्वे मानाभावात् । अतिप्रसङ्गस्य पूर्वोक्तार्थकल्पनेनाभावादित्याहुः॥

*बाधमाशङ्क्येति*। परत्वात्स्यादिषु पश्चादायप्रत्यये आर्धधातुकोपदेशे ऽकारान्तत्वाभावाद् "अतो लोप" इति न स्यादिति भावः । *भाष्योक्तेश्चेति* । न च—इदं भाष्यम्"आयादयो वा" "सार्वधातुके नित्यम्"इति न्यासपरम्, तथा च यथाश्रुतन्यासकल्पे गोपायिष्यति, गोपिष्यति, गोप्स्यति, इति रूपत्रयं भवति, एतन्न्यासकल्पे चापवादत्वात् "सार्वधातुके" इति नित्यायप्रत्यये गोपायिष्यति इत्येकमेव रूपं स्यादिति फलभेद इति वाच्यम् । "आयादयो वा" "आर्धधातुके" "सार्वधातुके नित्यम्"इति न्यासपरत्वेन भाष्यस्यादोषात् । अत्रार्धधातुके इति शास्त्रं "सार्वधातुके नित्यम्" इतिनित्यायप्रत्ययबाधनायेति न फलभेदः।

*कतेर्नामीत्येव सिद्ध इति* । न च कतेर्नामीति न्यासेऽपि षट्सञ्ज्ञकत्वं निमित्तीकृत्य जायमानो नुट् स्वोपजीव्यषट्संज्ञकत्वविघातककतेर्नामीत्येतत्प्रवृत्तिं प्रति निमित्तं न स्यादिति पुनरपि सन्निपातपरिभाषाविरोध इति वाच्यम् । षट्संज्ञकत्वस्यैकदेशविकृतन्यायेन दीर्घे जातेऽपि सत्त्वेन सन्निपातविघाताभावात् । न चातिदेशिकसन्निपातविघाताभावमादायैतत्परिभाषाप्रवृत्तिप्रतिबन्धो न भवतीति वाच्यम् । तत्रैकदेशविकृतन्यायातिरिक्तातिदेशस्य ग्रहणमिति पूर्वमेवोक्तत्वात् ।

*नोक्तमिति*। भृङ्ग इत्यादौ दीर्घापत्तेरिति भावः । न च "भृञः किन्नुट् च" इत्यत्र नुगेव क्रियत इति न दोष इति वाच्यम् । अनश्वः, अनेषक इत्यादौ प्रत्ययलक्षणेनाङ्गत्वस्य नुट्परकत्वस्य च सत्त्वेन दीर्घाप-

अपदान्तस्य । ष इत्येव सिद्धे मूर्धन्यग्रहणम् "इणः षीध्वम्" इत्यत्र ढविधानार्थं, "रषाभ्याम्" इत्यत्रानुवृत्त्यर्थञ्च । एवञ्च तत्र णग्रहणं, "पदान्तस्य" इति च न कर्त्तव्यमिति भाष्ये स्पष्टम् ।

इण्कोः ॥ वर्गग्रहणञ्चात्वस्यासिद्धत्वात् स्त्राक्षित्वयाद्यर्थम् ।

आदेश ॥ प्रत्ययशब्दस्तदवयवपरो व्याख्यानात्*, सातेः षत्वनिषेधाल्लिङ्गाच्च । तदाह—प्रत्ययावयवेत्यादि । विवृताघोषस्येति । विवृतत्वरूपाभ्यन्तरप्रयत्नवतो ऽघोषरूपबाह्यप्रयत्नवतश्चेत्यर्थः । ठकारवारणायाद्यम् । ऋकारवारणाय द्वितीयम् । रामस्येति । "टाङसि" इति सूत्रे सकारोच्चारणं तु "इण्कोः" इत्यनुवृत्तावेव तात्पर्यग्राहकमिति भावः ।

सर्वादीनि ॥ तद्गुणसंविज्ञानो*बहुव्रीहिः । आदिशब्दो ऽवयववाची । तेन सर्वशब्दघटित उद्भूतावयवभेदः समूहः समासार्थ इति

---

त्तेः । तत्रापि नुगेव क्रियत इति न दोष इति तु न वाच्यम् । अनेषक इत्यादावेव ङमुडापत्तेः ।

*व्याख्यानादिति* । "लोपे प्रत्ययलक्षणम्" इत्यनेन सिद्धे "प्रत्ययलोपे प्रत्ययलक्षणम्" इति करणात्प्रत्ययावयवे प्रत्ययत्वं स्वीक्रियत इति व्याख्यानादिति भावः । अत एव कविभिः कृतमित्यादौ प्रत्ययरूपो यो विसर्गस्तस्य षत्वं न भवतीति सामानाधिकरण्येनान्वयेऽपि "इदुदुपधस्य" इति षत्वं न भवति । न च-प्रत्ययावयवे प्रत्ययत्वस्वीकारे अचिश्नुसूत्रे ऽजूरूपे प्रत्यये इयङुवङौ भवत इत्यर्थे श्रियौ, भ्रुवावित्यत्रैव इयङुवङौ स्यातां न तु श्रियो भ्रुव इत्यादाविति भाष्यविरोधः' जसवयवाकारेऽपि भवन्मते प्रत्ययत्वस्य सत्त्वात् । एवं रामाणामित्यादौ प्रत्ययावयवे आमि प्रत्ययत्वस्य सत्त्वेन रामञ्चित्यस्य भसंज्ञायां परत्वादल्लोपापत्तिश्च । एवं भूयादित्यादौ प्रत्ययावयवतकारमात्रे प्रत्ययत्वस्वीकारे ऽपृक्तसंज्ञायां हल्ङ्यादिलोपापत्तिश्चेत्यादिदूषणगणपातः, इति वाच्यम् । षष्ठीप्रकृतिप्रत्ययपदप्रयोज्या या विषयता तादृशविषयताश्रयत्वेन प्रत्ययावयवोऽपि गृह्यत इति विवक्षणेन सर्वसामञ्जस्यादिति दिक् ।

*सर्वादीनि । *तद्गुणसंविज्ञान इति* । तस्यान्यपदार्थस्य गुणा उपसर्जनानि ( वृत्तिघटकपदार्था इति यावत् ) संविज्ञायन्ते यत्र स बहुव्रीहिस्तद्गुणसंविज्ञान इत्यर्थः । क्रियान्वयित्वेनेति शेषः । तथा च एकक्रियान्वयित्वेन वृत्तिघटकपदार्थविशिष्टान्यपदार्थवाचकत्वं तद्गुणसंविज्ञानबहुव्रीहित्वम् । यथा 'लम्बकर्णमानय' इत्यत्रान्यपदार्थस्यानयनक्रियायामन्वये वृत्तिघटकपदार्थस्य श्रोत्रस्यापि तस्यामन्वयो ऽनुभवसिद्ध इति लम्बकर्ण इति तद्गुणसंविज्ञानो बहुव्रीहिः । प्रकृते च समुदायरूपान्यपदार्थान्वयिसर्वनामसंज्ञासत्तारूपक्रियायां सर्वशब्दस्यान्वय इति तद्गुणसंविज्ञानम् । तत्र च समुदायस्यैकत्र प्रयो-

बहुवचनम् । उद्भूतावयवभेद इत्यस्यारोपितावयवगतसंख्य इत्यर्थः । तत्र वैयर्थ्यादप्रवृत्तावपि अन्यत्रेषु प्रवर्त्तमाना ऽविशेषात्* सर्वशब्दे ऽपि भवति । सर्वनामानीत्यत्र "पूर्वपदात्" इति णत्वमतएव *निपातनान्न । नाप्राप्ते णत्वे कृतस्य निपातनस्य तद्बाधकत्वात् णत्वसहितमसाधु इति स्पष्टं भाष्ये । 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्'इतिवार्तिकात् शब्दरूपविशेष्य-मादाय ज्ञापकात्तदन्तविधिरित्याह-द्वन्द्वे चेतीति । *प्रथमार्थे सप्तमी । द्वन्द्वः सर्वनामसंज्ञो नेति तदर्थः । न हि तदन्तविधिं विना समुदाये* सञ्ज्ञाप्रवृत्तिरस्ति, या निषिद्ध्येतेति भावः । ननु तदन्तस्यापि सर्वना-

---

नासम्भवेन तद्घटकानामेव तत्रान्वय इत्यन्यत् । न चैवं नागो यज्ञोपवीतं यस्य तत्कर्मकभोजनतात्पर्येण 'नागयज्ञोपवीतं भोजय'इति प्रयुक्ते वृत्तिघटकयज्ञोप-वीतपदार्थस्यान्यपदार्थान्वयिभोजनक्रियान्वयासम्भवात्तस्य बहुव्रीहेस्तत्त्वा-नापत्तिरिति वाच्यम् । संयोगसमवायान्यतरसम्बन्धेन वृत्तिघटकपदार्थवि-शिष्टान्यपदार्थवाचकत्वं तत्त्वमिति विवक्षणेन यज्ञोपवीतस्य संयोगसम्बन्धे-नान्यपदार्थे पुरुषे ऽन्वयेन तत्त्वाक्षतेः । लम्बकर्णमानयेत्यत्रापि कर्णपदार्थस्य खरपदार्थे समवायसम्बन्धेनान्वयोऽस्त्येव । प्रकृतेऽपि सर्वशब्दस्य समुदाये ऽवयवावयविनोः समवायात् समवायसम्बन्धेनान्वय इति सर्वं समञ्जसम् ।

केचित्तु विशेषणोपलक्षणाभ्यां तद्गुणातद्गुणत्वे बहुव्रीहिस्थले व-दन्ति । यथा चित्रगुरिति । अन्यपदार्थस्य यदा कार्यान्वयित्वविवक्षायां गोस्वा-मित्वसद्भावः तदा तद्गुणसंविज्ञानो बहुव्रीहिः । यदा च तदानीं गोस्वामि-त्वाभावेऽपि कदाचित् गवां दर्शनेन तस्मिन् चित्रगुशब्दप्रयोगस्तदाऽतद्-गुणसंविज्ञानो बहुव्रीहिः । लम्बकर्णनागयज्ञोपवीतयोस्तु विशिष्टस्य क्रिया-न्वयकाले कर्णयज्ञोपवीतयोरुक्तसम्बन्धाभ्यां सत्ताविवक्षणेन तत्राऽऽद्य ए-वेति बोध्यम् ।

*अविशेषादिति* । सर्वशब्दनिष्ठाद्यावयवतानिरूपकसमुदायघट-कत्वस्य विश्वादिशब्देष्विव सर्वशब्देऽपि सत्त्वादित्यर्थः । *निपातनान्नेति* । न च कृतणत्वेन यत्र संज्ञाया अवगमस्तत्रैव "पूर्वपदाद्" इति णत्वं भव-ति । अत एव रघुनाथादिशब्दे न णत्वम् । तथा च प्रकृते कृतणत्वेन सं-ज्ञाऽनवगमात् णत्वप्राप्तिरेव नेतीदमसङ्गतमिति वाच्यम् । पाणिनिना कृतण-त्वे संज्ञाकरणे कृतणत्वेन संज्ञावगमसम्भवाण्णत्वप्राप्तेरित्याशयात् । रघुनाथा-दिशब्दानां तु अनादिसंज्ञात्वेन तत्रैवं वक्तुमशक्यत्वात् ।

*प्रथमार्थे सप्तमीति* । वस्तुतस्तु "आकाशे त्रिदिवे नाक" इत्यादा-विव वाचकत्वं सप्तम्यर्थः । तथा च वाचकतासम्बन्धेन सर्वनामपदं द्वन्द्वे न तिष्ठ-तीति यथाश्रुतमेव सङ्गतमिति प्रथमार्थे सप्तमीत्यस्य नोपयोगः । *समुदा-य इति* । न च अश्व इतरश्चानयोस्समाहार एतरम् । अश्वान्यश्चानयोस्समा-

मत्वे "सर्वनाम्नः स्मै" इत्यादिषु सर्वनाम्नो विहितस्य ङेः स्मै इत्यर्थाश्रयणेनातिसर्वादौ दोषाभावादुपसर्जनप्रतिषेधो न कार्य इति भाष्यसूचितं* विरुद्ध्येतेति चेन्न । "प्रयोजनं सर्वनामाव्ययसञ्ज्ञायाम्" इतितदन्तविधिसूत्रस्थवार्त्तिकभाष्यविरोधेनास्य भाष्यस्यैकदेश्युक्तित्वात्* । इत एव वाऽरुचेर्भाष्ये पक्षान्तरोपादानम् । न च ऋष्युक्तपक्षेषु नारुचिरिति भ्रमितव्यम् ।

---

हार आन्यम् इत्यादौ परादिवद्भावेन सर्वादित्वस्य सत्त्वात्सर्वनामसञ्ज्ञानिषेधार्थं "द्वन्द्वे च" इति सूत्रं चरितार्थमिति कथं तदन्तविधिज्ञापकत्वम्, फलं च स्मायाद्यभावः; इति वाच्यम् । पूर्वोत्तरनिमित्तककार्य्यात्पूर्वमन्तरङ्गोऽप्येकादेशो नेत्यस्य वस्तुतः पूर्वोत्तरनिमित्तककार्य्ये कर्तव्ये ऽन्तरङ्गत्वाज्जातोऽप्येकादेशो ऽसिद्धो भवतीत्यर्थः । तथा च "द्वन्द्वे च"इति निषेधस्य वस्तुतः पूर्वोत्तरपदनिमित्तकत्वेन तस्मिन् कर्त्तव्ये जातस्याप्येकादेशस्यासिद्धत्वेन "द्वन्द्वे च"इति निषेधवैयर्थ्यस्य स्पष्टत्वात् । अत एव सरूपाणामित्यत्र विभक्तौ परतः प्रातिपदिकैकशेषकल्पे विभक्त्यन्तानामेकशेषकल्पे च न फलभेदः । अन्यथा रामावित्यादौ राम सु राम सु इत्यनयोस्सारूप्याद्विभक्त्यन्तैकशेषकल्पे एकशेषो भवति, विभक्तौ परतः सरूपाणामेकशेषकल्पे च राम राम औ इति स्थिते ऽन्तरङ्गत्वाद् वृद्धौ परादिवद्भावेन विभक्तिपरकत्वस्य सत्त्वेऽपि राम इत्यस्य रामौ इत्यनेन सारूप्याभावादेकशेषो न स्यादिति फलभेदः स्यात् । मम तु वस्तुतः पूर्वोत्तरनिमित्तकैकशेषे कर्त्तव्ये एकादेशस्यासिद्धत्वात्सारूप्यमस्त्येवेति न फलभेदः । *भाष्यसूचितमिति* । "अङ्गाधिकारे पञ्चम्या यदुच्यते तद् गृह्यमाणविभक्तेर्भवति" इति भाष्यस्य गृह्यमाणाद्विहितविभक्तेरित्यर्थकरणेनेति भावः ।

*एकदेश्युक्तित्वादिति* । वस्तुतस्तु नेदं भाष्यमेकदेश्युक्तिः । तथा हि—भाष्ये "सञ्ज्ञोपसर्जनानां प्रतिषेधो वक्तव्यः" इत्युक्त्वा पूर्वपरेति सूत्रे ऽसञ्ज्ञायामिति योगं विभज्य यानि सर्वादीनि तान्यसञ्ज्ञायां द्रष्टव्यानीति सञ्ज्ञाभूतानां सर्वादिषु पाठाभावादेव पर्य्युदास इति सञ्ज्ञाप्रतिषेधो ऽनर्थक इत्युक्त्वोपसर्जनप्रतिषेधखण्डनाय समाधानत्रयमुक्तम् । तत्र प्रथमं तावद् "अनुपसर्जनात्" इतियोगः प्रत्याख्यायते इत्यनुपसर्जन अ अदिति छेदं कृत्वा अ इत्यनेन त्यदादीनामः अदित्यनेनाद्ड्डतरादिभ्य इत्यद्ड् चानुपसर्जनस्यैव भवतीति अतितत्, अतिकतरं कुलमित्यादौ न दोष इत्युक्तम् ।

तस्यायम्भावः । स्त्रियामित्यस्य गृह्यमाणविशेषणत्वाद्वहुकुरुचरेत्यादौ टिदर्थगतस्त्रीत्वस्यासत्त्वान्न ङीपः प्राप्तिरित्यनुपसर्जनाधिकारो व्यर्थः । स्त्रीप्रत्ययप्रकरणे सर्व्वत्र "वनोर च"इत्येतद्विहाय स्त्रियामिति गृह्यमाणविशेषणमेव । न च कुम्भकारेय इत्यापत्तिवारणाय तदन्तविधिज्ञापना-

वृद्धिसञ्ज्ञासूत्रे "अपरितुष्यन् खल्वपि भवान् 'अनाकृतिः' 'लिङ्गेन वा' इत्याह" इति वार्तिककारं प्रति भाष्योक्तेः ।

अकचेति । "कुत्सिते" इतिसूत्रोक्तभाष्यरीत्या संख्याकारकाभ्यां पूर्णार्थस्येतरान्वयेन सुबन्तादेव तद्धितोत्पत्तेः, प्रत्यासत्त्या सर्वनामप्रकृतिकसुबन्तात्तदर्थगतकुत्साविवक्षायां सर्वनामावयवटेः प्रागकजित्यर्थात्तदन्तसञ्ज्ञाऽभावे तदसिद्धिरिति भावः । एवमेव त्रलाद्यसिद्धिर्बोध्या । एतेनावयवनिष्ठसर्वनामत्वेन तत्सिद्धिरित्यपास्तम् ।

---

र्थमनुपसर्ज्जनाधिकारः सार्थक इति वाच्यम् । अनुपसर्ज्जनाधिकाराभावेऽपि "शूद्रा चामहत्"इत्यत्रामहत्पूर्व्वेतिपर्य्युदासेन सामान्यतः स्त्रीप्रत्ययप्रकरणे तदन्तविधिरस्तीति ज्ञापयितुं शक्यत्वात् । न चापिशलेन प्रोक्तां मीमांसामधीते आपिशला ब्राह्मणीत्यादावण्णन्तत्वप्रयुक्तङीब्वारणायानुपसर्ज्जनाधिकारः सार्थक इति वाच्यम् । प्रोक्ताणर्थगतस्त्रीत्वमादायैकवारं ङीपो जातत्वेन लक्ष्येलक्षणन्यायेन पुनस्तस्याप्राप्त्या ऽध्येत्रणो लुप्तत्वेनाऽणो यो ऽकारस्तदन्तादित्यर्थेन "वर्णाश्रये नास्ति प्रत्ययलक्षणम्"इति परिभाषया ऽणि यो ऽकारस्तदन्तत्वस्यानेतुमशक्यत्वादध्येत्रर्थगतस्त्रीत्वमादाय ङीपो ऽप्राप्तेरनुपसर्ज्जनाधिकारस्योपयोगाभावात् । न चैवमप्यातिसर्व्वायेत्यादौ स्मायाद्यापत्तिर्दुर्वारा अअदुडावेवानुपसर्ज्जनस्य भवत इत्युक्तत्वादिति वाच्यम् । "डाबुभाभ्यामन्यतरस्याम्" इतिसूत्रादन्यतरस्यामित्यनुवर्त्यान्यतरस्य अनुपसर्ज्जनस्य आमिति विवक्षणेनादोषात् । तथा हि अन्यतरस्येत्यत्रान्यतरशब्दो ऽर्शआद्यजन्तः । तथा चान्यतरस्येत्यस्यान्यतरशब्दघटितसर्व्वविश्वेत्यादिसमुदायस्येत्यर्थः । तत्रानुपसर्ज्जन आम् ज्ञानमित्यर्थः । आमिति अम्धातोर्गत्यर्थाद्भावे क्विप् । ये गत्यर्थास्ते ज्ञानार्था इति प्रकृते अम्धातुर्ज्ञानार्थकः । अनुपसर्ज्जनेति लुप्तषष्ठ्यन्तं पदम् । अ अदिति प्रकृतार्थकरणस्योदाहरणम् ।

द्वितीयं च समाधानम् "अथवा अङ्गाधिकारे पञ्चम्या यदुच्यते गृह्यमाणविभक्तेस्तद् भवति"इति । तस्यायम्भावः-"सर्व्वनाम्नः स्मै" "ङसिङ्योःस्मात्स्मिनौ" "जसः शी" "आमि सर्व्वनाम्नः सुट्" "अद्ड् डतरादिभ्यः पञ्चभ्यः" "त्यदादीनाम" इत्यादौ "सप्तम्यास्त्रल्"इत्यादौ च सर्व्वत्र स्वाव्यवहितोत्तरत्वं स्वार्थगतसङ्ख्याभिधायित्वमेतदुभयसम्बन्धेन स्वाविशिष्टङेप्रभृतीनां स्मायाद्यादेशा भवन्तीत्यर्थ इति अतितत्, अतिकतरं कुलम्, अतिसर्व्वायेत्यादौ न दोषः । गृह्यमाणविभक्तेरिति भाष्यस्य गृह्यमाणार्थगतसङ्ख्याभिधायिविभक्तेरित्यर्थः । एतत्कल्पे च सर्व्वादीनीत्यत्र तदन्तविधिर्नास्तीति अतिसर्वायेत्यादौ सर्व्वनामार्थगतसङ्ख्याभिधायिङेप्रत्ययस्याभावान्न स्मायादेशः । परमसर्व्वस्मायित्यादौ तु समुदायस्य सर्व्वनामत्वाभावेऽपि ङेप्रत्ययस्य सर्व्वनामार्थगतसङ्ख्याभिधायित्वस्य सर्व्वनामाव्यवहितोत्तरत्वस्य च सत्वान्न दोषः ।

जसः शी ॥ दीर्घोच्चारणमुत्तरार्थं वारिणी इति । "अदन्तात्"इति–परस्येत्यनेनान्वेति । अत इत्यस्याङ्गविशेषणतया अदन्तादङ्गादित्यर्थः । सर्वनाम्न इति तु विहितविशेषणम्* । तस्य तु नाङ्गं विशेष्यमावृत्तौ मानाभावात्* । तेन वर्णाश्रमेतरा मासपूर्वा इत्यत्र न । अत एव "विभाषा जसि"इति चरितार्थम्* । अङ्गसञ्ज्ञानिमित्तस्यादन्तात्सर्वनाम्नो विहितस्येत्यर्थस्तु न । ते, तेषामित्याद्यसिद्धेः । अत्वविधौ विषयसप्तमी तु न । तस्मिन्निति परिभाषाबाधे मानाभावात् । प्रागित्सञ्ज्ञाया इति । प्रत्ययादित्वज्ञानाभावात्तज्ज्ञानाभाव इति भावः ।

---

अथवा सर्वेषां नामानि सर्व्वनामानीति तृतीयं समाधानमुक्तम् । अत्र कल्पे च "प्रयोजनं सर्व्वनामाव्ययसञ्ज्ञायाम्"इति वार्तिकेन सर्वादीनीत्यत्र तदन्तविधिरस्तीति सञ्ज्ञोपसर्ज्जनप्रतिषेध इति वार्त्तिककल्पे तत्प्रत्याख्यानकल्पेषु त्रिषु च न फलभेद इति भावः । न च—तृतीयकल्पेऽपि तदन्तविधेर्नोपयोगः । परमसर्व्वस्मायित्यादावङ्गाधिकारे तदन्तविधिनैव दोषाभावात् । अतिसर्व्वायेत्यादौ सर्व्वेत्यस्य सर्व्वादित्वमेव नास्ति पदार्थान्तरोपादानात् । परमसर्वत्रेत्यादौ तु सर्वनाम्नः परीभूता या सप्तमी तदन्तात्परेत्यर्थ इति न दोषः, इति वाच्यम् । मासपूर्वायेत्यादौ वर्णाश्रमेतराणामित्यादौ च स्मायाद्यभाववारणाय विहितविशेषणस्यावश्यकत्वेन मासपूर्व्वायेत्यादाविव परमसर्व्वस्मै इत्यादावपि स्मायाद्यादेशानापत्त्या तदन्तविधेरावश्यकत्वादिति दिक् ।

*विहितविशेषणमिति* । वस्तुतस्तु "जसः शी"इत्यस्य सर्वनामाभिन्नं यददन्तमङ्गं (तदादि वा) ततः परीभूतस्य जसः शी भवतीत्यर्थकरणेन वर्णाश्रमेतरा इत्यादौ दोषाभावेन विहितविशेषणं व्यर्थम् । तस्मादिति परिभाषायां जागरूकायां विहितपदाध्याहारस्य कर्त्तुमशक्यत्वात् ।

*मानाभावादिति* । तस्मिन्निति परिभाषाशास्त्रीयोद्देश्यतावच्छेदकसम्पत्तये 'असति प्रमाणान्तरे यावत्यः सप्तम्यस्ताः सर्व्वा औपश्लेषिकाधिकरणबोधिका मन्तव्या'इत्येतन्मूलकव्याख्यानपरिभाषाशेषभूत "उपपदविभक्तेः कारकविभक्तिर्बलीयसी"इतिपरिभाषाबाधे मानाभावादिति भावः । *चरितार्थमिति* । "द्वन्द्वे च"इति निषेधे प्राप्ते शीभावे कर्त्तव्ये विकल्पेन निषेधार्थं तत् । यदि द्वन्द्वे चेति निषेधेन शीभावो न प्रतिषिध्येत तर्हि "विभाषा जसि"इति शीभावे कर्तव्ये विकल्पेन सर्व्वनामसञ्ज्ञानिषेधो व्यर्थः स्यादिति भावः । "द्वन्द्वे च"इत्यनेन समुदायस्य निषेधेऽपि अवयवस्य निषेधाभावात् सर्व्वनामान्ताङ्गात्परत्वे शीभावस्य दुर्वारत्वेन "विभाषा जसि"इत्यनेन शीभावे कर्तव्ये द्वन्द्वस्य सर्व्वनामसञ्ज्ञाविकल्पस्योपयोगाभावात् ।

परे तु अनुबन्धत्वयोग्यतयाऽत्रापि तन्निषेधप्रवृत्त्या शित्त्वादेव सर्वादेशः । इत्सञ्ज्ञायोग्यशकारवत्त्वमेव तत्सूत्रे शित्त्वम् । अत एव काणोर्विषये 'नानुबन्धकृतमसारूप्यम्'इति विकल्पाभावः । अन्यथा* कादीनां कादेर्वाक्यार्थबोधोत्तरं प्रत्ययत्वज्ञाने इत्सञ्ज्ञादेः प्रवृत्त्या वाक्यार्थबोधरूपतत्प्रवृत्तिकाले ऽनुबन्धज्ञानाभावेन विकल्पो दुर्वारः । पश्चादनुबन्धत्वज्ञाने ऽपि जातनिवृत्त्ययोगात् । यदि तत्र पश्चात्तज्ज्ञाने तन्निवृत्तिस्तर्ह्यत्रापि पश्चात्तत्त्वज्ञाने सर्वादेशत्वस्यापि निवृत्त्यापत्तिः । *ध्वनितश्चेदं "लुटः प्रथमस्य" "अनेकाल्शित्"इत्यादिसूत्रेषु भाष्ये इति प्राहुः* ।

---

*अन्यथा*-अनुबन्धपदस्य सङ्केतसम्बन्धेनेत्पदविशिष्टार्थकत्वे ।

*ध्वनितमिति* । "लुटः प्रथमस्य" इतिसूत्रभाष्ये "डाविकारस्य शित्करणं सर्वादेशार्थम् । डाविकारः शित्कर्तव्यः । किं प्रयोजनम् । सर्वादेशार्थम् । शित्सर्वस्येति सर्वादेशो यथा स्यात् । अक्रियमाणे हि शकारे ऽलोऽन्त्यस्य विधयो भवन्ति इत्यन्त्यस्य प्रसज्येत" इत्युक्तम् । अत्र कैयटः-डाविकार इति । डादेश इत्यर्थः । नानुबन्धकृतमनेकाल्त्वमित्यन्त्यस्य स्यादिति डाश्वक्तव्य इत्याह । तदग्रे भाष्ये "सिद्धमलोऽन्त्यविकारात् । सिद्धमेतत् । कथम् । अलोऽन्त्यविकारात् । अस्त्वयमलोऽन्त्यस्य । का रूपसिद्धिः । कर्त्ता । डिति टेर्लोपात् लोपः । डिति टेर्लोपेन लोपो भविष्यति । अभत्वान्न प्राप्नोति । डित्करणसामर्थ्याद् भविष्यति"इत्युक्तम् । डितीति । आकारे डिति परतः सतकारस्य टिसंज्ञकस्य लोपो डित्करणसामर्थ्याद्भविष्यतीति । एतद्भाष्ये अन्त्यादेशत्वमभ्युपेत्य टिलोपेन समाहितम् । पूर्वपक्षिणा च डादेशस्य शित्वं कर्तव्यमित्युक्तम् । एतेन ध्वनितम् । यद्यनुबन्धपदस्यानुबन्धत्वयोग्ये लक्षणा न स्यात् तदा आदेशप्रवृत्तिकाले ऽप्युक्तरीत्या ऽनुबन्धत्वाभावेन नानुबन्धेत्यस्याप्राप्त्या ऽनेकाल्त्वेनैव सर्वादेशत्वे सिद्धे पूर्वपक्षसमाधानयोर्निर्दलत्वापत्तिरिति । *प्राहुरिति* । न च डादिविषये सर्व्वादेशत्वं विना ऽनुबन्धत्त्वस्याभावादानुपूर्व्यात्सर्व्वादेशत्वं सिद्धमिति परिभाषेन्दुशेखरग्रन्थविरोध इति वाच्यम् । डादिविषये सर्वादेशत्वाभावेन प्रत्ययादित्वाभावादित्सञ्ज्ञाया अप्रवृत्त्या स्वोपजीव्यानुबन्धत्वविघातादुपजीव्यविरोधेन डादिविषये नानुबन्धकृतमिति परिभाषाया अप्रवृत्तावपि प्रकृते एतत्परिभाषाप्रवृत्तावपि शित्वात् सर्वादेशस्य जायमानत्वेन स्वोपजीव्यानुबन्धत्वविघातस्याभावान्नानुबन्धकृतमिति परिभाषया शी सर्वादेशो न भवतीति परिभाषेन्दुशेखरग्रन्थविरोधाभावात् ।

अन्ये तु "मिदचो ऽन्त्यात्परः""आद्यन्तौ टकितौ""ङिच्च"इत्यादिवत् "अनेकाल्शित्सर्वस्य"इत्यप्यनन्यार्थङित्त्वेष्विवानन्यार्थशित्त्वेष्वेव प्रवर्त्तते । अत एव तातङि ङिच्चेत्यादि न प्रवर्तते । तथा चानुबन्धत्वघटितधर्मनिमित्तकपरिभा-

अतः सर्वनाम्न इति । अदन्तादङ्गात् परस्य *सर्वनाम्नो विहितस्येत्यर्थः । तेन मासपूर्वायेत्यत्र स्मै न ॥

ङसिङ्योः ॥ स्मात्स्मिनोः "हलन्त्यम्" इति न । "न विभक्तौ" इति निषेधात् । यद्यपि इत्त्वप्रवृत्तिकाले न विभक्तित्वज्ञानं, तथापि विभक्ताविंत्यस्य विभक्तित्वयोग्ये इत्यर्थान्न दोषः । अत एव सूत्रे तुग्रहणं चरितार्थम् ।

आमि स* ॥ "आज्जसेरसुक्" इत्यत आदिति वर्त्तते । पञ्चत्रिंशादिति । तेन सर्वार्थप्रतिपादकत्वे ऽपि कृत्स्नसकलादिशब्दानां नेति भावः । सर्वविश्वौ बुद्धिस्थानेकसंख्याकावयवारब्ध*समुदाये शक्तौ* ।

---

भाषाशास्त्रमनन्यार्थेत्सञ्ज्ञकेष्वेव प्रवर्त्तते इति 'जसः शी' इत्यादावनेकाल्त्वादेव सर्वादेशः । जसःशीति शकारस्य "विभाषा ङियोः" इत्यादौ विशेषणार्थतया चारितार्थ्येनानन्यार्थत्वाभावात् । अत एवानन्यार्थङित्त्वेष्विति प्रतीकमुपादाय "तद्बलकल्प्यमानार्थानुवाद एव ङित्त्वेत्येतत् अर्थान्तरकल्पनानिवृत्त्यर्थमिति भावः । परिभाषाणां च प्रायेण पक्षप्राप्तार्थानुवादेनार्थान्तरनिवृत्त्यर्थत्वं "व्रीहीनवहन्ति" इत्यादिवदिति स्पष्टमेव" इति शेखरोक्तं सङ्गच्छते । यद्वा "नानुबन्धकृतमनेकाल्त्वम्" इति परिभाषायामनुबन्धपदमनुबन्धत्वयोग्यपरमित्यत्र न मानम् । पूर्वभाष्यं तु एकदेश्युक्तिः । अत्र तथास्वीकारे फलाभावात् ! अत एवानायासेन डाप्लादौ सर्वादेशत्वं सिद्धम् इत्याहुः । *सर्वनाम्नो विहितस्येति* । अस्यापि पूर्ववदेव सर्वनामाभिन्नं यददन्तमङ्गं (तदादि वा) तस्मात्परस्य ङेइत्येतस्य स्मै भवतीत्यर्थ इति वर्णाश्रमेतरायेत्यादौ न दोष इति बोध्यम् । एवं "ङसिङ्योः स्मात्स्मिनौ" इत्यस्यापि सर्वनामाभिन्नं यददन्तमङ्गं (तदादि वा) ततः परयोर्ङसिङ्योः स्मात्स्मिनौ भवत इति मासपूर्वात् मासपूर्वे इत्यादौ न दोषः । एवमेव "आमि सर्वनाम्नः सुट्" इत्यस्यापि सर्वनामाभिन्नं यददन्तमङ्गं (तदादि वा) तस्मात्परस्यामः सुडित्यर्थ इति वर्णाश्रमेतराणामित्यादौ दोषाभाव इति सुधियो विभावयन्तु ।

*आमि सर्वनाम्नः सुट्* । आमीति सप्तम्याः "त्रेस्त्रय" इत्यादौ चारितार्थ्येन, आदिति पञ्चम्या "आज्जसेरसुक्" इत्यादौ चारितार्थ्येन परत्वात्पञ्चमीनिर्देशस्य प्रबलत्वेन तस्मादितिपरिभाषा षष्ठ्यंशसहितोपतिष्ठते, तस्मिन्निति परिभाषा च षष्ठ्यंशाविकला । तथा चाऽऽमव्यवहितपूर्वत्वविशिष्टं यत्सर्वनामाभिन्नमदन्तमङ्गं तदव्यवहितोत्तरत्वविशिष्टस्य सुडिति सूत्रार्थः । *अनेकसङ्ख्याकावयवारब्धेति* । अनेकसङ्ख्याकावयवारब्धत्वं विना समुदायत्वस्यैवासम्पत्त्या समुदाये इदं विशेषणमुपरञ्जकमिति बोध्यम् । *शक्ताविति* । वस्तुतस्तु विधेयव्याप्या या उद्देश्यतावच्छेदकव्यापिका पर्याप्ति-

तस्य समुदायस्यानुद्भूतावयवभेदत्वे* एकवचनं, यथा—'सर्वो लोक' इति । तादृक्समुदायद्वयादिविवक्षायां द्विवचनादि—सर्वौ व्यूहौ, सर्वे व्यूहा इति । यदा ऽप्युद्भूतावयवभेदसमुदायविवक्षा* तदाऽपि बहुवचनं—सर्वे घटा इति ।

पूर्वपरावर ॥ व्यवस्थाऽसंज्ञावर्त्तिन एवेमे सर्वादय इत्यर्थः । एवमुत्तरसूत्रद्वये ऽपि ।

---

स्तत्पर्याप्तिकयावत्त्वावच्छिन्ने तयोः शक्तिर्बोध्या । तेन "सर्वाणि द्रव्याणि रूपवन्ति"इति न प्रयोगः । उद्देश्यतावच्छेदकद्रव्यत्वव्यापकपर्याप्तेः विधेयरूपवत्त्वाऽव्याप्यत्वात् । वाय्वादौ तदभावात् । सर्वे घटा रूपवन्त इत्यत्र तु घटत्वव्यापकपर्याप्तेः रूपवत्त्वव्याप्यत्वात्तादृशप्रयोगोपपत्तिः । यदि तु प्रक्रान्तविषयिण्येव मूलोक्ता शक्तिरिति तदा तु मूलोक्तिरपि साध्व्येव । घटादयः सन्ति, जलं शीतमस्ति, अग्न्यादिकं तेजः—( एतानि ) 'सर्वाणि द्रव्याणि रूपवन्ति' इति प्रयोगदर्शनात् । अनेकत्वावच्छिन्नेऽपि तयोः शक्तिः । तेन सर्वं गगनमित्यादयो न प्रयोगा इत्यन्यत्र विस्तरः । *अनुद्भूतावयवभेदत्वे इति* समुदायत्वगता समुदायगता वा यत्रैकत्वसङ्ख्या विवक्ष्यते तत्रानुद्भूतावयवभेदत्वं बोध्यम् । *उद्भूतावयवभेदसमुदायविवक्षेति* । अवयवगतबहुत्वसङ्ख्याविवक्षेत्यर्थः ।

परममूले *द्वित्वविशिष्टस्य वाचक इति* । स्वानधिकरणवृत्तित्व-स्वसजातीयमात्रवृत्तित्वोभयसम्बन्धेन स्वविशिष्टं यद् द्वित्वं तत्समानाधिकरणभेदप्रतियोगितावच्छेदकतासम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववद् द्वित्वमुभशब्दप्रवृत्तिनिमित्तं बोध्यम् । साजात्यं च एकवचनार्थैकत्वपरिष्कारघटकसाजात्यवत् स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकवत्त्वरूपेण-ग्राह्यम् । इदमेव द्वित्वं द्विवचनार्थोऽपि । यथोभौ घटपटावित्यादौ स्वं द्वित्वं तदनाधिकरणवृत्तित्वं—स्वसजातीयमात्रवृत्तित्वमेतदुभयसम्बन्धेन स्वविशिष्टद्वित्वस्याप्रसिद्धावपि तद्वृत्तिभेदप्रतियोगितावच्छेदकत्वरूपसम्बन्धस्यैतद्द्वित्वे ऽभावात्स्वाभाववत्त्वं स्वस्मिन् सुलभमिति लक्षणसमन्वयः । भूतले घटादित्रयदशायां मेषत्रयादेर्योगसम्बन्धित्वे च नानाद्वित्वानां स्वानधिकरणवृत्तित्व-स्वसजातीयमात्रवृत्तित्वोभयसम्बन्धेन द्वित्ववैशिष्ट्यस्य परस्परं सत्त्वात् चालनीन्यायेन सर्वेषामेव स्वविशिष्टद्वित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वमेवेति सम्बन्धप्रसिद्धिः । तथा च, तत्र तादृशसम्बन्धस्यैव सत्त्वात् तत्सम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वं दुर्लभमिति न तत्र तादृशप्रयोगः, नवा मेषत्रयादिकरणकयागादृष्टसिद्ध्यापत्तिः । स्वसजातीयमात्रवृत्तित्वनिवेशादुभौ घटाकाशावित्यादौ यत्किंचिद्घटाकाशोभयवृत्तिद्वित्वे यत्किंचिद्घटाकाशोभयगतद्वित्ववैशिष्ट्यस्य सत्त्वेऽपि न निरुक्तद्वि-

नित्यं द्विवचनान्त इति । द्विवचनान्त एवेत्यर्थः । अकजर्थ इति । ननु काकचोः को विशेषः । प्रत्ययस्वरचित्स्वराभ्यामन्तोदात्तत्वस्यैव सत्त्वात् । न च सुबन्तात्तद्धितोत्पत्त्या चित्त्वप्रयुक्तमन्तोदात्तत्वम् 'उभकाभ्याम्'इत्यादौ सुबन्तस्य, के तु प्रकृतेरिति विशेष इति वाच्यम् । तद्धितविधौ प्रातिपदिकादित्यधिकारेण प्रातिपदिकस्यैव प्रकृतित्वात् । स च जायमानो न्यायात्सुबन्तात्पर इत्यन्यदेतत् । युष्मदस्मद्विषये तु वचनात्सुबन्तस्यैव प्रकृतित्वं, तस्यैव टेः प्रागकजिति बोद्ध्यम् । न चाकचि तन्मध्यपतितन्यायेन तस्योभग्रहणेन ग्रहणे उभकाववयवौ यस्येत्यर्थे उभकशब्दादयच्युभकय इति रूपं, के तु नेति विशेषः । "कश्चेदानीं काकचोर्विशेषः" इति भाष्यप्रामाण्येन तेषामनभिधानादिति शङ्कते—न चेति ।

द्विवचनपरत्वाभावेनेति । अकचि तन्मध्यपतितन्यायेनोभशब्दस्य द्विवचनपरत्वं, के तु तेन व्यवधानान्न तस्य तत्त्वमित्यर्थः । "उभादुदात्त" इतिसूत्रे भाष्यकृता ऽयचः प्रत्ययान्तरत्वेन व्याख्यानान्महाविभाषासम्बन्धस्यावश्यकत्वेन नित्यग्रहणमयोग्यं सत् योगविभागेनोभशब्दाद्वृत्तिविषये ऽत्यन्तस्वार्थिकायज्विधानार्थम् । अयश्च तद्विषये सुबुत्पत्तेः पूर्वमेव, स्वार्थिकत्वेनान्तरङ्गत्वात् । अत एवायज्विशिष्टस्योभस्य सर्वनामत्वात्सर्वनामप्रकृतिकसप्तम्याद्यन्तत्वेन त्रलाद्युत्पत्तिः । अत्र नित्यशब्दस्य वाच्यार्थविरोधान्महाविभाषाया असम्बन्धः ।

---

त्वलक्षणाव्याप्तिः । सङ्ख्यामात्रं द्वित्वं नोभशब्दप्रवृत्तिनिमित्तं न वा द्विवचनार्थः । उभावाकाशावित्यादिप्रयोगाणां प्रामाण्यापत्तेः । धवद्वयखदिरद्वयतात्पर्येण धवखदिरौ छिन्धीत्यादिप्रयोगाणां प्रामाण्यापत्तेश्च । न च द्वित्वत्वेन रूपेण नानाद्वित्वावगाहिबोधो ऽव्युत्पन्न इति वाच्यम् । "सारस्वतौ मेषौ भवतः" 'ब्राह्मणाभ्यां ब्राह्मणाभ्यां देहि'इत्यादौ द्वित्वत्वेन नानाद्वित्वावगाहिबोधदर्शनेनैतादृशद्वित्वावगाहिबोधो न भवतीति वक्तुमशक्यत्वात् । न चैवमप्युभावाकाशावित्यादिप्रयोगवारणार्थमुद्देश्यतावच्छेदकव्याप्यत्वविशिष्टपर्याप्तिसम्बन्धेन द्वित्वस्यान्वय इति विवक्षणेनोक्तदोषानवकाशान्न परिष्कृतद्वित्वमुभशब्दप्रवृत्तिनिमित्तं, न वा द्विवचनार्थ इति कथनस्योपयोग इति वाच्यम् । 'उभौ धवखदिरौ छिन्धि' इत्यादावुद्देश्यतावच्छेदकधवत्वव्याप्यत्वस्य खदिरत्वव्याप्यत्वस्य च द्वित्वेऽभावेनैकैकधवैकैकखदिरतात्पर्येण तादृशप्रयोगानापत्तेः । तादृशप्रयो-

अयमप्याद्युदात्त एवोदात्तग्रहणानुवृत्तेः । अयश्च वार्तिकप्रामाण्याद्यत्रोभ-*शब्दस्योभयशब्दस्य* वा द्विवचनविषयत्वाभावसम्भावना तत्रैव । अत एवोभयोर्वास इत्यादौ "शयवास"इत्यलुकि नायच् । तद् ध्वनयन् वार्तिकमाह—उभयोऽन्यत्रेति । द्विवचनपरत्वाभावे इति । तत्परत्वविषयत्वाभावे इत्यर्थः । उभयो मणिरित्यादौ तु न । "लिट्यभ्यासस्योभयेषाम्"इतिनिर्देशेन योगविभागस्येष्टसिद्ध्यर्थत्वेन* च तस्य क्वचिदप्रवृत्तेः । अतो रूपाद्यन्ते नायच् । रूपादेरस्मादनभिधानमेव वा ।

---

गोपपत्तये शुद्धपर्याप्तिसम्बन्धेन द्वित्वस्यान्वयस्वीकारे धवद्वयखदिरद्वयतात्पर्य्येणोभौ धवखदिरौ छिन्धीतिप्रयोगस्योभावाकाशावित्यादिप्रयोगस्य चापत्तेर्दुर्वारत्वादिति दिक् ।

*उभशब्दस्येति* । अयच्प्रवृत्त्यभावसम्भावनाप्रयोज्या यत्रोभशब्दस्य द्विवचनपरत्वसम्भावना ततो ऽन्यत्रायजिति भावः । यद्युभशब्दादयच् न स्यात्तर्ह्युभशब्दस्य द्विवचनपरत्वं स्यादिति यत्र सम्भाव्यते ततो ऽन्यत्रायच् साधुरिति यावत् । अत एवोभे भद्रे इति सिद्धम् । यद्युभशब्दादयच् न स्यात्तर्हि टापि पूर्वान्तवद्भावेन टाबन्ते उभशब्दत्वस्य सत्त्वाद् द्विवचनपरकत्वमेवेति तत्रायचो ऽसाधुत्वात् । नन्वेवं उभतयाविति रूपं न स्यात् । यद्ययज् न स्यात् तर्हि तयपि तेन व्यवधानादुभशब्दस्य द्विवचनपरकत्वाभावेन अपवादायज्विषयत्वेनोत्सर्गतयपोऽप्रवृत्तेः । एवं भाष्यकृन्मते उभयत उभयत्रेत्याद्यसिद्ध्यापत्तिश्च । यद्ययज्न स्यात्तर्ह्युभशब्दस्य सर्वादौ पाठाभावात्तत्प्रकृतिकसप्तम्याः सर्वनामप्रकृतिकत्वाभावेन त्रलाद्यनुत्पत्तौ उभशब्दस्य द्विवचनपरत्वमेवेति ततोऽन्यत्र न जातमिति तत्रायचः साधुत्वस्य दुरुपपादत्वादिति चेत्तत्राह—*उभयशब्दस्य वेति* अयच्प्रवृत्तिसम्भावनाप्रयोज्या यत्रोभयशब्दस्य द्विवचनपरत्वसम्भावना ततोऽन्यत्रायच् साधुरिति भावः । तथा चोभतयाविति रूपं,भाष्यमते उभयत्रेत्यादि च सिद्ध्यति । यद्युभशब्दादयच् स्यात्तर्हि अयजन्तस्य द्विवचनपरत्वमेवेति ततोऽन्यत्रेति न जातमिति अपवादविषयत्वाभावेनोत्सर्गतयप्प्रवृत्तेः । एवं यद्युभशब्दादयच् स्यात्तर्हि भाष्यमते ऽयजन्तोभयशब्दस्य सर्वादौ पाठात्सर्वनामत्वेन तदुत्तरसप्तम्याः सर्वनामप्रकृतिकत्वेन तस्मात् त्रलि उभयशब्दस्य द्विवचनपरकत्वाभावेनायचः साधुत्वस्य सूपपादत्वादिति दिक् ॥

*इष्टसिद्ध्यर्थत्वेन चेति* । चिन्त्यमिदम् । विभक्तयोगद्वयमध्ये ऽन्यतरेणान्यतरस्य यत्र वैयर्थ्यं तादृशातोधातोरित्यादिविषय एव "योगविभागादिष्टसिद्धिः"इतिपरिभाषाप्रवृत्तिस्वीकारेण प्रकृते चावयवार्थायचोऽत्यन्तस्वार्थिकायचश्चैकेन योगेन विधातुमशक्यतयाऽपरयोगवैयर्थ्यस्य वक्तुमशक्यत्वात् । अन्य-

अयच्यकच् तु न वाच्यः* । उपजीव्यत्वेन कस्यैव प्राप्तेः* । अपवादस्त्व-न्यत्र* चरितार्थः ।

अत्रेदं चिन्त्यम्—अकजित्त्वभावेत्रोभग्रहणेन सिद्धे सञ्ज्ञाप्रणयनं किम-र्थम्* । अभिव्यक्तपदार्थकत्वात्संज्ञाव्याप्तिः, सर्वनामसाहचर्याच्च । अत एवोपसर्जनव्यावृत्तिरपि । "उभयोऽन्यत्र" इति वार्त्तिके तयप्समानार्थको ऽप्ययज् गृह्यते । उभयो मणिः, उभये देवमनुष्या इति भाष्ये तदुदाहर-णात् । स्वार्थिकस्य च ग्रहणं, तदुपक्रमेण वार्त्तिकप्रवृत्तेः । एवञ्चाव-

---

तरेणान्यतरयोगवैयर्थ्यस्यैतत्परिभाषाबीजत्वाच्च । तथैव स्वयमप्युक्तत्वाच्च । न चैवमपि उभे भद्रे इति न स्यात् । यद्युभशब्दादयच् स्यात्तर्हि तदन्तात् टि-ड्ढेति ङीपि तेन व्यवधानादुभयशब्दस्य द्विवचनपरकत्वन्नास्तीति ततो ऽन्यत्रेति जातमिति अयजापत्तेरिति वाच्यम् । ङीप्यपि तदन्ते लिङ्गवि-शिष्टपरिभाषया उभयशब्दत्वस्य सत्त्वेन उभयशब्दस्य द्विवचनपरकत्वस्यैव सत्त्वात् । न च "विभक्तौ लिङ्गविशिष्टाग्रहणम्" इति ङ्यन्ते लिङ्गविशिष्टपरि-भाषया उभयशब्दत्वन्नायास्यतीति वाच्यम् । विभक्तिनिमित्तककार्ये कर्तव्ये एव तत्परिभाषायाः प्रवृत्त्या अयचो द्विवचनपरकत्वाभावनिमित्तकत्वेन विभ-क्तिनिमित्तकत्वाभावात् तदप्रवृत्तेः । यत्तु—उभयसम्भावनाया ग्रहणेन उभे भद्रे इत्यत्र पूर्वोक्तरीत्याऽऽद्यसम्भावनायाः सत्त्वेनोत्तरसम्भावनाया असत्त्वेऽपि ततोऽन्यत्र न जातमित्यदोषः । मूलोक्तवाशब्दस्तु चार्थे इति बोध्य-मिति केचित् । तन्न, उभयत्रेत्यत्रापि अयच्प्रवृत्त्यभावसम्भावनाप्रयोज्या उभ-शब्दस्य गणे पाठाभावेन त्रलाद्यनुत्पत्त्या द्विवचनपरत्वसम्भावना वर्तते इति ततोऽन्यत्रजातत्वाभावेन तदसिद्ध्यापत्तेरिति ।

ननु अयच्प्रवृत्तिसम्भावनाप्रयोज्या यत्रोभयशब्दस्य द्विवचनपरकत्वस-म्भावना ततोऽन्यत्रायचः साधुत्वस्य स्वीकारे सर्वादौ पुनरप्युभशब्दस्य पाठो व्यर्थः । यद्युभशब्दादयच् स्यादयजन्तोभयशब्दस्य सर्वादौ पाठात्सर्वनामत्वादक-च्युभयशब्दस्य द्विवचनपरत्वमेवेति ततोऽन्यत्रेति न जातमित्ययचो ऽसाधुत्वा-त् केऽपि उभकाविति रूपसिद्धेरत आह—*अयच्यकच् तु न वाच्य इति* । अयच्प्रवृत्तिसम्भावनाप्रयोज्या योभयशब्दस्य द्विवचनपरकत्वसम्भावना तस्यां कर्तव्यायामकच्प्रवृत्तिशङ्का न कर्तव्येत्यर्थः । अत्र हेतुमाह—*उपजीव्यत्वेन कस्यैव प्राप्तेरिति* । "यद्युभशब्दादयच् स्यात्तर्हि अयजन्तोभयशब्दस्य सर्वा-दौ पाठात्सर्वनामत्वादकच् स्यात्" इति अकच्प्रवृत्तिसम्भावनायां "यदि कप्रत्य-यःस्यात्तर्हि द्विवचनलोपेन द्विवचनपरकत्वं न स्यात्" इतिद्विवचनपरकत्वाभाव-सम्भावनाद्वारा कस्योपजीव्यत्वादिति भावः । *अन्यत्रेति* । उपजीव्योपजी-वकभावस्याभावविषये सर्विकेत्यत्रेति भावः । *किमर्थमिति* । न च सर्वा-

यवद्वयारब्धमणिद्वयाविवक्षयोद्भूतावयवभेदविवक्षया वा द्विवचनमस्यासाध्वेव। एतन्मूलकमेवोभयस्यासर्वविभक्तित्वं "तद्धितश्च" इतिसूत्रे कैयटेनोक्तं, तदाह—कैयट इति। हरदत्त इति। अत्रारुचिबीजं प्रागुक्तभाष्यविरोधः॥

भाष्ये तूभशब्दपाठः प्रत्याख्यातः। कप्रत्ययस्याज्ञाताद्यर्थविशिष्टस्वार्थे विधानेन *द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधविषयार्थानुवादकत्वरूपद्विवचनत्वेन वार्त्तिके द्विवचनशब्देन तस्यापि ग्रहणमुभशब्दग्रहणवत्। अत एवोभयोरुभावुभोभावित्यादौ नायच्। तदुक्तं भाष्ये- "केऽप्यन्तरेण वचनं द्विवचनपरो भविष्यति। कथं?, स्वार्थिकाः प्रत्ययाः प्रकृतितो ऽविशिष्टा भवन्तीति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवति" इति। इति—हेतोः, प्रकृतेः—कादिप्रकृतेरुभशब्दस्य ग्राहकेण द्विवच-

---

दावुभशब्दपाठेऽकज्विधौ पाठे वा लाघवाभावाद्विशेषाभावेनेयमाशङ्का ऽसङ्गतेति वाच्यम्। सर्वादावुभशब्दपाठे उभे भद्रे इत्यादावन्तोदात्तदर्शनेन स्वाङ्गशिटामित्याद्युदात्तत्वबाधनार्थमुञ्छादिषु उभशब्दपाठस्यावश्यकत्वेनोभयत्र पाठे गौरवेणाकज्विधावेवोभशब्दस्य ग्रहणं कस्मान्न क्रियत इति शङ्कायाः समीचीनत्वात्॥

*द्वित्वसंख्याप्रकारकेति*। स्यादेतत्। यदि द्वित्वसंख्याप्रकारकसङ्ख्येयविशेष्यकबोधजनकत्वं द्विवचनत्वं तर्हि घटपदादपि द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधजननात्तस्यापि द्विवचनत्वापत्तौ उभयोर्घटौ उभयघटावित्यादावयच् न स्यात्। उभशब्दस्य उभयशब्दस्य वा द्विवचनपरकत्वस्यैव सत्त्वात्। न च द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकोपस्थितिजनकत्वं द्विवचनत्वमिति नोक्तदोष इति वाच्यम्। त्रतसिलादेरपि द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकोपस्थितिजनकत्वेन तस्यापि निरुक्तद्विवचनत्वापत्तौ त्रतसिलादेर्द्विवचनत्वं नास्तीत्यग्रिमग्रन्थविरोधात्, उभावित्यादावौविभक्तेर्द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकोपस्थितिजनकत्वस्याभावेन निरुक्तद्विवचनत्वस्यानापत्तेश्चेति चेन्नैवम्। यस्य द्विवचनत्वं वक्तव्यं तत्प्रयोज्यप्रधानतानिरूपितात्रधानत्वासमानाधिकरणा या द्वित्वसंख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठप्रधानता तादृशप्रधानताप्रयोजकत्वं द्विवचनत्वमिति परिष्कारेणादोषात्। तथा हि—प्रधानता नाम संसर्गताविशेष्यतासाधारणो विषयताविशेषः। तथा चोभयत्रेत्यादौ सप्तम्यन्तात् त्रलाद्युत्पत्त्या त्रल्पदप्रयोज्याऽऽधाराधेयभावसंसर्गनिष्ठप्रधानतानिरूपिताप्रधानत्वसमानाधिकरणैव द्वित्वसंख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठा प्रधानता जातेति त्रतसिलादेर्नोक्तद्विवचनत्वम्।

मशब्देन स्वार्थिकस्यापि ग्रहणमिति तदर्थः । त्रतसिलौ तु विभक्त्यन्तस्य स्वार्थे विहिताविति *तत्तत्कारकशक्तिप्रधानावेवेति न तयोरुक्तद्विवचनत्वमिति ।

तस्मात्—उभयशब्दात् । जसीति । अवयवद्वयारब्धसमुदायबहुत्वविवक्षायामित्यर्थः । अन्तरङ्गत्वादिति । *सर्वार्थबोधकत्वरूपार्थस्योभयत्रापि निमित्तत्वेन न तत्कृतं नित्यसञ्ज्ञाया बहिरङ्गत्वम् । अत एव सञ्ज्ञोपसर्जनप्रथमादिशब्दे न विकल्पः । अर्थकृतबहिरङ्गत्वस्यानाश्रयणाच्चेति भावः । इदमर्वाचामनुरोधेन ।

परे तु–अस्य *पक्षे ऽभावबोधकतया "निषेधाश्च बलीयांस" इत्यनेनास्य प्राप्तिः । किं च न "अन्तरङ्गं बलीयः"इत्यस्या अत्र विषयो युगपत्प्राप्त्यभावात् । सञ्ज्ञानां बाध्यबाधकभावाभावेन प्रातिपदिकसञ्ज्ञासमकालमेव सर्वनामसञ्ज्ञाप्रवृत्तेः* ।

---

कप्रत्ययस्य प्रातिपदिकादेवोत्पत्त्या संसर्गनिष्ठप्रधानताख्या विषयता न कपदप्रयोज्येति कस्य नोक्तद्विवचनत्वभङ्ग इति । तदेतत्सर्वं ध्वनयन्नाह—*तत्तत्कारकशक्तिप्रधानाविति* ।

परे तु "स्वार्थिकाः प्रत्ययाः प्रकृतितो ऽविशिष्टा भवन्ति"इत्यस्य यदागमपरिभाषावत् स्वार्थिकप्रत्ययप्रकृतिपर्याप्तधर्माः स्वार्थिकप्रत्ययान्ते तदादावतिदिश्यन्ते इत्यर्थः । प्रकृतिग्रहणेन स्वार्थिकप्रत्ययविशिष्टस्य ग्रहणमिति यावत् । वैशिष्ट्यञ्च स्वघटितत्वं –स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयघटितत्वं—स्वविशिष्टाघटितत्वमेतत्त्रितयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यं तु स्वेतरत्वस्वीयविधेयतानिरूपितोद्देश्यताश्रयेतरत्वोभयसम्बन्धेन बोध्यम् । तथा चोभशब्दग्रहणेनोभकशब्दस्यापि ग्रहणात्केऽप्युभशब्दस्य द्विवचनपरत्वमेवेत्युभशब्दपाठो व्यर्थः । अत एव प्रकृतितो ऽभिन्ना इत्यर्थकप्रकृतितोऽविशिष्टा इति भाष्यं सङ्गच्छते । जराशब्दात् कप्रत्यये जरसादेशस्तु निर्दिश्यमानत्वाभावान्न । श्वशुरकशब्दात् "राजश्वशुराद्यत्" इति यदादेरतिप्रसङ्गस्त्वनभिधानाद्वारणीय इत्याहुः ।

*सर्वार्थबोधकत्वरूपार्थस्येति* । प्राधान्येन स्वीयसर्वार्थवाचकत्वरूपार्थस्येत्यर्थः । *पक्षे ऽभावबोधकतयेति* । अयं भावः-प्रथमचरमेतिविकल्पस्य नेमशब्दे प्राप्ते अन्यत्राप्राप्ते उभयत्रविभाषात्वेन पक्षे ऽभावस्यापि विधायकत्वेनावृत्त्या नञं चाध्याहृत्य प्रथमादीनां सर्वनामसंज्ञा न भवतीति पूर्वं सामान्यतो निषिध्य पश्चादुद्देश्यतावच्छेदकसामानाधिकरण्येन विधेयान्वयाद्विकल्पेन सर्वनामसंज्ञाविधाने "निषेधाश्च बलीयांसः" इतिन्यायेन उ

अत एवोभये इत्यत्र सर्वनाम्नो विहितत्वेन शीभावासिद्धिः* । पूर्वापरेत्यादि तु पक्षे तदभावमात्रबोधकम् । "असिद्धं बहिरङ्गम्" इत्यपि न । अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेः । अन्तरङ्गे कर्त्तव्ये बहिरङ्गासिद्धत्वेऽपि तत्प्रवृत्त्युत्तरं बहिरङ्गप्रवृत्तेरनया वारयितुमशक्यत्वात्* । बहुशस्तथा दृष्टत्वात् । तदुत्तरमप्येतत्प्रवृत्त्या पूर्वादिष्विव पक्षे तदभावविशिष्टे साधुत्वबोधनस्य शक्यत्वात् । जसीति विषयसप्तमीतिपक्षेऽपि प्रातिपदिकादिसञ्ज्ञोत्तरमेवास्याः प्रवृत्तिस्तदुत्तरमेव तद्विषयात् । स्थानिवदतिदेशप्रापिताया *निरवकाशत्वाच्च । प्रत्यक्षस्य स्थानिवद्भावस्यानुमानिक्याऽनया *बाधायोगाच्च । सर्वनामसञ्ज्ञायामुक्तयुक्त्या* यथोद्देशपक्षस्यैवौचि*-

भये इत्यादौ प्रथमचरमेति विकल्पस्यैवापत्तेरिति भावः । *सर्वनामसंज्ञाप्रवृत्तेरिति* । वस्तुतस्तु "उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते" इति न्यायेन यदि नित्या संज्ञा न स्यादस्माज्जसि अपवादः प्रथमचरमेतिविकल्पः स्यादिति सम्भावनायाः सत्त्वेन भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचात्पुर्वरीत्या निषेधशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सर्वादीनीत्यत्र सङ्कोचान्नित्यसंज्ञाया अप्रवृत्तेरिदमयुक्तम् ।

*शीभावासिद्धिरिति* । वस्तुतस्तु जसुत्पत्त्यनन्तरं सर्वनामसंज्ञायामपि सर्वनामसंज्ञकाभिन्नं यदन्तमङ्गं ततः परस्य जसःशी स्यादित्यर्थकरणेन वर्णाश्रमेतरा इत्यादौ दोषाभावाद्विहितपदाध्याहारस्य पूर्वमेव खण्डितत्वात् जसुत्पत्त्यनन्तरमपि सर्वनामसंज्ञायां नोक्तदोष इति बोध्यम् । *वारयितुमशक्यत्वादिति* । वस्तुतस्तु नित्यसंज्ञाप्रवृत्तिकाले विकल्पस्याप्राप्तिरूपमेव बहिरङ्गत्वं प्रथमचरमेत्यस्य मूलकृतोऽभिप्रेतमिति नेदं दूषणं सम्यक् । *निरवकाशत्वाच्चेति* । चिन्त्यमिदम्, प्रथमचरमेतिशास्त्रस्यात्र प्रवृत्तेरभावेन स्थानिवदित्यतिदेशार्थमन्यत्संज्ञाशास्त्रमन्यविषयेऽन्यदिति वक्तुमशक्यत्वेन निरवकाशत्वस्य दुरुपपादत्वात् । न च उभये इत्येतल्लक्ष्यसिद्ध्यर्थं व्यक्तिपक्षे उपप्लुतं प्रथमचरमेतिशास्त्रं निरवकाशमिति वक्तुं युक्तम् । एवन्तर्हि उभये इतिलक्ष्यार्थमुपप्लुतस्य "सर्वादीनि सर्वनामानि" इतिशास्त्रस्यापि निरवकाशत्वस्य तुल्यत्वात् । *बाधायोगाच्चेति* । इदमपि चिन्त्यमेव । नित्यसंज्ञाप्रवृत्तिकाले विकल्पसंज्ञाया अप्रवृत्त्या नित्यसंज्ञाप्रवृत्तिकाले परस्य निमित्ताभावादप्रवृत्तिरूपं बहिरङ्गत्वमिति वदितुर्मते प्रत्यक्षस्थानिवदितिशास्त्रस्य ज्ञापकसिद्धत्वेनानुमानिक्या "असिद्धं बहिरङ्गम्" इतिपरिभाषया बाधायोगादिति कथनस्यायुक्तत्वात् । *उक्तयुक्त्येति* । सर्वनाम्नो विहितत्वेन जसः शीत्यादिसमासत्तये प्रातिपदिकसंज्ञासमकालमेव सर्वनामसंज्ञा भवतीत्युक्तयुक्त्येत्यर्थः । *औचित्यादिति* ।

स्यात्। अत एव*"तयादेशे उभयप्रतिषेधः । तयपो ग्रहणेन ग्रहणात् जसि विभाषा प्राप्नोति"इति स्थानिवत्सूत्रस्थं वार्त्तिकम् "अयच् प्रत्ययान्तरम्"इति सूत्राशयप्रदर्शनेन भाष्ये प्रत्याख्यातं, न त्वन्तरङ्गन्यायबलेन। उभयीत्यत्र ङीप्तु "टिड्ढा" इतिसूत्रे मात्रशब्दादारभ्यायचश्चकारात्प्रत्याहाराश्रयणेन सिद्धः। अत इत्यनुवृत्त्या च कतीत्यादौ नातिप्रसङ्गः। तयब्ग्रहणन्तु सूत्रे ऽवयुत्यानुवादः* । द्वित्रिशब्दप्रकृतिकायजन्तस्य जसः शीविषये ऽनभिधानमेव, पुंस्येव वा ऽनभिधानमिति तदाशय इति वदन्ति।

तथापीहेति। "प्रत्ययग्रहणे तदन्तग्रहणम्"इति "प्रयोजनं सर्वनामाव्ययसञ्ज्ञायाम्"इति च तदन्तविधिद्वयेन डतरान्तान्तेत्याद्यर्थे परसकतरस्य,

---

अन्यथा कार्यकालपक्षे जसुत्तरमेव सर्वनामसंज्ञानिमित्तकशीभावरूपकार्यप्राप्त्या जसुत्पत्त्यनन्तरं संज्ञायां जसः सर्वनाम्नो विहितत्वाभावेन शीभावो न स्यादिति भावः।*अत एवेति*। "निषेधाश्च बलीयांसः"इतिन्यायेन प्रथमचरमेतिशास्त्रस्योभयत्रविभाषात्वेन पूर्वं निषेधमुखेन प्रवृत्त्युपपत्तये कल्पितात् निषेधशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन सर्वादीनीत्यत्र सङ्कोचान्नित्यसंज्ञाया अप्राप्त्या, पक्षे सर्वनामसंज्ञासंपत्तये कल्पितेन 'विभाषा जसि सर्वनामसंज्ञा भवति' इतिवाक्येन उभये इत्यादौ विकल्पेन संज्ञा प्राप्नोति इति स्वीकारादेवेत्यर्थः।

*अवयुत्यानुवाद इति*। पृथक्कृत्यैकदेशानुवाद इत्यर्थः। अत्रेदं तत्त्वम्। "धातोर्द्वये प्रत्ययाः सुपस्तिङश्च" इतिभाष्ये 'द्वये' इतिप्रयोगदर्शनेन—द्वित्रिशब्दप्रकृतिकायजन्तस्यानभिधानकथनं साहसमात्रमेव । तयादेशकल्पे द्वये द्वयाः, अयच् प्रत्ययान्तरमिति कल्पे च द्वया इति फलभेदस्तु न। "उभादुदात्तो नित्यम्" इत्यनेनायचः प्रत्ययान्तरत्वेन विधानेऽपि "द्वित्रिभ्यां तयस्यायज्वा"इति सूत्रेण तयस्यैवायज्विधानात् । अत एव "तयादेशे उभयप्रतिषेधः" इति वार्तिके उभयग्रहणं सङ्गच्छते । अन्यथा तयादेश इत्येव ब्रूयात् । तथा च द्वये द्वया इत्यत्र विकल्पो भवत्येव । "उभादुदात्त इति सूत्रे तयस्येत्यननुवर्त्योभशब्दात् स्वातन्त्र्येणाऽयज्विधेयो, "द्वित्रिभ्यां तयस्य" इत्यनेन तु तयपः स्थाने इति तद्भावः। आदेशकल्पे तयादेशे उभयप्रतिषेध इति वार्त्तिकेन स्थानिवत्त्वनिषेधात्, अयच् प्रत्ययान्तरमिति कल्पे च प्रथमेत्यस्याप्राप्त्या विकल्पाभावेन उभये इत्येकमेव रूपमित्यत्राप्यारम्भप्रत्याख्यानयोर्वैषम्याभावः। एवञ्च तदनभिधाने मानाभाव इति केचित् ।

वस्तुतस्तु आदेशकल्पे "तयादेशे उभयप्रतिषेध"इति वार्त्तिककरणरूपगौरवेणायच् प्रत्ययान्तरमितिकल्पो भगवता स्वीकृतः । तथा चायच् प्रत्ययान्तरमिति कल्पे "द्वित्रिभ्याम्" इतिसूत्रे तयस्येति पदं न कर्तव्यं भवति। एवं "टिड्ढाण" इतिसूत्रे मात्रजिति प्रत्याहाराश्रयणेन तत्रत्यतयब्ग्रहणमपि न कर्तव्यम्भवति। एवं प्रथमचरमेतिसूत्रे तयग्रहणं,

व्यपदेशिवद्भावेन कतरस्य च *सञ्ज्ञा सिद्धेति भावः। तत्र मानमाह—केवलयोरिति। प्रयोजनाभावात्—फलाभावादित्यर्थः। अदन्तादङ्गात्परस्य *सर्वनाम्नो विहितस्येत्येव "जसः शी"इत्यादेरर्थादिति भावः। ननु डतरग्रहणेनैव सिद्धे ऽन्यतरशब्दपाठो व्यर्थो ऽत आह—अन्यतरेति। किंयत्तद्भ्य एव तयोर्विधानादिति भावः। अपुरीति। पूःशब्दस्य *विशेष्यत्वे नेत्यर्थः। तद् ध्वनयन स्त्रियामुदाहरति—अन्तरायामिति।

'एको ऽन्यार्थे प्रधाने च प्रथमे केवले तथा।
साधारणे समाने ऽल्पे संख्यायां च प्रयुज्यते'॥

इति केचित्। केवले ऽसहाये। तत्र संख्याऽन्यार्थासहायवाची-"ष्णान्ता षट्""बहुषु बहुवचनम्""एकादाकिनिच्च"इत्यादिसूत्रेषु भाष्ये स्पष्टमुक्तः। "एको गोत्रे" इतिसूत्रशेषे भाष्ये प्रथमार्थोऽपि उक्तः। साधारणसमानार्थयोः संख्यावाचिन एवार्थतः पर्यवसानम्, यथा तेनैकादिक्, चैत्रमैत्रयोरेका मातेत्यादौ। "सर्वस्य द्वे" इतिसूत्रे एकैकश इति भाष्यमुपादा-

---

"तयादेशे उभयप्रतिषेधः" इति वार्त्तिकञ्च न कर्तव्यम्भवतीति महल्लाघवम्। एवञ्च तदनभिधाने एव भाष्यतात्पर्यम्। उभयीत्यत्रेव द्वयीत्यत्रापि ङीब् भवत्येव। "द्वित्रिभ्यां तयस्य"इत्यत्र तयग्रहणमकृत्वा द्वित्रिभ्यां विकल्पेनायच्प्रत्ययस्यैव तेन विधातुं शक्यत्वात्। अत एव द्वयं द्वयी स्यादिति कोशः सङ्गच्छते। धातोर्द्वये प्रत्यया इति भाष्यं तु धातोर्द्वये आख्यातप्रातिपदिकार्थविषय इत्यर्थविवक्षणेन कथञ्चित्सङ्गमनीयमिति दिक्॥

*संज्ञासिद्धेति भाव इति*। वस्तुतस्तु अत्रत्यशेखरो मूलञ्चैतदुभयमपि चिन्त्यमेव। साक्षात्सर्वनामसंज्ञानिष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकत्वस्य सर्वादिपदे सत्त्वेऽपि प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वस्य तत्राभावेन, सर्वादिगणान्तर्गतडतरडतमेत्यत्र प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वस्य सत्त्वेऽपि सर्वनामसंज्ञानिष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकत्वस्य साक्षादभावेन साक्षात्संज्ञानिष्ठविधेयतानिरूपितप्रत्ययमात्रवृत्त्युद्देश्यताप्रयोजकं पदं तदादिविशेष्यकतदन्तविधिप्रयोजकञ्चेत्यार्थिकायाः"संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणञ्चास्ति" इति परिभाषायाः प्रकृते प्राप्त्यभावात्। *सर्वनाम्नो विहितस्येति*। अत्रापि पूर्ववत्सर्वनामाभिन्नं यददन्तमङ्गं तस्मात्परस्येत्यर्थो बोद्धव्यः। *विशेष्यत्वे नेति*। विशेष्यताप्रयोजकत्वे नेत्यर्थः। तथा च पूःपदप्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकेतरस्यैवान्तरशब्दस्य"अन्तरं बहिर्योग" इति गणसूत्रे ग्रहणमिति भावः। वस्तुतस्तु अपुरीत्यस्य पूःशब्दार्थ-

थ केचिदाहुरल्पार्थोऽप्येकशब्दोऽस्तीति वदता कैयटेन केचिदित्युक्त्या तदर्थकाभावो ध्वनित एव । एवं च प्रधानार्थे न दृढं मानम्* ।

"स्वाभिधेयापेक्षावधि" इति समस्तः पाठः। नियमेनावधिसापेक्षेऽर्थे* वर्त्तमानपूर्वादीनामित्यर्थः । दक्षिणा गाथका इति । उत्कर्षस्यावधिसापेक्षत्वादत्र व्यवस्थाऽस्तीत्याग्रहे तु 'उत्तरे प्रत्युत्तरे च शक्त' इति प्रत्युदाहरणं बोद्धव्यम् । उत्तराः कुरव इति । सुमेर्वेवधिकपरदेशत्वरूपोपाधिविशिष्टकुरुषु उत्तरशब्दः शब्दं प्रवृत्तिनिमित्तीकृत्य वर्त्तते इति व्यवस्थाविषयत्वं बोद्धव्यम्। दिग्वाचकपूर्वादिशब्दानां *मध्याह्नसूर्यसंयोगिदेशावधिकोदयाचलास्ताचलसंनिहितदेशतत्कालिकसूर्यसम्मुखयावद्देशतत्कालिकतत्पृष्ठस्थयावद्देशरूपोपाधिविशिष्टदिशि तत्तच्छब्दं प्रवृत्तिनिमित्तीकृत्य प्रवृत्तिरिति उपाध्यन्तर्गततया व्यवस्थाऽस्त्येव, मध्याह्ने सूर्यस्योदङ्मुखत्वात् । देशवृत्तीनां त-

---

स्य विशेष्यत्वे नेतिव्याख्यानमिति स्त्रीत्वविशिष्टपुःशब्दार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकेतरान्तरशब्दस्य 'अन्तरं बहिर्योग" इति गणसूत्रे ग्रहणमिति अन्तरायां नगर्यामित्यादिसिद्धिः ।

*न दृढं मानमिति* । चिन्त्यमिदम् । अर्थनिर्णयस्य कोशाद्यधीनत्वेन तदनिर्णायके शब्दशास्त्रे महाभाष्ये मुख्यार्थकैकशब्दादर्शनमात्रेण प्रधानेऽर्थे न दृढं मानमितिकथनस्य साहसमात्रत्वात् । "एके मुख्यान्यकेवलाः" इति कोशस्य तदर्थे मानत्वाच्च । "नेत्येके ऽसेर्हि दृश्यते" इति वार्तिके मुख्यार्थकैकशब्दस्य, "समो वा लोपमेके" इति भाष्ये मुख्यार्थकैकशब्दस्य दर्शनाच्च । शब्दार्थनिर्णयस्य लौकिकान्वयव्यतिरेकसिद्धत्वाच्चेति दिक् ।

*अवधिसापेक्षे ऽर्थे इति* । अवध्यंशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नवाचकत्वमेव व्यवस्थावाचकत्वम् । यद्धर्मावच्छिन्नज्ञानोत्तरमवधिविशेषविषयिणी जिज्ञासा नियमेनोदेति तद्धर्मावच्छिन्नवाचकत्वमिति यावत् । *मध्याह्नसूर्यसंयोगीति* । वस्तुतो नेदं दिग्वाचकपूर्वादिपदप्रवृत्तिनिमित्तम् । एवं सति दाक्षिणात्यानाम् "उदङ्मुखः प्राङ्मुखो वा त्रिवारमुपस्पृशेत्" इत्यादिविधीनाङ्कर्तुमशक्यत्वं स्यात् । तद्दृष्ट्या सर्वस्यैव दक्षिणदिक्त्वात् । एवमेव पाश्चात्यानां "दक्षिणाभिमुखः सन् श्राद्धादिविधिं कुर्यात्" इत्यादिविधीनाङ्कर्तुमशक्यत्वमेव स्यादिति दिग्वाचकपूर्वादिपदानां यत् प्रवृत्तिनिमित्तमुक्तं मूले तद् देशवाचिनां बोध्यं, देशवाचकपूर्वादिशब्दानां च यदुक्तं तद् दिग्वाचिनां बोध्यमिति केचित् । मध्याह्नसूर्यसंयोगिदेशावधिकोदयाचलसन्निहितादिदेशोपाध्यवच्छिन्नत्वस्य दिग्धर्मत्वेन तत्तदवधिकोदयाचलसन्निहितत्वादेर्देशधर्मत्वेन यथाश्रुतमेव दिग्देशवाचिनां पूर्वादिशब्दानां प्रवृत्ति-

त्तदवधिकोदयाचलसन्निहितत्वादि प्रवृत्तिनिमित्तमित्यन्यत्र विस्तरः।

'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये।
छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च'॥

इतिकोशोक्तार्थान्तरव्युदासार्थमाह—अन्तरं बहिर्योगेति। अयं त्रिसूत्र्या क्रियमाणः सञ्ज्ञाविकल्पो जसाधारे शीभाव एव, न त्वकजाद्युदात्तत्वादाविति बोद्धव्यम्।

न बहुव्रीहौ। "चिकीर्षिते" इत्यध्याहारलभ्यम्। प्राचीनवृत्तिकृद्रीत्येदं व्याख्यानम्। नेदं सूत्रं बहुव्रीहेस्तत्त्वनिषेधकमुपसर्जनप्रतिषेधेन सिद्धेः। प्रक्रियावाक्य इति। अलौकिके इत्यर्थः। न चालौकिके समासप्रवृत्त्यैकार्थीभावस्यापि तत्रैव कल्पनादुपसर्जनत्वादेव समास इव तत्रापि निषेधः सिद्ध इति वाच्यम्। तत्रैकार्थीभावस्यारोपे ऽपि *स्वार्थविशिष्टार्थान्तरबोधकत्वरूपोपसर्जनत्वाभावेनातिभवकानित्यत्रेव प्राप्तस्याकचो ऽभावार्थं सञ्ज्ञानिषेध इत्यत्र तात्पर्यात्। लौकिके तु नास्य प्रवृत्तिस्तत्र समासस्य चि-

---

निमित्तमुचितम्। 'प्रयागात् काशी पूर्वा' इत्यादौ पूर्वादिशब्दा देशवाचका एव। तत्तदवधिकोदयाचलसन्निहितत्वादिधर्मविशिष्टदेशस्यैव बोध्यमानत्वात्। मध्याह्नस्य देशभेदेन भेदात् तात्कालिकसूर्यसंयोगिदेशभेदस्य आवश्यकत्वेन तदवधिकोदयाचलसन्निहितादिदेशरूपोपाधेर्भेदात् तदवच्छिन्नप्राच्यादिदिशां भेदेन न दाक्षिणात्यादीनां "प्राङ्मुखस्त्रिवारमुपस्पृशेत्" "दक्षिणाभिमुखः श्राद्धं कुर्यात्" इत्यादिविध्यनुष्ठानाशक्यत्वम्। अयं पूर्वो देशः, अयं पश्चिमः, अयं दक्षिणः, अयमुत्तर इतिव्यवहारस्तु लङ्कातः प्रवृत्ताया मेरुं यावद्गतायाः कुरुक्षेत्रादिदेशसंस्पर्शिन्या मध्यरेखाया मध्यभागमुज्जयिनीप्रदेशमुपाधिं स्वीकृत्य तदवधिकोदयाचलसंन्निहितत्वादिकं प्रवृत्तिनिमित्तीकृत्य पूर्वादिशब्दानां प्रवृत्त्या उपपादनीयः। यद्वा तत्र देशशब्देन दिगेवोच्यते। पूर्वो देश इत्यस्य मध्यरेखामध्यभागावधिकोदयाचलसन्निहितदेशरूपोपाध्यवच्छिन्ना दिगित्यर्थः। एवमुत्तरत्रापि बोध्यम्। अत एव रामायणे किष्किन्धाकाण्डे पूर्वां दिशं, दक्षिणां दिशमित्यादिना दिग्विभाग एवोक्तः। अत एव चतस्रो दिश इति व्यवहारोपपत्तिः। अन्यथोपाधीनामानन्त्यादुपधेयदिशामप्यानन्त्यमेव स्यात्। तस्मात् वैपरीत्यकल्पनं मूलाशयाज्ञानमूलकमेवेत्यन्ये।

*स्वार्थविशिष्टार्थान्तरबोधकत्वरूपेति*। पदार्थान्तरनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वरूपोपसर्जनत्वस्यालौकिकविग्रहवाक्ये युष्मद् सु इत्यत्राभावादिति भावः। अतिदिश्यमानधर्मसमनियतधर्मनिमित्तकैकार्थीभावस्यातिदेशस्वभावसिद्धत्वेन समाससंज्ञार्थमलौकिकविग्रहवाक्ये एकार्थीभावस्यारोपेऽपि तत्समनियतोपसर्जनत्वनिमित्तकसर्वनामसंज्ञानिषेधस्य च-

कीर्षितत्वाभावात् । अतिक्रान्त इत्यादिना पूर्वोक्तस्य लौकिकवाक्यस्य समासस्य च दृष्टान्तद्वयमुच्यते । *अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः । भाष्यकारस्त्विति ।

"अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयम्"

इति भाष्योक्तेः वृत्तिकृद्रीत्येदं व्याख्यानमयुक्तमिति भावः ।

ननु स्मृतिद्वयप्रामाण्याद्विकल्पो ऽस्तु, कथं प्रत्याख्यानमत आह—यथोत्तरमिति । एतच्च "धिन्विकृण्व्योर च" इतिसूत्रे भाष्ये ध्वनितम्* । एवञ्च वृत्तिकृदुक्तार्थकं नेदम् । तस्मादुपसर्जनप्रतिषेधानुवादकम् । यद्वा वार्त्तिककृता तस्य कृतत्वात् सूत्रकृतेदमारब्धम् । सञ्ज्ञाया अन्वर्थत्वमपि भाष्यकृदूहितमेव न सूत्रकृदूहितमिति "विभाषा दिक"इतिसूत्रे कैयटे स्पष्टम्* । सूत्रे सप्तमीनिर्देशः प्रथमार्थ एव* । अतएव वृत्तिकृदुक्तःप्रक्रियावाक्ये निषेध इत्यर्थो भाष्यकृता बहुव्रीहिपदस्य तदर्थवाक्यस्थपदलक्षणया साधितः । अन्यथा मूलोक्तरीत्या सिद्धे तादृशलक्षणाप्रयासो व्यर्थः स्यादिति तत्त्वम् ।

तदनुगुणानामेवेति । प्राधान्येनोपस्थितिविषयप्रसिद्धस्वीयसर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवत्त्वेन *बोधकमहासञ्ज्ञया सर्वार्थो-

---

क्तुमशक्यत्वात् । अत एव 'अति भवत् अम्' इत्यलौकिकविग्रहवाक्ये अकज् भवति । ननु अति भवत् अम् इत्यस्यां दशायामकचो निमित्तस्य सर्वनामत्वस्य समासोत्तरं वक्ष्यमाणतया अकृतव्यूहपरिभाषया पूर्वमप्यकच् न प्रवर्तेतेत्यत आह—*अकृतेति* । *ध्वनितमिति* । तत्र हि लोपविधानेऽपि "न धातुलोप"इति सूत्रेण धिनोति इत्यादौ गुणनिषेधे सिद्धे ऽकारादेशविधानं किमर्थमित्याशङ्क्य तत्प्रत्याख्यानपक्षे स्थानिवद्भावाय तद्विधानमित्युक्तम् । यदि पूर्वमुनिरुत्तरमुन्यभिप्रेतं न जानीयात्तर्हि प्रत्याख्यानस्य भाष्यकृत्कृतत्वेन तत्र पक्षे तत्सिद्ध्यर्थं सूत्रकारकृतमकारादेशविधानमसङ्गतं स्यादिति निरुक्तं ध्वन्यते । *कैयटे स्पष्टमिति* । अत्रारुचिबीजन्तु महर्षीणां सर्वज्ञत्वभङ्गः । अतो ऽस्मिन् शास्त्रे उत्तरमुनितात्पर्यानुसारेणैव पूर्वमुनेस्तात्पर्यमवधारणीयमिति बोध्यम् । *प्रथमार्थ एवेति* । वस्तुतस्तु वाचकत्वं सप्तम्यर्थं स्वीकृत्य बहुव्रीहौ वाचकतासम्बन्धेन सर्वनामपदं न तिष्ठतीति न बहुव्रीहावित्यस्यार्थ इति यथाश्रुतमपि सम्यक् । *बोधकमहासंज्ञयेति* । महासंज्ञालब्धे ऽर्थे प्राधान्येनोपस्थितिविषयेतिनिवेशादुपसर्जनव्यावृत्तिः । प्रसिद्धेति निवेशात् संज्ञाव्यावृत्तिः । स्वीयसर्वार्थेतिनिवेशात् सर्वादिप्रवृत्तिनिमित्तेतररूपेण सर्वार्थवाचकत्वस्याभावेऽपि स्वीयप्रवृत्ति-

पस्थापकसर्वादीनामनुकरणावश्यकत्वेनेतरेषामनुकरणे मानाभावः । नामपदस्वारस्येन प्राधान्येनेत्यस्य लाभः । उपसर्जनं *इतरविशेषणतयैवोपस्थापकमिति* तेन तद्व्यावृत्तिः । पूर्वादिसङ्ग्रहाय स्वीयसर्वार्थेति । सञ्ज्ञाव्यावृत्तये ऽभिव्यक्तेतिन्यायमूलकं प्रसिद्धेतीति भावः ।

सर्वादिसूत्रस्य चायमर्थः । सर्वादीनि तदन्तानि चोक्तसर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवन्तीति । तत्र प्राप्ताप्राप्तविवेकन्यायेन सर्वनामपदवत्त्वांशे एव विधिः । सर्वार्थवाचकत्वस्य लोकतः सिद्धेः । एतेनान्वर्थसंज्ञोपस्थितसर्वार्थवाचकस्य विशेष्यतया सर्वादीनीत्यस्य तद्विशेषणत्वात्तदन्तविधिरित्यपास्तम् । एकपदोपस्थाप्ययोरर्थयोः परस्परमुद्देश्यविधेयभावेनान्वयस्याव्युत्पन्नत्वात् । रूढ्यर्थयोगार्थयोरन्यतरवियोगेनान्यत्रान्वयायोगाच्च । तदन्ते सर्वार्थवाचकत्वं स्वावयवद्वारा बोध्यम् । एतेन तदाक्षिप्तस्य विशेष्यतेत्यपास्तम् । तद्विनाऽनुपपत्त्यभावेनाक्षेपायोगादाक्षिप्तस्य शाब्देऽन्वये मानाभावाच्च ।

केचित्तु आवृत्त्या एकस्योद्देश्यता ऽपरस्य विधेयतेति वदन्ति । परन्त्वाद्यः पक्ष *इतो लघु रिति बोध्यम् । सन्निवेशादिति । तदनुमानादित्यर्थः । अत्रोपसर्जनत्वमितरविशेषणत्वेनार्थोपस्थापकत्वम्* ।

---

निमित्तपुरस्कारेण सर्वार्थवाचकत्वमभ्याहृतमिति बोध्यते ।

*इतरविशेषणतयैवोपस्थापकमिति* । पदार्थान्तरनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेनोपस्थापकत्वमुपसर्जनत्वमिति भावः । *इतो लघुरिति* । सर्वाद्यन्तानि शब्दस्वरूपाणि प्राधान्येनोपस्थितिविषयप्रसिद्धस्वीयसर्वार्थवाचकत्वविशिष्टसर्वनामपदवन्तीति प्रथमकल्पे एकमेव वाक्यमिति लाघवम् । सर्वाद्यन्तानि प्रसिद्धस्वीयसर्वार्थवाचकानि, तानि च सर्वनामपदवन्तीति द्वितीयकल्पे वाक्यद्वयमिति गौरवम् ।

*इतरविशेषणत्वेनार्थोपस्थापकत्वमिति* । पदार्थान्तरनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वमुपसर्जनत्वमिति यावत् । अन्ये तु पदान्तरार्थनिष्ठविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वमुपसर्जनत्वम् । अत एव "द्वीयतेरप्रत्यये द्व इति प्राप्नोति स्व इति चेष्यते" इति भाष्यं सङ्गच्छते । अन्यथा उपसर्जनत्वात्सत्वाप्राप्त्या तदसङ्गतिः स्पष्टैव । न च यथालक्षणमप्रयुक्ते इत्यत्राऽलक्षणमितिच्छेदः । लक्षणपदं लक्षणप्रवृत्तिपरमुपचारात् । तथा चाप्रयुक्ते लक्षणप्रवृत्त्यभावयोग्यतेत्यर्थ इति एतस्यानभिधानमिति वाच्यम् । प्रवृत्तौ लक्षणास्वीकारे गौरवात् । अलक्षणमितिच्छेदे मानाभावाच्च । पदार्थानतिवृत्तावव्ययीभावं स्वीकृत्य अप्रयु-

"तदोः स" इतिसूत्रे अदस एव दस्य नान्यस्येति नियमे* "द्वीयतेरप्रत्यये द्व इति प्राप्नोति स्व इति चेष्यते यथालक्षणमप्रयुक्ते"—इति भाष्यन्तु प्रकृतसूत्रनञ्सूत्रादिस्थानेकभाष्यविरोधादेकदेश्युक्ति* रिति न तद्विरोधः।

तृतीयासमासे। "द्वन्द्वे च" इतिसूत्रस्थाकरोक्तरीत्या "न बहुव्रीहौ" इतिसूत्रस्थाकररीत्या च प्रथमार्थे सप्तमी* । अयमपि समासस्यैव निषेधो नावयवानाम् ।

समुदायस्येति ।

"अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं* मुक्तसंशयम्"* ।

इति भाष्योक्त्या एतत्प्रकरणविषयस्मृत्या एतत्प्रकरणस्थसप्तमीनिर्देशानां *प्रथमार्थकत्वमिति तस्यावयवसञ्ज्ञानिषेधकत्वाभाव उचितः । किं चावयवमात्रस्य निषेधे वर्णाश्रमेतराणामित्यत्र सर्वार्थवाचकसर्वाद्यन्तत्वेन समुदायसञ्ज्ञायां *सुडापत्तिः।

---

क्तविषये लक्षणमनतिक्रम्य प्रयोगः कर्तव्य इत्यर्थस्यैव 'यथालक्षणमप्रयुक्ते' इति भाष्यस्य न्याय्यत्वादित्याहुः ।

परे तु सर्वादिविशिष्टत्वमुपसर्जनत्वम् । वैशिष्ट्यञ्च स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितोपस्थितियप्रकारताप्रयोजकत्वसम्बन्धेन । अत एव सर्वेषाम्पुत्रः परस्मैपदम् अतिभवकान् सर्वस्मिन्नाश्रय इत्यादिषु सुट्स्मायादयः सिद्ध्यन्ति । अन्यथा पूर्वोक्तलक्षणद्वयस्यापि सर्वादिशब्देषु सत्त्वेनोपसर्जनत्वात्सुडादयो न स्युः । नच " द्वीयतेरप्रत्यये द्व इति प्राप्नोति स्व इति चेष्यते" इतिभाष्यविरोधो निरुक्तोपसर्जनत्वस्य सत्त्वादिति वाच्यम् । स्वावधिकपूर्वपदप्रयोज्यविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकतापर्याप्त्यधिकरणत्वसम्बन्धेन सर्वादिविशिष्टत्वमुपसर्जनत्वमिति स्वीकारादित्याहुः ।

*नियमे इति* । "तदोः सः सौ" इत्यत्रानन्त्ययोरित्यस्य खण्डनाय कृतेन "अदस" इति योगविभागेन 'दस्य सत्वं भवति चेददस एव' इति नियमे इत्यर्थः । *एकदेश्युक्तिरिति* । चिन्त्यमिदम् । पूर्वोक्तदिशा सिद्धान्त्युक्तित्वस्य समर्थयितुं शक्यत्वात् । *प्रथमार्थे सप्तमीति* । वस्तुतस्तु वाचकत्वं सप्तम्यर्थे स्वीकृत्य वाचकतासम्बन्धेन तृतीयासमासे तृतीयासमासार्थवाक्ये च सर्वनामपदं पाणिनिसङ्केतसम्बन्धेन न तिष्ठतीत्यर्थस्वीकारेण सामञ्जस्यात् प्रथमान्तेन विपरिणामो वृथेति बोध्यम् । *प्रत्यङ्गमिति* । अन्तरङ्गमित्यर्थः । *मुक्तसंशयमिति* । क्रियाविशेषणमेतत् । निःसंशयमन्तरङ्गत्वात् समासात्प्रागेव अकच्स्वरौ कर्तव्याविन्त्यर्थः । *प्रथमार्थकत्वमिति* । इदमपि चिन्त्यमेवोक्तयुक्तेः । *सुडापत्तिरिति* । परे तु "न बहुव्रीहौ" "तृतीयासमासे" "द्वन्द्वे च" इति निषेधैस्तद्घटकानि सर्वादीनि न भवन्तीति सर्वादित्वमेव निषिध्यते,

तस्य सञ्ज्ञानिषेधेऽपि सर्वार्थवाचकसर्वादित्वानपायात्। अवयवस्य व्यपदेशिवद्भावेन, समुदायस्य च द्वन्द्वे विद्यमानत्वेन निषेधे तु अवयवस्य निषेधे फलाभावः। न च त्वच्छब्दस्य तान्तत्वे काकचोर्विशेषेण फलम्। द्वन्द्वावयवमात्रेसुन्दरादिविशेषणान्वयाभाववत् कुत्सादिविवक्षाया अभावात्*। समुदाये तद्विवक्षायां समुदायोत्तरप्रत्ययेनावयवगतकुत्सादेरपि बोधेनोक्तार्थत्वादवयवेभ्यः पृथक् तदनुत्पत्तेः। अन्यथा तत्र प्रत्येकं कप्रत्ययोत्पत्त्यापत्तिः। अत एवोक्तं भाष्ये "अकज् हि न भवति" इति विभाषाजसीतिसूत्रे। समुदायकुत्साविवक्षायामिति तदर्थः। कृताकचा समासस्तु भवत्येव। तत्र सर्वार्थत्वादनेन विकल्पो भवत्येव। *त्वदधरमधुरमधूनि पिबन्तम्' इति जयदेवप्रयोगबलेनान्यार्थकत्वच्छब्दस्य सत्त्वेऽपि तस्य सर्वनामत्वे मानाभावात्, बहुसंमतत्वाच्च। एतेन *'न बहुव्रीहाविति वदस्यापि द्वन्द्वे चिकीर्षिते इत्यर्थः' इत्यपास्तम्। फलाभावात्। जसाधारे शीभा-

---

न सर्वनामसंज्ञा। तथा च वर्णाश्रमेतराणामित्यत्र इतरशब्दस्य सर्वादित्वनिषेधे तदन्तस्य सर्वनामसंज्ञाया दूरापास्तत्वेन सुटोऽप्रवृत्तिः। एवं च यथाश्रुतसप्तम्यः समीचीना एव घटकत्वस्य सप्तम्यर्थत्वे क्षतिविरहात्। न चावयवस्य सर्वादित्वनिषेधे सर्वनामत्वाभावादकज् न स्यादिति वाच्यम्। "अकच्स्वरौ तु कर्त्तव्यौ प्रत्यङ्गं मुक्तसंशयम्" इति भाष्येण समासात्प्रागेव अकच्प्रवृत्तेरित्याहुः। *कुत्सादिविवक्षाया अभावादिति*। वृत्त्युत्तरमिति शेषः। वृत्तेः प्राक् कुत्सादिविवक्षायां तु अन्तरङ्गत्वादकच् भवत्येवेति बोध्यम्। तदेतद् ध्वनयन्नाह— *कृताकचा समासस्त्विति*।

*त्वदधरमधुरमिति*। अन्ये तु राधिकाऽत्यन्तविरहोत्कलिततया स्वाधरे कृष्णाधरत्वभ्रमेण मधुपानं कुर्वतीति बोधयितुं त्वदधरमधुरमित्यत्र त्वच्छब्दो युष्मच्छब्द एवेत्याहुः। *न बहुव्रीहाविति*। अयम्भावः। "चार्थे द्वन्द्वः" इत्यनेन इतरेतरयोगसमाहारयोर्द्वन्द्वो विधीयते। तत्र घटपटौ घटपटमित्युभयत्रापि घटपटोभयप्रकारकसमुदायविशेष्यकबोधस्यैव जननात् परस्परान्वयोपपत्तये घटत्वावच्छिन्नप्रकारतानिरूपिता या पटनिष्ठा समुदायत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतात्वावच्छिन्ना या पटत्वावच्छिन्नप्रकारतानिरूपितसमुदायत्वावच्छिन्ना घटनिष्ठा विशेष्यता तादृशविशेष्यताकबोधस्यौचित्येन समुदायत्वावच्छिन्नविशेष्यतानिरूपितोपस्थितीयप्रकारताप्रयोजकत्वस्य वर्णाश्रमेतरे वर्णाश्रमेतरा इत्यादावितरशब्दे सत्त्वेन निरुक्तोपसर्जनत्वस्य सत्त्वात् द्वन्द्वघटकानामुपसर्जनत्वादेव पाठात्पर्युदासे सिद्धे "द्वन्द्वे च" इति सूत्रमपि न बहुव्रीहाविति वन्न कर्तव्यमेव। एवञ्च द्वन्द्वस्थले अवयवगतसंख्या यदा विवक्ष्यते तदा इतरेतरयोगः। समुदायगतं समुदायत्वगतं वा

द्वे एव विकल्पविधायकस्य "विभाषा जसि"इत्यस्यासङ्गतेश्चेति भावः । उद्भूतावयवभेदसमूहस्य द्वन्द्वे विशेष्यतयोपसर्जने संज्ञाया अप्राप्त्या "द्वन्द्वे च"इत्यपि "न बहुव्रीहौ"इतिवदिति तत्त्वम् । अत एव गोस्त्रियोरिति सूत्रे "कुक्कुटमयूर्यौ"इत्यादौ ह्रस्ववारणाय *'द्वन्द्वे न'इति वचनमारब्धमिति दिक् ।

नाकजिति । समुदायनिष्ठकुत्साबोधको ऽकज् नेत्यर्थः ।

प्रथमचरम । अत्र सूत्रे 'न'इति न सम्बध्यते प्रथमादिष्वसम्भवात् । 'जसि'इत्यनुवृत्तेरर्थाधिकारादयमपि शीभावे एव विकल्पस्तदाह—जसः कार्यं प्रतीति । तयः—"संख्याया अवयवे तयप्"इति तदन्ता इत्यत्र हेतुरुक्तः* । द्वितीयतृतीयौ "द्वेस्तीयः" "त्रेः संप्रसारणं च"इति साधू । अर्थवदिति । *प्रतिपदोक्तस्येत्यपि बोध्यम् । तेनान्ते आद्युदात्तस्य 'द्वितीयाय भागाय'इत्येव, अनभावे तु स्मै भवत्येव ।

जराया । "अष्टन"इत्यतो विभक्ताविति, "अचिर"इत्यतो ऽचीत्यनुवर्त्तते, तदादिविधिश्चेत्याह-अजादाविति । जरसावित्यादौ तु व्यपदेशिवद्भावेन । विभक्तौ किम् । जराया इदञ्जारम्* । प्रतिपत्तिलाघवाय

---

यत्रैकत्वं विवक्ष्यते तदा समाहारद्वन्द्वः।उभयत्रापि द्वन्द्वविषये समुदायविशेष्यकावयवप्रकारकबोध इति सुधियो विभावयन्तु । एतत्सर्वं प्रमाणयन्नाह—द्वन्द्वे नेति वचनमारब्धमिति* ।

हेतुरुक्त इति* । केवलतयस्य सर्वनामसंज्ञायामपि जसः शीत्यत्र विहितविशेषणस्य सत्त्वेन फलाभावादिति भावः । *प्रतिपदोक्तस्येत्यपीति* । द्वितीयाय भागायेत्यादौ 'पूरणाद्भागे तीयादन्'-इत्यनि तस्य तीयप्रत्ययार्थेनैवार्थवत्त्वात्तत्रार्थवद्ग्रहणपरिभाषया वारणं न भवतीति लक्षणप्रतिपदोक्तपरिभाषा ऽवश्यं शरणीकरणीयेति तयैव परिभाषया पटुजातीयायेत्यादावपि वारणं भवतीति भावः । लाक्षणिकभिन्नत्वं प्रतिपदोक्तत्वमितिनिष्कर्षे तु अर्थवत्परिभाषासंचार आवश्यक इति बोध्यम् ।

*जारमिति* । न च शरदादौ 'जराया जरस् च' इत्यन्तर्गणसूत्रस्य वैयर्थ्यापत्तेन 'तद्धिते चेत्समासान्त एव' इतिनियमेनैव जारमित्यादौ दोषवारणाद्विभक्ताविति व्यर्थमिति वाच्यम् । जराशब्दात् क्यजन्तात्क्विपि 'क्वचि च' इतीत्वे अल्लोपयलोपयोः कृतयोः जरीत्यादौ अल्लोपस्य 'अचः परस्मिन्' इति स्थानिवद्भावेन अच्परकत्वाद् जरसादेशापत्तेः । जराशब्दादाचारक्विबन्तात्तव्यदादौ इटि आतो लोपं बाधित्वा परत्वाज्जरसादेशापत्तेश्च । वस्तुतस्तु अन्तर्गणसूत्रस्य नित्यार्थतया चारितार्थ्यात् न नियामकत्वसम्भव इति बोध्यम् ।

जराया असुङ् न कृतः* । पदाङ्गाधिकारे इति । पदमङ्गं च विशेष्यं* विशेषणेन तदन्तविधिरिति भावः। पदशब्देनोत्तरपदाधिकारः केवलपदाधिकारश्च गृह्यते इति "येन विधिः" इत्यत्राकरे स्पष्टम्। निर्दिश्यमानस्येति। "षष्ठी स्थानेयोगा" इतिसूत्रमावर्त्तते, आवृत्तस्य चायमर्थः-*षष्ठ्यन्तमुच्चार्यमाणमेव स्थानेन युज्यते न प्रतीयमानमिति, तेनेदं सिद्धमिति भावः।

---

*असुङ् न कृत इति* । वस्तुतस्तु द्वितीयान्तजराशब्दस्य पदद्वित्वे अत्यादिशब्देन समासे तत औविभक्तौ अतिजराजरा औ इति स्थिते स्थानिवद्भावेन जराशब्दत्वाज्जरसि अतिजरसाविति रूपं भवति, असुङ्पक्षे तु अतिजराजरसौ इति फलभेदात् तथा न्यासः कर्तुं न शक्यते इति बोध्यम् । पदद्वित्वं च पौनःपुनिक इत्यादौ प्रातिपदिकत्वसिद्ध्या ठगादिसिद्ध्यर्थमिति "सर्वस्य द्वे इति सूत्रे शेखर एव स्पष्टम् । यत्तु जराशब्दात् ण्यन्तात् क्विपि टिलोपे तस्मादौविभक्तौ जर्औ इति स्थिते असुङ्पक्षे जासाविति,आदेशकल्पे जरसाविति फलभेद इति; तन्न । णिलोपस्य स्थानिवद्भावेन जरसादेशस्यैवाप्राप्तेः। एतेन जराम् अत्तीति जरात् तस्मात् ण्यन्तात् क्विपि निरुक्तदिशा फलभेदादसुङ् न कर्त्तुं शक्यत इति परास्तम् । णिलोपस्थानिवत्त्वस्य दुर्वारत्वात् । जरात्इत्यस्य पूर्वस्थानिभूतजराशब्दावयवेतरतकारघटितत्वेन तत्र पूर्वान्तवद्भावेन जराशब्दत्वस्य दुर्लभतया तदादेशे जर्इत्यत्र सुतरां दुर्लभत्वाच्च । जराशब्दस्य ऋशब्देन समासे एकादेशे जरर्शब्दात् जसादिविभक्तौ फलभेदापादनं तु अतिस्थूलम् । तत्र अतो गुणे इति पररूपेण फलभेदाभावात् ।

*विशेष्यमिति । *विशेष्यमेवेत्यर्थः । एवञ्च पदाधिकारे ऽङ्गाधिकारे उत्तरपदाधिकारे चासति प्रमाणान्तरे पदस्याङ्गस्योत्तरपदस्य च विशेष्यत्वमेवेतीयं परिभाषा बोधयति । एतेन एतत्परिभाषावत् तस्मिन्नित्यादिपरिभाषालभ्यार्थमादाय 'अव्यवहितपूर्वस्य कार्याणि भवन्ति' इत्यादिपरिभाषाः सिद्ध्येयुरित्यपास्तम्। पदाङ्गाधिकारयोरसति मानान्तरे पदस्याङ्गस्य च विशेष्यत्वमेवेतिबोधनाय परिभाषायाः सार्थक्यात् । अन्यथा 'गर्गादिभ्यो यञ्' इत्यादौ प्रातिपदिकादित्यस्य विशेषणत्ववद् अङ्गस्य पदस्य च कदाचिद्विशेषणत्वं स्यात् । ततश्च अतिजरसौ इत्यादौ जराशब्दस्याजादिविभक्तिनिरूपिताङ्गत्वाभावाज्जरसादेशानापत्तिरिति भावः ।

*षष्ठ्यन्तमिति*।षष्ठी अन्ते यस्य तत् षष्ठ्यन्तम्।अन्तशब्दःसमीपवाची।षष्ठीप्रकृतिरित्यर्थः। यत इति सूत्रे शेषं कृत्वा यतः षष्ठी सा स्थानपदार्थानुयोगिकसम्बन्धप्रतियोगिनी भवतीति सूत्रार्थेन तथैव लाभात्। तत्र निर्दिश्यमानत्वं षष्ठीप्रकृतिविशिष्टप्रकारताश्रयत्वम । षष्ठीप्रकृतिवैशिष्ट्यञ्च स्वजन्यशाब्दबोधीयत्वं-स्वपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावत्त्वं—स्वपर्याप्तप्रयोजकतानिरूपितप्रयोज्य-

नन्वयं जरशब्दो, न जराशब्दो ऽत आह—एकदेशेति । स्थानिवत्सूत्रेणेति भावः* । जरा इत्यक्तपरिमाणस्य ग्रहात् । अनेन स्थानिबुद्ध्यैव कार्यप्रवृत्त्या "निर्दिश्यमानस्य" इतिपरिभाषाबाधाभावो बोध्यः । "येन विधिस्तदन्तस्य" इत्यस्य तु सञ्ज्ञासूत्रत्वात् सूत्रस्थजराशब्दो जराशब्दान्तपर इति तदन्ते आदेशप्रवृत्तौ परिभाषाविरोधः स्पष्ट एवेति दिक् । निर्जरसेति । अत्र "स्वादिषु" इति पदत्वेन रुत्वं न । भत्वेन पदत्वबाधात् । सूत्रेषूत्तरस्थस्य पूर्वत्रापकर्षवदग्रे लेखो वैचित्र्यायेति बोध्यम् । पक्षे इति । जरसादेशाभावपक्षे इति भावः । इदमर्वाचामनुरोधेन ।

परे तु 'विभक्त्यादेशेभ्यः परत्वाज्जरस्' इत्यसङ्गतम् । विभक्त्यादेशानामेव पूर्वविप्रतिषेधेनेष्टत्वात् । अत एव 'जराया' इति सूत्रे 'अजरांसि' इत्यत्र नुम्जरसोः प्राप्तयोर्विप्रतिषेधेन जरस्' इति भाष्योक्तं सङ्गच्छते । अन्यथा त्वद्रीत्या शिभावात्पूर्वमेव जरसः प्रवृत्तौ तदा सर्वनामस्थानत्वाभावाद् नुमा विप्रतिषेधविचारासङ्गतिः स्पष्टैव । मम तु पूर्वविप्रतिषेधेन जरसः पूर्वं शिभावे प्रवृत्ते तत्सङ्गतिः स्पष्टैव । अत एव "टाङसि" इतिसूत्रे कैयटेनोक्तं—"भाष्यकारः सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नतिजरेणातिजरादिति भाष्यं न त्वतिजरसिनाऽतिजरसादिति गौरवमुद्भावितवान्" इति । भवद्रीत्या पूर्वं जरसादेशे इनाद्यप्राप्त्या, तदभावपक्षे च तस्याप्राप्त्या 'सन्निपातपरिभाषया जरसादेशमनभ्युपयन्' इत्यस्यासङ्गतिः स्पष्टैव ।

वृत्तिकारोऽप्याह—"अतिजरसिन अतिजरसादिति केचिदिच्छन्ति, यथा तु भाष्यं तथा नैतदिष्यते इति लक्ष्यते" इति । नपुंसकद्वितीयैकवचने ऽपि लुग्बाधेन "अतोऽम्" इत्यपि सन्निपातपरिभाषया जरसभावः । न च तत्र न अकारान्तसन्निपातकृत एवाजादिः, किं तु तदभावे ऽपि । एषा तु सन्निपातलक्षणविधिं विना न यस्य प्रवृत्तियोग्यता तत्रैवेति

---

तावद्विशेष्यतानिरूपितत्वमेतत्त्रितयसम्बन्धेन । विस्तरस्तु परिभाषेन्दुटिप्पणे द्रष्टव्य इति दिक् । *इतिभाव इति* । संख्यात्वपरिमाणत्वैतदन्यतरव्याप्यधर्मप्रकारकसंशयसामान्यनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयतावरवरूपाकपरिमाणत्वसमनियतधर्मनिमित्तककार्यस्यैकदेशविकृतन्यायेनातिदेष्टुमशक्यत्वेन निरुक्ताक्तपरिमाणचतुष्टसमनियतजराशब्दत्वस्यैकदेशविकृतन्यायेनाऽऽनेतुमशक्यत्वादिति ।

अत्र भवत्येव जरासिति वाच्यम् । मानाभावात् । 'टाङसि'इतिसूत्रस्थेनातिजरेणेत्येतद्विषयकैयटेन विरोधाच्च । ध्वनितश्चेदं"जराया" इति सूत्रे भाष्ये । तत्र हि पूर्वपक्षिणा-'अतिजरसं पश्येत्यत्र लुक् कस्मान्न'इति पृष्टे, परेण-'प्रथमैकवचनेऽप्यतिजरसं तिष्ठतीत्यत्रापि कुतो लुङ् न शङ्क्यते' इति पृष्टे, पूर्वपक्षिणा 'प्रथमैकवचने ऽम्भावोत्तरमेव जरस् । तत्र जरसि कृते सन्निपातपरिभाषया न लुक्' इति विशेष उक्तः । यद्वा 'अम्भावे कृते सन्निपातपरिभाषया न जरस्'इतिपाठभेदेन विशेष उक्तः । ततः परेण 'यद्येवम् अतिजरसम् अतिजरसैरित्यत्र न प्राप्नोति जरस्'इतिद्वितीयैकवचनादौ शङ्किते, सिद्धान्तिना-इष्टमेवैतदतिजरमतिजरैरिति भवितव्यमिति । अत्र विशेषोपपादनेऽन्त्यपाठ एव युक्तः । अन्यथा लुकः प्रथमैकवचने तेनाभावे उपपादिते द्वितीयैकवचने ऽपि तेन न्यायेन लुको ऽप्राप्तौ विशेषोक्तिरसङ्गतेति बोद्ध्यम् । एवं स्त्रियां जरसादेशे कृते "याडापः" इत्यादीनामाकारप्रश्लेषेण वारणं विफलमेव तेषां परत्वात् । अतिखट्वशब्दे तेषां वारणाय तु प्रश्लेष आवश्यक इत्याहुः ।

परे तु-जरसादेशाद् विभक्तिसम्बन्धिकार्यमात्रं पूर्वविप्रतिषेधेन । तेन जराणामित्यादावामि पूर्वं नुटि जरसो ऽभाव एव । एवं च "ह्रस्वनद्याप" इत्यत्राऽऽकारप्रश्लेषे न फलं, नापि मानम् । अत एव 'ङ्याब्ग्रहणे ऽदीर्घः' इतिवज्जरसादेशस्य स्थानिवत्त्वप्रतिषेधो वार्त्तिककृता नाऽऽरब्ध इत्याहुः* ।

---

*इत्याहुरिति । *वस्तुनस्तु विभक्तिसम्बन्धिकार्यमात्रात्प्रागेव जरस् । यत्र जरसादेशस्य परत्वं तत्र "विप्रतिषेधे परम्"इति जरस् । यथा—अतिजरांसि । यत्र याडादयः पराः तत्रापि पूर्वविप्रतिषेधेन जरस् । यथा जरसे इत्यादौ याटम्बाधित्वा जरस् । अत एव जरसो ऽवकाशः जरसा जरसे इति भाष्यं सङ्गच्छते । अन्यथा "याडापः" इत्यनेन याटि अजादिविभक्तिपरकत्वाभावेन जरसोऽप्राप्त्या तदसङ्गतिः स्पष्टैव ।

अत एव 'अथेह लुक् कस्मान्न भवति अतिजरसम्पश्येति । किं पुनः कारणं द्वितीयैकवचनमेवोदाह्रियते न पुनः प्रथमैकवचनमपि अतिजरसं तिष्ठतीति ? । अस्त्यत्र विशेषः—नात्राकृते ऽम्भावे जरस्भावः प्राप्नोति । किं कारणम् । अचीत्युच्यते-' इति भाष्यम्-तदप्राप्तियोग्ये चारितार्थ्याभावविशिष्टा कृते चारितार्थ्याभावविशिष्टा याऽपवादशास्त्रप्रवृत्त्यनन्तरोत्सर्गशास्त्रप्रवृत्ति-

परिभाषाया अनित्यत्वमिति । इनातोरिकारदीर्घोच्चारणम्, ङसि कर्त्तव्ये ऐस्करणञ्च तदनित्यत्वे मूलमिति तदभिमानः । षष्ठ्येकवचने इति । एकसूत्रोपात्तत्वात्स्यादेशविषये ऽपि पूर्वविप्रतिषेध इति तद्भावः । एतच्च भाष्येति । इनातोरिकारदीर्घोच्चारणप्रत्याख्यानपरभाष्येत्यर्थः, 'इष्टमेवैतत्सङ्गृहीतमतिजरमतिजरैरिति भवितव्यम्'इति "जराया" इतिसूत्रस्थभाष्येति चार्थ इत्यन्यत्र विस्तरः ॥

---

सम्भावनाप्रयोज्यवैयर्थ्यसम्भावना तादृशसम्भावनारूपबाधकत्वबीजवता अतोऽमितिशास्त्रेण "स्वमोर्नपुंसकात्" इतिसूत्रे स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविधेयघटितातिरिक्तत्वेन च सङ्कोचादतिजरसं तिष्ठतीत्यत्र प्रथमैकवचने जरसादेशे कृते अम्घटितातिरिक्तस्वमोरभावेन लुको ऽप्राप्तिरिति द्वितीयैकवचने एव लुक् कस्मान्न भवतीति शङ्कोचिता, न तु प्रथमैकवचने इति विशेषप्रदर्शकं सङ्गच्छते । अन्यथा द्वितीयैकवचनेऽपि भवद्रीत्याऽमादेशे सन्निपातपरिभाषया तत्रापि जरसो ऽप्रवृत्तौ इदं भाष्यमसङ्गतं स्यात् । मम तु परत्वाज्जरसि द्वितीयैकवचने लुक्कस्मान्नेति शङ्का युज्यते।

अग्रेऽपि 'यदा च जरस्भावः कृतः तदा लुग् न भविष्यति सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति'इति सिद्धान्तिना समाहितम्। अत एवाग्रे पूर्वपक्ष्येकदेशिना 'यद्येवमतिजरसमतिजरसैरित्यत्र न प्राप्नोति । अतिजरमतिजरैरिति भवितव्यम्'इतिप्रथमैकवचनतृतीयाबहुवचनयोः शङ्का कृता । ततः सिद्धान्तिना इष्टापत्तिं मत्वा गोनर्दीय आह–"इष्टमेवैतत्संगृहीतम्भवति अतिजरमतिजरैरिति भवितव्यम् सत्यामेतस्यां परिभाषायां सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इत्युक्तं सङ्गच्छते । अन्यथा विशेषोपपादन एव लुगैसोः सन्निपातपरिभाषया जरसोऽप्राप्त्या इमे शङ्कासमाधाने ऽसंगते स्याताम् ।

न च 'नुमो ऽनङ्जरसौ भवतो विप्रतिषेधेन अतिजरांसि ब्राह्मणकुलानि' इतिभाष्यविरोधः । भवद्रीत्या शिभावादेव परत्वाज्जरसि नुम्जरसोर्विप्रतिषेधविचारस्यासङ्गत्यापत्तेरिति वाच्यम् । अतिजर अस् इति स्थिते परमपि जरसादेशम्बाधित्वा नित्यत्वाच्छिः कस्मान्न भवतीति शङ्काम्मनसि निधाय श्यादेशे कृतेऽपि परत्वान्नुमं बाधित्वा जरसेव भविष्यतीति जरसादेशोऽपि नित्य इति बोधयितुं तद्वार्त्तिकप्रवृत्तेः, अग्रिमभाष्येण तथैव लाभात् । एतेन यद्वा ऽम्भावे कृते सन्निपातपरिभाषया न जरसिति पाठभेदेन विशेषोपपादनम्, एवं स्त्रियां जरसादेशे कृते याडाप इत्यादीनामाकारप्रश्लेषेण वारणं विफलमेव तेषां परत्वादिति कथनं च परास्तम् । पूर्वोक्तभाष्यप्रामाण्येन पूर्वविप्रतिषेधेन जरसि याडादिवारणाय प्रश्लेषस्यावश्यकत्वात् । न च टाङसिङसामितिसूत्रस्थेनातिजरेणेत्येतद्विषयकेण

पद्दन्नो ॥ आदेशैः *स्वानुरूपाः स्थानिन आक्षिप्यन्ते इत्याह—पाददन्तेति। "अनुदात्तस्य चर्दुपधस्य' इत्यतोऽन्यतरस्यामित्यनुवर्त्तते। अत एव तुल्यास्यसूत्रादिभाष्ये 'आस्ये तुल्यः" 'पादेनोपहतं' 'मासेन पूर्वाय' इत्यादिप्रयोगा, 'हृदयस्य प्रिय' इति सौत्रप्रयोगश्चोपपन्ना भवन्ति। "ये च तद्धिते" इति सूत्रस्थे 'वा केशेषु' इतिवार्त्तिके वाग्रहणन्तु तत्र सूत्रे वाग्रहणासम्बन्धबोधकम्।

यद्यपि निशाशब्दस्य निशशब्दप्रकृतिकत्वेन भागुरिमतसिद्धतयाऽऽपो वैकल्पिकत्वेन च वाक्वाचेत्युभयवन्निशिनशयोः सूत्रे निश्ग्रहणं विनापि सिद्धिः तथापि सुटि हलन्तस्यासाधुत्वबोधनायात्र ग्रहणमिति वृत्त्यनुसारिणः।

परे तु "अनुदात्तस्य" इतिसूत्रेऽन्यतरस्यामित्यस्य स्वरितत्वं नास्ति। अत एव "शीर्षश्छन्दसि" इति सूत्रे 'शीर्षन्निति प्रकृत्यन्तरं द्रष्टव्यम्। आदेशत्वे हि छन्दसि शिरस्शब्दस्य प्रयोगो न स्यात्' इत्युक्तं भाष्ये। अन्यथा विकल्पानुवृत्त्याऽऽदेशत्वेऽपि दोषाभावेन तदसङ्गतिः स्पष्टैव। "ये च तद्धिते" इत्यत्र चाऽऽदेशत्वाय शिरसो ग्रहणं कर्त्तव्यमित्युक्तं, "वा केशेषु" इति च वक्तव्यमित्युक्तम्। तस्मात् शसादिविषयाणि प्रकृत्यन्तराण्येव पदादयः। एवं मांस्पृत्स्नवोऽपि। अत एव नस्पृतोः स्थानिवद्भावादावन्तत्वमादाय नसां पृतामित्यादौ न नुडादिः। "नासिकाया नस् यत्तस्क्षुद्रेषु" इतिवार्त्तिके आदेशत्वमेव। नासिकाया इत्युक्तेः। अत एव तद्विषये 'नासिकाक्षुद्र' इत्यादि न। अत एव पदादिषु, 'मांस्पृत्स्नूनामुपसंख्यानम्' इतिवार्त्तिके स्थानिनिर्देशो न कृत इत्याहुः।

---

कैयटेन विरोध इति वाच्यम्। अतिजर आ इतिस्थिते जरसभावपक्षे इनादौ कृते तदनन्तरं कुतो न जरसिति शङ्कां मनसि निधाय सन्निपातेत्यादिग्रन्थस्य प्रवृत्त्या तत्सङ्गतेः। जरसादेशस्य स्थानिवत्त्वप्रतिषेधोऽपि 'ङ्याब्ग्रहणे ह्रस्व' इति वक्तव्ये ऽदीर्घ इत्युक्त्यैव तत्सङ्ग्रहेणाऽऽरब्ध एवेत्यन्ये।

*स्वानुरूपा इति* । तत्त्वञ्च स्वबोध्यार्थबोधकत्वं— स्वघटकान्यअनघटितत्वमेतदुभयसम्बन्धेन पदादिविशिष्टत्वम्। आद्यसम्बन्धदानेन आसनशब्दस्य सकारादिघटितत्वेऽपि नादेशः। द्वितीयसम्बन्धदानेन चरणशब्दस्य न पदादेश इति तस्य क्लीबत्वात् पान्दि इति न। एवं रात्रिशब्दस्य न निशादेश इति इदमहर्निशा गतमित्यादौ न रूपरात्रीति रूपमिति बोध्यम्।

प्रत्याहार इति । व्याख्यानादौटष्टकारेणेति भावः । अक्लीबस्येति* । पर्युदासपरतयाऽप्यस्य भाष्ये व्याख्यानात् लघुत्वाच्चेति भावः । प्रसज्यप्रतिषेधेन व्याख्याने ऽत एव ज्ञापकात्केषांचिदसमर्थसमासानां साधुत्वं बोद्ध्यम् ।

स्वादिषु ॥ सुरत्र प्रथमैकवचनम् । आदिशब्देन कबन्तानां ग्रहणं व्याख्यानात्* तदाह—कप्प्रत्ययावधीति । तदन्तेष्वित्यर्थः* ।

यचि भम् । समाहारद्वन्द्वे सौत्रत्वान्न टच् । यचीत्यनेन स्वादेर्विशेषणात्तदादिविधिः । असर्वनामेति । तेन सुपादावित्यादौ पादः पन्न । भसञ्ज्ञा पदत्वकार्यप्रतिबन्धरूपे ऽशास्त्रीयेऽपि कार्ये भवति, नपदान्तसूत्रस्थभाष्यप्रामाण्यात् ।

आकडारा* ॥ "प्राकडारात्" इति नावधिः तत्पुरुषो द्विगुश्चेति लि-

---

*अक्लीबस्येतीति* । अनन्तर इति शेषः । तथा चाक्लीबस्यानन्तरः प्रत्यासन्नस्या ऽक्लीबप्रकृतिकश्च सुट् सर्वनामस्थानसंज्ञक इति सूत्रार्थः । स्यादेतत् । 'सुडशी' इत्येवोच्यताम् । प्रथमैकवचने अमा बाधेन ज्ञानमित्यादौ न नुम् । न च वारि इत्यत्र तदापत्तिः । न लुमतेतिनिषेधेन सर्वनामस्थानपरकत्वाभावेन नुमः प्राप्त्यभावात् । वारिणी इत्यत्र नुमि सर्वनामस्थाने चेति दीर्घस्तु न शङ्क्यः । इयाः सर्वनामस्थानसंज्ञाया अशीत्यनेन पर्युदस्तत्वात् । नापि कतरदित्यादावद्डादेशस्य सर्वनामस्थानसंज्ञायामङ्गस्य भत्वाभावेन टिलोपानापत्तिः । डित्त्वसामर्थ्येन तत्सिद्धेः । न च अशीति पर्युदासेन रमे इत्यत्र इयादेशस्य सर्वनामस्थानत्वाभावेन भसंज्ञया यस्येतिलोपापत्तिरिति वाच्यम् । इयां तस्य "औङः इयां प्रतिषेधः" इति निषेधात् । यदि सर्वे इत्यत्र इयादेशस्य औङ्स्थानिकत्वाभावेन तदापत्तिरिति चेद्, वार्त्तिके औङ्ग्रहणमपि न कार्यम्, तेन न दोष इति । न च इयामिति स्त्रीलिङ्गनिर्देशेन स्त्रियामेव प्रवृत्तौ पुनरपि तदवस्थैव सर्वे इत्यत्रापत्तिरिति वाच्यम् । विभक्तिविशेषणत्वार्थे स्त्रीलिङ्गनिर्देशेन तस्य विवक्षाया अत्राभावात्, इति चेन्न । द्वितीयैकवचने अतिजरसमित्यत्र झलन्तलक्षणनुमापत्तेरिति दिक् ।

*व्याख्यानादिति *प्रथमायामित्येव वक्तव्ये असर्वनामस्थानग्रहणेन प्रत्यासत्तिन्यायकपिञ्जलन्यायाप्रवृत्तौ व्याप्तिन्यायरूपादित्यर्थः ।

स्वादिषु,यचि भमित्युभयत्रापि-प्रत्ययस्य निमित्तत्वेनोपादानं यत्र तत्रापि प्रत्ययग्रहणपरिभाषया तदादिमात्रांशोपस्थित्या तदादेरेव पदसंज्ञाभसंज्ञे भवत इति बोधयन्नाह-*तदन्तेष्वित्यर्थ इति* । असर्वनामस्थानकप्रत्ययान्तस्वादिप्रत्ययाव्यवहितपूर्वत्वविशिष्टं पदसंज्ञं स्यादित्याद्यर्थः ।

*आकडारा* । अत्रैकपदप्रवृत्तिनिमित्तं स्वसमभि-

ङ्गात् समावेशार्थं हि तदित्याह—कडारा इत्यादि। व्याप्त्यर्थकाऽऽङा 'आचार्यात्'इति वक्तुं युक्तम्। एकैवेति। *संख्यावाच्येकशब्दोपादानादवधारणं संपद्यत इति भावः। या परेति। द्वयोः सावकाशयोः परा। निरवकाशत्वे तु सैवेत्यर्थः। आभ्यामेव बाधसिद्धिस्तु न। अन्यत्र तव्यदादौ कृत्कृत्यप्रत्ययसञ्ज्ञादीनां समावेशदर्शनेन विरोधाभावाद् विप्रतिषेधाप्रवृत्तेः। लौकिकस्य तक्रकौण्डिन्यन्यायस्यापि लोके सञ्ज्ञाविषये ऽदर्श-

---

व्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकवत्त्वरूपेण स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वं बोध्यम्। विस्तरस्त्वेकः पूर्वपरयोरित्यत्र द्रष्टव्यः। एका संज्ञा भवतीत्यस्य इत आरभ्य "कडाराः कर्मधारये" इत्यतः प्राक् स्वीयोद्देश्यतावच्छेदकविशिष्टोद्देश्यतावच्छेदककसंज्ञान्तरसामानाधिकरण्याभावविशिष्टा संज्ञा भवतीत्यर्थः। स्वीयोद्देश्यतावच्छेदकवैशिष्ट्यश्चोद्देश्यतावच्छेदके स्वतादात्म्यम्—स्वप्रतियोगिको विधेयानुयोगिको यः संसर्गः तादृशसंसर्गघटकनिरूपितत्वसमसंख्याकनिरूपितत्ववान् यः संसर्गः तत्संसर्गप्रतियोगित्वम्—एतदुभयसम्बन्धेन। अत एव परमदध्नेत्यादौ तत्पुरुषबहुव्रीह्यादिसंज्ञाभिरङ्गसंज्ञायाः, चैत्रमित्यत्र घिलघुसंज्ञयोः, गार्गीबन्धुरित्यादौ गुरुसंज्ञया नदीसंज्ञायाः, अङ्गसंज्ञया भपदसंज्ञयोश्च समावेशः सिद्ध्यति। अन्यथा परमदध्नेत्यादौ परया तत्पुरुषसंज्ञया अङ्गसंज्ञाबाधेनानङादेशः, चैत्रमित्यत्र उभे अपि वर्णस्येति पक्षे परया लघुसंज्ञया घिसंज्ञाबाधे "द्वन्द्वे घि"इति पूर्वनिपातः, गार्गीबन्धुरित्यादौ परया गुरुसंज्ञया नदीसंज्ञाबाधेन 'नदी बन्धुनि' इति पूर्वपदान्तोदात्तत्वं च न स्यात्।

लक्षणसमन्वयस्तु यथा-भसंज्ञाशास्त्रीयोद्देश्यतावच्छेदकतदादित्वस्य पदसंज्ञाशास्त्रीयोद्देश्यतावच्छेदकतदादित्वे स्वतादात्म्यस्य—स्वप्रतियोगिको यः स्वनिष्ठावच्छेदकतानिरूपितोद्देश्यतानिरूपितविषयतावत्त्वरूपो विधेयानुयोगिकः संसर्गस्तत्संसर्गघटकनिरूपितत्वसमसंख्याकनिरूपितत्ववत्संसर्गप्रतियोगित्वस्य च सत्त्वाद्बोध्यः। नचाङ्गसंज्ञाशास्त्रीयोद्देश्यतावच्छेदकतदादित्ववैशिष्ट्यस्य भपदसंज्ञाशास्त्रीयोद्देश्यतावच्छेदकतदादित्वे सत्त्वात्तयोः समावेशो न स्यादिति वाच्यम्। अङ्गसंज्ञायामव्यवहितपूर्वं यत्तदादि तदेवोद्देश्यं, भपदसंज्ञयोश्च तदाद्यभिन्नं यदव्यवहितपूर्वं तदुद्देश्यमिति स्वप्रतियोगिकसंसर्गघटकनिरूपितत्वतुल्यसंख्याकनिरूपितत्ववत्संसर्गप्रतियोगित्वस्य तदादित्वयोरभावेनाव्यवहितपूर्वत्वतदादित्वयोश्च तादात्म्यस्याभावेन परस्परमुद्देश्यतावच्छेदकवैशिष्ट्यस्य उद्देश्यतावच्छेदके ऽभावेनादोषात्। एवं ययोः बाध्यबाधकभावो नेष्यते तत्र विशेष्यविशेषणभावव्यत्यासेन निरुक्तसमानोद्देश्यतावच्छेदकत्वविघटनं बोध्यम्। कारकाधिकारस्थसंज्ञानां तु न कदाचिदपि समावेशः।

तेन* शास्त्रेऽपि संज्ञाविषये ऽप्रवृत्तेश्च । तेनेति । अनवकाशत्वेनेत्यर्थः ।

परोदाहरणं तु 'अपादानमुत्तराणि कारकाणि बाधन्ते' इत्याद्याकरे स्पष्टम् । विरोधाद्यभावेन विप्रतिषेधसूत्राद्यप्रवृत्तावपि* परत्वादेरन्यत्र बलवत्त्वेन दृष्टतयाऽत्रापि तेन व्यवस्था । अपादानादिसञ्ज्ञानां समावेशे तु तत्कार्ययोः *पर्यायापत्तिर्दोषः । भपदसंज्ञयोः समावेशे तु राज्ञ इत्यादौ नलोपस्यापत्तिर्बोध्या । न च राजन्य इत्यादौ "सुप्तिङन्तम्"इति पदत्वं दुर्वारम् । परया भसञ्ज्ञया तु न बाधस्तस्या अन्तरङ्गत्वादिति वाच्यम् । समानावधिकाया* अन्तरङ्गाया अप्यनया बाध्यसामान्यचिन्तया ऽपवादत्वेनैव बाधादित्याहुः ।

आकडारस्थसञ्ज्ञासु च यथोद्देशपक्ष एवेत्यदद्व्यङ्शब्दे निरूपयिष्यते । भपदसञ्ज्ञाविधावङ्गप्रकरणे भस्येत्यस्य पाठेनाङ्गमित्यनुवर्त्याङ्गं सत् पदं भवति, भं भवतीत्यर्थेन ता-

---

सर्वत्र कारकत्वस्यैवोद्देश्यतावच्छेदकत्वेन निरुक्तसमानोद्देश्यतावच्छेदककत्वस्यैव सत्त्वात् । 'सिति च'इत्यत्र सित्त्वस्य प्रत्ययत्वव्याप्यधर्मत्वेन प्रत्ययग्रहणपरिभाषयोपस्थितस्य तदादेरित्यस्योद्देश्यत्वेन भसंज्ञायां चाव्यवहितपूर्वस्य तत्त्वेन पदसंज्ञया भसंज्ञाबाधानापत्तौ'पार्श्वम्'इत्यत्र"ओर्गुणः" इति गुणापत्तिरिति तु न शङ्कनीयम् । "सिति च" इत्यत्रापि तस्मिन्निति परिभाषोपस्थितपूर्वत्वांशस्यैव विशेष्यत्वविवक्षणेन तदाद्यभिन्नाव्यवहितपूर्वत्वस्यैवोभयत्राप्युद्देश्यतावच्छेदकतया समानावधिकत्वेन भसंज्ञाबाधाक्षतेरदोषात् । सिदन्तस्य तदादेरिति तु नार्थः । संज्ञाविधाविति निषेधात् । *संख्यावाचीति* । निरुक्तसंख्यावाचीत्यर्थः ।

*अदर्शनेनेति* । विरोधे हि बलीयसा दुर्बलं बाध्यते इति न्यायेन विरोधाभावे तक्रकौण्डिन्यन्यायस्याप्रवृत्तेरिति भावः । *अप्रवृत्तावपीति । चिन्त्यमिदम् । 'आकडारादेका संज्ञा' इत्यनेन निरुक्तसमानोद्देश्यतावच्छेदककसंज्ञान्तरसामानाधिकरण्याभावस्य निरुक्तसमानोद्देश्यतावच्छेदककसंज्ञायां बोधनेन विप्रतिषेधस्य सत्त्वेन विप्रतिषेधशास्त्रप्रवृत्तौ बाधकाभावात् । *पर्यायापत्तिरिति* । वस्तुतस्तु संज्ञयोरविरोधेन समावेशेऽपि तत्प्रयुक्तकार्ययोर्विरोधस्य सत्त्वेन गां दोग्धीत्यादौ द्वितीयाबाधेन पञ्चम्यापत्तौ वैपरीत्यापत्तिरापादयितुं न्याय्या । *समानावधिकाया इति* । समानावधिकत्वञ्च निरुक्तोभयसम्बन्धेन स्वीयोद्देश्यतावच्छेदकविशिष्टोद्देश्यतावच्छेदककत्वं बोध्यम् । तेन 'ईबन्धुः' इत्यत्र गुरुनदीसंज्ञयोः परिष्कृतसमानावधिकत्वाभावेन समावेशाद् 'गुरोरनृत' इति प्लुतो, 'नदी बन्धुनि' इति पूर्वपदान्तोदात्तत्वञ्च सिध्यति ।

भ्यां तस्य समावेश एव* न पर्याय इति बोद्ध्यम् । पुरुषसञ्ज्ञापरस्मैपदसञ्ज्ञयोरपि "णलुत्तमो वा"इति ज्ञापकात्समावेशः । गुरुलघुसञ्ज्ञे वर्णस्य, नदीघिसञ्ज्ञे तदन्तस्येति भिन्नावधिकत्वात्समाविशतः । उभे अपि वर्णस्येति पक्ष आकरे उपलभ्यमानोऽप्येकदेशिन एव समावेशानुपपादादिति दिक् । यल्लोप इति । "हलि सर्वेषाम्"इत्यनेनेत्यर्थः ।

अल्लोपो ऽनः ॥ तपरकरणं किम् । अनितेः क्विपि आन इत्यादौ लोपाभावाय । अन्त्वं त्वत्रैकदेशविकृतन्यायेनेत्यन्यत्र विस्तरः । पूर्वस्मादिति । अचः परस्मिन्नित्यत्र 'पूर्वविधौ'इत्यस्यावृत्त्या पञ्चमीसमासाश्रयणादयमर्थो लभ्यते इति भावः । तेन *प्रत्यैषिषन्नित्यादिसिद्धिः । अन्यथा जुस् स्यात् । अत एव "उभे अभ्यस्तम्"इति सूत्रे उभेग्रहणं यत्रोभे श्रूयेते तत्रैवाभ्यस्तसञ्ज्ञार्थम् ऐर्त्सन् इत्यत्राभ्यस्तलक्षणो जुस् मा भूदित्युक्ते शपैकादेशस्य पूर्वविधाविति पञ्चमीसमासेन स्थानिवत्त्वाज्जुसोऽप्राप्तेरसति प्रयोजने उभेग्रहणं सहार्थमित्युक्तम् । तेन उभे यत्र श्रूयेते इत्यर्थेऽपि प्रत्यैषिषन्निति सिद्धये आवश्यकेन पञ्चमीसमासेन तत्सिद्धावुभेग्रहणं सहार्थमिति तद्भावः ।

इति पक्षे त्विति । तुनाऽस्यानित्यत्वं सूचितम् । प्रविगणय्येति भाष्योदाहरणमपि तदनित्यत्वे एव सङ्गच्छते । अत एव हे गौरित्यत्र वृद्धेः स्थानिवत्त्वान्न सम्बुद्धिलोपः । पूर्वस्मान्निमित्तत्वेनाऽऽश्रितादिति व्याख्याने तु न मानम् ।

( के(१) चित्तु पूर्वस्मादव्यवहितपरस्यैव* कार्ये स्थानिवत्त्वम् ।

---

*समावेश एवेति* । निरुक्तसमानोद्देश्यतावच्छेदककत्वस्याभावादिति भावः । एवमुत्तरत्रापि बोध्यम् ।

*प्रत्यैषिषन्निति* । न च जुसः पदचरमावयवत्वेन "न पदान्त" इति स्थानिवत्त्वनिषेधः शङ्क्यः । पदे अन्त इति सप्तमीसमासस्य सिद्धान्तितत्वेन पदपरकचरमावयवत्वस्य जुस्यभावेन निषेधाप्रवृत्तेः । न चैवमपि प्रत्यैषिषन्देवदत्ता इत्यादौ पदपरकत्वस्य चरमावयवे जुसि सत्त्वेन पुनरपि तन्निषेधः शङ्क्यः । इत एव दोषात्तत्र प्रत्यासत्त्या परपदस्थाजादेशस्यैव ग्रहणमित्यदोषात् ।

*अव्यवहितपरस्यैवेति* । न च भवतीत्यादौ पञ्चमीसमासेन गुण-

---

(१) अयं पाठो बहुषु पुस्तकेषु नास्ति ।

प्रविगणय्येत्यादौ तु स्थानिवद्भावलब्धाकारस्यैव व्यपदेशिवद्भावेन लघुपूर्वत्वमादाय न दोष इति तदनित्यत्वे न मानमित्याहुः* ) ।

पूर्वत्रासिद्धे नेति । अतिदेशदृष्ट्या त्रिपाद्या असिद्धत्वेन न्यायसिद्धानुवादोऽयम् । तत्फलं त्वतिदेशान्तराणां वतिघटितानां त्रिपाद्यां प्रवृत्तिबोधनम् । अत एव *अमी, क्षीरपेणेत्यादौ मीत्वणत्वे भवतः । अत्रैकारस्यादस्सम्बन्धित्वं, पे इत्यस्यैकाजुत्तरपदत्वञ्चान्तवद्भावाधीनम् । तस्य दोष इति । इदं वाचानिकमेव । "न मु ने"इति सूत्रे 'न'इति योगविभागस्तु भाष्ये न दृश्यते । अत एव सिद्धकाण्डं वार्त्तिककृताऽऽरब्धं, "नलोपः सुप्"इति सूत्रञ्च सूत्रकृता ।

प्रकारार्थमिति । प्रकारः सादृश्यं, तच्च सुप्त्वेन । मांस्पचनीत्यादावपि "न लुमता" इतिनिषेधानित्यत्वाच्छसादिपरत्वं बोध्यम् । शब्दत्वेन सादृश्यमित्यन्ये । तन्न । "वा शोकष्यञ्रोगेषु"इत्यस्य वैयर्थ्यापत्तेः, "नासिकाया यत्तस्क्षुद्रेषु नस्"इति भाष्यपठितवार्त्तिकस्य *वैयर्थ्यापत्तेश्च । "आसन्यं प्राणमूचुः"इत्यत्रापि तद्वदेव शसादिपरत्वम् । अत्र 'सुप्रभृतिषु' इति वाच्ये 'शस्प्रभृतिषु' इत्युक्त्या ऽन्यत्र क्व चिदेव प्रवृत्तिर्बोध्यते । अत एव पद्दन्निशां ग्रहणं चरितार्थम् । तेषां द्विविधानामपि कोशसिद्धतया तत्र व्यवस्थार्थताया एव वक्तव्यतया सुप्प्रत्ययमात्रे प्रवृत्तौ तस्या असम्भवेन तद्वैयर्थ्यं स्पष्टमेव । प्रकारार्थत्वे प्रमाणमाह—भाष्ये इति । तत्र हि "शस्प्रभृतिष्वित्युच्यते, अशस्प्रभृतिष्वपि

---

स्य स्थानिवद्भावादवादेशो न स्यादिति वाच्यम् । स्वविधौ पञ्चमीसमासेनापि स्थानिवद्भावस्याप्रवृत्तेः । अत्राव्यवहितपरत्वं श्रूयमाणस्बोध्यम् । *आहुरिति* । अत्रारुचिबीजन्तु प्रविगणय्येतिभाष्यासङ्गतिः । स्थानिभूतादचः पूर्वत्वेन दृष्टो यो णकारस्तदव्यवहितोत्तरत्वस्य श्रूयमाणस्य णौ सत्त्वेनाल्लोपस्य स्थानिवद्भावेन एकस्मिन्नित्युक्त्या ऽसहाये एव व्यपदेशिवद्भावस्य प्रवृत्तेर्निर्णीततया प्रकृते व्यपदेशिवद्भावाप्रवृत्तौ लघुपूर्वशब्देन अकारस्यः ग्रहणायोगात्, लघुपूर्वाण्णकाराच्च णेरव्यवहितपरत्वाभावेन णेरयादेशानापत्तेः ।

*अमी क्षीरपेणेत्यादाविति* । "अन्तादिवच्च"इति सूत्रं न कर्तव्यमिति मते "स्थानिवदादेशोऽनल्विधौ" इत्यस्य त्रिपाद्यामपि प्रवृत्त्या तेनानयोः सिद्धिर्बोध्येत्यन्तादिवत्सूत्रे विस्तरेण निरूपितम् ।

*वैयर्थ्यापत्तेरिति* । विरुद्धोऽर्थो यस्य स व्यर्थः तस्य भावो वैयर्थ्यं तस्माद्विरुद्धार्थत्वापत्तेरित्यर्थः । तथा हि नासिक्यं नगरं, नासिक्यो वर्ण इत्यादौ

दृश्यते-शलादोषणी ककुद्दोषणी याचते महादेवः'' इत्युक्तम् । आद्यस्याभिगुप्रैषे पठ्यमानस्य शलाकाकारे दोषणी इत्यर्थः । छान्दसः कादिलोपः । एतेन दोष इत्यकारान्तस्य दूषणवाचिनो दोषन्नादेश इत्यपास्तम् ।

तेन पद्ङ्घ्रिरिति । न च कोशस्थपदादीनां पादाद्यादेशत्वे पादादिभ्यः पृथक्पदादिवचनं तत्र व्यर्थम् । न हि स्थान्यादेशयोः पृथगुपादाने प्रयोजनमस्ति, स्थान्युपादानेनैव तदर्थाभिधानमसमर्थादेशस्याप्यर्थबोधनात् । अत एव नसाद्यादेशानां कोशे ऽनुपन्यास इति वाच्यम् । पदादीनां भाष्यरीत्या ऽनादेशत्वात् । तत्त्वेपि "तृज्वत्क्रोष्टुः" इतिवद्द्वयवस्थार्थमस्यावश्यकत्वेन सौ परतो हृदादीनां प्रयोगार्थं प्रकारार्थत्वस्यावश्यकत्वात् । स्पष्टं चेदं "वा शोक" इति सूत्रे मूले ।

*कोशे शब्दा अर्थपरा एव । शक्तिग्रहस्तु पदत्वहेतुकानुमानेन* सा-

---

नसादेशवारणाय कृतम्-'अवर्णनगरयोः' इतिवार्तिकं परिमुखादौ पाठेन नासिक्यो वर्ण इति, सङ्काशादिषु पाठान्नासिक्यं नगरमिति च साधयित्वा प्रत्याख्यातम् । शब्दत्वेन सादृश्यग्रहणे-प्रत्याख्यानकल्पे पद्दन्निति विकल्पेन नसादेशे नासिक्यं नास्यामिति वृद्धिघटितं वर्णे रूपद्वयम्, एवं नगरेऽपि; आरम्भपक्षे च नस् नासिकाया इति वार्तिकप्राप्तादेशस्य निषेधेऽपि पद्दन्निति विकल्पेन नसादेशे नासिक्यं नस्यमिति रूपद्वयं स्यादिति फलभेदेन प्रत्याख्यानासङ्गत्यापत्त्या विरुद्धार्थत्वापत्तिः । मम तु सुप्त्वेन सादृश्यात् 'न लुमता' इति निषेधेन नसादेशाप्राप्त्योभयपक्षेऽपि नासिक्यमित्येकमेव रूपमिति फलभेदाभावात् न प्रत्याख्यानासङ्गतिः । एतेन 'नस् नासिकाया' इतिवार्त्तिकस्य स्थानिघटितस्यासाधुत्वबोधनायाऽऽवश्यकत्वमिति वैयर्थ्याभावादिदमसङ्गतमित्यपास्तम् ।

स्यादेतत् । 'स्वान्तं हृन्मानसं मनः' 'पदङ्घ्रिश्चरणो ऽस्त्रियाम्' इत्यत्र हृत्पच्छब्दयोः शब्दस्वरूपपरतया, स्वरूपतो हृदयत्वप्रकारकहृदयविशेष्यकबोधतात्पर्येणोच्चरितहृदयशब्दस्य—एवं स्वरूपतश्चरणत्वप्रकारकचरणविशेष्यकबोधतात्पर्येणोच्चारितपादशब्दस्य हृदादेशपदादेशयोर्विधानेन प्रकृते हृत्पदादेशयोरप्राप्त्या 'तेन "पदङ्घ्रिश्चरणोऽस्त्रियाम्" "स्वान्तं हृन्मानसम्मनः" इति सङ्गच्छते' इति कौमुदी असङ्गता । एतेन स्वान्तं हृत् पदङ्घ्रिरित्यादौ शब्दे ऽर्थस्यापि प्रकारीभूततया भानात् चरणहृदयविषयकबोधतात्पर्येणोच्चरितत्वमस्त्येवेति कौमुदी सङ्गतैवेति परास्तम् । स्वरूपतः चरणत्वादिप्रकारकचरणादिमुख्यविशेष्यकबोधतात्पर्येणोच्चरितत्वस्याभावेनादेशाप्रवृत्तेः कौमुद्यसङ्गतेस्तदवस्थत्वादित्यत आह— *कोशे शब्दा अर्थपरा एवेति* ।

*अनुमानेनेति* । इदं विष्णुपदं नारायणत्वावच्छिन्नार्थनिरूपितश-

मान्यत एव। एवञ्च 'विष्णुर्नारायण' इत्यादौ विष्णुपदार्थाभिन्नो नारायणपदार्थ इति क्रमेण बोध इत्यादि मञ्जूषायां नामार्थवादे विस्तरेण निरूपितम्। 'एतत्पदममुकवाचकम्' इति शक्तिग्रहस्तु स्वस्वप्रसिद्धमादाय तत्तत्पुरुषस्यानियतः पश्चान्मनसैव। 'अघ्न्ये देवि सरस्वति इडे काव्ये विहव्ये एतानि ते ऽघ्न्ये नामानि' इत्यादौ यत एतानि तव नामानि अतस्त्वदभिन्ना एषामर्था इति बोधः। अत एव "नामन्त्रिते समानाधिकरणे" इतिसूत्रभाष्ये सामान्यवचनमित्यस्य इदं प्रत्युदाहरणं दत्तम्। अन्यथैकार्थबोधकत्वरूपसामानाधिकरण्यस्याप्यभावात्तदसङ्गतिः स्पष्टैव। एकशेषस्तु न।

---

किमद् नारायणपदघटितप्रघट्टकघटकत्वादित्यनुमानेनेत्यर्थः। अगृहीतशक्तिकपदघटितप्रघट्टकघटकेषु कोशाच्छक्तिग्रहो न भवति। पदत्वहेतुकानुमानेनार्थबोधकत्वग्रहस्तु अर्थत्वप्रकारकार्थविशेष्यकबोधमेव जनयति, न तु स्वरूपतः शक्यतावच्छेदकधर्मप्रकारकबोधमिति पदत्वहेतुकानुमानं विफलमेव। न चार्थत्वस्योपलक्षणत्वात्तद्धर्मप्रकारकशाब्दबोधस्यानुदयेऽप्यर्थत्वेन रूपेण तत्तच्छक्यतावच्छेदकधर्मप्रकारकमेव शक्तिज्ञानं भवतीति निरुक्तहेतुपर्यन्तानुधावनं व्यर्थमिति वाच्यम्। विशेषधर्मप्रकारकशक्तिज्ञानाभावदशायामुपलक्षितधर्मप्रकारकशाब्दबोधस्य 'तमानय' इत्यनन्तरं 'कमानयामि' इति प्रश्नदर्शनेनानुभवसिद्धत्वाभावाद् विशेषधर्मप्रकारकशक्तिज्ञानस्य चानेनानुमानेनासम्भवाद् अर्थत्वप्रकारकचरणविशेष्यकबोधतात्पर्येणोच्चरितत्वस्यार्थत्वप्रकारकहृदयविशेष्यकबोधतात्पर्येणोच्चरितत्वस्य च सत्त्वेऽपि स्वरूपतश्चरणत्वप्रकारकचरणविशेष्यकबोधतात्पर्येणोच्चरितत्वस्य, स्वरूपतो हृदयत्वप्रकारकहृदयविशेष्यकबोधतात्पर्येणोच्चरितत्वस्य चाभावेनाऽऽदेशाप्राप्त्या कौमुदसङ्गत्यापत्तेस्तदवस्थत्वात्। तस्मात्पूर्वोक्तानुमानेन पर्यायघटितप्रघट्टकघटकपदशक्तिग्रहवतः पुरुषस्य स्वरूपतः तद्धर्मप्रकारकशक्तिज्ञानञ्जायत इति सर्वं समञ्जसम् इति केचिदाहुः।

परेतु "सिंहो मृगेन्द्रः पञ्चास्यः" इत्यादौ अगृहीतशक्तिकपदानाम् "इदं पदम् क्वचिदर्थे शक्तम् साधुपदत्वात्" इत्येवं साधुपदत्वलिङ्गेन अर्थत्वेन शक्तिग्रहे वृत्ते तत्तत्पदप्रकारिकायामर्थत्वप्रकारिकायां चोपस्थितौ "सिंहपदार्थाभिन्नो मृगेन्द्रपदार्थः" इत्येवं वाक्यार्थबोधे पदानामपि समानार्थकत्वग्रहाद् व्यवहारादिना कस्मिंश्चित्सिंहादिपदे विशिष्य तत्तद्रूपेण गृहीतशक्तिकस्य पुंसः हर्यादिपदान्तरेषु "इदं पदं सिंहत्वावच्छिन्ननिरूपितशक्तिमत् सिंहत्वावच्छिन्ननिरूपितशक्तिमत्सिंहादिपदसमानार्थकत्वात्" इत्येवं सर्वेषु एकप्रघट्टकीयेषु पर्यायेषु शक्तिग्रहो विशिष्य जायते। ततश्च लोके प्रयुक्तहर्यादिपदेभ्यः विशिष्य सिंहत्वादिना बोधः। न तु

तथा सति तत्तच्छब्दस्वरूपस्य सम्यग् बोधानापत्तेः* । अनेकशब्दानां स्वरूपबोधनपूर्वमेकार्थबोधने कोशतात्पर्यात् । अत एव 'यत्तदेतेभ्य' इत्यादौ पाणिनिनैकशेषो न कृतः । एतेन कोशे शब्दानां शब्दपरता । अत एवैकशेषो न । अर्थपरत्वन्तु न सम्भवति इतः पूर्वं शक्तिग्रहाभावात् । एते शब्दा एकार्था इति बोधः । एवञ्चात्र प्रकारार्थत्वाभावेऽपि न क्षतिरित्यपास्तमिति दिक्* ।

संख्यावि । 'सायेभ्य'इति वक्तव्ये पूर्वग्रहणमुत्तरपदे इत्यधिकृतस्य षष्ठ्यन्तत्वलाभाय । एतेन द्व्यह्नप्रिय इत्येवैतदुदाहरणमित्यपास्तम् ।

विश्वपा इति । विश्वं पातीति विग्रहे 'आतो ऽनुपसर्गे'इति प्राप्ते वाऽसरूपन्यायेन "आतो मनिन् क्वनिब्वनिपश्च"इति चेन विच् । स चाऽऽदन्तेभ्यो लोकेऽपि, 'कीलालप आगतम्'इति "विभाषा पूर्वाह्ण"इति सूत्रे भाष्यप्रयोगात् । क्विपस्त्वादन्तेभ्यो भाष्यानुक्तक्विब्भ्यो ऽनभिधानमेव । अत एव "यू स्त्र्याख्यौ"इत्यत्र विजुक्तो भाष्ये, न तु क्विप् । अत एव शंस्था

---

कोशे प्रयुक्तसिंहादिपदेभ्यः विशिष्य सिंहत्वादिना बोधः । विरूपेणोपस्थित्यभावेन अभेदान्वयबोधासंभवात् । तस्मात् तत्तत्पदार्थत्वादिना बोधार्थं पदत्वलिङ्गकानुमानं सफलमेव । न च कोशे विशिष्यबोधाभावे विशिष्य हृदयत्वादिना बोधतात्पर्येणोच्चरितहृदयादिशब्दस्यैव हृदाद्यादेशविधायकपद्न्निति-शास्त्राप्रवृत्तौ प्रभृतिग्रहणप्रकारार्थत्वफलतया पद्ङ्न्निरित्यादिकोशोपन्यासो मूलकारस्यासंगतः स्यादिति वाच्यम् । विशिष्य तत्तद्रूपेण बोधतात्पर्येणोच्चरिते एव शास्त्रप्रवृत्तिरित्यत्र प्रमाणाभावात् । अत एव विशिष्यानवगतवामदेवादिबोधकेषु अस्मदादिप्रयुक्तवामदेवादिशब्देषु"वामदेवाड् ड्यड्ड्यौ" इत्यादिशास्त्रप्रवृत्तिरित्याहुरिति दिक् । *बोधानापत्तेरिति* । वस्तुतस्तु एकरूपावच्छिन्नस्य एकरूपावच्छिन्नसंसर्गेणैकरूपावच्छिन्नेऽन्वयबोधेच्छारूपसहविवक्षायाः कोशे ऽभावेनैवैकशेषाऽप्रवृत्तिरिति बोध्यम् ।

*दिगिति* । अन्ये तु कोशे शब्दानामर्थपरत्वं सर्वत्र न सम्भवति । 'विधुर्विष्णौ चन्द्रमसि' इत्यादावर्थपरत्वस्यासम्भवात् । सर्वत्र शब्दपरत्वमपि न । 'सत्कृत्यालङ्कृतां कन्यां यो ददाति स ककुदः'इत्यत्र शब्दपरत्वासम्भवात् । कौमुदीयोजनन्त्वेवम् । असर्वविभक्तिकपदानां 'लाजाः पुंभूम्नि चाक्षताः' 'नासत्यावश्विनौ दस्रौ' 'दाराः पुंभूम्नि'इत्यादिवत् पदाद्यादेशस्य शसादिष्वेव प्रयोग इत्येव वक्तव्ये सामान्यतः पद्ङ्न्निरितिकरणं, स्वान्तं हृन्मानसं मन इतिकरणं च प्रभृतिग्रहणं प्रकारार्थमित्यत्र मानमित्याहुः ।

इत्यादिप्रयोगेषु भाष्यकृता ईत्वं न कृतमिति केचित्। अन्ये क्विपमेवाहुः*।

दीर्घाज्ज ॥ चेन 'इचि' इत्यनुकर्षः । 'दीर्घाच्छस्येव'इति नियमपरं "दीर्घाच्छसि"इत्येव तु न सूत्रितम् । दीर्घादेव शसीतिविपरीतनियमापत्तेः । प्रत्याहारेषु जातिपक्षाश्रयणादत्र प्राप्तिः । न्याय्यत्वादिति। जासि पूर्वसवर्णदीर्घनिषेधस्य न्याय्यत्वादित्यर्थः । धातोः किं हाहानिति । अव्युत्पन्नमिदम् । अस्य क्रियाशब्दत्वे तु 'सान्'इति प्रत्युदाहरणम् ।

परे तु क्त्वः श्न इत्यादिसिद्ध्यर्थम् "आतो ऽनाप"इति वक्तव्यम्" इत्युक्ते 'आत' इति योगविभागेन तत्संसाध्य तत्प्रत्याख्यातं भाष्ये । एवञ्च साशब्दादेर्यद्यभिधानं तदा योगविभागेन लोप इष्ट एव । सूत्रे धातुग्रहणमाबन्तनिवृत्त्यर्थमेव । भाष्यवार्त्तिककृतोरज्ञानकल्पनापेक्षयेदृशार्थकल्पनस्यैवौचित्यात्। आबन्तादाचारक्विबेव न, तत्क्विबन्ताद्वा कर्त्तृक्विब् न अनभिधानादिति न तत्र सूत्रवार्तिकयोर्विरोधः । *अत एव "प्रथमयोः" इतिसूत्रभाष्ये पररूपं बाध्यसामान्यचिन्तया दीर्घमात्रस्य बाधकमिति पक्षे रामानित्यादिसिद्ध्यर्थम् 'अतो दीर्घ'इति, 'सुपि च'इति चानुवर्त्तमाने "बहुवचने झल्येत्"इति सूत्रे बहुवचने इति योगविभागेन पररूपबाधकं दीर्घं विधाय रामाणामित्यादावनेन दीर्घे परत्वात्कृते ऽग्नीनामित्यादौ सावकाशस्य नुटो ऽप्राप्तिमाशङ्क्य "ह्रस्वनद्यापः" इति सूत्रे "आज्जसेः"-

---

*क्विपमेवाहुरिति । परे तु "ईत्वमवकारादाविति वाच्यम्"इति, 'वसां वसापावानः पिबत' 'घृतं घृतपावानः पिबत'इत्यादावीत्ववारणाय कृतं वार्त्तिकं भगवता पावान इति वनिपा साधयित्वा प्रत्याख्यातम् । विश्वपाः शंस्था इत्यादौ वार्त्तिकमते ईत्वाप्राप्त्या भाष्यमते ईत्वप्राप्त्याऽऽरम्भप्रत्याख्यानयोः फलभेदेन प्रत्याख्यानासङ्गत्यापत्तेः 'ईत्वमवकारादौ' इति वार्तिकस्य श्रूयमाणवकारादावीत्वं न भवतीत्यर्थः । तथा च विश्वपाः शंस्था इत्यादौ न फलभेद इति । एवं च क्विपि वकारस्य श्रूयमाणत्वाभावेन निषेधाप्रवृत्तौ ईत्वस्य दुर्वारतया विजेव । अत्र मानं 'कीलालप आगतम्' इति भाष्यप्रयोग एव । अत एव "यू स्त्र्याख्यौ"इत्यत्र विच्कथनं भाष्योक्तं संगच्छते । एवञ्च आदन्तेभ्य आचारक्विबन्तेभ्यः कर्तरि क्विपि फलभेदाभावेनाऽऽचारक्विपो ऽनभिधाने न मानम् । न च वार्त्तिकमते पीवा पीवान इति लक्ष्यासिद्धिरिति वाच्यम् । एतदुद्धारायैव भगवता वार्त्तिकस्य प्रत्याख्यानात् । यथोत्तरं मुनीनां प्रामाण्यमिति सिद्धान्तश्चेत्याहुः ।

*अत एवेति* धातुग्रहणमाबन्तनिवृत्त्यर्थमेवेति स्वीकारादेवेत्यर्थः ।

इत्यत आद्ग्रहणानुवृत्त्या समाधाय कीलालपामित्यादौ—नुड्विधायके 'आतो धातोः' इत्यनुवर्त्य लोपेन नुड्बाधकेन समाहितम् । नुड्विधायके आब्-ग्रहणं न कार्यमिति तदाशयः । अधात्ववयवाकारान्तानां लोपाभावे तु तदसङ्गतिः* स्पष्टैवेत्याहुः ।

क्त्वः श्च इति । क्त्वाप्रत्ययस्य इडित्याद्यर्थकं 'क्त्व इट्' 'श्नः शस्येत्वम्'इत्यादिप्रयोगस्थमत्रोदाहरणम् । एतेनाऽऽचारक्विबन्तात् कर्तृक्वि-

---

*तदसंगतिरिति* । यथाश्रुतन्यासे ह्रस्वान्तत्वाभावान्न नुट् प्राप्नोति, 'ह्रस्व-नद्याप' इत्यत्राऽऽदित्यनुवर्त्यादन्तान्नुडितिकल्पे च नुड् भवतीति फल-भेदाद् भाष्यासंगतिरिति भावः ।

परे तु "आतो धातोः" इतिसूत्रकृन्मते, "आतो ऽनापः" इतिवार्त्तिककृन्मते, "आतः"इति योगविभागेन तद्वार्त्तिकप्रत्याख्यानपरभाष्यमते च फलभेदवारणाय आतोधातोरिति सूत्रे आत इतिपदं स्त्रीत्वबोधकतापर्याप्त्यधिकरणघटकाऽऽकार-भिन्नाऽऽकारपरम् । तथा च सामित्यादावाकारस्य लोपे नुटोऽप्राप्त्या प्रथमयो-रितिसूत्रस्थभाष्यमते फलभेदाभावेनानभिधाने न दृढम्मानम् । न च धातुपदं निरुक्तार्थपरं भवत्विति वाच्यम् । सूत्रे आत इत्यस्य वैयर्थ्यापत्तेः, आत इतिविभक्तसूत्रस्य लक्ष्यासम्भवाद्भाष्यकृत्कृतयोगविभागस्य वैयर्थ्यापत्ते-श्च । एवं धातुग्रहणमावन्तनिवृत्त्यर्थमिति शेखरग्रन्थोऽसंगतः । 'न मु ने'इति निर्देशासङ्गतेः । ना इत्यस्य आबन्तभिन्नत्वेन तत्र लोपस्य दुर्वारतया 'नि' इति रूपस्यैव त्वन्मते लाभात् । अस्मन्मते आतपदं स्त्रीत्वावच्छिन्नबो-धकघटकाकारभिन्नाकारपरमित्युक्तत्वेन नाशब्दस्य च स्त्रीलिङ्गत्वेन लो-पाप्राप्त्या नासंगतिः । न च भवन्मते प्रथमयोरितिसूत्रस्थभाष्यविरोधः । तत्र हि कीलालपामित्यादौ लोपार्थं नुड्विधायके आतो धातोरित्यनुवृत्तिं कृ-त्वा योगविभागेन समाहितम् । भवन्मते आत इत्यनुवृत्तावपि कीलालं पान्तीति कीलालपाः स्त्रियस्तासामित्यर्थके कीलालपामिति प्रयोगे आकारस्य स्त्रीत्वावच्छिन्नबोधकघटकाकारभिन्नत्वाभावेन तत्र लोपार्थं कृताया आत इत्यनुवृत्तेर्व्यर्थत्वात् । नागेशमते च न भाष्यविरोधः । प्रियहाहामित्यादौ आतो धातोरित्यस्य चारितार्थ्येन नुड्विधायके आत इत्यनुवृत्तेरावश्यकत्वात्,इति वाच्यम् । आत इत्येतत्साहचर्येण आज्जसेरिति सूत्रादनुवृत्ताऽऽत्पदस्यापि स्त्रीत्वबोधकाकारभिन्नाकारपरत्वेन प्रियहाहामित्यादौ नुटोऽप्राप्त्या तत्र लो-पार्थमातोधातोरित्यनुवृत्तेरावश्यकत्वात् ।

अत एव ङ्याप्सूत्रे भाष्ये आबन्तस्थले पूर्वान्तवद्भावेनैव सिद्धे आब्ग्रहणं किमर्थमित्याशङ्क्य बहुदामेत्यादि डाबन्तविषयं प्रयोजनमुक्तं संगच्छते।अन्यथा क्त्वायमित्यादिभाष्यप्रयोगेण क्त्व इत्यादिप्रयोगेण च क्त्वाशब्दस्य स्त्रीपुं-ल्लिङ्गत्वानुमानेन क्त्वायमित्यादिप्रयोगे याडपपत्तये टाबर्थमजादौ क्त्वाशब्दपा-

पा एते प्रयोगा निर्वाह्या इत्यपास्तम् । आचारक्विबन्तप्रकृतिककर्तृक्विबन्तस्य भाष्ये क्वाप्यनुपन्यासेन तेभ्यः कर्तृक्विपोऽनभिधानस्यैव लाभाच्च ।

जसि च* । ह्रस्वस्य गुण इति वर्त्तते ।

ह्रस्वस्य । "संबुद्धौ च" इत्यतः संबुद्धाविति वर्त्तते ।

शेषो घ्य । "यू स्त्र्याख्यौ" इत्यतो यू इति, "ङिति ह्रस्वश्च" इत्यतो ह्रस्व इति च वर्त्तते । शेषपदार्थमाह—अनदीत्यादि । तदन्तमिति । अनुवृत्तयुभ्यां शेषपदार्थस्य विशेषणात्तदन्तलाभ इति भावः । ननु मत्यै इत्यत्रानवकाशत्वान्नदीसञ्ज्ञैव भविष्यतीति शेषग्रहणं व्यर्थमत आह—एकसञ्ज्ञेति । अधिकारादिति । "कडाराः कर्मधारये" इत्येतत्पर्यन्तं तस्य बुद्धिस्थत्वादित्यर्थः । स्पष्टार्थमिति । स्पष्टतया तदन्तविधिलाभार्थमिति भावः* । मात्रे इति । "ऋतो ङि" इति तु यू इत्यनुवृत्तावेव तात्पर्यग्राहकमिति भावः ।

---

ठस्यावश्यकत्वेन त्वन्मते आबन्तभिन्नक्त्वासम्बन्धी य आकारस्तदन्तस्याबन्तभिन्नत्वेन टापि परतो भसंज्ञायां लोपे टाब्विषये एव आब्ग्रहणस्य प्रयोजनसत्त्वेन डाप्पर्यन्तमाब्ग्रहणप्रयोजनानुधावनमसंगतं स्यात् । मम तु स्त्रीत्वावच्छिन्नबोधकघटकाकारभिन्नाकारस्याभावेन लोपाभावे पूर्वान्तवद्भावेन क्त्वायामित्यादौ प्रातिपदिकत्वमायातीति डाप्पर्यन्तमनुधावनं सङ्गच्छते इति प्राहुः ।

*जसि च* । न च 'ञिति च' इत्येव सूत्रमस्तु ह्रस्वस्येति च नानुवर्तनीयमिति अबिभयुरित्यादावपि अनेनैव गुणसिद्धिरिति 'जुसि च' इति सूत्रं न कर्तव्यं भवतीति महल्लाघवमिति वाच्यम् । भूयासुः,जागृयुरित्यादौ गुणापत्तेः। न च 'जुसि च' इत्यस्य स्थाने तत् पठ्यते । इक्परिभाषा चोपस्थाप्यते । तथा च 'क्ङिति च' इति निषेधाद्, अचीत्यनुवर्तनाद्वा नोक्तदोष इति वाच्यम् । वातप्रम्यः, नियः, लक्ष्म्य इत्यत्रापि गुणापत्तेः । न च लक्ष्म्य इत्यादौ गुणे पूर्वसवर्णदीर्घप्राप्त्या "दीर्घाज्जसि च" इतिसूत्रस्थजस्ग्रहणं जसि परतो दीर्घान्तस्य गुणो न भवतीत्यत्र ज्ञापकं भविष्यतीति वाच्यम् । लक्ष्मीशब्दात् क्यजन्तात् क्विपि अल्लोपयलोपयोः निष्पन्नाल्लक्ष्मीशब्दात् जसि प्राप्तपूर्वसवर्णदीर्घनिषेधार्थं तस्यावश्यकत्वात् । तत्र अल्लोपस्य स्थानिवद्भावेन गुणस्याप्राप्तेः।पूर्वस्यैव विधौ स्थानिवद्भावेन पूर्वसवर्णे कर्तव्ये तु न स्थानिवत्त्वप्राप्तिरिति दिक् ।

*इति भाव इति* । न च गवां पत्यै इत्यादौ "पतिः समास एव" इतिनियमाद्घिसंज्ञाया अप्राप्त्या तत्र नदीसंज्ञायाश्चरितार्थत्वात् मत्यै इत्यादौ परत्वाद् घिसंज्ञा मा भूदित्येतदर्थं शेषग्रहणमावश्यकमिति वाच्यम् । 'ङिति पतिश्च' इत्येव कर्तव्ये नह्येकमिति न्यायेन 'ङिति ह्रस्वश्च' इत्यस्य वैयर्थ्येन तेन स्वविषये

आङो ना । पुंसीति तु नोक्तम् । अमुना कुलेनेत्यत्र मुत्वस्या-सिद्धत्वान्नुमनापत्तौ पुंस्त्वाभावेन नाभावस्याप्यनापत्तौ रूपासिद्धेः । *"न मु ने" इति निषेधस्तु न नुमि। 'न मु टादेश' इतिवार्त्तिकविरोधात्*। अत एव सूत्रकृता 'क्त्वि' इतिवत् 'नि' इति नोक्तम् । तथा सति तन्त्रेण नकारनिर्देशोऽपि सम्भाव्येत । आगन्तुनाऽकारेण तस्यापि ने इति निर्देशे-न तन्त्रस्वीकारे त्वत्यन्तं ज्ञानगौरवमिति न किञ्चिल्लाघवमिति स्पष्टं भाष्ये । आङितीति । ङकारविशिष्टा सञ्ज्ञा न त्वस्य ङत्त्वम् । अत एव हरिणा, मत्या इत्यादौ न गुणः। एवम् "औङ आपः" इत्यत्रापि। अत एवासम्भवे एवापवादत्वमिति वार्त्तिकमतेऽपि रमे इत्यादौ न याट्।

घेर्ङिति । 'सुपि च' इत्यतः सुपीति वर्त्तते । तेन पट्वीति सिद्धम् । न च 'घेङि' इत्येव सूत्रं कार्यं, ङकारादावित्यर्थः । प्रवाहत्रा इत्यत्र 'आङ्याज-यारामुपसंख्यानम्' इत्याङादेशस्तु ङाइत्येव वक्तुं शक्यः, इति वाच्यम् । मत्यामित्यादौ "आण्नद्याः" इत्यस्यानापत्तेः । अल्विधित्वेन स्थानिवत्त्वा-भावात् । इद्ग्रहणे त्वनुबन्धकार्यत्वात् स्थानिवत्त्वं स्पष्टमिति दिक्*।

ङसिङ । एङो द्वित्वेऽपि अस्वरितत्वाद्यथासंख्यं न । ('ङितश्च' इति

---

घिसंज्ञाबाधेन मत्यै इत्यादौ पक्षे नदीसंज्ञा भविष्यतीति शेषग्रहणं स्पष्टार्थ-मित्याशयात् । वस्तुतस्तु पतिः समास एवेत्यनेन बाधेऽपि असंकुचि-तविषयतायाः सत्त्वेन न च[illegible]र्थशङ्काऽवकाशः । स्पष्टं चेदम् "अहन्" इति सूत्रे शेखरे ।

*न मु ने इति निषेधस्तु न नुमि इति* । सैद्धान्तिके न्यासे इति शेषः । *वार्त्तिकविरोधादिति* । न च "आङो ना पुंसि" इतिन्यासकल्पे नुम्यपि "न मु ने" इति प्रवर्तिष्यत इति अमुना कुलेनेत्यादौ मुत्वस्य सिद्धत्वान्नुम्प्रवृत्तौ पुंस्त्वाभावेन नाभावस्याप्रवृत्तावपि न रूपासिद्धिरिति वाच्यम् । अमुष्मै कुला-येत्यादौ मुत्वस्य सिद्धत्वान्नुमापत्तेः, स्मायादेशानापत्तेश्चेति भावः ।

घेर्ङिति । *इति दिगिति* । दिगर्थस्तु "नानुबन्धकृतमनेकाल्त्वम्" इत्यस्य अनुबन्धमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्मघटिततत्तद्धर्माति-रिक्ता आनुपूर्व्यतिरिक्ताश्च ये ऽनुबन्धघटितबोधकवृत्तिधर्मास्तन्निमित्तके कार्ये कर्त्तव्ये ऽनुबन्धा अविद्यमानवद्भवन्तीत्यर्थकरणाद्, 'न ल्यपि' इति प्रा-माण्याद् अनुबन्धमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकेतरो यो ऽल्त्वव्याप्यो धर्मस्तद्घटितातिदिदिक्षितधर्मनिमित्तके विधौ कर्तव्ये स्था-निवन्न भवतीति 'अनल्विधौ' इत्यस्यार्थकरणात्, ङेर्डामादेशकरणाद्वा मत्यामि-त्यादौ दोषाभावाद् घेर्ङीत्येव सुवचमिति ।

तु नासूत्रि* "ऋन उत्" इत्यत्र ऋदन्तात् ङितो ऽति परे पूर्वरूपमित्यर्थे जाग्रतीत्यादौ दोषः स्यादिति(१) । ङसोरित्येव सिद्धे ङसिग्रहणं स्पष्टार्थम् ।

अच्च घेः । इदुद्भ्यामिति किम्? 'घेः परस्य ङेरौदच्च' इति, 'ङिप्रकृतेर्घेरौदच्च' इति वा ऽर्थो मा भूदिति । अदौतोस्तपरत्वं मुखसुखार्थम् । इत्सञ्ज्ञायां च "तस्य लोप" इति तयोर्लोपः । न चौतो विभक्तित्वात् "न विभक्तौ "इति निषेधात् कथमित्सञ्ज्ञेति वाच्यम् । मुखसुखार्थमित्यस्य तदेव प्रयोजनं न-तु कार्यान्तरं, नापि प्रयोगे श्रवणमित्यर्थात्तत्वप्रतिज्ञयैव "न विभक्तौ" इत्यस्य तत्राप्रवृत्तेः । अत एव 'इद्वृद्धौ' 'पत्यावैश्वर्ये'—इत्यादिनिर्देशाः सङ्गच्छन्ते* । यदि तूच्चारणार्थानां विनैव शास्त्रमपगमः स्यात्, तदा इत्सञ्ज्ञकानामपि तद्वदेव निवृत्तिरस्तु, किं तस्य लोप इत्यनेन । स्वभावादस्योभयत्रापि समत्वात् । ध्वनितश्चेदं "तस्य लोप" इत्यत्र भाष्ये इति दिव-औत्सूत्रे निरूपयिष्यामः ।

न चैवमग्नावित्यत्रौतः स्वरितत्वापत्तिः,—न च 'प्रत्ययाप्रत्यययोः' इत्येव सिद्धे पुनः 'तिति प्रत्ययग्रहणं कर्त्तव्यम्' इति वार्त्तिकादौपदेशिकप्रत्ययत्ववत्येव तत्प्रवृत्तिरिति वाच्यम् । तस्याः परिभाषाया लक्ष्यसिद्धये भाष्यकृता काप्यनाश्रयणात्* । स्पष्टञ्चेदं "तित्स्वरितम्" इत्यत्र कैयटे । "अङ्गस्य" इति सूत्रे भाष्ये तु तत्प्रत्याख्यानायैकदेशिना सोक्ता, न तु सिद्धान्तिनेति स्पष्टं तद्विदाम् । "श्नान्नलोपः" इति सूत्रे-

---

* ङितश्चेति तु नासूत्रीति* । आ समन्ताद् ओ वासुदेवो यस्मिन्नगरे तद् आ, ततो बहुचि पुनर्नपुंसकह्रस्वे बह्व इति जाते तत आचारक्विपि लङि शपि "आङ्गकार्यस्य संभावनायां वार्णं पूर्वं न प्रवर्तत" इति यणोऽप्रवृत्तौ लघूपधगुणे 'बहो अ अत्' इति स्थिते पररूपे परादिवद्भावेन ङित्संबन्ध्यत्परकत्वस्य सत्त्वेन पूर्वरूपापत्तेः इहार्थमपि ङसिङसोश्चेति बोध्यम् ।

*सङ्गच्छन्ते इति* । वस्तुतस्तु "तपरस्तत्कालस्य" इतिशास्त्रेण अत, आदित्यादीनामेव संज्ञात्वबोधनेन नेत्संज्ञाप्राप्तिरिति बोध्यम् । *अनाश्रयणादिति* । चिन्त्यमिदम् । "वसोः सम्प्रसारणम" "वसुस्रंसु" "वले" "वनो र च" "न पदान्तात्" इत्याद्यर्थं परिभाषाया आवश्यकत्वेन एकदेश्युक्तित्वमात्रेण परिभाषा न स्वीक्रियत इति वक्तुमशक्यत्वात् । अन्यथा "न वा बहिरङ्गलक्षणत्वाद्वा" इत्यनेन अन्तरङ्गपरिभाषाया एकदेश्युक्तित्वबोधनेन तस्या अपि लक्ष्यसिद्ध्यनुपयुक्तत्वापत्तेः । विस्तरस्तु परिभाषेन्दुटिप्पणे द्रष्टव्य इति दिक् ।

---

(१) अयं पाठः केषु चित्पुस्तकेषु नास्ति ।

भाष्येऽपि ध्वनितस्तदभावः,-इति वाच्यम् । 'प्रत्ययग्रहणम्' इत्यस्य विधानकालिकप्रत्ययत्ववद्ग्रहणमित्यर्थात् । अत एवाऽऽदेशेषु दित्त्वमाश्रित्य तत्प्रत्याख्यानेन फलभेदो नेति दिक् ।

अनङ् सौ । साविति प्रथमैकवचनम् असम्बुद्धाविति पर्युदासात् । नकाराकारस्तूच्चारणार्थ इत्सञ्ज्ञकः ।

अलो ऽन्त्यात्* । अवध्यवधिमतोः साजात्यादाह—पूर्वो वर्ण इति । अत एव शिष्ट इत्यादौ शा इति समुदायस्य "शास इत्" इतीत्वं न । *पञ्चम्यन्ताल्ग्रहणाच्च शस्य न ।

सर्वनामस्थाने । "नोपधायाः" इति, "ढ्रलोपे"इत्यतो दीर्घ इति चानुवर्त्तते ।

अपृक्त । अपृक्त इति पुंस्त्वमविवक्षितम् । अत एवापृक्तं हलिति सङ्गच्छते । अपृक्तप्रदेशेषु हल्ग्रहणेनैव सिद्धे सञ्ज्ञाविधानमदृष्टार्थम् ।

हल्ङ्याप् । सुतिसीति पृथक् पदम् । हलन्तादिति । सुतिसीनां प्रत्ययत्वेनोपस्थितस्य यस्मात्स विहितस्तदादेरित्यस्य विशेष्यत्वेन तदन्तलाभ* इति भावः । एवं ङ्याबंशे तदुपस्थित्या ङ्यावन्तान्तादित्यर्थो द्रष्टव्यः । हल्ङ्याब्भ्यः किमिति । राम इत्यादौ दीर्घान्तत्वाभावान्न दोष इति प्रश्नः । दीर्घात्किं निष्कौशाम्बिरतिखट्व इत्यारभ्य संयोगान्तलोपस्यासिद्धत्वादित्यन्तो ऽपपाठः, मनोरमायां दर्शनात् । सखेति । यद्यप्यत्रैव "सख्युरसम्बुद्धौ"इति लेख उचितस्तथापि नान्तलक्षणदीर्घेणैव सिद्धेः 'अत उपधायाः' इत्यपेक्षया नित्यत्वेन तस्यैवौचित्याच्चात्र नोक्तम् ।

---

*अलोऽन्त्यात्पूर्व* । उपधात्वञ्च यत्किञ्चित्समुदायविशिष्टत्वम् । वैशिष्ट्यञ्च स्वघटकत्वं-स्वघटकान्त्यालव्यवहितपूर्वत्वमित्युभयसम्बन्धेन । अत्रान्त्यालो ऽवधित्वेन तदव्यवहितपूर्वोऽपि अलेव गृह्यते अवध्यवधिमतोः साजात्यादिति शिष्ट इत्यादौ न दोष इति भावः । *पञ्चम्यन्ताल्ग्रहणादिति* । "गुणः कृतात्मसंस्कार" इति न्यायात् संज्ञाशास्त्रेऽपि तस्मिन्निति परिभाषाप्रवृत्तिरिति भावः ।

*तदन्तलाभ इति* । सुतिसिभिस्तदादिरिति धर्मी उपस्थापनीयो, ङ्याब्भ्यां तदादिरिति धर्मी उपस्थापनीयो वेत्यत्र नियामकाभावेन विनिगमनाविरहादुभाभ्यां धर्म्युपस्थितौ सुतिसीत्येतदुपस्थितं तदादिं विशेष्यीकृत्य तदन्तविधिना ङ्यावन्तं यत्तदादि तदन्तं यत्तदादि तस्मात्परीभूतं सुतिसीत्येतदपृक्तं

अचो ञ्णि । "मृजेर्वृद्धिः"इत्यतो वृद्धिरित्यनुवर्त्तते, अङ्गस्येति चाधिकृतं, तदाह—अङ्गस्य वृद्धिरिति ।

ङ्यत्यादिति । उच्चारणार्थाकारेण कृतयणः प्रयोगस्थस्यानुकरणादविशेषेणोभयोर्ग्रहणमित्याह—खितीत्यादि । ङस्यादिपरस्तादृशः खिखीतितीशब्दप्रकृतिक एव संभवतीति भावः । सुसखेति । "न पूजनाव्"इति निषेधाद् "राजाहःसखिभ्य"इति टज् न । समुदायस्येति । असखीत्यस्य *सखिभिन्नावयवाविति वर्णसंज्ञापक्षेऽर्थः । *अत्र पक्षे पर्युदासेन तद्भिन्नप्रातिपदिकान्त्यवर्णादेरेव ग्रहणात् 'कृतं सख्या'इति वाक्ये न दोषः । सिद्धान्तिसंमते तदन्तसञ्ज्ञापक्षे सखिभिन्नावित्यर्थः । पर्युदस्यमानसमर्पकसखिशब्दे तदन्तग्रहणन्तु न, विशेष्यासन्निधानादिति भावः । एतत्सर्वं हरदत्तानुरोधेन ।

"यस्येति च"इति सूत्रभाष्यात्तु—'सखिशब्दस्य तदवयवे लक्षणया सख्यवयवभिन्नयोरिदुतोरित्यर्थः । यथा "अत्वसन्तस्य"इति सूत्रे ऽधातोरित्येतद्घटकधातुपदस्य 'पिण्डग्रः' इत्यादिसिद्ध्यर्थं धात्ववयवे लक्षणाऽऽकरे दृश्यते । तदन्तसञ्ज्ञापक्षेऽप्यसखीति य्वोरेव विशेषणं, ततस्तदन्तविधिः । "उतश्च प्रत्ययाद्"इतिवत् । ततश्च सख्यवयवभिन्नेवर्णाद्यन्तमित्यर्थः । तदन्तविधिश्च शेषपदार्थविशेषणतया । एवञ्च प्रकृते नैव घिसञ्ज्ञा'इति—लभ्यते । तत्र हि भाष्ये "इवर्णस्य ईति किमुदाहरणम् ? अतिसखेरागच्छति । यद्यत्र लोपो न स्यात्तदा कृतदीर्घस्य पूर्वान्तवद्भावेन सखिशब्दत्वाद् अतिदेशविषये प्रातिपदोक्तपरिभाषाया अप्रवृत्त्योपसर्जनह्रस्वत्वे कृते ऽपि घिसञ्ज्ञा न स्यात् । लोपे तु लक्षणप्रतिपदोक्तपरिभाषया न दोषः"इत्युक्तम् । भवद्रीत्या हि विशिष्टस्य सखिभिन्नत्वेन घिसञ्ज्ञा निर्बाधैवेति तदसङ्गतिः स्पष्टैव । न च लोपेऽपि लिङ्गविशिष्टपरिभाषया दोषः । सखिशब्दस्य तदवयवपरत्वेन प्रातिपदिकग्रहणाभावाव । प्रातिपदिकत्ववदुपस्थापकपदोपादानं हि प्रातिपदि-

---

हल्लुप्यते इति सूत्रार्थ इति भावः ।

*सखिभिन्नावयवाविति* । न च सखिभिन्नं खीति तदवयवेकारस्य घिसंज्ञा दुर्वारैवेति वाच्यम् । पर्युदासन्यायेन सखिभिन्नं यत्प्रातिपदिकं तदवयवेकारोकारयोर्घिसंज्ञा भवतीत्यर्थेनादोषात् । एतदेवाभिप्रेत्याह-*अत्र पक्षे इति ।

कग्रहणम्। ख्यत्यात्सूत्रे-"किमर्थं विकृतनिर्देशो 'न सखिपतिभ्याम्'इत्येवोच्येत, अतिसखेरित्यत्र मा भूत्"इति भाष्येऽपि ङ्यन्तप्रकृतिक एवायम्। विहितविशेषणानाश्रयणेनेव प्रतिपदोक्तपरिभाषानाश्रयणनैवैतद् भाष्यं प्रवृत्तमिति न तद्विरोध इत्यलम्* ।

पतिः समा। एवकार इष्टतोऽवधारणार्थः । स्मृतिपुराणेषु पतये सखिनेत्यादि व्याकरणानिष्पन्नत्वेनासाध्वेव । त्रिशङ्कुयाज्ययाजनादावित्र तपोमाहात्म्येनासाधुप्रयोगेऽपि ऋषीणां दोषाभावात्। याज्ञे कर्मण्येवासाधुप्रयोगे दोषाच्च। अस्माकमपि स्मृतिपुराणाध्ययनविधिबलात् तेषां तपोबलाच्च यज्ञमध्येऽपि तदन्तर्गततत्पाठे दोषाभावः । स्वातन्त्र्येणेदृशं प्रयुञ्जाना अस्मदादयः प्रत्यवयन्त्येव । अत एव नदीसंज्ञासूत्रे भाष्ये छन्दोवत् कवयः कुर्वन्तीत्युक्त्वा न ह्येषेष्टिरस्तीत्युक्तम्। "यू स्त्र्या-

---

*इत्यलमिति* । परे तु असखीत्यस्य सखिभिन्नप्रातिपदिकावयवावित्यर्थः । ननु-यत्र पर्युदस्यमानोऽवयवः, पर्युदाससमर्पकं च समुदायबोधकं पदं, तत्र तत्पदं तदवयवे लाक्षणिकमिति व्याप्तिः । अत एव "इदुदुपधस्य" "न पदान्तात्" "नश्छव्यप्रशान्" "अत्वसन्तस्य" इत्यादौ सर्वत्र प्रत्ययपद—नाम्पद—प्रशान्पद—धातुपदानि तदवयवपराणीति अग्निः करोति, षण्णामयम्, परमप्रशान् करोति, पिण्डग्रः इत्यादौ न षत्व-ष्टुत्वनिषेध-रुत्व-दीर्घाः। अन्यथा अग्निस् इत्यस्य प्रत्ययभिन्नत्वेन तत्र षत्वापत्तेर्दुर्वारत्वात्। एवमन्यत्राप्यूह्यम्। एवञ्च प्रकृते सखिपदं तदवयवे लाक्षणिकं भवतीति कथं सखिभिन्नप्रातिपदिकावयवावित्यर्थ इति; चेन्न। "ख्यत्यात्परस्य" इति सूत्रस्थस्य "किमर्थं विकृतनिर्देशो, न सखिपतिभ्यामित्येवोच्येत। अतिसखेरागच्छति" इति भाष्यस्य प्रामाण्येन प्रकृते तादृशार्थकरणात् । अन्यथा घिसंज्ञाया अभावेन गुणाप्राप्त्या तदसङ्गतिः स्पष्टैव। न च ङ्यन्तप्रकृतिक एवायमिति विहितविशेषणमनाश्रित्यैव इदं भाष्यं प्रवृत्तमिति नैतद्विरोध इति वाच्यम् । ङ्यन्तप्रकृतिकसखिशब्दस्य लाक्षणिकत्वेन 'शेषो घ्यसखि' इत्यत्र लक्षणप्रतिपदोक्तपरिभाषयैतत्सखिशब्दग्रहणस्य वक्तुमशक्यत्वात्। ख्यत्यादित्यपेक्षया 'सखिपतिभ्याम्' इतिन्यासस्य गुरुभूततया "सखिपतिभ्यामित्येवोच्येत" इति भाष्यसङ्गत्यर्थं तस्य खित्योरुपलक्षणपरत्वेनावश्यं व्याख्यातव्यत्वेन विहितविशेषणाश्रयणस्य वक्तुमशक्यत्वाच्च । तस्मादिति परिभाषाया जागरूकत्वाच्च।

न चैवमपि "यस्येति च" इतिसूत्रस्थभाष्यविरोधः । तत्र हि "इवर्णस्य इति किमुदाहरणम् ? अतिसखेरागच्छति । यद्यत्र-लोपो न स्यात्तदा कृतदीर्घस्य पूर्वान्तवद्भावेन सीखशब्दत्वा-

ख्यौ"इति सूत्रे हरदत्तग्रन्थे स्पष्टतरश्चैतत् । समास इत्युक्तेः बहुच्पूर्वे न घित्वम् । अत एव "पतिर्वृत्तावेव"इति नासूत्रि* । वर्णसञ्ज्ञापक्षे पत्यवयवेकार इत्यर्थः* । तदन्तसञ्ज्ञापक्षे पत्यवयवेकारान्त इत्यर्थः । सूत्रे पतिशब्दश्च तदवयवेकारे लाक्षणिकः । एतेन "शेषो घ्यसखिपती" "पतिसखी समास एव"इति वा सूत्र्यतामित्यपास्तम् । "यस्येति च"इतिसूत्रस्थभाष्यरीत्या पतिना सुसख्येत्यादीष्टासिद्ध्या तथा न्यासस्य कर्तुमशक्यत्वादिति स्पष्टमेवेति दिक् ।

नित्यं बहुवचनान्त इति । "किमः संख्यापरिमाण"इत्यनेन किंशब्दाद् बहुत्वसंख्यावच्छिन्नसंख्येयविषयप्रश्न एव डतिरिति भाष्ये स्पष्टत्वादिति भावः ।

---

दतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्त्या उपसर्जनह्रस्वत्वे कृतेऽपि तत्त्वसत्त्वाद् घिसंज्ञा न स्यात् । लोपे तु लक्षणप्रतिपदोक्तपरिभाषया न दोषः" इत्युक्तम् । भवद्रीत्या विशिष्टस्य सखिभिन्नत्वेन घिसंज्ञा निर्बाधैवेति तदसङ्गतिः स्पष्टैवेति वाच्यम् । लोपे ऽपि लिङ्गविशिष्टपरिभाषया ङ्यन्तस्य सखिशब्दत्वेन स्थानिवद्भावेन कृतह्रस्वस्यापि तत्त्वेन असखीतिनिषेधप्रवृत्तेः सुलभत्वेन भाष्यासङ्गत्यापत्तेर्दुर्वारतया एतस्य भाष्यस्यैकदेश्युक्तित्वेनादोषात् । न चास्मिन्पक्षे असखीत्यत्र सखिपदं सख्यवयवे लाक्षणिकमिति तस्य प्रातिपदिकत्वतद्व्याप्यधर्मावच्छिन्नमुख्यविशेष्यताकोपस्थितिजनकत्वाभावान्न लिङ्गविशिष्टपरिभाषाप्रवृत्तिरिति न तदसंगतिः,भवन्मते त्वसंगतिर्दुर्वारैवेति वाच्यम् । विनापि प्रत्ययमित्यनेन अतिशब्दस्य लोपे ततो ङसि सखेरित्यत्र लोपाभावे घिसंज्ञाऽनापत्तिरूपदोषस्य जागरूकत्वेन, सखीशब्दे यस्येति लोपाभावे अतिसखिरित्यादौ सखीशब्दे पूर्वान्तवद्भावेन सखिशब्दत्वे ह्रस्वान्ते एकदेशविकृतन्यायेन पुनस्तत्त्वे अतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषाया अप्रवृत्त्याऽनङ्णिद्वद्भावयोरापत्तिरूपदोषान्तरसत्त्वेन च भाष्यस्योपलक्षणतया व्याख्यातुं शक्यत्वादित्याहुः ॥

*नासूत्रीति । वस्तुतस्तु वृत्तिसंज्ञायाः शास्त्रकारैरनुक्त्या ऽस्मदादिकृतसंज्ञाया अव्यवस्थापकत्वेन च 'पतिर्वृत्तावेव' इति न्यास एव वक्तुं न शक्यत इति बोध्यम् । *इत्यर्थ इति* । 'पतिः समास एव'इत्यस्य समासाघटकपत्यवयवेकारो घिसंज्ञको न भवतीति प्रकृते नियमस्य निषेधमुखेन प्रवृत्तिः । विधिमुखेन प्रवृत्तौ तु पतिभिन्नत्वेन "शेषो घ्यसखि"इत्यत्र सामान्यतः सङ्कोच इति बोध्यम् । *कर्तुमशक्यत्वादिति* । नागेशमते"शेषो घ्यसखिपती" इति न्यासे भूपतिनेत्याद्यसिद्धिः, "सखिपती समासे एव"इति न्यासे तु सुसख्येत्यादौ घिसंज्ञापत्तिः । अस्मन्मते च पूर्वन्यासे बहुचि बहुपत्येत्यादौ

बहुगण ॥ संख्याप्रदेशेष्वेतत्सञ्ज्ञाकरणज्ञानरूपप्रकरणसत्त्वेऽपि तन्मूलकात्रिमाकृत्रिमन्यायस्य न प्रवृत्तिः कर्त्तरि कर्मेत्यादाविव । अत एव "संख्याया अतिशदन्ताया" इति शदन्तपर्युदासः सङ्गच्छते । न हि शदन्ता कृत्रिमा संख्याऽस्ति । तस्मात्संख्याप्रदेशेषूभयगतिः । किं च लोकप्रसिद्धमहासंज्ञाकरणेन प्रदेशेषु लोकप्रसिद्धार्थस्याप्यवगतिरिति स्पष्टं भाष्ये । अत एव पञ्चकृत्व इत्यादिसिद्धिः । एतन्न्यायोपयोगस्त्व-भ्यासाम्रेडितादिसञ्ज्ञाविषये द्रष्टव्यः । सूत्रे बहुगणग्रहणन्तु तयोर्नि-यतविषयपरिच्छेदहेतुत्वाभावेनासंख्यात्वात् । बहुत्वादि हि त्र्यादिसंख्या-व्यापको धर्मविशेषः । अत एव भाष्ये "एतत्सूत्रमतिदेशार्थं यदयमसं-ख्यां संख्येत्याह" इत्युक्तम् । यत्तु भाष्ये "एकादिकया चापि संख्यायते" इत्युक्तं, तस्यायमर्थः । बह्वादिकयाऽपि स्वव्याप्यत्रित्वादिसंख्यया सं-ख्यायते । कतिशब्दोऽपि संख्यानकरणीभूतार्थविषयप्रश्नार्थकतया सं-ख्यानकरणम् । एवं वत्वन्तेऽप्यूह्यम् । यद्वा चापिशब्दौ वाक्यालङ्कारे । एकादिकया संख्यायते साऽपि प्रदेशेषु यथा गृह्येतेति लोकप्रसिद्धमहास-

---

घिसंज्ञापत्तिः, उत्तरन्यासे बहुसखिनेत्यादौ घिसंज्ञानापत्तिः । एतेन 'पत्तिर्वृत्ता-वेव' इति न्यासोऽपि प्रत्युक्त इति दिक् ।

*बहुगण । *नियतविषयपरिच्छेदहेतुत्वेति* । यद्धर्मप्रकारक-निश्चयोत्तरं लोके गणनायां प्रसिद्धा ये स्वातिरिक्ता यावद्ध-र्मास्तद्धर्मप्रकारकसंशयसामान्यं नोदेति तद्धर्मावच्छिन्नवाचकत्वमि-ति भावः । *त्र्यादिसंख्याव्यापक इति* । बहुत्वे त्रित्वादिसंख्याव्यापक-त्वस्य सत्त्वेऽपि निरुक्तसंख्यात्वव्याप्ययावद्धर्मप्रकारकसंशयसामान्यनिष्ठप्रति-बध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयत्वं नास्तीति न बह्वादिपदं संख्यावाचकमिति भावः । यावत्पदनिवेशाच्च बहुत्वज्ञानस्य एकत्वद्वित्वप्र-कारकसंशयप्रतिबन्धकत्वेऽपि न दोषः । *धर्मविशेष इति* । तथा च त्रित्वाद्यतिरिक्तमेव बहुत्वम् । अत एव दूरस्थसमुदितजनेषु त्रित्वाद्यन्यत-मसंख्याप्रतीत्यभावेऽपि बहुत्वभानम् ।

*इत्यपास्तमिति । परे तु संख्यावाचकत्वं संख्यात्व-व्याप्यधर्मावच्छिन्नवाचकत्वमेव । अत एव "एकादिकया चापि सं-ख्यायते" इतिभाष्ये चापिशब्दौ सङ्गच्छेते । अन्यथा बह्वादीनां निरुक्त-संख्यावाचकत्वस्याभावेन तदसङ्गतिः स्पष्टैव । न च "यदयमसंख्यां सं-ख्येत्याह" इतिभाष्यविरोध इति वाच्यम् । वत्वन्तस्य डतिप्रत्ययान्तस्य च संख्यात्वव्याप्यधर्मावच्छिन्नवाचकत्वरूपसंख्यावाचकत्वस्याभावेन तस्य भाष्यस्य तद्विषयकत्वेनादोषात् । भूर्यादीनान्तु "अनियतसंख्यावाचिनां चेद्बहु-

ञ्ज्ञाकरणमिति तदर्थः। एतेन "अर्थान्तरवाचित्वे सति बहुत्ववाचिनश्चेत्सं-ख्याकार्यं तर्हि बहुगणयोरेव" इति नियमार्थं तत् । तेन भूर्यादीनां न । तेषां वैपुल्याद्यर्थान्तरवाचित्वात् । वैपुल्यं-विशालता । विशेष्यविशेषणद-लाभ्यामबहुत्ववाचिन एकशब्दस्य बह्वर्थमात्रवाचिनां त्र्यादीनाञ्च न व्या-वृत्तिः । यद्वा "अनियतसंख्यावाचिनाञ्चेद् बहुगणयोरेव"इति नियमः । अनन्तशब्दवदनन्तवाचिशतशब्दस्य संख्याकार्याभाव इष्ट एवेत्यपास्तम्* । संघवैपुल्यवाचकयोर्नेह ग्रहणं परस्परसाहचर्येण ऽयादिसंख्याव्यापक-धर्मवाचिनोरेव ग्रहणात् । 'वतु' इति सानुबन्धनिर्देशो ब्राह्मणवदित्या-दिव्यावृत्त्यर्थः । डतिस्तद्धित एव वतुसाहचर्यादित्यलम् ।

"ष्णान्ता"इत्यतः षडिति वर्तते, संख्येति च प्रकृतं* तदाह—डत्यन्तेति । अत एव "षट्कति"इति डडनुवादेन शुग्विहितः । अत एव सञ्ज्ञाविधावपि प्रत्ययग्रहणे तदन्तग्रहणम् । संख्येति किम् । पतयः* ।

प्रत्ययस्य । अनेकसञ्ज्ञाकरणाद् आवृत्त्या विभक्तिविपरिणामेन च तद्भावितसञ्ज्ञाश्रयणम्, अतो न सङ्करः । तेन 'हन्ति'इत्यादौ "श्लौ"इति द्वित्वं न, तदाह—लुक्श्लुलुप्शब्दैरिति । "अदर्शनं लोपः" इत्यतो-ऽदर्शनमित्यनुवर्त्तते । प्रदेशेषु भाविसञ्ज्ञाविज्ञानान्नान्योन्याश्रयः* । एक-सञ्ज्ञाप्रकरणादन्यदेशस्थत्वेन लोपसञ्ज्ञया आसां समावेशः । तेन प्रत्य-यलक्षणसिद्धिः ।

---

गणयोरेव" इत्यादिनियमेनैव वारणं बोध्यमित्याहुः ।

*संख्येति च प्रकृतमिति* । तेन साक्षात्संज्ञानिष्ठविधेयतानिरूपि-ता या प्रत्ययमात्रवृत्त्युद्देश्यता तादृशोद्देश्यताप्रयोजकं तदादिविशेष्यकतदन्त-विधिप्रयोजकं नेत्यर्थिकायाः "संज्ञाविधौ"इतिपरिभाषाया अप्रवृत्तिरिति भा-वः । साक्षात्षट्संज्ञानिष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकत्वस्य संख्यापदे एव सत्त्वेन डतिपदे ऽभावात् । *पतय इति । पतिशब्दस्य पातेर्डति-रित्यौणादिकडतिप्रत्ययान्तत्वादिति भावः । न च "बहुगणवतुड-ति संख्या" "कति च"इत्येव सूत्र्यतामिति वाच्यम् । छान्दसडत्यन्तपतिशब्दस्य संख्याषट्संज्ञयोरनापत्तेः ।

*नान्योन्याश्रय इति* । 'अस्य सूत्रस्य शाटकं वय' इतिवाक्यश्रवणे वानक्रियायां प्रवृत्तिः 'अस्य सूत्रस्य' इतिवाक्यार्थज्ञानात्, तज्ज्ञानं च वानक्रि-योत्तरं, तदुत्तरमेव शाटकसिद्धेरित्यन्योन्याश्रयस्य-भाविसंज्ञाविज्ञानाद् 'अस्य सूत्रस्य शाटकं वय'इत्यस्य वानक्रियोत्तरभाविशाटकत्वप्रवृत्तिनिमित्तेन पूर्वं प्रयोग इति यस्य उतस्य सूत्रस्य 'शाटकम्'इति संज्ञा भविष्यति तादृक् वयेत्यर्थे

षड्भ्यो। "जश्शसोः शिः"इत्यतो जश्शसोरिति वर्त्तते। षड्भ्य इति विहितविशेषणम्*। तेन गौणे न। परमपञ्चेत्यादौ तु त्रिशिष्टस्यापि संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेन* संख्यावाचितया षट्त्वमस्त्येवेति न दोषः। स्पष्टश्चेदं 'षट्प्रधान एष समासः' इत्यादिना सर्वादिसूत्रे भाष्ये। कैयटस्य तु प्रमाद इत्यन्यत्र निरूपितम्।

---

तात्पर्यावधारणेन न प्रसक्तिः। तथैवात्रापि 'यस्य जातस्य लुगित्यादिसंज्ञा भविष्यन्ति तादृशादर्शनस्य लुगादिसंज्ञा'इति विवक्षणादिति भावः।

वस्तुतस्तु लुक्श्लुलुप्पदानां लुक्श्लुलुप्पदप्रयोज्यत्वे, विधेयतायाम्, अदर्शने च खण्डशः शक्तिः। यत्र लुगादिपदं विधेयसमर्पकं तत्रादर्शनरूपखण्डस्यैवोपस्थितिः, न तु लुगादिप्रयोज्यत्वरूपखण्डस्य, विधेयतारूपखण्डस्य च। अनुपयोगात्।तत्क्रियात्मिका च समभिव्याहृता प्रथमेति। यत्र तु लुगादिपदमुद्देश्यसमर्पकं तत्र खण्डत्रयस्याप्युपस्थितिः।लुगादिपदप्रयोज्यविधेयताश्रयादर्शनरूपार्थलाभस्त्वाकाङ्क्षावैचित्र्यात्।तथा च न लुकि श्लुपदप्रयुक्तं कार्यं, नापि लुपि; न वा श्लौ लुगादिप्रयुक्तकार्यसङ्कर इति भाविसंज्ञाविज्ञानस्य नोपयोग इति। गुरुचरणास्तु लुगादिपदशक्यतावच्छेदकमदर्शनत्वमेवान्यत्सर्वमुपलक्षणमिति वदन्तीति दिक्।

*विहितविशेषणमिति*। "षड्भ्यो लुक्" इत्यस्य षट्संज्ञकविशिष्टयोर्जश्शसोर्लुगित्यर्थः। वैशिष्ट्यञ्च–स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वसम्बन्धेन। तेन 'पञ्च ब्राह्मणाः' 'षट्कल्पा'इत्यादौ न दोषः। ब्राह्मणपदोत्तरजसि कल्पबन्तप्रकृतिकजसि च षट्संज्ञकनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वस्याभावात्।

*बोधजनकत्वेनेति*। यस्य संख्यावाचकत्वं वक्तव्यं तदन्तपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती या विशेष्यता तादृशविशेष्यतानिरूपितप्रकारत्वासमानाधिकरणा या संख्यानिष्ठप्रकारतानिरूपितसंख्येयनिष्ठविशेष्यता तादृशविशेष्यताप्रयोजकतापर्याप्त्यधिकरणत्वरूपसंख्यावाचकत्वस्य परमपञ्चन्शब्दघटकपञ्चन्शब्दे सत्त्वेन "षड्भ्यो लुक्" इत्यादावुद्देश्यतायाः अपर्याप्तायाः अपि विवक्षणात्परमपञ्चेत्यादौ न दोष इति भावः। एतेन मूलोक्तदिशा त्रिदण्डिन इत्यादौ त्रिदण्डिन्नित्यस्य संख्यावाचकत्वं स्यात्, परमषडित्याद्यर्थं षान्तग्रहणस्यावश्यकत्वेन तेन ज्ञापकेनाशब्दसंज्ञेतिप्रत्याख्यानपरस्वरूपमितिसूत्रस्थभाष्यविरोधश्चेत्यपास्तम्। त्रिदण्डिन इत्यादौ संख्येयनिष्ठविशेष्यताप्रयोजकतापर्याप्तिः त्रिइत्येतन्मात्रस्य न तु त्रिदण्डिन्नित्यस्येति, "षड्भ्यो लुक्"इत्यस्य षट्संज्ञकनिष्ठोद्देश्यतानिरूपितविधेयताश्रययोर्जश्शसोर्लुगित्यर्थेन तत्रोद्देश्यतायाः अपर्याप्तायाः विवक्षणेन परमषडित्यादौ षडित्यत्रापर्याप्तोद्देश्यतायाः सत्त्वेनोक्तभाष्यविरोधाभाव इति चादोषात्।

प्रत्ययलोपे । *प्रत्ययस्येत्यनुवृत्त्या सिद्धे आद्यप्रत्ययग्रहणमवयवलोपे मा भूत् । तेन 'आघ्नीय' इत्यादौ नानुनासिकलोप इति स्पष्टं भाष्ये । इदमेव प्रत्ययग्रहणं ज्ञापकमवयवेऽपि प्रत्ययत्वव्यवहारस्य । एवञ्च "आदेशप्रत्यययोः" "इदुदुपधस्य" इत्यनयोर्लक्षणादि नाश्रयणीयं, "सात्पदाद्योः" इति च चरितार्थम् ।

*स्थानिवत्सूत्रेण सिद्धे इदं सूत्रं नियमार्थमिति भाष्यम् । प्रत्ययस्यासाधारणं रूपं यत्राश्रीयते तत्रैवेति । न चैवं दाधर्त्तीति सूत्रे "तेतिक्ते इति किं निपात्यते ? । आत्मनेपदम् । नैतदस्ति । "अनुदात्तङित" इत्येव सिद्धम् । नियमार्थं तर्हि भविष्यति अत्रैव यङ्लुगन्तस्य,नान्यत्र बेभिदीति"

---

प्रियपञ्चान इत्यादौ बहुव्रीहिप्रयोज्यविशेष्यतानिरूपितप्रकारतासामानाधिकरण्यमेव संख्येयनिष्ठविशेष्यताया इति नातिव्याप्तिः । प्रियपञ्चा द्रौपदीत्यादौ "डाबुभाभ्याम्" इति सूत्रे ऽनुवृत्तेन "न षट्" इत्यनेन डाब्निषेधस्तु पञ्चेत्यत्र बहुव्रीहिप्राक्कालिकस्य निरुक्तसंख्यावाचकत्वस्य सत्त्वात् सुलभ इति सर्वं विस्तरेण 'नामि' इतिसूत्रटिप्पणे निरूपितमिति तत एवावगन्तव्यमिति दिक् ।

*प्रत्ययलोपे* । *प्रत्ययस्येत्यनुवृत्त्येति* । अत्रेदं तत्त्वम् । "प्रत्ययस्य लुक्" इत्यतः प्रत्ययस्येत्यनुवृत्त्या 'लोपे प्रत्ययलक्षणम्' इत्येव सिद्धे पुनः प्रत्ययग्रहणं षष्ठीप्रकृतिप्रयोज्यप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयता प्रत्ययावयवे स्वीक्रियतु इति बोधनाय । तेन "इदुदुपधस्य" इत्यत्र 'प्रत्ययभिन्नो यो विसर्गः' इति सामानाधिकरण्येनान्वयेऽपि कविभिः कृतमित्यादौ न दोषः । न च प्रत्ययस्येत्यनुवृत्त्यैव सिद्धे आद्यप्रत्ययग्रहणमवयवलोपे मा भूत् । तेनाघ्नीयेत्यादौ नानुनासिकलोप इतिभाष्यविरोध इति वाच्यम् । तस्यापि भाष्यस्यास्मिन्नेवार्थे तात्पर्यमिति कल्पनेनादोषात् । अत एव "आदेशप्रत्यययोः" इत्यत्रादेशः प्रत्ययश्च यः सकार इति सामानाधिकरण्येनान्वयेऽपि रामेष्वित्यादौ षत्वं सिध्यति । अत्रैव "सात्पदाद्योः" इतिसूत्रस्थं सातिग्रहणमपि ज्ञापकम् ।

'प्रत्ययलोपे' इति सूत्रे स्थानिवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययस्य यत्रासाधारणं रूपमाश्रीयते, अर्थात् प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताके कार्ये कर्तव्ये एव प्रत्ययलक्षणं यथा स्यादित्येतदर्थम् । तेन सुदृषत् प्रासाद इत्यत्र प्रत्ययलक्षणेन 'अत्वसन्तस्य' इति दीर्घो न । अस्त्वे प्रत्ययत्वव्याप्यत्वाभावेन प्रत्ययलक्षणाभावात् ।

*स्थानिवत्सूत्रेण सिद्धे इति* । स्थानिवत्सूत्रेणैव सिद्धे इदं सूत्रं नियमार्थम् । प्रत्ययलोपे प्रत्ययलक्षणमेव, न स्थानिवदिति । तथा च स्थानिवत्सूत्रे आदेशपदार्थे प्रत्ययलोपातिरिक्तत्वेन सङ्कोच इति 'सुदृषत् प्रासादः' इत्यादौ

इत्युक्तम् । अस्य नियमत्वे तेनात्मनेपदं दुर्लभं ङित्त्वस्य प्रत्ययाप्रत्ययसाधारणत्वादिति वाच्यम् । आत्मनेपदमित्यस्यैव सिद्धान्तयुक्तित्वात् । ततो विध्यर्थमिदमिति वार्तिकानुसारिणा "अनुदात्तङित" इसत्र सिद्धमिति शङ्किते तदनुसार्येकदेशिन एव तत्समाधानमित्यदोषादित्यन्यत्र विस्तरः ।

---

स्थानिवद्भावेनासन्तत्वमादायापि नात्वसन्तस्येति दीर्घः । न चातुसाहचर्यात्सकारप्रश्लेषाद्वा ऽसन्तमपि श्रूयमाणासन्तमेव गृह्यते इति, निर्दिश्यमानपरिभाषया वा 'सुहषत् प्रासाद'इत्यादौ श्रूयमाणस्यासोऽभावेन, निर्दिश्यमानस्यासोऽभावाद्वा न दीर्घप्राप्तिरिति उक्तं निष्फलमिति वाच्यम् । यवमच्छब्दात् णिजन्तात् क्विपि णिलोपटिलोपयोः ततः सुविभक्तौ तत्र अतोऽपि अश्रूयमाणस्य सम्भवेन श्रूयमाणत्वेनातुसाहचर्यस्य ग्रहीतुमशक्यत्वात् । साहचर्यपरिभाषाया अनित्यत्वाच्च । सुहषच्छब्दात्प्रत्ययलक्षणेन स्थानिवद्भावेन वा ऽसन्तत्वमादाय 'अस्मायामेधा'इति विनेरापत्तेर्दुर्वारत्वाच्च । किञ्च शोभना हषद् यस्यां सा सुहषत् नगरी इत्यत्र सुलुकः स्थानिवद्भावेनोगित्त्वमाश्रित्य 'उगितश्च' इतिङीबापत्तेः । अजायाः क्षीरमजक्षीरमित्यत्र असः स्थानिवत्त्वेन स्यादेशापत्तेश्च । नियमे तु प्रत्ययलोपसत्त्वेन स्थानिवत्त्वाप्रवृत्त्या प्रत्ययलक्षणस्य चाप्राप्त्या न दोषः । अत्वसन्तस्येत्यत्रासपदोत्तरं षष्ठ्या अभावेन निर्दिश्यमानपरिभाषाया अप्रवृत्तेश्च ।

न चैवमपि अर्थवद्ग्रहणे-लक्षणप्रतिपदोक्त-प्रत्ययाप्रत्यय-निरनुबन्धक-इतिपरिभाषाचतुष्टयस्यानिनस्मन्ग्रहणेष्वप्रवृत्तये "अनिनस्मन्" इति परिभाषयाऽन्त्वादिषु वर्णत्वव्याप्यत्वारोपस्यावश्यकत्वेनानाल्विधाविति निषेधादेव न स्थानिवद्भावो, नापि प्रत्ययलक्षणमिति 'सुहषत् प्रासाद'इत्यादौ नोक्तदोषावतार इति वाच्यम् । रमाशब्दाण्ण्यन्तात् क्त्वाप्रत्यये प्रादिना समासे 'समासे नञ्' इत्यनेन ल्यबादेशे परम्येत्यत्र प्रत्ययाप्रत्यययोरितिपरिभाषया इदानीमापः प्रत्ययस्यैव ग्रहणापत्त्या तत्परिभाषानङ्गीकारे ऽपि प्रत्ययस्याऽपि आपो ग्रहणापत्त्या प्रत्ययलक्षणेन स्थानिवद्भावेन वाऽऽप्त्वमादाय "विभाषाऽऽपः"इत्यनेन णेरयादेशापत्तेः । नियमे तु प्रत्ययलोपसत्त्वेन स्थानिवद्भावाप्रवृत्त्या प्रत्ययस्यासाधारणं रूपं यत्राश्रीयते तत्रैव प्रत्ययलक्षणमिति आप्त्वस्याप्लृधातावपि सत्त्वेनाप्त्वं प्रत्ययाप्रत्ययसाधारणमिति प्रत्ययलक्षणस्याप्यप्रवृत्त्या आप्लृधातोरेव "विभाषाऽपः" इति सूत्रे ग्रहणमिति न दोषः ।

न च मित्रशीः, अतृणेडित्यादौ "शास इदङ्हलोः" "तृणह इम्" इत्यादि न स्यात् । प्रत्ययलोपसूत्रस्य स्थानिवत्सूत्रानियामकत्वसिद्ध्यर्थं नियमस्य स्थानिवत्सूत्रमात्रविषयकत्वावश्यकतयाऽत्र सूत्रे 'अनल्विधौ' इत्यस्यानुवृत्तेः सत्त्वेन हलादित्वस्य अल्वव्याप्यधर्मघटितत्वात् प्रत्ययलक्षणाप्रवृत्तेरिति

प्रत्ययलोपे प्रत्ययवदिति सिद्धे* लक्षणग्रहणं प्रत्ययनिमित्तकमेव, न तु प्रत्ययस्थानिकमित्यर्थलाभार्थम् । तेन नखभिन्न इत्यादावैसादिकं

वाच्यम् । "शास इदङ्हलोः" इति सूत्रे. हलिति न क्रियते "शास इत्" "अङि" इति च योगो विभज्यते अजादौ चेदङ्ङ्येवेति नियमेन "तृणह इम्" इत्यत्र हलीति पदमनुवर्त्य "नाभ्यस्तस्य" इति सूत्रात् नेति अचीति चानुवर्त्य अजादौ न भवतीति निषेधेन च इदादेशमागमयोरनैमित्तिकतया तत्र प्रत्ययलक्षणानावश्यकत्वेन दोषाभावात् ।

*प्रत्ययलोपे प्रत्ययवदिति सिद्धे इति* । प्रत्ययलोपे प्रत्ययवदित्येव सिद्धे लक्षणग्रहणं प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताके एव कार्ये कर्तव्ये प्रत्ययलक्षणं यथा स्यादित्येतदर्थम् । अत एव नखभिन्न इत्यादौ प्रत्ययलक्षणेन भिस ऐस् न । न च लुगुत्तरमपि प्रत्ययलक्षणेन ऐसः प्राप्त्या अन्तरङ्गनिमित्तविनाशकत्वस्य लुक्यभावाद् 'अन्तरङ्गानपि'इति परिभाषाया अप्रवृत्त्या लुकः पूर्वमेवैसि ततो लुकि लक्ष्यैलक्षणन्यायेन पुनरैसोऽप्रवृत्त्या दोषाभाव इति लक्षणग्रहणं व्यर्थमिति वाच्यम् । पञ्चभिः खट्वाभिः क्रीतं पञ्चखट्वम् इत्यत्र क्रीतप्रत्ययलुकि टाब्लुकि च टाब्लुकः पूर्वमदन्तत्वाभावेनैसादेशाप्राप्त्या लक्ष्यैलक्षणन्यायाविषयत्वेन भिसः प्रत्ययलक्षणेन ऐसादेशवारणाय, रमायाः पुत्रः रमापुत्र इत्यादौ निरुक्तदिशा पूर्वं याटि निर्दिश्यमानपरिभाषया याड्रहितस्य लुकि याट्श्रवणाभावाय च प्रत्ययनिमित्तककार्ये एव प्रत्ययलक्षणं न तु प्रत्ययोद्देश्यककार्ये इत्यर्थस्यावश्यं वक्तव्यत्वात् ।

इदमत्रावधेयम् । यद्यपि सर्वत्र नियमस्थले नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं च यद्रूपं तदवच्छिन्नातिरिक्तत्वेन सङ्कोचो नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने भवति । यथा–"समासाश्च"इतिशास्त्रीयोद्देश्यतावच्छेदकं समासत्वं तद्व्यापकम्–'अर्थवत्'इति शास्त्रीयोद्देश्यतावच्छेदकमर्थवत्त्वं तद्व्याप्यं च यत् पदसंज्ञकपूर्वभागकप्रत्ययानुत्तरभागकसमुदायत्वं तदवच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकार्थवत्त्वावच्छिन्ने सङ्कोचः । तेन 'गामानय'इत्यत्र तथासमुदायसत्त्वेन पूर्वसूत्रेण न प्रातिपदिकसंज्ञा, तथाऽपि–नियामकशास्त्रीयोद्देश्यतावच्छेदकरूपमात्रावच्छिन्नातिरिक्तत्वेन संकोचे समासातिरिक्तस्य अर्थवत्समुदायस्य प्रातिपदिकसंज्ञेति नियम्यशास्त्रस्यार्थे जाते राजपुरुष इत्यादौ न पूर्वसूत्राप्रवृत्तिपूर्वकस्वप्रवृत्तिव्यतिरिक्तं फलमिति (१)स्नुषाश्वश्रून्यायप्रसङ्गो यत्र तत्र सर्वत्र नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकरूपावच्छिन्नातिरिक्तत्वेन सङ्कोचः । यत्र तु स नास्ति तत्र व्यापकरूपेण संकोचे प्रमाणाभा-

(१) स च यथा–भिक्षामटते बटवे भिक्षां प्रत्याचक्षाणां स्वस्नुषां भर्त्सयित्वा श्वश्रूः पुनस्तमाहूय समागते तस्मिन्नास्ति भिक्षा, निर्गच्छेति तथैव प्रत्याचष्टे इति ।

त्वेन उपात्तरूपातिरिक्तत्वेनैव सङ्कोचः । तथा च प्रकृते स्थानिवत्सूत्रीयोद्देश्यतायां प्रत्ययलोपातिरिक्तत्वेन संङ्कोचेऽपि यशश्शब्दाण्णिजन्तात्क्विपि टिलोपणिलोपयोः असः प्रत्ययत्वाभावेन नियमाप्राप्त्या स्थानिवद्भावेनाऽसन्तत्वाद् "अस्मायामेधास्रजो विनिः" इति विनिप्रत्यये 'यश्वी' इतिफलसत्त्वेन तन्न्यायाप्राप्त्या उपात्तरूपातिरिक्तत्वेनैव सङ्कोचः । प्रत्युत लोपातिरिक्तत्वेनैव सङ्कोचे यश्वीत्यस्यासिद्ध्यापत्तिः स्यात् । प्रत्ययलक्षणं तु न सम्भवति । प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तताके एव तत्प्रवृत्तेर्निरुक्ततया अस्त्वस्य प्रत्ययत्वव्याप्यत्वाभावेन तदप्राप्तेः ।

नन्वत्र मते प्रत्ययलक्षणस्य नियमपरत्वेन व्याख्यानात् स्थानिवत्सूत्रमात्रविषयतया अत्रानल्विधावित्यनुवृत्तेः सत्त्वेन "शाम्नीय" इत्यत्र झलादित्वनिमित्तके ऽनुनासिकलोपे कर्तव्ये ऽनल्विधाविति निषेधेनैव प्रत्ययलक्षणाप्रवृत्तेः सिद्धत्वात् प्रथमप्रत्ययग्रहणं व्यर्थम् । न च तस्य षष्ठीप्रकृतिप्रयोज्यप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयता प्रत्ययावयवेऽपि स्वीक्रियते इति ज्ञापनार्थतया साफल्यमिति वाच्यम् । ज्ञापनोत्तरमपि वैयर्थ्यस्य तदवस्थत्वाद्; इति चेन्न । प्रथिमानमाचष्टे प्रथिमयति ततः क्विपि णिलोपटिलोपयोः तस्य उपेत्यव्ययेनाव्ययीभावसमासे "उपप्रथिमम्' इत्यत्र टिलोपस्य स्थानिवद्भावेन "अनश्च" इति टजर्थे, वाग्मिनमाचष्टे वाग्मयति ततः क्विपि बहवो वाग्मो यस्यां सा बहुवाग्म्का इत्यत्र स्थानिवद्भावेन इन्नन्तत्वमाश्रित्य "इनः स्त्रियाम्" इति कप्प्रत्ययार्थे, सर्वंत आचष्टे सर्वतयति ततः क्विपि 'सर्वात्' इत्यत्र स्थानिवद्भावेनासन्तत्वमाश्रित्य "अत्वसन्तस्य" इति दीर्घार्थे, सर्वाद् विद्यते यस्य ययोर्वा 'सर्वत्वी' 'सर्वत्विनौ' इत्यत्र स्थानिवद्भावेनाऽसन्तत्वमाश्रित्य "अस्मायामेधास्रजो विनिः" इति विनिप्रत्ययार्थे च स्थानिवत्सूत्रे प्रत्ययपर्याप्तस्थानिताकलोपातिरिक्तत्वेनैव सङ्कोचो यथा स्यात् न तु प्रत्ययावयवलोपातिरिक्तत्वेनापि इत्येतदर्थं तस्यावश्यकत्वात् । अन्यथा उक्तोदाहरणेषु प्रत्ययावयवलोपसत्त्वेन स्थानिवत्त्वाप्रवृत्तौ अन्त्वादीनां प्रत्ययत्वव्याप्यत्वाभावेन प्रत्ययलक्षणाप्रवृत्तेश्च तदसिद्ध्यापत्तिरिति दिक्। एतत्सर्वं भाष्यकृन्मतानुरोधेन।

वार्त्तिककारस्त्वल्विधावपि प्रत्ययलक्षणार्थमिदं सूत्रं स्वीकरोति। अत एव मित्रशीः, अतृणेडित्यादौ न दोषः । अत्र मतेऽपि द्वितीयप्रत्ययग्रहणात् गवे हितं गोहितम् इत्यत्र चतुर्थ्येकवचनस्य 'सुपो धातुप्रातिपदिकयोः' इत्यनेन लुकि 'एचो ऽयवायावः' इत्येतच्छास्त्रनिमित्ततायां प्रत्ययत्वव्याप्यधर्मावच्छिन्नत्वाभावेन आवादेशे कर्तव्ये न प्रत्ययलक्षणम् । अन्यथा प्रत्ययपर्याप्तस्थानिताकलोपसत्त्वेन प्रत्ययलक्षणादवादेशापत्तेः । न च "न लुमता" इति निषेधेनावादेशो नेति वाच्यम् । तस्य लुप्तप्रत्ययनिमित्तकाङ्गसंज्ञावत्पर्याप्तोद्देश्यताके एव प्रवृत्त्या अवादेशस्यौकारमात्रोद्देश्यकत्वेन तस्य चाङ्गत्वाभावेन तदप्रवृत्तेः। निरूपयिष्यते चेदमनुपदं इति तत एवावगन्तव्यम् ।

नेत्येके । अतिदेशेनाहार्यतद्बुद्धिसंपादनेऽप्युच्चारणप्रसङ्ग *रूपषष्ठ्यर्थाभावा-
न्नैस्सा ति तद्व्यर्थमित्यपरे ।

कार्यमिति । प्राधान्यात् कार्यातिदेशोऽयमिति भावः । "इहा-
पि परिवीरिति शास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वं भविष्यति" इति
भाष्येण तृज्वत्सूत्रे शास्त्रकार्यातिदेशयोरैक्यकथनेन चातिदिश्यमानका-
र्याणामुत्पत्तिदेश एव देश इत्यङ्गीकारात्परिवीरित्यत्र तुग्दीर्घौ पर्यायेण न;
किं तु दीर्घ एव । परत्वात् । अन्यथाऽनेनैवोभयोर्विधानात्परत्वाभावेन
पर्यायो दुर्वार इति बोध्यम् । तदाह—जसि चेति गुणे प्राप्ते इति(१) ।

---

नन्वेवमपि चित्रायां जाता चित्रा इत्यत्र अणो लुकि तस्मादणन्तत्वनिमि-
त्तके 'टिड्ढा' इति सूत्रेण ङीपि कर्तव्ये प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तकत्वेन
प्रत्ययलक्षणापत्तिरिति चेन्न। 'प्रत्ययलोपे तल्लक्षणम्' इतिन्यासे प्रत्यासत्त्या प्रत्यय-
त्वव्याप्येतिपूर्वोक्तार्थलाभसम्भवे प्रत्ययग्रहणं प्राधान्येन यत्र प्रत्ययस्य निमित्तत्वे-
नाश्रयणं तत्रैव प्रत्ययलक्षणमित्यर्थलाभार्थमिति स्वावयवनिष्ठविशेष्यतानिरूपि-
तप्रकारत्वासमानाधिकरणा या प्रत्ययत्वव्याप्यधर्मावच्छिन्ना विषयता तादृश-
विषयताके कार्ये एव प्रत्ययलक्षणमित्यर्थस्य फलिततया प्रकृते अत इत्यनुवृत्ता-
कारे अण्पदस्य विशेषणतया प्रत्ययस्याप्राधान्येनाश्रयणात् तदप्रवृत्तेः । एत-
न्मूलकमेव "वर्णाश्रये नास्ति प्रत्ययलक्षणम्" इति 'वर्णप्राधान्यविषयमेतत्' इति
चोच्यते । अनेन तत्परिभाषायामेतदेव ज्ञापकमिति लभ्यते इत्यन्यत्र विस्तरः ।

सुदृषत् प्रासाद इत्यादौ दोषवारणं तु अनिनस्मन्निति परिभाषया
अन्त्वादौ वर्णत्वव्याप्यत्वस्यातिदेशेनैव बोध्यम् । युप्लुवोः साहचर्याद् "विभाषा
ऽऽपः" इत्यत्र आप्लृधातोरेव ग्रहणमिति पूर्वोक्तदोषवारणं बोध्यमिति दिक् ।

*उच्चारणप्रसङ्गरूपषष्ठ्यर्थाभावादिति* । चिन्त्यमिदम् । वृत्तिवि-
शेष्यतावच्छेदकतावच्छेदकताकेष्टसाधनत्वप्रकारकभ्रमाविषयत्वप्रकारकज्ञानी-
यविशेष्यतावच्छेदकरूपावच्छिन्नविशेष्यताकेष्टसाधनत्वप्रकारकप्रमाविषयत्वप्र-
कारकज्ञानीयविशेष्यतावच्छेदकतावच्छेदकताया एव स्थानपदार्थत्वेन स्था-
नपदार्थस्योच्चारणघटितत्वस्याभावात् । स्थानपदार्थस्योच्चारणघटितत्वे "द-
र्भाणां स्थाने शरैः प्रस्तरितव्यम्" इत्यादौ स्थानपदार्थानुपपत्तेः । "इको
यणचि" "दर्भाणां स्थाने शरैः प्रस्तरितव्यम्" इत्यादिशास्त्रैरिक्कर्मक-
मुच्चारणं दर्भकरणप्रस्तरणं चेष्टसाधनत्वप्रकारकभ्रमविषयः, यण्कर्म-
कमुच्चारणं शरकरणकप्रस्तरणं च इष्टसाधनत्वप्रकारकप्रमाविषय इत्येव बो-
धनादिति "स्थानेऽन्तरतम" इति सूत्रे विस्तर इति दिक् ।

---

(१) "जसि च" इति विहितेऽनेन गुणे प्राप्ते इत्यर्थः इति मुद्रित-
पुस्तके ऽधिकः पाठः ।

न लुमता। लुशब्दयुक्ता लुमन्तस्तदाह.-लुगित्यादि। अङ्गकार्यमिति। लुप्तप्रत्यये परतो यः पूर्वस्तत्प्रकृतिभूतो लब्धाङ्गसञ्ज्ञकस्तदुद्देश्यकं यत्कार्यमाङ्गमनाङ्गं वेत्यर्थः* । तेन पञ्चेत्यादौ पदसञ्ज्ञा भवति। राजपुरुषादौ भसञ्ज्ञा च न। अङ्गसञ्ज्ञा तु यथोद्देशत्वात् प्रत्ययसत्ताकाले जाता तिष्ठत्येव। तत्काले कार्याभावादप्रवृत्तावपि प्रत्ययलक्षणेन सा। तस्या लब्धाङ्गसञ्ज्ञककार्यत्वाभावेन निषेधाप्रवृत्तेः। स्पष्टश्चेदं "युवोरनाकौ" इत्यत्र कैयटे।

"न लुमता" इत्यस्यानित्यत्वादङ्गसञ्ज्ञायामप्रवृत्तिरिति कश्चित्* । अत एव पञ्चभिः क्रोष्ट्रीभिः क्रीतं कुलमिति "तद्धितार्थ" इति समासे ठको "अध्यर्ध" इति लुकि "लुक्तद्धित" इति स्त्रीप्रत्ययलुकि च 'पञ्चक्रोष्टृ' इत्यत्र तृज्वत्त्वम्* । तदुक्तं भाष्ये तृज्वदिति सूत्रे-"न चापरं निमित्तमाश्रीयते, किं तर्हि, अङ्गस्य क्रोष्टुस्तृज्वदिति; अङ्गसञ्ज्ञा च भवति *प्रत्ययलक्षणेन" इति। न चोरदत्त्ववत् तृज्वत्त्वेऽपि परनिमित्ताश्रयणमिति पञ्चक्रोष्टृ इत्यस्यासिद्धिरिति वाच्यम्। "उरत्" इत्यत्र शब्दतः परस्य निमित्तत्वानाश्रयणेऽपि *अङ्गसञ्ज्ञाद्वारोरदत्त्वस्यापि परनिमित्तकत्वेन स्थानिवत्त्वप्रवृत्तिरित्येव "लिटयभ्यासस्य" इति सूत्रस्थभा-

---

*इत्यर्थ इति* । लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्ना लुप्तप्रत्ययनिमित्तकाङ्गसंज्ञावत्पर्याप्तधर्मेण साक्षात्परंपरया वा अवच्छिन्ना च योद्देश्यता तादृशोद्देश्यताके कार्ये प्रत्ययलक्षणं न भवतीति न लुमताङ्गस्येतिसूत्रार्थ इति भावः। तेन राजपुरुषादौ भसंज्ञा परमत्रिपुत्र इत्यादौ त्रयादेशश्च न भवति। साक्षाल्लुप्तप्रत्ययाव्यवहितपूर्वत्वावच्छिन्नत्वनिवेशादुत्क्रामेत्यादौ न दोषः। विस्तरस्तु 'वर्णाश्रये' इति परिभाषाव्याख्याने परिभाषेन्दुटिप्पणे द्रष्टव्य इति दिक्।

*कश्चिदिति* । अत्रारुचिबीजन्तु अङ्गसंज्ञाया उपजीव्यत्वेन तन्निषेधो न लुमता ऽङ्गस्येत्यनेन कर्तुमशक्य इति। *तृज्वत्त्वमिति* । पूर्वं जातं तिष्ठत्येवेति शेषः। तथा हि "पञ्चक्रोष्टृ" इत्यत्र प्रत्ययलक्षणेनाङ्गसंज्ञायां लुक्यपि तृज्वद्भावप्राप्त्या लुक्तद्धितेति लुकः अन्तरङ्गस्त्रियांचेतिशास्त्रनिमित्तविनाशकत्वाभावेन लुक्तद्धितेत्यतः पूर्वमेव तृज्वद्भावेऽपि पश्चाद् 'अध्यर्ध' इति लुकि लुक्तद्धितेति स्त्रीप्रत्ययलुकि च पञ्चक्रोष्टृ इति तृज्वद्भावघटितस्य निर्बाधत्वात्।

*प्रत्ययलक्षणेनेतीति* । तथा च लुकोऽन्तरङ्गनिमित्तविनाशकत्वाभावेनान्तरङ्गानिति परिभाषाया अप्राप्त्या लुकः प्रागेव "स्त्रियां च" इति तृज्वद्भावो भवतीति भावः। *अङ्गसंज्ञाद्वारेति* । अचः परस्मिन्नित्यत्रान्य-

ध्याशयात् । नियमतः परबुद्धेः पूर्ववृत्तितया परनिमित्तत्वात् । अत एव 'चर्करीति' 'अजर्घा'इत्यादावत्वप्रवृत्तिः । "अचि श्नु" इत्यादावजादिप्रत्यय-इत्यर्थस्तु अङ्गस्येतिषष्ठ्या 'निमित्ते' इत्यध्याहारेण तस्य विशेष्यत-या यथाकथञ्चिदुपपाद्यः । आकडाराधिकारस्थेषु *कार्यकालत्वस्याभा-वाच्च । एतेन "कार्यकालपक्षेऽपि क्रोष्टुशब्दः प्रत्यये ऽङ्गसञ्ज्ञो भवति, अङ्गसञ्ज्ञकस्य च तस्य तृज्वत्त्वं स्त्रियामित्येवार्थः । "उरत्"इत्यादौ तु आवृत्त्या ऽत्त्वं प्रति निमित्तताऽपि वत्रश्चेति लक्ष्यानुरोधात् । न तथा प्रकृते, लक्ष्यानुरोधादेवेति तदाशयः । पदैकवाक्यतयाऽन्वयस्तु सञ्ज्ञासूत्राणां दुर्लभ इत्यन्यत्र निरूपितम् । 'चर्करीति' 'अजर्घा'इत्यादौ तु "न लुमता" इतिनिषेधानित्यत्वादत्वप्रवृत्तिः 'त्रपो' इत्यादौ गुणवत् । अङ्गाक्षिप्त-प्रत्ययनिमित्तं लुकि भवत्येवेति तु ध्रुवे हितं ध्रुहितमित्यादावुवङापत्त्या चिन्त्यम्"–इत्यपास्तम् ।

त्रिषु सरूपा इति । "ङे प्रथमयोः"इति सूत्रे युष्मानित्यादौ "त-स्माच्छसो नः"इत्युपन्यासपरेण भाष्येण "स्वमोर्नपुंसकात्"इति सूत्रे शिशी नुमादिभिर्युष्मदाद्यादेशानां विप्रतिषेधपरेण वार्त्तिकेन, तद्भाष्येण च, "न षट्"इति निषेधेन च लिङ्गसत्ताबोधनेऽपि लिङ्गबोधकप्रत्ययानुत्पत्त्या रूपे न विशेष इत्यर्थः । "साम आकम्"इतिसूत्रस्थस्य "अलिङ्गे युष्मदस्मदी" इति भाष्यस्य पदान्तरसान्निधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दमात्रात् न प्रतीयते इत्यर्थ इति दिक् ।

त्रेस्त्रयः । अयं न सान्तो "निजां त्रयाणाम्"इति निर्देशात् । त्रेरयङ् न कृतः* "अयङ् यि"इत्यादाविवोच्चारणार्थत्वशङ्कावारणाय । केचि-दिति । "आमि सर्वनाम्न"इति साहचर्यादिति भावः । वस्तुतस्त्विव-ति । साहचर्यस्यासार्वत्रिकत्वात्सूत्रान्तरस्थतदाश्रयणे दृढतरप्रमाणाभावा-च्चेति भावः । न च गौणमुख्यन्यायेनात्र नेति वाच्यम् । अप्रसिद्धत्व-

---

थासिद्धमपि परम्परया निमित्तं निमित्तपदेन गृह्यते इति भावः ।

*कार्यकालत्वस्याभावादिति* । कार्यकालपक्षीयविधिदेशीयत्वरूपांशस्याभा-वादित्यर्थः । निरूपितं चैतद्विस्तरेण परिभाषेन्दुटिप्पणे यथोद्देशपरिभाषा-व्याख्यावसरे इति तत एवावगन्तव्यम् ।

*त्रेस्त्रयः । अयङ् न कृत इति* । "ङिच्च"इतिशास्त्रस्य ङित्त्वसाम-र्थ्येन कल्प्यमानान्त्यादेशत्वानुवादकत्वेन प्रकृते ङित्करणसामर्थ्यादन्त्यादेश

गौणलाक्षणिकत्वान्यतररूपगौणत्वाभावात् । अत एवोपसर्जनानां सर्वनामत्वनिषेध आरब्धो वार्त्तिककृता । इतरविशेषणतामात्रेण तत्त्वाभावात् । *पदकार्य एव तत्प्रवृत्तेश्चेत्यन्यत्र विस्तरः ।

द्विशब्दो नित्यं द्विवचनान्त इति । संख्यापरत्वेऽपीत्यर्थः । अत एव कस्य द्वित्वे इत्यर्थे "कस्य द्वयोः" इति भाष्ये "बहुषु" इति सूत्रे प्रयुक्तम् ।

त्यदादी ॥ "अष्टन" इत्यतो विभक्तावित्यनुवर्त्तते, तत्फलं तत्कुलम् । सोर्लुक्त्वं न । इष्टिरिति । भाष्यकारस्येति भावः । द्विपर्यन्तानां किमिति । युष्मदस्मदोरात्त्वयत्वलोपैर्बाधात् किमः कादेशविधानाच्च प्रश्नः । भवान् भवन्तावित्यभ्युच्चयाय* ।

ङौ तु सवर्णदीर्घ इति । इदं सम्भावनामात्रेण । एषां ङौ "ईदूतौ च सप्तम्यर्थे" इतिसूत्रस्थभाष्यप्रामाण्येनानभिधानात् । क्विबन्तवातेति । "ईत्वमवकारादौ" इतिवार्त्तिकस्य, पावान इत्यादीनां वनिपा साधनरूपस्य तत्प्रत्याख्यानभाष्यस्य च फलैक्यायेदृशेभ्यः क्विपो *ऽनभिधानमावश्यकमिति ।

---

एव भविष्यतीति कल्पनीयमिति कल्पनागौरवम् । किं च त्रयाणामित्यस्य द्वित्वे स्थानिवद्भावेन सुबन्तत्वाद् द्विशब्देन समासे समासत्वेन प्रातिपदिकसंज्ञया तदवयवत्वादाम्द्वयस्यापि लुकि विशिष्टादामि त्रित्री आमिति स्थिते ऽयङ्कल्पे त्रित्रयाणामिति स्यात्, यथाश्रुतकल्पे त्रयाणामिति फलभेद इति अयङ् कर्तुमशक्यः । मूलोक्तं तु न युक्तम् । त्रयाणामिति निर्देशेन सान्तत्ववारणवदुच्चारणार्थत्वस्यापि वारणसम्भवादिति बोध्यम् ।

*पदकार्ये एवेति* । तत्त्वं च स्त्रीत्वानिमित्तकत्वे सति विभक्त्यनिमित्तकत्वम्, स्त्रीत्वानिमित्तकत्वे सति प्रातिपदिकप्रकृतिकप्रत्ययानिमित्तकत्वं वा, पदात्परत्वव्याप्यविषयताप्रयोजकपदघटितशास्त्रविधेयताकत्वं वेत्यन्यत्र विस्तरः ।

*अभ्युच्चयायेति* । अन्ये तु "ननु त्यच्छब्दात्प्रागेव भवच्छब्दः पठिष्यते। तथा च भवानित्यादौ न दोष इत्यरुचेराह—*भवन्ताविति । स च भवांश्च भवन्ताविति विग्रहः । अत्र 'त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते' इति तच्छब्दस्यैकशेषापत्तिः" इति लापनिकामाहुः । यथाश्रुतपाठं परित्यज्यान्यथापाठं कृत्वा भाष्यकारेष्टेः खण्डनस्यायुक्तत्वात्, एतादृशरीत्या दोषवारणे ऽनवस्थापाताच्च एवं लापनमनुचितमिति केचित् । *अनभिधानमिति* । वस्तुतस्तु यथोत्तरमिति परिभाषया "ईत्वमवकारादौ" इति वार्तिकं पावादीनां वनिपा सिद्धिमबुध्वैव प्रवृत्तमिति "धीर्ध्यायतेर्दधातेर्वा" इतिभाष्यानुग्रहात् कल्प्यते । शंस्था इत्यादावन्तरङ्गपरिभाषया ईत्वात्पूर्वमेव "वेरपृक्तस्य" इति लोपे

धीवरी पीवरीत्यादि तु "ध्याप्योः संप्रसारणञ्च" क्विप् क्वनिप् च चेनेत्यर्थकात् "जनसनखनां सञ्झलोः" "घुमास्थागापा" इतिसूत्रभाष्यपर्यालोचनया सिद्धाद्वार्त्तिकात्सिद्धम् । धीर्ध्यायतेर्दधातेर्वेति "क्विब्वचि" इतिवार्तिकस्थभाष्ये दधातेर्वेत्युक्तिरेकदेशिनः* । शंस्था इत्यत्र विजेवेति न दोषः । मीङ् माने इतीकारान्तात् क्विबित्येके । वातप्रमीर्निःश्रृङ्गो मृगाकृतिर्जन्तुविशेषः । बहुश्रेयसीति । "ईयसो बहुव्रीहेर्न" इति निषेधान्नोपसर्जनह्रस्वः ।

यू स्त्र्या । दीर्घयोरेव ग्रहणं व्याख्यानात्* । "वा छन्दसि" इति पूर्वसवर्णदीर्घः । यू किम् । मात्रे । "आण्नद्याः" इति न । स्त्रियमाचक्षाते स्त्र्याख्यौ । मूलविभुजादित्वात् कः । स्त्र्याख्यावित्युपस्थितस्त्रीवाचकशब्दस्य विशेष्यत्वात्तदन्तविधिरित्याह—ईदूदन्ताविति । "आच्छीनद्योः" इत्यादौ नदीशब्दस्य तदवयवे लक्षणा बोध्या । आख्याग्रहणान्नित्यत्वलाभस्तदाह–नित्यस्त्रीलिङ्गाविति । तत्फलन्तु ग्रामण्यादेर्व्यावृत्तिः । नित्यस्त्रीत्वञ्च* प्रवृत्तिनिमित्तैक्ये लिङ्गान्तरविशिष्टार्थानभिधायकत्वम्* । ङ्यन्तकु-

---

हलादित्वाभावादेव नेत्वप्राप्तिः । धीः वातप्रमीरित्यादौ अन्तरङ्गपरिभाषाया अनित्यत्वान्न दोषः ।

परे तु प्रकृतिविशेषोद्देश्यकक्विपि परत एव "ईत्वमवकारादौ" इति वार्तिकं प्रवर्त्तते । शंस्था इत्यादौ "स्थः क च" इति चकारेण स्थाधातोः क्विपो विधानादीत्वं न जायते । धीः वातप्रमीरित्यादौ "क्विप् च" इत्यनेन क्विपो विधानात्तत्र प्रकृविशेषोपादानाभावात् "ईत्वमवकारादौ" इत्यस्य विषयो नास्तीति ईत्वमवकारादाविति वार्त्तिकमते, वनिपा तत्प्रत्याख्यानपरभाष्यमते च न फलभेद इत्याहुः । *एकदेशिन इति* । नेयमेकदेश्युक्तिरित्यवोचाम ।

*व्याख्यानादिति* । किं पुनरिदं दीर्घयोर्ग्रहणमाहोस्विद् ह्रस्वयोरिति विकल्प्य दीर्घग्रहणपक्षे यू इत्यत्र पूर्वसवर्णदीर्घस्य 'ङिति ह्रस्वश्च' इति सूत्रे सामानाधिकरण्यस्य चानुपपत्तिमुद्भाव्य, ह्रस्वग्रहणे शकटिबन्धुरित्यत्र 'नदी बन्धुनि' इति पूर्वपदान्तोदात्तस्य बहुशकटिरित्यत्र 'नद्यृतश्च' इति कपः प्राप्तिञ्चोक्त्वा दीर्घयोर्ग्रहणमिति सिद्धान्तितम् । पूर्वसवर्णदीर्घस्तु "दीर्घाज्जसि च" इत्यत्र 'वा छन्दसि' इत्यनुवृत्त्या साधित इत्येवंरूपाद्व्याख्यानादित्यर्थः ।

*नित्यस्त्रीत्वं चेति* । प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वम् । प्रवृत्तिनिमित्तवैशिष्ट्यं च स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वं–स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वं–स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वमेतत्त्रितयसम्बन्धेन । शक्तिवैशिष्ट्यञ्च स्वपर्याप्त्यधिकरणत्वं—स्वज्ञानाधीनोपस्थितिप्रयोज्यबोधजनकत्वप्रकारकतात्पर्यविशेष्यताविशिष्टतात्पर्यविषयतापर्याप्त्यधिकरणत्वमेतदुभयसम्बन्धेन । ता-

त्पर्यविशेष्यतावैशिष्ट्यं च स्वावच्छेदकतच्छक्तित्वव्यापकानुपूर्वीव्याप्यधर्माव-च्छिन्नत्व-स्वसामानाधिकरण्योभयसम्बन्धेन। प्रवृत्तिनिमित्तवैशिष्ट्यघटकप्रथमसम्बन्धोपादानेन सेनानीशब्दस्य न नित्यस्त्रीत्वम्। अन्यथा सेनात्वरूपप्रवृत्तिनिमित्तमादाय स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वस्य च सेनाकर्मकनयनकर्तृत्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन दोषो दुरुद्धरः स्यात्। प्रथमसम्बन्धोपादाने तु सेनात्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्योक्तशक्तावभावान्न दोषः। द्वितीयसम्बन्धोपादानेन जिह्रेतीति ह्रीः इत्यादौ धातुवाच्यतावच्छेदकसाध्यत्वरूपप्रवृत्तिनिमित्तमादाय न दोषः। अन्यथा साध्यत्वस्य कस्यापि लिङ्गस्यान्वयितानवच्छेदकतया स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वस्य च साध्यत्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन्न दोषो दुरुद्धरः स्यात्। तृतीयसम्बन्धोपादानेन स्त्रीलिङ्गविषयकबोधतात्पर्येणोच्चरितसेनानीशब्दे एव सेनाकर्मकनयनकर्तृत्वरूपप्रवृत्तिनिमित्तमादाय न दोषः। अन्यथा सेनाकर्मकनयनकर्तृत्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य च सेनाकर्मकनयनकर्तृत्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन दोषो दुर्वारः स्यात्। तस्योपादाने तु सेनाकर्मकनयनकर्तृत्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरपुंनपुंसकलिङ्गनिष्ठप्रकारताप्रयोजकत्वस्यैव निरुक्तशक्तौ सत्त्वेन न दोषः। शक्तिवैशिष्ट्यघटकप्रथमसम्बन्धानुपादाने सेनानीशब्दे एव सेनात्वं प्रवृत्तिनिमित्तमादाय स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वस्य च सेनात्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन तज्ज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यताविशिष्टतात्पर्यविषयतापर्याप्त्यधिकरणत्वस्य सेनानीशब्दे सत्त्वेन दोषो दुर्वारः स्यात्। शक्तिवैशिष्ट्ये द्वितीयसम्बन्धोपादानेन वात्स्या आयः वात्स्यायः तं नयतीति वात्स्यायनीत्यादौ वात्सीसम्बन्ध्यायकर्मकनयनकर्तृत्वावच्छिन्नविषयकबोधतात्पर्येणोच्चरिते वत्ससम्बन्धिस्त्रीत्वविशिष्टापत्यत्वरूपप्रवृत्तिनिमित्तमादाय न दोषः। अन्यथा स्त्रीत्वविशिष्टवत्सापत्यत्वरूपप्रवृत्तिनिमित्तावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताप्रयोजकत्वाभावस्य च स्त्रीत्वविशिष्टतदपत्यत्वावच्छिन्ननिरूपितशक्तौ सत्त्वेनैतादृशशक्तिपर्याप्त्यधिकरणत्वस्य निरुक्तवात्स्यायनीशब्दे सत्त्वाद्दोषो दुरुद्धरः स्यात्। बोधजनकत्वप्रकारकतात्पर्यविशेष्यतावैशिष्ट्यस्य दानेन बोधविषयत्वादिप्रकारकतात्पर्येणोच्चरितस्थले न दोष इत्यर्थवत्सूत्रे विस्तर इति दिक्।

मार्यादीनां क्यचि निर्वृत्तेन त्रिलिङ्गेन समानाकारतया नित्यस्त्रीत्वाभाववारणाय प्रवृत्तिनिमित्तैक्ये इति ।

नन्वेवं बहुश्रेयसीशब्दस्य नदीत्वं न स्यात्, अत आह–प्रथमेति । अर्थान्तरसङ्क्रमात्पूर्वं विद्यमानं नित्यस्त्रीत्वमादाय तस्यार्थान्तरसंक्रान्ते ऽपि नदीत्वं वक्तव्यमित्यर्थः । यथोद्देशे पूर्वप्रवृत्तसंज्ञामादायैव कार्यम् । कार्यकालपक्षेऽपि कुमारीत्यादौ प्रकृतिभूतकुमारीशब्दस्य नित्यस्त्रीत्वेन वृत्तावपि विशेषणतया नित्यस्त्रीलिङ्गरूपार्थबोधकत्वेन नदीसञ्ज्ञा । समासे तु स्पष्टैव तदवयवस्य तत्प्राप्तिः । तन्मात्रबोधकत्वनिवेशे प्राधान्येन तद्बोधकत्वनिवेशे वा न मानम् । तदुक्तं भाष्ये "अवयवस्त्रीविषयत्वात्सिद्धम्, अवयवोऽत्र *स्त्रीविषयस्तदाश्रया नदीसञ्ज्ञा भविष्यति" इति । *आकडारस्थसञ्ज्ञानां कार्यकालत्वाभावात्* । अन्यथा तत्तद्विध्येकवाक्यत्वापन्नयोः कथं बाध्यबाधकभावः स्यादिति बोध्यमित्यपि केचित् ।

हे बहुश्रेयसीति । ह्रस्वे कृते गुणस्तु न । प्रक्रियालाघवाय 'अम्बार्थानां ह्रस्वः' "ह्रस्वनद्योर्गुणः" इत्येव वाच्ये ह्रस्वविधानसामर्थ्यात् । "जसि च" इत्यत्रैकदेशे स्वरितत्वप्रतिज्ञया ह्रस्वपदस्यैवानुवृत्तिरिति भाष्ये स्पष्टम् । अम्बार्थानामपि गुणस्तु वक्तुमशक्यः । "अनः क्लीबं जले शोके मातृस्यन्दनयोरपि" इतिरभसाद्युक्तानःशब्दस्याम्बार्थत्वेन गुणापत्तेः । ह्रस्वग्रहणे तु 'अच' इत्युपस्थित्याऽजन्ताम्बार्थग्रहणान्न दोषः । तस्य नपुंसकत्वेऽपि हेवारे इतिवत् पक्षे गुणः स्यादेव । गुणश्रुत्येकूपरिभाषोपस्थितौ त्वम्बेत्यादावप्यनापत्तिः । अयं ह्रस्वः–'अनन्तरस्य'-इतिन्यायाद् "ह्रस्वस्य गुणः" इत्यस्यैव बाधकः । तेन मातरित्यत्र "ऋतो

---

*लिङ्गान्तरविशिष्टार्थानभिधायकत्वामिति* । यत्प्रवृत्तिनिमित्तं स्त्रीत्वस्यान्वयितावच्छेदकं स्त्रीत्वेतरलिङ्गस्यान्वयितावच्छेदकं च भवति तद्रूपविशिष्टार्थानभिधायकत्वमित्यर्थः । अर्थात् स्त्रीत्वान्वयितावच्छेदकं स्त्रीत्वेतरलिङ्गान्वयितानवच्छेदकं च यत्प्रवृत्तिनिमित्तं तादृशप्रवृत्तिनिमित्तविशिष्टार्थाभिधायकत्वमिति फलति । *स्त्रीविषय इति* । स्त्रीविषयत्वं च पूर्वोक्तमेव बोध्यम् । यदुक्तं 'कार्यकालपक्षेऽपि' इत्यादि तद् दूषयति *आकडारस्थसंज्ञानामिति* । *कार्यकालत्वाभावादिति* । अयं हेतुः 'यथोद्देशे पूर्वप्रवृत्तसंज्ञामादायैव कार्यम्' इत्युत्तरं योज्यः ।

ङि"इति गुणो भवत्येवेति दिक् ।

आटश्च ॥ "न माङ्योगे"इतिसूत्रस्थभाष्योक्ते"अटश्च"इति न्यासे तु "वृद्धिरेचि"इति बोद्ध्यम् । अत्र अट् तु वक्तुमशक्यः । अस्वपोऽहसन्नित्यत्र वृद्धिवारणाय"आटश्च"इत्यत्र धातावित्यपकर्षेण वृद्ध्यनापत्तेः । "वृद्धिरेचि" इत्यस्य तु पररूपं बाधकमिति बोद्ध्यम्* । ङेरिति सप्तम्येकवचनं व्याख्यानात । इह परत्वादिति । *सकृद्गतिन्यायाश्रयणादिति भावः । स्पष्टश्चेदं "ह्रस्वनद्यापः"इत्यत्र भाष्ये । यद्यपीह आम् अपवादो नद्यां सर्वथाऽनवकाशत्वात् । 'अपवादो नुग्दीर्घत्वस्य'इति "दीर्घोऽकितः"इतिसूत्रभाष्ये उक्तत्वेनाऽऽगमादेशयोरपि तत्त्वसत्त्वात्, तथापि अनवकाशत्वेन बाधेऽपवादप्रवृत्त्यनन्तरमुत्सर्गप्रवृत्ते*र्न दोषः । अत एव "न गणेरीत्वमपवादत्वाद्धलादिःशेषं बाधते किं तर्ह्यनवकाशत्वात्" इति "गुणो यङ्लुकोः"इतिसूत्रभाष्ये उक्तम्* । "पादः पत्"इतिसूत्रस्थं "शब्दान्तरप्राप्त्या ऽनित्ययोराडामोः परत्वादाम्"इति भाष्यं त्वेकदेशयुक्तिरिति बोद्ध्यम् ।

अङ्यन्तत्वादिति । "लक्षेर्मुट् च"इत्यौणादिक'ई'प्रत्ययान्तत्वादिति भावः । कुमारीति । ह्रस्वविधायके शास्त्रीयोपसर्जनग्रहणाद् "गोस्त्रियोः"इति ह्रस्वो न ।

अचि श्नु । भ्रूशब्दो ऽव्युत्पन्नं प्रातिपदिकं, भ्रमेर्डूप्रत्यया-

---

*बोध्यमिति*।न चाड्विधानसामर्थ्यादेव पररूपं न भवतीति आड्विधानं व्यर्थमिति वाच्यम्। बहुश्रेयस्यामित्यादौ नुड्बाधेनाऽड्विधानस्य चारितार्थ्यात् । न चैवमप्यस्वपोऽहसन्नित्यादौ बहिरङ्गत्वेनासिद्धत्वाद्'अटश्च'इति न्यासेऽपि वृद्धिर्न प्राप्नोतीति तत्र धातावित्यस्यापकर्षो व्यर्थ इति वाच्यम् । "नाजानन्तर्ये"इति निषेधादन्तरङ्गपरिभाषाया अप्रवृत्तेरिति दिक् ।

*सकृद्गतिन्यायाश्रयणादिति* । एतेन यत्र परशास्त्रप्रवृत्तौ पूर्वशास्त्रप्रवृत्तिप्रयोज्यं परशास्त्रप्रवृत्तिवैयर्थ्यं तत्र सकृद्गतिन्यायो ऽन्यत्र पुनःप्रसङ्गन्याय इत्यपास्तम् । बहुश्रेयस्यामित्यादौ परशास्त्राण्नद्याइतिप्रवृत्त्यनन्तरं नुट्प्रवृत्तावपि परशास्त्रप्रवृत्तिवैयर्थ्याभावेन सकृद्गतिन्यायाप्रवृत्तिप्रसङ्गात् । *उत्सर्गप्रवृत्तेरिति* । तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टं कृतेचारितार्थ्याभावरूपं बाधबीजं यत्र तत्र स्वप्रवृत्तियोग्यो यः स्वीयोद्देश्यतावच्छेदकावच्छिन्नस्तदतिरिक्तत्वेनोत्सर्गशास्त्रे संकोच इति नियमात् प्रकृते आम्प्रवृत्त्युत्तरं तत्प्रवृत्तियोग्यताया अभावेन उत्सर्गप्रवृत्तौ बाधकाभाव इति भावः । *भाष्ये उक्तमिति* । तथा चापवादशब्दस्य कृतेचारितार्थ्यप्रयुक्तो बाधो यत्र तत्र रूढिरन्यत्र गौणत्वमिति भावः ।

न्तो वा । इह 'य्वोः'इति धातोः समानाधिकरणं विशेषणं, तदाह–इवर्णोवर्णान्तधातोरिति । इत्यस्येति । इत्यन्तस्येत्यर्थः । तेन सुभ्रुवाविति सिद्धम् । आन्तरेति । स्थानत इति भावः । य्वोरिति किम् । वव्रे । अचि किम् । युयात् । इतीयङिति । सुश्रीशब्दे यण्निषेधारम्भादत्र प्रकरणे "धातोः स्वरूपग्रहणे" इति परिभाषाया *अप्रवृत्तिरिति भावः ।

एरनेकाचो । धात्ववयवसंयोगपूर्वो न भवतीति । धात्ववयवसंयोगपूर्वभिन्न इत्यर्थः । तद्भिन्नश्च धात्ववयवपूर्व एवेति उदियावित्यादौ न दोषः । असंयोगादित्येव धात्ववयवसंयोगभिन्नातपरस्येत्यर्थेन सिद्धे पूर्वग्रहणं स्पष्टार्थम्* । एः किम् । असंयोगपूर्वग्रहणमित्रर्णविशेषणं यथा स्यात्, अङ्गविशेषणं मा भूदिति । तेन यवक्रियावित्यादौ नातिप्रसङ्गः । लुलुवतुरित्यादौ तु नातिप्रसङ्गः । "ओः सुपि"इति नियमात् । विपरीतनियमस्तु न । सुधीशब्दे 'अचि सुपि' यण्निषेधारम्भात् ।

कुमार्याविति । अन्तर्वर्तिविभक्त्या पदत्वाच्छाकलं त्वत्र न । "नः क्ये"इति निषेधात्* । प्रधीरिति । 'प्रकृष्टं ध्यायति' इति विग्रहे नित्यस्त्री-

---

*अप्रवृत्तिरिति* । "न भूसुधियोः"इतिज्ञापकेन धातुत्वेतरधातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकं कार्यं धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रये प्रत्यये भवतीति धातोः कार्यमुच्यमानमिति परिभाषार्थकरणादिति भावः । नच 'इको यणचि'इतियण्निषेधेन "न भूसुधियोः"इति चरितार्थमिति कथमत्र ज्ञापकमिति वाच्यम् । इको यणचीत्यनन्तरमेव निषेधे कर्तव्ये एतत्प्रकरणे निषेधकरणान्निरुक्तार्थज्ञापनसम्भवात् । न भूसुधियोरिति इयङ्घटितनिर्देशेन निरुक्तार्थज्ञापनसंभवाच्च । अन्यथा "धातोः कार्यमुच्यमानम्"इति परिभाषया इयङोऽप्राप्त्या तन्निर्देशासङ्गतिः स्पष्टैवेति दिक् ।

*स्पष्टार्थमिति* । चिन्त्यमिदम् । धात्ववयवसंयोगभिन्नातपरस्येत्यर्थे यवक्रियौ कटप्रुवावित्यादौ धात्ववयवसंयोगभिन्नं यवक् कटप्र् इति ततः परत्वस्यैकारे सत्त्वेन यणापत्तेः । न च धात्ववयवसंयोगभिन्नोऽपि पर्युदासन्यायेन धात्ववयवो गृह्यत इति नोक्तदोष इति वाच्यम् । एवं तर्हि धात्ववयवसंयोगभिन्नधात्ववयवरेफमादायोक्तदोषस्य दुर्वारत्वादिति दिक् । *नः क्ये इति निषेधादिति* । न चैवमपि राजीयतेः क्विपि राज्यावित्यादौ "इकोऽसवर्णे" इति शाकलं स्यादिति वाच्यम् । अत्र इत्यादाविव यद्वृत्तिनिमित्तसुब्निमित्तिका पदसंज्ञा चिकीर्षिता तद्घटकार्थवदव्यवहितपूर्वत्वाभाववत्व–स्वघटकत्वैतदुभयसम्बन्धेन वृत्तिवि-

त्वाभावान्न नदीत्वम्। "प्रकृष्टा धीर्यस्य" इति विग्रहे तु नदीत्वम्।ग्रामणी-रिति। अग्रग्रामाभ्यां नयतेरिति णत्वम्। 'गतिकारकपूर्वस्यैव' इति भाष्ये पठ्यते। स च नियमः। तेन गतिकारकपूर्वभिन्नस्य नेति फलति। तद्भिन्नश्च तत्सदृशं सपूर्वपदमेव। तेन निन्यतुरित्यादौ यण्। तदाह—गतिकारकेतरेति। यत्त्वत्र गतिसमासो नित्याधिकारस्थ एव प्रतिपदोक्तत्वाद् गृह्यत इति। तन्न। भाष्ये पूर्वपदग्रहणाभावेन समासोपस्थितेरभावेन विशिष्टरूपोपादानविषयप्रतिपदोक्तपरिभाषाया अप्रवृत्तेः*। अत एव नदीसञ्ज्ञासूत्रस्थः 'प्रकृष्टा धीर्यस्या' इतिविग्रहाभिप्रायेण प्रवृत्तः 'प्रध्यै ब्राह्मण्यै' इति भाष्यप्रयोगः सङ्गच्छते। शुद्धधियाविति। 'शुद्धा धीर्यस्य' इति विग्रहः। 'शुद्धं, ध्यायति' इति विग्रहे यणेव। आद्ये सत्त्वभूतार्थकधीशब्दार्थविशेषणत्वात् शुद्धत्वस्य कथमपि न कारकत्वमिति भावः।कथन्तर्हीति। 'दुर्ध्यायन्ति' इति 'दुष्टा धीर्ध्यानं येषाम्' इति, 'दुश्चिकाद् भीः' इतिविग्रहाभिप्रायेण प्रश्नः। दुःस्थितेति। दुःशब्दोपात्तदुष्टत्वस्य स्थितिक्रियाविशेषणत्वमिति भावः। प्रकृष्टा धीरित्यादौ प्रकर्षः प्रशब्दार्थो धीशब्दोपात्तधात्वर्थे विशेषणमिति यण् भवत्येव। यत्क्रियेति। या चासौ क्रियेत्यर्थः*। तं प्रति—तद्वाचकं प्रति। यद्वा यस्य धातोर्वाच्यया क्रियया युक्ता इत्यर्थः। नेहेति। ततश्च सम्बन्धसामान्यषष्ठ्यैव समासः। भीत्रार्था-

---

शिष्टत्वरूपोत्तरपदत्वस्य सत्त्वेन "उत्तरपदत्वे चापदादिविधौ" इति निषेधेनादोषात्।

*अप्रवृत्तेरिति*। प्रतिपदोक्तत्वेनाभिमतशास्त्रीयविधेयतावच्छेदकं लाक्षणिकत्वेनाभिमतशास्त्रीयविधेयतावच्छेदकं च यद्रूपं तद्रूपावच्छिन्नोद्देश्यताकत्वरूपलक्षणप्रतिपदोक्तपरिभाषालिङ्गस्याभावात्। यत्किञ्चिच्छास्त्रविशिष्टत्वरूपप्रतिपदोक्तत्वस्याभावाच्च। वैशिष्ट्यं च स्वीयोद्देश्यतावच्छेदकरूपावच्छिन्नविधेयताकत्व—स्वीयोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूतानुपूर्वीविशिष्टविधेयताकत्वैतदुभयसम्बन्धेन। आनुपूर्वीवैशिष्ट्यं च स्वावच्छिन्नत्वं-स्वावच्छिन्नप्रयोज्योद्देश्यतानिरूपितत्वमेतदन्यतरसम्बन्धेन। प्रकृते च गतिकारकेतरेतिशास्त्रीयोद्देश्यतावच्छेदकं समासत्वं नास्तीति यत्किञ्चिच्छास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नविधेयताकत्वं "कुगति" इत्यस्य नास्तीति भावः। द्वितीयसम्बन्धदानेन "विशेषणं विशेष्येण" इत्यादिलाक्षणिकेषु न तत्त्वम्। आनुपूर्वीवैशिष्ट्ये प्रथमसम्बन्धोपादानेन 'पा पाने' इत्यादौ नाव्याप्तिः। द्वितीयसम्बन्धोपादानेन 'तृतीया तत्कृतार्थेन' इत्यादौ न दोष इति परिभाषेन्दुटिप्पणे विस्तरेण निरूपितम्। *इत्यर्थ इति*। जन्यबोधविषयी-

नामिति तु हेतुत्वप्रकारकबोधे तृतीयाबाधनार्थम् । विभक्तिप्रकरणे तु न कृतं, कारकत्वप्रयुक्तकार्यानापत्तेरिति भावः । किं च हेतुत्वाविवक्षायां सम्बन्धत्वेन विवक्षया षष्ठी सूत्रारम्भेऽपीसपि बोद्धव्यम् । अभ्युच्चयेनाह—वृश्चिकसम्बन्धिनीति । अत्र पूर्वपदान्तर्गतोत्तरपदलोपः शाकपार्थिवादित्वात् ।

न भू* ॥ अनन्तरस्येति न्यायेन "एरनेकाचः" "ओः सुपि" इत्यनयोरेव निषेधः । सुपीति चानुवर्तते तदाह—सुपीति । लोपाविति । "अतो लोपः" "लोपो व्योर्वलि" इत्याभ्यामिति भावः । यलोपे निषेधादल्लोपो न स्थानिवत् । वेरपृक्तलोपात्पूर्वं वलि लोप इष्यते* । स्थानिवत्त्वादिति । एवञ्च यणादेशे यलोपे सख् इति स्यादिति भावः । अन्तर्वर्त्तिविभक्त्या पदत्वात् "न पदान्त" इति निषेधस्तु न स्थानिवत्त्वस्य । "नः क्ये" इतिसामान्यापेक्षनियमेनास्यापदत्वात् । परपदस्थाजादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्च । क्विपेक्षवयच्सम्बन्धियलोपस्य यणि बहिरङ्गासिद्धत्वन्तु न। अनित्यत्वात् ।क्वौ लुप्तमिति । भावे क्तः । लोप इत्यर्थः ।

---

भूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्राधान्यतमत्वमुपसर्गत्वमितिपरिष्कारेण यज्जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वं यस्य पदस्य तन्निरूपितोपसर्गत्वं तस्येति स्वीकारादिति भावः ।

*न भूसुधियोः* । ननु भूग्रहणमत्र व्यर्थम् । "सपूर्वस्य भूशब्दान्तस्य यण् भवति चेत् तर्हि वर्षापूर्वकस्यैव" इति "वर्षाभ्वश्च" इति नियमेन परमभुवावित्यादौ दोषवारणात् । वर्षापूर्वकस्य चेत् भूशब्दान्तस्यैवेति विपरीतनियमस्तु न । "दृन्कर" इतिवार्तिकारम्भसामर्थ्यात्; इति चेन्न । वर्षाभूशब्दाद् गौरादित्वाद् ङीषि निष्पन्ने वर्षाभ्वीशब्दे कमठीपर्यायेषु ( वर्षाभ्वी कमठी डुलिः ) इति कोशनिर्दिष्टे सुप्परकत्वाभावेन "ओः सुपि" इत्यस्याप्राप्त्या यण्प्रवृत्त्यर्थं 'वर्षाभ्वश्च' इत्यस्यावश्यकतया नियामकत्वानुपपत्तेः । मूले 'न भूसुधियोः' इत्येतद्वृत्तौ 'वर्षाभ्वश्च' इत्येतद्वृत्तौ च सुपीत्यस्योल्लेखस्तु लेखकप्रमादात् । अतएव मनोरमायां सुद्ध्युपास्य इत्यत्र 'न भूसुधियोः' इतिनिषेधाशङ्का तत्समाधानान्तरं च सङ्गच्छते। सुपीत्येतत्सम्बन्धे तु तदसङ्गतिः स्पष्टैवेति दिक् ।

*वेरपृक्तलोपात्पूर्वं वलि लोप इष्यते इति* । वेरपृक्तलोपात् पूर्वं वलि लोपो यथा स्यात्, तथा कर्तव्यमित्यर्थः । एतेन वेरपृक्तलोपात्प्राग् वलि लोपेऽपि अतो लोपात्प्राक् "वेरपृक्तस्य" इतिलोपाप्रवृत्तौ मानाभावादन्तरङ्गत्वात्प्राक् वेरपृक्तलोपे ततो ऽल्लोपेऽपि "लोपो व्योर्वलि" इत्यस्य प्राप्त्यभावाल्लोपो न स्यादित्यपास्तम् । निरुक्तार्थकरणेनातोलोपस्य वलिलोपस्य च वेर-

गोमत्यतेरप्रत्यये गोमानिति भाष्योक्तेरस्याप्यर्थस्य क्वचिदङ्गीकारः* । क्वौ विधिं प्रति नेत्येव तु सार्वत्रिकमित्यन्यत्र विस्तरः ।

अनङिति । "अभिव्यक्तपदार्था ये" इति न्यायस्तु गौणमुख्यन्यायवत् *पदकार्यविषय एवेति भावः । दीर्घस्यापीति । प्रयोगस्थयकारान्तानुकरणं, सूत्रे ऽकारश्चोच्चारणार्थ इति भावः । लूनीरित्यादि । "रदाभ्यां" "श्यो मः" "प्रस्त्योऽन्यतरस्याम्" इति नत्वमत्वे । "शुषः कः" "पचो वः" इति कत्ववत्वे ।

व्याख्यानात् प्राधान्याच्च रूपातिदेशोऽयमित्याह—क्रोष्टुशब्द इति । तच्चोदात्तऋकारविशिष्टमतिदिश्यते तृज्वदिति चकारोच्चारणात् । तेन क्रोष्ट्रादौ "उदात्तयणः" इति स्वरसिद्धिर्बोध्या । पक्त्रादेस्तु नातिदेशः । अर्थत आन्तर्याभावात् । इदं सूत्रं "स्त्रियाञ्च" इति च प्रयोगनियमफलकमिति बोध्यम् ।

---

पृक्तलोपात्पूर्वमेव प्रवृत्तेः ।

*क्वचिदङ्गीकार इति* । ननु "क्वौ लुप्तं न स्थानिवत्" इत्यस्य—

"सख्युर्गोमान् पदस्त्वं च क्वौ लुप्तस्य निदर्शनम्"

इति फलचतुष्टयमुक्तमभियुक्तैः । तत्रैकमपि फलं न सम्भवति । तथा हि—सखीयतेः क्विपि सखीरित्यादौ यलोपस्य बहिरङ्गासिद्धत्वादेव न यणः प्राप्तिः । "नाजानन्तर्ये" इति निषेधस्तु न प्रवर्तते तस्यासत्त्वात्, सत्त्वे ऽनित्यत्वाद्वा । एवं गोमानित्यपि फलं न सम्भवति । गोमत्यतेः क्विपि अतोलोपयलोपयोः कृतयोरतो लोपस्य स्थानिवद्भावान्नुमोऽप्राप्तावपि दीर्घे स्थानिवत्त्वनिषेधात्पूर्वम् 'अत्वसन्तस्य' इति दीर्घे तद्विशिष्टे स्थानिभूतादचः पूर्वत्वेन दृष्टत्वस्याभावात्स्थानिवत्त्वाप्राप्त्या ततो नुमि रूपसिद्धेः । एवं पद इत्यपि न फलम् । पादयतेः क्विपि शसि पद इत्यादौ यद्यतो लोपस्य स्थानिवद्भावात्पदादेशो न स्यात्तर्हि पादस्य पादित्येव सिद्धे सामान्यग्रहणार्थेन पादस्य लोपकरणेन प्रकृते स्थानिवद्भावो न भवतीति वक्तुं शक्यत्वात् । एवं त्वमित्यपि न फलम् । युष्मयतेः क्विपि त्वमित्यादिरूपाणामनभिधानस्य "मपर्यन्तस्य" इतिसूत्रशेखरे वक्ष्यमाणत्वात्; इति चेन्न । अक्यजन्तानां गोमानित्यादिरूपाणामसिद्ध्यापत्तेः । तथा हि—सिद्धान्ते परं नित्यं च नुमं बाधित्वा आदौ दीर्घो भवति । त्वद्रीत्या तु क्यजन्तगोमानित्यादौ दीर्घस्य चारितार्थ्येन पूर्वोक्तवचनसामर्थ्यरूपबाधनिमित्ताभावात्पूर्वं नित्यत्वान्नुमि तद्विशिष्टे निर्दिश्यमानत्वाभावाद्दीर्घानापत्तिः । एवं त्वमित्याद्यपि फलं भवितुमर्हति । एतेषामनभिधानं यथा न, तथा 'मपर्यन्तस्य' इत्यत्रैव वक्ष्यत इति दिक् ।

*पदकार्यविषय एवेति* । पदकार्यत्वं च स्त्रीत्वानिमित्तकत्वे सति विभक्त्यनिमित्तकत्वमित्यादि पूर्वोक्तं न विस्मर्तव्यम् ।

अप्तृन् ॥ ननु व्युत्पत्तिपक्षे तृन्नन्तत्वात्तृजन्तत्वाद्वा दीर्घे सिद्धे नप्त्रादिग्रहणं व्यर्थम्, अत आह—नियमार्थमिति । *अन्येषामुणादिव्युत्पन्नानां सञ्ज्ञाशब्दानां नेति । नेष्ट्रादयोऽप्युणादय एवेति भावः । तेषां "तृन्"इतिसूत्रस्थवार्तिकेन व्युत्पादनात् नप्त्रादीत्यादिग्रहणेन प्रशास्तृशब्दस्यैव ग्रहणमित्यन्ये । अव्युत्पत्तिपक्षे तु विध्यर्थमेवेति बोध्यम् । भाष्यप्रयोगादिति । एवञ्चौणादिकत्वस्य व्युत्पादनमप्रामाणिकमिति भावः । पङ्कजादिपदवद्योगरूढोऽयम् । ये त्वौणादिकत्वमेवास्य स्वीकृत्य भाष्यप्रयोगादेव दीर्घत्वमिच्छन्ति, ते मान्याः । भाष्यकृताऽन्यप्रयोगस्योदाहरणत्वेन दानेऽप्यस्य भाष्यप्रयोगत्वाभावात् । "ण्वुल्तृचौ"इति भाष्ये तु "तृचश्चकारो व्यर्थः । न च "अप्तृन्तृच्"इत्यादौ विशेषणार्थः । तृ इत्येव सिद्धेः । न च तृ इत्युच्यमाने मातरौ पितरावित्यादौ प्राप्नोति । तत्र हि तृप्रत्ययो निरनुबन्धक इति वाच्यम् । नप्तृग्रहणस्य योनिसंम्बन्धवाचिनाञ्चेदस्यैव नान्येषां योनिसम्बन्धवाचिनामिति नियमात्"इत्युक्तम् । नेष्टृत्वष्टृहोतृपोतृणान्तृन्नन्तत्वस्य प्रशास्तुस्तृजन्तत्वस्य "तृन्"इतिसूत्रे भाष्यवार्त्तिकयोरुक्तत्वेन तेषाङ्ग्रहणं प्रपञ्चार्थमेव । एवञ्च यथान्यासे नियमफलं चिन्त्यम् ।

क्रोष्टेति । अनङि "सर्वनामस्थाने च"इति दीर्घः । प्रथमोपस्थितत्वात् । क्रोष्टारावित्याद्यर्थन्तु तल्लेखः । यद्वा विशेषविहितत्वाच्छीघ्रोपस्थितिकत्वेन स एव न्याय्यः ।

विभाषा तृ । अयमपि नियम एव* । "तृतीयादावच्येवोभयम्"इति । तेन भ्यामादौ, शसि, क्रोष्टुपुत्र इत्यादौ च न दोषः । सर्वत्र विशिष्टाभावस्य सुलभत्वात्* । "तृज्वत्क्रोष्टुः" "स्त्रियाञ्च"इत्याभ्यां सर्वनामस्थाने

---

*अन्येषामिति* । इदं फलितार्थकथनम् । नियमशरीरं तु 'उणादिव्युत्पन्नानां तृन्तृजन्तानां दीर्घो भवति चेन्नप्त्रादीनामेव'इत्येव ।

*अयमपि नियम एवेति* । अपिरेवार्थे । लाघवादेकस्यैव सूत्रस्य नियामकत्वेन सिद्धे सूत्रत्रयस्य नियामकत्वेन गौरवात् । *विशिष्टाभावस्य सुलभत्वादिति* । न च क्रोष्टूनित्यादौ तुन्नन्ताभावप्रयुक्त एव विशिष्टाभावः कस्मान्न स्वीक्रियते । तथा च तुन्नन्तस्य प्रयोगो न स्यादिति वाच्यम् । "विभाषा तृतीयादिष्वचि"इति नियमेन तुन्नन्तविशिष्टतृजन्ताभा-

स्त्रियाञ्च तृजन्तरूपविधानेन तयोः प्रयोगनियमार्थत्वं फलति । एतेन तृज्वत्सर्वनामस्थान एवेति नियमादिदं त्रिद्ध्यर्थमिति परास्तम् । न चैव-मपि क्रोष्टूनित्याद्यसङ्गतम् । अन्यत्र तृजन्तस्यैव प्रयोगेणाप्युक्तनियमस्य चारितार्थ्यादिति वाच्यम् । तृज्वत्क्रोष्टुरिति योगविभागस्यैवं सति वैयर्थ्यापत्तेः । न च "तद्धितेष्वचामादेः" "इको गुणवृद्धी" इति सूत्रयोः क्रौष्ट्रः, क्रोष्ट्रीया इतिभाष्यप्रयोगासङ्गतिरिति वाच्यम् । ऋकारा-न्तस्यैव ऋषिवाचकत्वेनादोषात् । इदं सूत्रत्रयन्तु शृगालवाचिक्रो-ष्टुक्रोष्टृशब्दयोर्व्यवस्थार्थमित्यवधेयम् । तदुक्तं भाष्ये—"तृज्वद्भा-वविषये 'एतत् तृजन्तं मृगवाचि'इति । तृतीयाद्यजादिविभक्तिषु तृजन्तं तुन्नन्तञ्च मृगवाचि"इति च । अनेन हि अन्यत्र तुन्नन्तमेवेत्यपि सूचितमिति दिक् ।

ऋत उत् ॥ तपरत्वं भाव्यमानस्यापि क्वचित्सवर्णग्राहकता-ज्ञापनद्वाराऽऽन्तर्यतो द्विमात्रनिवृत्त्यर्थम् । तेनामू *इत्यादिसिद्धिरिति छ्वो-रिति सूत्रे कैयटः । यत्तु तपरत्वं "ढ्रलोप"इतिदीर्घबाधनार्थमिति; तन्न ।

---

वस्यान्यत्र बोधने प्राधान्यादन्यत्र विशेष्याभावप्रयुक्तविशिष्टाभावकल्पनेनैवोप-पत्तौ गौरवादुभयाभावप्रयुक्तविशिष्टाभावकल्पनस्य, अप्राधान्याद्विशेषणाभावप्र-युक्तविशिष्टाभावकल्पनस्य चान्याय्यत्वात् सर्वनामस्थानं स्त्रीलिङ्गं तृतीयादि-विभक्तिश्च विहायान्यत्र सर्वत्र विशेष्यतृजन्ताभावप्रयुक्तस्यैव तुन्नन्त-विशिष्टतृजन्ताभावस्य कल्पनेनादोषात् । 'स्त्रियां च" "तृज्वत् क्रो-ष्टुः"इतिशास्त्रद्वयप्रामाण्यात्तद्विषये विशेषणतुन्नन्ताभावप्रयुक्त एव विशि-ष्टाभाव इति सर्वनामस्थाने स्त्रियां च तृजन्तमेव साधु, अन्यत्र तुन्नन्तमेव सा-ध्विति विवेकः । एवं "पद्दन्"इति सूत्रेऽपि बोध्यम् । तेनापि सूत्रेण पाद-शब्दादिसमानाधिकरणपच्छब्दाद्यभावस्य शसादिव्यतिरिक्ते बोधने प्राधान्या-त् पच्छब्दाद्यभावप्रयुक्त एव विशिष्टाभावो बोध्यते । तेन स्वादौ न पदा-दयः प्रयुज्यन्ते किन्तु पादादय एवेति । एवं "विप्रतिषिद्धं चानाधिकरण-वाचि"इति सूत्रेणापि इतरेतरयोगद्वन्द्वविशिष्टः समाहारद्वन्द्वः विरुद्धार्थवाचि-नां चेद् अद्रव्यवाचिनामेवेति नियमेन विरुद्धार्थवाचिनां द्रव्यवाचिनां विशे-ष्यभूतसमाहारद्वन्द्वाभावप्रयुक्त एव विशिष्टाभाव इति शीतोष्णे उदके स्त इत्यादौ इतरेतरयोगद्वन्द्वो भवत्येवेति दिक् ।

*इत्यादिसिद्धिरिति* । वस्तुतस्तु अन्तरङ्गपरिभाषाया अनित्यत्वं स्वीकृत्य "अदसोऽसेः"इत्यत्र समाहारद्वन्द्वनिर्देशेनैवोपपत्तौ इयं परिभाषा विफलेति

"सुपत्रपातिता बाणा ज्वलिता इव पन्नगाः ।
नैर्ऋतोरस्यभासन्त सवितू रश्मयो यथा" ॥

इतिरामायणप्रयोगविरोधात् । "उरण् रपरः" इति सूत्रे ऽण्ग्रहणाभावे 'ऊ रपर' इति भाष्यप्रयोगविरोधाच्च ।

सस्यैवेति । संयोगान्तलोपेन सिद्धे नियमार्थम् । तेनोर्गित्यादौ नेति भावः । *विपरीतनियमस्तु न, "पुमान् स्त्रिया" इति निर्देशात्* ।

"एरनेकाचः"इति सूत्रमेरितिपदरहितं सानुवृत्ताद्वृत्तविशेषणं सवार्तिकश्चानुवर्त्तत इत्याह-धात्ववयवेत्यादि । गतीत्यादि च । सकृल्ल्वावित्यत्र क्रियाविशेषणत्वेन कर्मत्वाद्यण् ।

"न भूसुधियोः"इति निषेधे प्राप्ते आह-वर्षाभ्वश्चेति । "वर्षाभूर्दर्दुरे पुमान्" । स्वार्थिक इति । स्वस्याः प्रकृतेरर्थः स्वार्थस्तत्र भव इत्यर्थे ऽध्यात्मादित्वाट्ठञ् । द्वारादिषु स्वग्रामस्वाध्याययोः पाठेन स्वशब्दादेश्चेदेतयोरेवेति नियमार्थकनैजागमो न* । पुनर्भूशब्दस्य रूढस्य नित्यस्त्रीत्वादाह-यौगिक इति ।

इत्यूदन्ताः ।

वर्णैकदेशानां वर्णग्रहणेनाग्रहणे रेफाभावादाह-ऋवर्णादिति । व्युत्पत्तिपक्षे इति । अव्युत्पत्तिपक्षे ऽवादिष्वपाठादीर्घशङ्कैव नेति भावः । व्युत्पत्तिपक्षे निरनुबन्धकतृप्रत्ययान्ता एवेति "ण्वुल्तृचौ"इतिभाष्यस्वरसः ।

इत्यृदन्ताः ।

वैकल्पिकेति । "यत्तदेतेभ्यः" इत्यत्र त्यदाद्यत्वकरणादतिदेशस्य, "क्षियः" इत्यादौ धात्वनुकरणे विभक्तिकरणेन वैकल्पिकत्वस्य च ज्ञापनादिति भावः । अनुकरणस्यानुकार्यशब्दस्वरूपमात्रमर्थ इति प्रातिपदिकत्वम् । अनुकार्य्यश्चानुकरणाद्भिन्नमेवेति "मतौ छः" इति सूत्रे भा-

---

परिभाषेन्दुशेखरे विस्तरः । *विपरीतनियम इति* । सस्य संयोगान्तलोपश्चेद्रेफात्परस्यैवेति विपरीतनियम इत्यर्थः । *निर्देशादिति* । न च "झरो झरि सवर्णे" इति लोपेनेदं रूपं सिध्यतीति न निर्देशासङ्गतिरिति वाच्यम् । अस्यासिद्धत्वेन "नश्चापदान्तस्य"इत्यनुस्वारापत्त्या निर्देशासिद्धेः । एतेन व्यञ्जनात्परस्यैकस्यानेकस्य वोच्चारणे वैलक्षण्याभावादिदमसङ्गतमित्यपास्तम् ।

*ऐजागमो नेति* । न च—"सौवर्यः ससम्य"इतिनिर्देशासङ्गतिः,

ष्ये स्पष्टम् । ईषदानुपूर्वीव्यत्ययेऽपि वाचकसादृश्यादर्थोपस्थापकत्वमिति अत्र कैयटे, "प्राग्दीव्यतोऽण्"इत्यत्र भाष्ये च स्पष्टम् । अत एव 'किर' इत्यादितः कॄधातुरिति बोधः । "भू सत्तायाम्"इत्यादौ तिवत एव निर्देशात्कदाचिदनुकरणाद्विभक्त्यभावोऽपि । स च सूत्रेष्वेवेति प्रामाणिकाः । गविसयमाहेवि वान्तस्यैवानुकरणम् । अनुकार्यस्वरूपभङ्गभिया च न वलोपः* "झलां जश्"इत्यादौ जश्त्वाभाववदित्याहुः ।

इत्वे इति । "क्रिरश्च पञ्चभ्य"इति निर्देशादधातुप्रत्ययेऽपि तत्प्रवृत्तिरिति भावः । कीरिति । कॄधातुरित्यर्थः । गुणो नेति । "ऋत उत्"इत्युत्वमप्यत एव न । अत एव "ग्रो यङि"इति सूत्रनिर्देशः सङ्गच्छते ।

इत्यॄदन्ताः ।

अनङिति । ऋलृवर्णयोः सावर्ण्यादिति भावः । गम्लृनिति । लृवर्णस्य दीर्घाभावादृवर्ण एवेति भावः । ननु तुल्यास्यसूत्रे भाष्यकृता "ऋति ऋ वा"इत्यादिविधेययो रेफद्वयगर्भलद्वयगर्भयोरच्त्वदीर्घत्वाङ्गीकारेणात्र द्विलकार ईषत्स्पृष्टो दुर्वारः । आमि च तथा धातॄणामित्यत्र रेफद्वयगर्भोऽपीति चेन्न । "अकः सवर्णे"इति सूत्रे उक्तोचरत्वात्* । गम्लेति । यत्तु-लण्सूत्रे "उरण् रपरः" इत्यत्र "अजिति वक्तव्येऽणुग्रहणसामर्थ्येनाणपूर्वेणैव"इत्युक्तं भाष्ये, लृकारस्य यणि हि तत्र लपरत्वार्थं परेणाण्ग्रहणं स्यादिति सामर्थ्योक्तिरसङ्गता । ऋकारस्य यणि तु "रो रि" इति लोपेन न विशेष इति । तन्न, ऋकारांशे हल्रूपाऽणि रोरीति प्रवृत्त्या फलाभावेनाप्रवृत्त्या तत्साहचर्याद् लृकारांशेऽपि हल्रूपाऽण्यप्रवृत्तिरित्याशयात् । वस्तुत ईदृशानामभिधाने दृढं मानं चिन्त्यम् ।

---

स्वशब्दादेश्चेत्स्वाध्यायस्वग्रामशब्दयोरेवेति नियमेनैचोऽप्राप्तेः । अत एव 'अप्राकृतस्तु यः स्वारः' इत्यादिनिर्देशाः सङ्गच्छन्ते इति वाच्यम् । स्वरशब्दश्च सुपूर्वकऋधातोराचि एकः, स्वशब्दपूर्वकराधातोः के एक इति द्विविधस्वरशब्दस्वीकारेणादोषात् । अत्र च "सौवर्य्यः सप्तस्यः" "अप्राकृतस्तु यः स्वार" इत्यादिनिर्देशा एव प्रमाणमिति दिक् ।

*न वलोप इति* । गवित्यस्य सादृश्यज्ञानाधीनोपस्थित्या ऽर्थबोधकत्वेऽपि शक्तिलक्षणान्यतरज्ञानाधीनोपस्थितिप्रयोज्यार्थविषयकबोधजनकत्वरूपार्थवत्सूत्रोक्तार्थवत्त्वस्याभावेन प्रातिपदिकत्वाभावादिति भावः ।

*उक्तोचरत्वादिति* । ह्रस्वऋकारद्वयस्थानिकस्यैवेषत्स्पृष्टऋकारस्य ह्रस्वऋ-

सेरिति । इना सहेत्यर्थः । "वोपसर्जनस्य" इति सत्वम् । एकादेशस्य पूर्वान्तवत्त्वेऽपि लिङ्गाद्यन्वय्यर्थप्रतिपादकत्वात्* अव्ययमिति महासञ्ज्ञयाऽस्यानव्ययत्वान्न विभक्तिलुक् । सादेशात्पूर्वमाद्गुणस्तु न । "नेन्द्रस्य" इति ज्ञापकेन पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमेकादेशाप्रवृत्तेः । न च "नान्तः पादम्" इतिसूत्रस्थेन "न चैङः पदान्तात्परो रुरस्ति" इति भाष्येण विरोधात्सावीदृशानां प्रयोगो ऽनुचितः, सावपि पदत्वसत्त्वादिति वाच्यम् । योगविभागसिद्धस्य सौ पदत्वस्य क्वाचित्कत्वेनादोषात् । सात्रप्रयोग एवेत्यन्ये । सय इति । न चास्यान्तर्वर्त्तिविभक्त्या पदत्वाद् "एङः पदान्तात्" इत्यादि दुर्वारमिति वाच्यम् । भाष्ये "स्वादिषु" इति योगं विभज्य स्वादिषु पूर्वं पदमित्यर्थः । ततो "अ सर्वनामस्थाने यचि" । सुबन्तमिति अनुवर्त्तते । अ य-

---

कारह्रस्वलकारैतदुभयस्थानिकस्यैवेषत्स्पृष्टलकारस्य च साधुत्वस्योक्तत्वादिति भावः । *लिङ्गान्वय्यर्थप्रतिपादकत्वादिति । न चैवमव्ययीभावस्य "अव्ययीभावश्च" इत्यनेन नपुंसकत्वादव्ययीभावे तत्प्रयुक्तकार्यानुपपत्तिरिति वाच्यम् । विनापि वतिमब्रह्मदत्तं ब्रह्मदत्त इत्याहेत्यादौ साद्दश्यप्रतीतिदर्शनेनाव्ययीभावश्चेत्यनेनानपुंसकाव्ययीभावस्य नपुंसकत्वोक्त्या नपुंसकवदित्यतिदेशलाभेन तत्प्रयुक्तकार्यसिद्धेः ।

*यजादौ सर्वनामस्थान इति* । न च शम्भुरिवाऽऽचरति शम्भवति, परमकविरिवाचरति परमकवयति, लेढीति लिट् परमश्चासौ लिट् च परमलिट् तस्मादाचारक्विबन्ताद्वनिपि परमलिह्वा, द्रोग्धीति ध्रुक् परमश्चासौ ध्रुक् च परमध्रुक् तस्मादाचारक्विबन्ताद् वनिपि परमद्रुह्वेत्यादौ चारम्भपक्षे पूर्वरूपभत्वढत्वादिकं न भवति, प्रत्याख्यानपक्षे भवतीति फलभेद इति वाच्यम् । यजादौ सर्वनामस्थाने इत्यस्य सुभिन्नप्रत्ययमात्रस्योपलक्षणत्वात् । न चैवमपि परमवाग्भ्यामित्यादावपि पदसंज्ञानिषेधः स्यादिति वाच्यम । यजादौ सर्वनामस्थान इत्यस्य हलादिस्वाद्यतिरिक्तप्रत्ययमात्रस्योपलक्षणत्वेनादोषात् । परमवाचामित्यादौ तु "भम्" इति विभक्तसूत्रेण यजादौ सर्वनामस्थाने परे पूर्वं भसंज्ञं, मध्ये चेत्सुबन्तं तदपि भं भवतीति भसंज्ञया पदसंज्ञाया बाधाच्च न दोषः । न चारम्भपक्षे कार्यित्वनिवेशादुत्तरपदत्वे इति निषेधाप्रवृत्त्या अटतीत्यट् परमश्चासावट् च परमाट् तस्मादाचारक्विबन्तात् "क्विच्क्वौ च संज्ञायाम्" इति क्विचि प्रत्ययलक्षणेन पदत्वात् "न पदान्तात्" इति ष्टुत्वनिषेधेन परमाट्तिरिति रूपं भवति, प्रत्याख्यानपक्षे च पूर्वोक्तदिशा पदसंज्ञानिषेधात् ष्टुत्वेन परमाट्टिरिति रूपमिति फलभेद इति वाच्यम् । प्रत्याख्यानपरभाष्यप्रामाण्येन तस्यानभिधानात् ।

चीति प्रसज्यप्रतिषेधः । तेन *यजादौ सर्वनामस्थाने पूर्वं पदं न, मध्ये चेत्सुबन्तं तदपि पदं नेति व्याख्यानेनादोषात् । आतिदेशिकस्याप्ययं निषेध इति स्पष्टमेव। *"उत्तरपदत्वे चापदादिविधौ" इति प्रतिषेधाच्च। उत्तरपदस्य तद्घटितस्य वा पदत्वे कर्त्तव्ये ऽन्तर्वर्त्तिविभक्तेः प्रत्ययलक्षणं नेति तदर्थः। अतो न योगविभागमूलकप्रत्याख्यानेन फलभेद इति केचित् ।

इतोदित्यतो ऽनुवृत्तं सर्वनामस्थाने इति प्रथमया विपरिणस्यते* णिदित्यनेन सामानाधिकरण्यादित्याह—सर्वनामस्थानमिति । तत्र णितः कार्यस्यासंभवात् णिति यत्कार्यं तदातिदिश्यते । शसेति । अचीत्यधिकाराच्चद्धितशसो न ग्रहणमिति भावः। गामिति । परत्वादत्र वृद्धिस्तु न । अनवकाशत्वेन आत्वस्यापवादत्वात् । तदाह–ओतो णिदिति । सूत्रे तपरकरणेन गस्याविवक्षितत्वमिति भावः । तेन चित्रगुरित्यादौ न दोषः । अन्यथा ऽङ्गाधिकारे तदन्तविधेः सत्त्वेन स्थानिवत्त्वेन गोऽन्तत्वाद्दोषः स्यादेव । मम त्वोकारान्तत्वाभावादल्विधौ स्थानिवत्त्वाभावाच्च न दोषः । परे तु गोतो णिदिति सूत्रे भाष्ये

---

परे तु कार्यित्वनिवेशे न मानम् । आरम्भप्रत्याख्यानयोः फलभेदेन पूर्वोक्तानां सर्वेषामेवानभिधानम् । यजादौ सर्वनामस्थान इत्यस्योपलक्षणतया व्याख्यानं त्वयुक्तमेव । परमवाचावित्याद्यर्थं भमितियोगविभागेन मध्यस्य सुबन्तस्य च संज्ञाविधानस्यानर्थक्यापत्तेः । यजादौ सर्वनामस्थानइत्यस्य हलादिस्वाद्यतिरिक्तप्रत्ययमात्रस्य भवन्मते उपलक्षणत्वेन पदसंज्ञानिषेधेनैवोपपत्तेरित्याहुः।

*उत्तरपदत्वे इति* । उत्तरपदत्वं च यद्वृत्त्यारम्भकसुब्निमित्तिका पदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वम् । वैशिष्ट्यं च स्वघटकार्थवदव्यवहितपूर्वत्वाभाववत्त्व–स्वघटकत्वैतदुभयसम्बन्धेन । तेन अत्रयः भृगवः बहुपटवः परमवाचा परमलोम्निशयः पूर्वदण्डिप्रियः पञ्चगवधन इत्यादौ कुत्रापि न दोष इत्यन्यत्र विस्तरः।

*प्रथमया विपरिणस्यत इति* । वस्तुतस्तु–विभक्तेः विपरिणाममकृत्वा णिदित्यत्र कर्मधारयं स्वीकृत्य गोशब्दाङ्गाव्यवहितोत्तरत्वविशिष्टसर्वनामस्थाने इत्संज्ञकणकारो भवतीत्यर्थेन सामञ्जस्यात् न विभक्तिविपरिणामः।न च गोतो वृद्धिरित्येव सिद्धे णित्त्वकरणं व्यर्थमिति वाच्यम्। "णलुत्तमो वा" इत्यत्र "णल्युत्तमे"इति वक्तव्यतया तत्रेक्परिभाषेपस्थित्या चखादेत्यादौ वृद्ध्यतापत्तेः। एवं गाङ्कुटादिसूत्रेण उत्तमणलो ङित्वाप्राप्त्या चुकुट चुकोटेति रूपद्वयासिद्धेश्च ।

तपरत्वं प्रत्याख्यातम् । चित्रगुरित्यादौ तु न दोषः । गोः पूर्वत्वणित्त्वात्वस्वरेषु स्थानिवत्त्वप्रतिषेधात् । हे चित्रगो इत्यादौ तु लाक्षणिकत्वान्न दोष इति अत्रैव सूत्रे भाष्ये स्पष्टम् । "द्योः सर्वनामस्थाने णित्त्वं वक्तव्यम्"इति "औतो ऽम्"इत्यत्र भाष्ये उक्तमित्याहुः । सुद्यौरिति । केवलद्योशब्दस्य स्त्रीत्वाद् बहुव्रीहिरुदाहृतः ।

विहितमिति । यदि तु वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषा प्रवर्तते तदा व्यर्थोऽयं यत्नः* ।

स्मृतौरिति । स्मृत उर्येनेत्यर्थः । यत्तु एषामभिधाने "अयवायावादिष्वेकादेश उदात्तेनोदात्त इत्यस्य सिद्धत्वं वक्तव्यं तत्स्थानिकायादीनामस्वरितत्वाय"इतिवार्त्तिकव्याख्यावसरे "अवादेशे नास्त्युदाहरणम्"इति "स्वरितो वा"इतिसूत्रस्थभाष्यविरोधः । प्रकृते पूर्वपदप्रकृतिस्वरेण स्मृतस्यान्तोदात्तत्वे शेषनिघातेन उशब्दस्यानुदात्तत्वात्तदेकादेशस्य "एकादेश उदात्तेन"इत्युदात्तत्वे स्मृतवेत्यादौ तदुदाहरणसम्भवादिति । तन्न; तृतीयादिष्वनभिधानेऽपि अन्यत्र तत्सत्त्वे बाधकाभावात् । न च गोत इति सूत्रे "द्योश्च वृद्धिर्वक्तव्या"इति वार्त्तिके द्योशब्दस्यैवोपादानादन्यौकारान्ताभाव इति वाच्यम् । उपलक्षणतया व्याख्यानेनादोषात् । परे तु ईदृशानामनभिधानेऽपि न क्षतिरित्याहुः ।

रायो हलि ॥ अष्टन आ इत्यत आ विभक्तावित्यनुवर्त्तते ।

इत्यजन्ताः* पुल्लिङ्गाः ॥

रमेति । रमयतेः पचाद्यच्,* टाप् । एकादेशस्य पूर्वान्तवत्त्वेन*

---

*व्यर्थोऽयं यत्न इति* । वस्तुतस्तु लक्षणप्रतिपदोक्तपरिभाषा वर्णग्रहणे न प्रवर्तत इति परिभाषेन्दुटिप्पणे विस्तरेणाभिहितमिति तत एवावधारणीयम् । *अजन्ता इति* । अत्र कुत्वं न्याय्यम् । अन्ये तु "अल्पाच्तरम्"इतिनिर्देशाददिरन्त्येनेतिसूत्रबोधितसंज्ञासु हल्सन्धिकार्यं न प्रवर्तत इति प्रकृते कुत्वं नाशङ्कनीयमित्याद्यच्सन्धौ निरूपितम् ।

इत्यजन्ताः पुँल्लिङ्गाः ।

*पचाद्यजिति* । नच "घञजपः पुंसि" इति पुंस्त्वापत्तिरिति वाच्यम् । तत्र सूत्रे भावे इत्यनुवृत्त्या भावार्थकतदन्तानामेव पुंस्त्वविधानेन कर्त्रर्थकाऽजन्ते तदप्राप्तेः । अत एव 'सम्बन्धमनुवर्तिष्यते' 'शेषं पुंवत्' इत्यादौ पुंस्त्वक्लीबत्वोक्तिः सङ्गच्छते । *पूर्वान्तवत्त्वेनेति* । लिङ्गविशि-

प्रातिपदिकत्वात्स्वादयः। *वाचेत्यादौ तु लिङ्गविशिष्टपरिभाषया तत्त्वात्ते।

आप इति पञ्चम्यन्तेन सामानाधिकरण्यादङ्गस्येति पञ्चम्या विपरिणम्यते, विशेषणेन तदन्तविधिरित्याह*—आबन्तादिति। "जसः शी" इत्यतः शीति वर्त्तते। रमे इति। यस्येति लोपो न, अभत्वात्।

सम्बुद्धौ च॥ "बहुवचने झलि"इत्यत एदिति, "आङि चापः" इत्यत आप इति चानुवर्त्तते। एङ्ह्रस्वादिति। सम्बुद्धौ प्रतिपदोक्तत्वेन* शीघ्रोपस्थितिकतया हल्ङ्यादिलोपात् प्रथममेत्वे ऽनेन सम्बुद्धिलोप इति भावः। सन्निपातपरिभाषा त्वनित्यत्वान्नात्र प्रवर्त्तते।

आङि चा॥ चेन प्रकृतम्—"ओसि"इति परामृश्यते। "घेर्ङिति" इत्यतोऽनुवृत्तं ङितीति—आप इति पञ्चम्या षष्ठ्या विपरिणम्यते इत्याशयेनाह—ङिद्वचनस्येति॥

सर्वनाम्नः स्या॥ आबन्तात्परस्य *सर्वनाम्नो विहितस्येत्यर्थः। तेन मासपूर्वायै इति सिद्धम्। अत्र ह्रस्वो न स्याटः, तस्य विधेयत्वेनोद्देश्यत्वासम्भवात्। नापि ङिद्वचनस्य, व्याख्यानात्। अत आपो ह्रस्व इत्याह—आपश्चेति। आबन्तस्य गणे पाठाभावेन सर्वनामत्वाभावादाह—एकादेशस्येति। ग्रहणादिति। सर्वनामशब्देनेत्यर्थः। न चैवमप्याबन्तत्वाभावः एकादेशनिष्पन्नस्याप्त्वाभावात्, अत एव खट्वेत्यादौ परादिवद्भावेनाप्त्वमाश्रित्या-

---

ष्टपरिभाषाप्रवृत्तौ स्त्रीत्वावच्छिन्नबोधकप्रत्ययविशिष्टत्वज्ञानायान्तवत्सूत्रप्रवृत्तेरावश्यकतया तेनैव निर्वाहे तेनाप्त्वमादाय तत्त्वाश्रयणे गौरवमिति भावः। *वाचेत्यादाविति*। वस्तुतस्तु अस्य भागुरिमते सत्त्वेऽपि 'एकादेशानपहृतटापोऽसम्भवः' इतिभाष्यप्रामाण्येन हलन्तेभ्यः टाबभावस्यैव लाभेन भाष्यमतेऽसत्त्वात् बहुदामा, अनडुही इत्यादौ तत्परिभाषाया आवश्यकत्वमिति बोध्यम्।

*इत्याहेति*। वस्तुतस्त्वङ्गसंज्ञानिमित्तस्याबन्ततदाद्यव्यवहितोत्तरत्वविशिष्टस्यौङः शी स्यादित्येवार्थः।

*प्रतिपदोक्तत्वेनेति*। तदप्राप्तियोग्ये ऽचारितार्थ्यरूपबाधबीजस्य "सम्बुद्धौ च"इत्यत्र सत्त्वादिति भावः। एतद्ग्रन्थलापनायैवैतद्बाधबीजकथनम्। वस्तुतस्त्वेतद्बाधबीजाकथनेऽपि हल्ङ्याबिति लोपे प्रत्ययलक्षणेनैतदप्रवृत्तौ बाधकाभावान्न दोष इति परिभाषेन्दुटिप्पणे विस्तरः।

*सर्वनाम्नो विहितस्येति*। वस्तुतस्तु आबन्ताङ्गाभिन्नं यत्सर्वनाम ततः

वन्तादिति सोर्लोप उक्तः, परादिवद्भावेन तत्त्वं तु न लभ्यम्, उभयत आश्रयणेऽन्तादिवत्त्वाभावादिति वाच्यम् । उभयत आश्रयणे तदभावस्य भाष्ये एकदेश्युक्तत्वे ऽपि सिद्धान्तिसंमतत्वाभावात् । एतच्च तिङन्ते इण्धातौ वक्ष्यामः ।

परे तु लिङ्गविशिष्टपरिभाषया ऽऽबन्तस्य सर्वनामत्वम् । आबन्तत्वन्तु परादिवद्भावेनेत्याहुः । सर्वस्यामिति । इह परत्वात्स्याटि कृते *सकृद्गतिन्यायात्सुण्न ।

प्रतिपदोक्तस्येति । दिक्शब्दमुच्चार्य विहितत्वादस्य तत्त्वम् । योत्तरेति "अनेकमन्यपदार्थे" इति बहुव्रीहिः । "सर्वनाम्नो वृत्तिमात्रे" इतिमात्रग्रहणात्सम्प्रत्यसर्वनामत्वेऽपि पुंवत्त्वम् । योत्तरेति । यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वप्रतीत्या योत्तरात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धपूर्वा यस्या इत्यर्थेनोत्तरापदस्य गुणवाचकत्वात्पूर्वनिपात इत्यन्यत्र विस्तरः* । स्पष्टार्थमिति । 'दिङ्नामानि'इत्यस्य बहुव्रीह्यधिकारे सत्त्वादिति भावः । अन्तरायै नगर्यै इति । अपुरीत्यस्य पूःशब्दार्थस्य विशेष्यत्वे इत्यर्थ* इति भावः । अत्र मानमन्वेष्यम् * ।

हे अम्बेति । ह्रस्वे कृते "सम्बुद्धौ च"इत्येत्वं न । आ-आबिति प्रश्लेषात् । द्व्यक्षरं यदीति पठित्वा द्व्यच्काम्बार्थकस्यैव ह्रस्व इति नियममाश्रित्य 'डलकवतां ह्रस्वो न'इत्यस्य भाष्ये प्रत्या-

---

परस्य ङितः स्याट् स्यादापश्च ह्रस्व इत्युच्यमानेऽपि मासपूर्वायै इत्यादौ दोषाभावाद्विहितविशेषणे गौरवात्,तस्मादिति परिभाषायां जागरूकायां दिग्योगलक्षणपञ्चम्यन्तं विहायान्यथा कल्पनायां मानाभावाच्च चिन्त्यमिदम् । *सकृद्गतिन्यायादिति* । निरनुबन्धकपरिभाषया "आमि सर्वनाम्नः" इत्यत्रत्यामपदेन स्थानिवद्भावेन ङित्त्वात्स्यामोऽग्रहणात्सुड् न भवतीत्यपि बोध्यम् । एवं रमायां, बहुश्रेयस्यामित्यादावपि नुड् नेति बोध्यम । एवं च 'नद्याम्' इत्यत्र "आण्नद्या" इत्यनेनाडभावेऽपि न दोषः । निरनुबन्धकपरिभाषयैवास्याम्यामः स्थानिवद्भावेन ङित्त्वात्तत्रत्याम्पदेनाग्रहणेन नुटोऽप्राप्त्या लक्ष्यसिद्धेः ।

*अन्यत्र विस्तर इति* । शब्दरत्न इत्यर्थः । *विशेष्यत्व इत्यर्थ इति* । पूःशब्दार्थनिष्ठविशेष्यताप्रयोजकत्व इत्यर्थः । *अत्र मानमन्वेष्यमिति* । के चित्तु अपुरीत्यस्याष्टाध्यायीस्थान्तरंबहिर्योगेति सूत्रे पाठे करणीये गणसूत्रपाठकरणमेव मानमित्याहुः । पुरीशब्दस्य विशेष्यताप्रयोजकत्वे सर्वनामसंज्ञा न भवतीत्येवार्थो लाघवाद् इत्यन्तरस्यां नगर्यामि-

ख्यानात्फलाभेदाय* सामान्यतोऽपि वार्तिकमसंयुक्ताविषयमित्याशयेनाह-असंयुक्ता इति। द्व्यक्षरं यदीत्यस्याङ्गत्वाद् द्व्यक्षराम्बार्थकाङ्गस्य ह्रस्व इति नियमशरीराज्जगदम्बेत्यादौ *ह्रस्वो भवत्येव।

यद्यपि जरसादेशस्येति। एवञ्चैत्वशीनुड्याडामां निरुक्ता-त्पूर्वमेषु क्व चिदजादित्वाभावात्क्वचित्सन्निपातपरिभाषया जरसो ऽनाप-त्तिरिति भावः*। यद्यपि याडामोर्जरसपेक्षया परत्वात् तयोः* कृतयोराद्ये ऽजादित्वविघातादन्त्ये सन्निपातपरिभाषया न जरसः प्राप्तिः, एवमेत्वेऽपि; तथापि तत्र प्रश्लेषफलं दर्शयितुमाह-एवमिति। अत्र यद्वक्तव्यन्तन्निर्जरशब्दे उक्तम्*।

स्वाश्रयमिति। स्वं श्रूयमाण आकारः। स्थानिवद्भावेना-प्त्वमिति। न च ङ्याब्ग्रहणे ऽदीर्घ आदेशो न स्थानि-वदिति ह्रस्वे आप्त्वस्य विच्छेदात्कथं दीर्घे स्थानिवत्त्वेन तल्ला-भः। ङ्याप्स्थानिको दीर्घभिन्न आदेशो न स्थानिवदिति तदर्थ इति वाच्यम्। "याडापः" "औङ आपः" "आङि चापः" "ङेराम्नद्याब्" "हल्ङ्याब्", इत्येतेष्वाकारप्रश्लेषमाश्रित्य स्थानिवत्त्वनिषेधप्रत्याख्या-

---

त्यादौ स्याड् भवत्येवेति भावः।

*फलाभेदायेति*। द्व्यक्षरं यदीतिप्रत्याख्यानपक्षे 'हे अक्क'इत्यादौ ह्रस्वः प्राप्नोति, 'डलकवतां ह्रस्वो न'इति वार्तिकमते ह्रस्वो न प्राप्नोतीति फलभेदवारणायासंयुक्ता इति वक्तव्यमिति भावः। *ह्रस्वो भवत्येवेति*। न चादन्तत्वाट्टाप्स्यादिति वाच्यम्। ह्रस्वस्य बहिरङ्गासिद्धत्वेन टापोऽप्राप्तेः। सन्निपातपरिभाषया टापः प्राप्त्यभावाच्च।

*इति भाव इति*। वस्तुतस्तु क्वचित्परत्वात्क्वचित्पूर्वविप्रतिषेधेन पूर्वमेव जरसिति एत्वशीनुड्याडामां वारणाय "सम्बुद्धौ च" "औङ आपः" "ह्रस्वनद्यापः" "याडापः" "ङेराम्"इत्यादिषु सर्वत्राऽऽकारप्रश्लेष आवश्यकः। यथा च पूर्वं जरस् तथा निर्जरशब्दे एवावोचाम। *परत्वात्तयोरिति। चिन्त्यमिदम्, पूर्वविप्रतिषेधेन जरसेव पूर्वं भवतीति "जरसो ऽवकाशः जरसा जरसे" इति 'जराया' इतिसूत्रभाष्यतो लाभात्। *निर्जरशब्दे उक्तमिति*। यदत्र वक्तव्यं तदस्माभिरपि तत्रैवोक्तमिति बोध्यम्। न च जरसि कृते स्थानिवद्भावेनाऽऽबन्तत्वेऽपि निर्दिश्यमानाऽऽपो ऽभावादेत्वं नैव प्राप्नोतीति तत्राऽऽकारप्रश्लेषो व्यर्थ इति वाच्यम्। प्राचीनमते निर्दि-श्यमानपरिभाषाया वर्णग्रहणे ऽप्रवृत्तेरित्याशयात्। वस्तुतस्तु हे अतिखट्वेत्या-दावेत्ववारणाय तत्र प्रश्लेष आवश्यक एवेति बोध्यम्।

तृभाष्यनये शङ्कासत्त्वेनादोषात् । अत्र यत्रोदाहरणे सूत्रभाष्यवार्त्तिकानां फलभेद आपतति तेषामनभिधानम् । यथा अतिखट्वस्य अः अतिखट्वा इत्यादेः । वक्ष्यमाणरीत्या दीर्घात्पूर्वं फलाभावेन स्थानिवत्त्वाऽप्रवृत्तौ फलभेदस्यैवाभावाच्च* ।

यत्त्वाकारान्तरं प्रश्लिष्याकाररूप एव यो न कदाचिद्रूपान्तरं प्राप्त इत्यर्थ इति । तन्न; मानाभावात् । भाष्ये तस्यानुक्तेश्च । आबन्तं यदङ्गमिति* । "प्रत्ययग्रहणे"इति परिभाषया ऽतिखट्वस्य *नाबन्तत्वं, यच्चाबन्तं* खट्वेति, न तदङ्गमिति भावः । न चानया ऽऽबन्तग्रहणे तेनाङ्गविशेषणादाबन्तान्तं *यदङ्गमित्यर्थादतिखट्वायेत्यादौ दोषस्तदवस्थ इति वाच्यम् । अङ्गस्य विशेषणत्वात् । एतेन श्रुतमाकारमादाय स्मृतमनुबन्धमादाय आप्त्वानुसन्धानात्स्यादेव याडित्यपास्तम् । तस्य लाक्षणिकत्वाच्च ।

ननु स्त्रीप्रत्यये वाचनिकस्तदादिविधिनिषेधो भाष्ये पठितस्तत्कथमस्य तत्र प्राप्तिरत आह–उपसर्जनेनेति । "स्त्रीप्रत्यये चानुपसर्जनेन"इति वचनस्यैव भाष्ये पाठादिति भावः । अत्रोपसर्जनत्वं लौकिकमेव* । स्त्रीप्रत्यये शास्त्रीयोपसर्जनत्वासम्भवात् । यद्यपि स्त्रीप्रत्ययान्ते शास्त्रीयोपसर्जनत्वमस्ति तथापि न तेन 'प्रत्ययग्रहणे' इति तदादिनियमप्रसक्तिः । एतत्सर्वं व्याख्यादर्शाद्यनुरोधेन ।

परे त्वस्याकारस्य लाक्षणिकत्वान्नात्र याट् । वर्णग्रहणेऽपि तत्प्रवृत्तेः "ओत्"इत्यादौ भाष्ये स्पष्टमुक्तत्वात् । न च खट्वायै इत्यत्र याडनापत्तिः; सूत्रन्तु *निशायै इत्यादौ चरितार्थमिति वाच्यम् । यस्य रूप-

---

*फलभेदस्यैवाभावाच्चेति* । वस्तुतस्तु "धात्वन्तयकोस्तु नित्यम्, सुनयिका, सुपाकिका"इत्यादौ प्रथमस्थानिवद्भावस्य फलाभावाद् अप्रवृत्तौ द्विवारं स्थानिवत्त्वमन्तरा धात्वन्तयकारासम्भवेन तदसङ्गत्यापत्त्या चिन्त्यमिदम् ।

*आबन्तं यदङ्गमितीति* । आबन्ततदाद्यभिन्नं यदङ्गमित्यर्थः । *नाबन्तत्वमिति* । नाबन्ततदादित्वमित्यर्थः । *यच्चाबन्तमिति* । यच्चाबन्ततदादीत्यर्थः ।

*लौकिकमेवेति* । शास्त्रीयोपसर्जनत्वसमानाधिकरणं लौकिकमेवोपसर्जनत्वमित्यर्थः । तेनैकदेशिसमासप्रकरणतत्प्रत्याख्यानयोर्न फलभेद इत्यन्यत्र विस्तरः । *निशायै इत्यादाविति* । इदमुपलक्षणं बहुदामायै इत्यस्य ।

स्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैव लाक्षणिकस्य तत्परिभाषाविषयत्वात् । न चेह तथा । एकादेशतः प्रागपि तद्रूपसत्त्वात् । पदाङ्गाधिकारे इति वार्त्तिकेनाङ्गस्य विशेष्यताया एवौचित्यबोधनाच्च । अत एवाबन्तान्तं* यदङ्गमित्यर्थाभिप्रायेणातिखट्वायेत्येतत्सिद्धये ऽतिखट्व-ए इति स्थिते प्रवृत्तं "ङ्याब्ग्रहणे ऽदीर्घ" इति वार्त्तिकं व्याख्याय श्रुताकारस्मृतानुबन्धाभ्यामाप्त्वेनाशङ्कां कृत्वा लाक्षणिकत्वेन समाधायाकारप्रश्लेषेण तत्प्रत्याख्याने एतत्परिहारायोपायान्तराकथनं भाष्ये ।

किं च अङ्गस्य विशेषणत्वे वार्त्तिकस्य तत्प्रत्याख्यानायाऽऽकारप्रश्लेषस्य च वैयर्थ्यं स्पष्टमेव । किं च खट्वाया अर्द्धे ऽर्द्धखट्वायामित्यादौ याऽनापत्तिः । किं चाऽऽकारप्रश्लेषपक्षे ऽपि दीर्घोत्तरं स्वाश्रयाकारत्वं स्थानिवद्भावेनाप्त्वमिति शङ्का ऽयुक्तैव । दीर्घात्पूर्वं स्थानिवत्त्वस्य फलाभावादप्रवृत्तौ स्थानिन्याप्त्वबुद्धेरभावात्तदादेशे दीर्घे तदारोपस्य दुर्लभत्वात् । परंपरया कार्यमादाय स्थानिवत्त्वप्रवृत्तौ मानाभावात् । "याडापः" इति सूत्रे भाष्ये ऽपि "अतिखट्वायेत्यत्र स्थानिवत्त्वात् प्राप्तस्य याटः प्रतिषेधो वक्तव्यः, न वक्तव्यो ङ्याब्ग्रहणे ऽदीर्घ इति स्थानिवत्त्वनिषेधात् । न च दीर्घत्वे आवसौ भूतपूर्व इति याट् प्राप्नोति । लाक्षणिकत्वात् । स्थानिवत्त्वे तु तत्सामर्थ्यान्नैतत्परिभाषाप्रवृत्तिः" इत्युक्तम् । यद्यपि स्थानिवत्सूत्रयाडापसूत्रस्थभाष्याभ्यां हल्ङ्याप्सूत्रयाडापसूत्रयोरेव प्रश्लेषो लभ्यते, तथापि भाष्यमुपलक्षणमितरसूत्रविषयोदाहरणानभिधानं वेत्यनयोर्युक्तं सुधीभिर्विचार्यमित्याहुः* ।

---

निश्धातोरिगुपधलक्षणे के टापि खट्वाशब्दतुल्ययोगक्षेमत्वात् । *आबन्तान्तं यदङ्गमिति । आबन्ततदाद्यन्ताभिन्नं यदङ्गमित्यर्थः ।

*इत्याहुरिति* । परे तु हे अतिखट्व, अतिखट्वेन, अतिखट्वाय, अतिखट्वयोः, अतिखट्वानाम् इत्यादौ, विभक्तिनिमित्तककार्यात्पूर्वमेव जरस् भवतीति निर्जरशब्दे परत्वित्यादिना सिद्धान्तितत्वेन जरसा, जरसे, जरसः, जरसोः, जरसामित्यादौ च तत्तद्विधिवारणाय "सम्बुद्धौ च" "आङि चापः" "याडापः" "ङेराम्" इत्यत्राऽऽकारप्रश्लेष आवश्यकः । अतिखट्वायेत्यादावाकारप्रश्लेषेऽपि याड्वारणाय स्त्रीप्रत्यये चेति परिभाषया उपसर्जनवाक्ये तदादिनियमसत्त्वेनाबन्ततदाद्यभिन्नं यदङ्गं ततः परस्य ङितो याडित्यवश्यं "याडापः" इत्यस्यार्थो वक्तव्यः । न

चातिखट्वायेत्यादावाकारस्य लाक्षणिकत्वान्न याडिति वाच्यम् । वर्णग्रहणे फलाभावेनेयं परिभाषा न प्रवर्तत इति सिद्धान्तात्तत्परिभाषाया अप्रवृत्तेः । न च ओत्सूत्रे भाष्ये 'अदो ऽभवत्' इत्यादौ प्रगृह्यसंज्ञामाशङ्क्य लक्षणप्रतिपदोक्तपरिभाषया वारणपरभाष्यविरोधो वर्णग्रहणे एतदप्रवृत्ताविति वाच्यम् । तस्य भाष्यस्यैकदेशयुक्तित्वेनादोषात् । अन्यथा गोऽभवदित्यादौ दोषवारणायैतदग्रे एव गौणमुख्यन्यायस्य प्रवर्तितत्वात्तेनैवात्रापि दोषवारणे एतद्भाष्यासङ्गतिः स्यात् ।

खट्वायै इत्यादौ याडुपपत्तये यस्य रूपस्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैव लाक्षणिकस्यैतत्परिभाषाविषयत्वमिति वारणापेक्षया वर्णग्रहणे एतदप्रवृत्तेरेव युक्तत्वात् । न च 'पदाङ्गाधिकारे'इतिपरिभाषया आबन्तं यत्तदादि तदन्तं यदङ्गं तस्मात्परस्य ङितो याडित्यर्थेनातिखट्वायेत्यादौ पुनरपि दोषो दुरुद्धर एवेति वाच्यम् । यत्र धर्मी सिद्धस्तत्र प्रत्ययग्रहणपरिभाषया अदग्धदहनन्यायेन तदादित्वरूपधर्ममात्रोपस्थित्या आबन्तं यदङ्गम् आप् यस्माद्विहितस्तदादित्वविशिष्टं तस्मात्परस्य ङितो याडित्यर्थेनादोषात् ।

नच खट्वेव मनुष्यः खट्वा बहूनां खट्वा बहुखट्वा तस्यै बहुखट्वायै इत्यादावाबन्ततदादित्वाभावादुपसर्जनवाक्येन याड् न स्यात्,स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वरूपोपसर्जनत्वस्य प्रकृते सत्त्वादनुपसर्जनवाक्येनापि न स्यादिति वाच्यम् । स्वान्ततदाद्यवधिकपूर्वत्ववत्पदपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतात्वद्विशेष्यतानिरूपितप्रकारतानिरूपितस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वमुपसर्जनत्वमितिकल्पे वाक्यभेदाभावेऽपि याट्सिद्धेः ।

न च द्विवारं स्थानिवत्त्वप्रवृत्तौ प्रमाणाभावात्प्रकृते आप्त्वमेव नेति वाच्यम् । धात्वन्तयकोस्तु नित्यं सुनयिका सुपाकिकेत्यादौ द्विवारं स्थानिवत्त्वप्रवृत्तिमन्तरा यकारे धात्वन्तत्वासम्भवेन द्विवारं स्थानिवद्भावस्य दर्शनात् । न चाबन्तं यत्तदादि तदन्तं यदङ्गमित्यभिप्रायेणातिखट्वादौ दोषवारणाय प्रवृत्तम् "ङ्याब्ग्रहणेऽदीर्घः"इति वार्त्तिकं व्याख्याय श्रुताकारस्मृतानुबन्धाभ्यामाप्त्वेन शङ्कां कृत्वा लाक्षणिकत्वेन समाधायाकारप्रश्लेषेण तत्प्रत्याख्यानकल्पे एतत्परिहारायोपायान्तरं भाष्ये नोक्तमिति वर्णग्रहणे इयं परिभाषा प्रवर्तते इति कल्प्यत इति वाच्यम् । उपायान्तराकथनमात्रेणैतत्कल्पनायाः कर्त्तुमशक्यत्वात् । "स्त्रीप्रत्यये चानुपसर्जनेन"इतिपरिभाषया दोषवारणेन तत्कथने फलाभावाच्च ।

न च खट्वाया अर्धमर्धखट्वा तस्यामर्धखट्वायामित्यादौ याण्न स्यान्निरुक्तोपसर्जनत्वस्य सत्त्वेनाबन्ततदादित्वाभावादिति वाच्यम् । स्त्रीप्रत्यये चेतिपरिभाषायां शास्त्रीयोपसर्जनत्वसमानाधिकरणलौकिकोपसर्जनत्वं स्वीक्रियते इति "एकविभक्तावषष्ठ्यन्तवचनम्" इतिवचनेन शास्त्रीयोपसर्जनत्वाभावात्तदादिनियमाभावेनादोषात् । अत एवैकदेशिसमासत-

व्रश्च । अत्र राजिसाहचर्याद् भ्राजिः फणादिरेव* । तेनान्यस्य विभ्रागित्येवाहुः । छशौ वर्णौ ताभ्यां शब्दरूपं विशेष्यमादाय तदन्तग्रहणमित्याह-छशान्तयोरिति । छशयोरित्युक्तेऽपि न क्षतिरिति चिन्त्यम् । पदस्येति तु पृष्ठमित्यादिसिद्धये व्यधिकरणमेव । अन्तादेश इति । अलोऽन्त्यस्येति वचनात् । अत्र "झलो झलि"इत्यतो झलीति, पदस्येति, "स्कोः" इत्यतो ऽन्ते इति चानुवर्त्तते । "छ्वोः शूड्"इत्यत्र क्ङितीत्यनुवृत्तेः प्रष्टेत्यादौ शादेशाभावाद् अशान्तत्वेन षत्वाप्राप्तौ छग्रहणम् । अत्रापि सतुङ्निर्देशो बोद्धव्यः । तस्यासिद्धत्वादिति । "चयो द्वितीया" इत्यस्य "नादिन्या"इति सूत्रे भाष्ये पाठादिति भावः । टतयोरिति । धुडभावे

---

त्प्रत्याख्यानयोर्न फलभेदः । न च स्थानिवत्सूत्रस्थयाडापइतिसूत्रस्थभाष्याभ्यां हल्ङ्याप्सूत्रस्थयाडापइतिसूत्रस्थभाष्याभ्यां च तयोरेवाऽऽकारप्रश्लेषो लभ्यत इति कथं सर्वत्राऽऽकारप्रश्लेष इति वाच्यम् । जरसा, जरसे, जरसोः, जरसामित्यादौ दोषवारणाय प्रश्लेषस्यावश्यकत्वेन प्रकृतभाष्ययोरुपलक्षणतया व्याख्येयत्वात् । केवलं सम्बुद्धौ चेत्यत्राकारप्रश्लेषस्य फलं चिन्त्यम् । हे अतिखट्वेत्यादौ स्त्रीप्रत्यये चेति परिभाषया ऽऽबन्ततदादित्वस्याभावान्निर्दिश्यमानपरिभाषया वा निर्दिश्यमानस्यापोऽभावेनैव तस्याप्रवृत्तेः । न च गङ्गायमुने इत्यादौ "औङ आपः"इति न प्राप्नोतीति दोषः । प्रकृते नवीनमते समुदायविशेष्यकबोधेन स्त्रीप्रत्ययस्योपसर्जनत्वादाबन्ततदादित्वाभावादिति वाच्यम् । गोस्त्रियोरितिसूत्रे ऽत्र ह्रस्ववारणाय कृतस्य "द्वन्द्वे न"इति वार्तिकस्य स्त्रीप्रत्यये इत्यादिनिषेधेऽपि तात्पर्यमित्यदोषात् । विशेष्यान्तरसत्त्वेऽपि अनुत्तरपदस्येति ज्ञापकात् क्वचित्तदादीति धर्म्युपतिष्ठते इति कल्पनेन तदन्तविधिद्वयेनादोषाद्वेति सुधियो विभावयन्तु ॥

*फणादिरेवेति* । अर्थवद्ग्रहणपरिभाषया राजृ दीप्तावित्यस्यैव ग्रहणे तत्साहचर्याद्भ्राजिरपि फणादिरेव गृह्यत इति भावः । न च फणादिर्भ्राजधातुर्नैवास्ति । अन्यथा फणादेर्भ्रेजतुरफणादेश्च बभ्राजतुरितिरूपद्वयसिद्धेरफणादेश्चाकारानुबन्धकरणेनाविभ्रजत् फणादेश्च ऋदित्त्वेन "नाग्लोपि"इति निषेधादबभ्राजदितिरूपद्वयसिद्धेश्च "भ्राजभास"इति सूत्रे भ्राजिग्रहणमनर्थकं स्यादिति वाच्यम् । पेचुर्भ्रेजुर्यस्मिन्कर्मणि इति विग्रहे "आख्यातमाख्यातेन"इति समासे णिचि, टिलोपे चङि च अपेचुर्भ्रेज् इ अत् इति स्थिते ह्रस्वविकल्पाय भ्राजभासेतिसूत्रे भ्राजिग्रहणस्यावश्यकत्वात् । यत्तु फणादौ भ्राजृ इति, अन्यत्र भ्राजेतिपाठेन व्रश्चेतिसूत्रे च राजृ इति पाठेन विभ्राट् विभ्रागिति रूपद्वयसिद्धौ भ्राजेः पुनः पाठो ऽर्थवद्ग्रहणपरिभाषाज्ञापक इति; तन्न । विभ्राजृशब्दात् ण्यन्तात् क्विपि टिलोपे विभ्रर् इति स्थिते षत्वार्थं भ्राजिग्रहणस्य व्रश्चेतिसूत्रे आवश्यकत्वादिति दिक् ।

टस्य, धुटि तस्येत्यर्थः । न भवतीति । जश्त्वात्प्राक् षस्य नेत्यर्थः । जश्त्वे तु प्राप्तिरेव नेति बोद्धयम् ।

केचित्त्विति । "एकाचः" इत्युत्तरसूत्रे ऽनुवृत्त्या मध्येऽपि सम्बन्ध एवोचित इति भावः । जश्त्वेनेति । यत्तु 'जश् शसि'इति निर्देशात् शस्य न जश्त्वमिति । तन्न; अविकृतस्वरूपप्रतिपादने तात्पर्यादयस्मयादित्वेन भत्वाच्च तत्र तदप्राप्तौ न्यायसिद्धायां ज्ञापकत्वायोगात् । "उपदेशेऽजू"इत्यादिनिर्देशैः* कुत्वाद्यनापत्तेश्च । अत्र मते भाष्यानुग्रहो विचार्यः । 'मांसपृतना'इत्यस्य "पद्दन्' इति सूत्रे उपसंख्यातत्वादाह—शसादौ वेति । स्त्रीत्वादिति । पुंस्त्वाभावादित्यर्थः । नात्वं नेति । स्त्रीत्वादित्यनुकृष्यते । अत एव पुंस्त्वाभावान्नत्वाभाव इति नोक्तम् । न हि पुंस्त्वाभावो नाभावे प्रतिबन्धकः । नपुंसकेऽपि तदङ्गीकारात् ।

ङितीति ह्रू ॥ अत्र वाक्यद्वयम् । आद्ये यू इति, स्त्र्याख्याविति, अस्त्रीति, इयङुवङ्स्थानाविति, वेति चानुवर्त्तते । अन्त्ये यू इति, वेति, स्त्रीवाचकावित्येतन्मात्रार्थकं स्त्र्याख्याविति च । तत्र ह्रस्वयोरप्राप्ते दीर्घयोस्तु "नेयङ्" इति निषेधादप्राप्ते विभाषा । इष्वादिष्वप्राप्तिमाशङ्क्य "ङिति ह्रस्वश्च" इत्यत्र नित्यस्त्रीलिङ्गावित्येवंविधो नियमो नाश्रीयत इति कैयटस्तु ह्रस्वांशमात्रविषय इत्याशयेनाह—नित्यस्त्रीलिङ्गाविति । अत एवास्य दीर्घांशे निषेधविकल्पत्वं भाष्ये उक्तं "यू स्त्र्याख्यौ" इति सूत्रे । तत्फलं कटप्रुवे ब्राह्मण्यै इति । लिङ्गान्तरविशिष्टार्थाभिधायकत्वेन* तत्त्वाभावात् ।

परे त्वत्र विकल्पो भवत्येव । आख्याग्रहणरहितस्यैवात्र संबन्धात् । यद्वा स्त्र्याख्यावित्येतदेव स्त्रीवाचकावित्येतन्मात्रार्थकमत्र, शब्दाधिकारात् । तच्च ङिदाक्षिप्ताङ्गस्य विशेषणम् । अत एव "प्रथमलिङ्गग्रहणं च"इत्यस्यात्राप्रवृत्त्यन्वाख्यायके 'ह्रस्वौ चेयङुवङ्स्थानौ च प्रवृत्तौ स्त्रीवचनावेव नदी-

---

*निर्देशैरिति* । "आदिरन्त्येन"इतिबोधितसंज्ञासूत्रेषु हल्सन्ध्यप्रवृत्तिज्ञापनादिति भावः । *लिङ्गान्तरविशिष्टार्थाभिधायकत्वेनेति* । स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वं-स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वं-स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वमेतत्त्रितयसम्बन्धेन प्रवृत्तिनिमित्तविशिष्टा या शक्तिः (स्वपर्याप्त्यधिकरणत्वं—स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यता-

सञ्ज्ञौ भवतो न तु पुंवाचकाविति वक्तव्यम्' इति वार्त्तिके—"अतिशकटयै ब्राह्मण्यै' क्व मा भूत् ? अतिशकटये ब्राह्मणाय; अतिश्रियै ब्राह्मण्यै, श्रियै ब्राह्मण्यै । क्व माभूत् ? अतिश्रिये ब्राह्मणाय श्रिये ब्राह्मणाय" इति यूस्त्र्याख्याविति सूत्रशेषे भाष्ये उक्तम् । एवञ्चास्य निषेधविकल्पत्वमसम्भवि । समुदायस्य केनापि प्राप्त्यभावात् । अवयवस्य प्राप्तावपि तस्यानेन विकल्पाभावात् । ङिदाक्षिप्ताङ्गस्यैवानेन विकल्पात् । एतच्च प्रवृत्तौ स्त्रीवचनावित्यनेन सूचितम् ।

अत एवात्र वाक्यद्वयेऽपि विधिविकल्प एव दर्शितः । एवञ्च-'अत्र नियमो नाश्रीयते' इति कैयटो वाक्यद्वयपर एवोचितः । उपक्रमे निषेधपरतया व्याख्यानं तु स्त्र्याख्यावित्यस्य नित्यस्त्रीत्वार्थकत्वमजानत एकदेशिनो 'यू इति ह्रस्वयोर्ग्रहणम्' इतिपक्षोपपादने उक्तिभूतमिति तन्नादरणीयम् ।

यत्तु "दीर्घवाक्ये स्त्र्याख्याविति ईदूतोस्तदन्तस्य वा विशेषणं,पुनरङ्गेन तदन्तविधिः,अङ्गस्य च केवलस्त्रीत्वं विशेषणम्।एवं ह्रस्वघटितवाक्येऽपि स्त्रियामित्येतन्मात्रमुभयोर्विशेषणम्"इति ।तत्तु चिन्त्यम्। भाष्यात्तदलाभात्। "नेयङुवङ्" इत्यत्र तु नेयङाद्याक्षिप्ताङ्गविशेषणं स्त्रीत्वम् । तदाक्षिप्तस्येयङादिविशेषणताया एवौचित्यात् । "यस्याङ्गस्येयुवौ"इति भाष्योक्तेः। स्त्र्याख्यावित्यस्य नित्यस्त्रीलिङ्गावित्यर्थकस्य यू इत्यनेनैव क्लृप्तसम्बन्धत्वाच्च । अत एवातिश्रिये ब्राह्मणायेत्यत्रानेन निषेधादवयवनदीत्वप्रयुक्तमपि नदीकार्यं न ।

ननु यथा खरकुट्यै ब्राह्मणायेत्यादौ लुबन्तस्य त्रिलिङ्गत्वेऽपि प्रथमालिङ्गग्रहणान्नित्यनदीत्वं भवतीति भाष्ये उक्तम् । चञ्चा ब्राह्मणान् पश्येत्यादौ युक्तवद्भावेन स्वलिङ्गप्रयुक्तकार्याभावस्याप्यतिदेशान्नत्वम् । स्पष्टं चेदं "तस्माच्छस" इति सूत्रे भाष्यकैयटयोः । यद्वाऽतिदेशेन प्रकृतिलिङ्गप्रयुक्तेन कार्यातिदेशेन तद्विरुद्धस्वाश्रयकार्याप्रवृत्तिः* । स्पष्टञ्चेदं "स्त्रियाम्" इति सूत्रे भाष्ये । युक्तवद्भा-

---

पर्याप्त्यधिकरणत्वमेतदुभयसम्बन्धेन) तादृशशक्तिविशिष्टत्वरूपनित्यस्त्रीत्वस्य कटप्र्वे ब्राह्मण्यै इत्यादावभावादिति भावः । *तद्विरुद्धस्वाश्रयकार्याप्रवृत्तिरिति* । चिन्त्यमिदम् । "अधुः' इत्यादौ आत्वोत्तरं "विभाषा घ्राधेट्" इति

वादिप्रत्याख्यानेऽपि यथा दारादिशब्दैः पुंस्त्वेन स्त्रीरूपार्थस्य भानं, तथा प्रकृते स्त्रीत्वेन पुंसो भानमिति न नत्वम् । पुंस्त्वे वाच्ये नत्वमित्यर्थात् । न चैवं खरकुट्यै इत्यत्रापि युक्तवद्भावेन नित्यस्त्रीत्वात्सूत्रेणैव सिद्धमिति वाच्यम् । स्त्र्याख्याविति यस्य स्त्रीत्वविशिष्टमेव य आहेत्यर्थात् । न चायं तथा । स्त्रीत्वेन रूपेण वस्तुतः पुंस्त्वविशिष्टस्याभिधानात् । यद्यपि पदार्थमात्रे शास्त्रीयलिङ्गत्रयमस्ति, तथापि व्यक्तिवस्तुपदार्थादिपदबोध्यत्वकाले तत्तल्लिङ्गोपजननेऽपि स्त्रीपदादिबोद्ध्यत्वदशायां तत्सत्त्वे मानाभावात् । प्रकृते तु ब्राह्मणायेत्यादिविशेष्यदर्शनेन तत्सत्त्वानुमानात् । स्पष्टं चेदं भाष्यकैयटयोः । एवं श्रीशब्दात्कनि लुपि श्रिये ब्राह्मणायेत्यादौ विकल्पापत्तिः । युक्तवद्भावेन स्त्रियामङ्गस्य वर्त्तनात्, अत्र सूत्रे नित्यस्त्रीत्वानिवेशाच्च; इति चेन्न । सत्यभिधाने इष्टापत्तेः । भाष्ये दृश्यमानं 'श्रिये ब्राह्मणाय'इत्यादि तु क्यजन्तात्क्विपि बोद्ध्यम् । विपरीतं नित्यस्त्रीत्वनिवेशवादिनो लुवन्ते श्रियै ब्राह्मणायेत्यादौ तदनापत्तिर्दोष इत्याहुः* ।

---

लुगर्थं घेङ्त्वातिदेशस्यावश्यकतया तदभावव्याप्यवत्तानिश्चयमुद्रया स्थानिवद्भावेनातिदिश्यमानघेङ्त्वाविरुद्धस्वाश्रयाऽऽदन्तत्वप्रयुक्तस्य "आत"इति ङेर्ङुसो ऽप्रवृत्त्यापत्तेः ।

*इत्याहुरिति* । अन्ये तु सूत्रकृत्–प्रवृत्तिनिमित्तविशिष्टत्वं नित्यस्त्रीत्वम् । वैशिष्ट्यं च स्वविशिष्टशक्तिविशिष्टत्वं—स्वावच्छिन्नमुख्यविशेष्यतानिरूपितस्त्रीत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारताकबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वमेतदुभयसम्बन्धेन । शक्तौ प्रवृत्तिनिमित्तवैशिष्ट्यं च स्वावच्छिन्नविशेष्यताप्रयोजकत्वं—स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वं–स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वमेतत्त्रितयसम्बन्धेन । शक्तिवैशिष्ट्यं च स्वपर्याप्त्यधिकरणत्वं—स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वमेतदुभयसबन्धेनेत्याभिप्रेत्य ।

एतल्लक्षणं बहुश्रेयस्यै ब्राह्मणाय, कुमार्यै ब्राह्मणायेत्यादावव्याप्तमिति मत्वा "प्रथमलिङ्गग्रहणं कर्तव्यम्"इति वदन्वार्तिककारश्च प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वं नित्यस्त्रीत्वम् । वैशिष्ट्यं च स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वं—स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वं—स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वमेतत्त्रितयसम्बन्धेन । शक्तिवैशिष्ट्यं च स्वपर्याप्त्यधिकरणान्त-

त्व—स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यता-पर्याप्त्यधिकरणत्वैतदुभयसम्बन्धेनेत्यभिप्रैति ।

"अवयवस्त्रीविषयत्वात्सिद्धम्" इत्युक्त्वा "प्रथमलिङ्गग्रहणं च" इति वार्तिकं प्रत्याचक्षाणो भाष्यकारश्च प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वं नित्यस्त्रीत्वम् । प्रवृत्तिनिमित्तवैशिष्ट्यं च शक्तौ स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्व—स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व—स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वैतत्त्रितयसम्बन्धेन । शक्तिवैशिष्ट्यं च स्वपर्याप्त्यधिकरणत्व—स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वैतदुभयसम्बन्धेनेत्यभिप्रैति ।

"ङिति ह्रस्वश्चेत्यत्र 'प्रथमलिङ्गग्रहणं च' इति यद् चोदितं तदत्र द्रष्टव्यं विजानीयात्" इतिभाष्यप्रामाण्येन सूत्रकृत्संमतं यन्नित्यस्त्रीत्वं तदेवात्र संमतमिति बोध्यम् । अत्रेतिपदस्वारस्यात् । "वाऽऽमि" इत्यत्र तु 'प्रथमलिङ्गग्रहणं च' इति 'अवयवस्त्रीविषयत्वात्सिद्धमिति चेत्' इत्याद्युक्त्या 'यूस्त्र्याख्यौ' इति सूत्र इवात्रापि वर्तत इति लाभात् वार्तिककृत्संमतं भाष्यकृत्संमतं वा नित्यस्त्रीत्वं बोध्यम् । अत एव श्रीणां श्रियां ब्राह्मणानामित्यादौ "वामि" इति विकल्पो भवत्येव । अत एवोपक्रमे 'वामि' इत्यस्य निषेधपरतया व्याख्यानं भाष्ये सङ्गच्छते । अत एव "ह्रस्वौ च इयङुवङ्स्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेव नदीसंज्ञौ भवतो न तु पुंवाचकाविति वक्तव्यं शकट्यै अतिशकट्यै ब्राह्मण्यै, क्व माभूत् ? शकटये अतिशकटये ब्राह्मणाय; धेन्वै अतिधेन्वै ब्राह्मण्यै; क्व माभूत् ? धेनवे ऽतिधेनवे ब्राह्मणाय; श्रियै अतिश्रियै ब्राह्मण्यै, क्व माभूत् ? श्रिये ऽतिश्रिये ब्राह्मणाय; भ्रुवै अतिभ्रुवै ब्राह्मण्यै, क्व माभूत ? भ्रुवे ऽतिभ्रुवे ब्राह्मणाय" इति भाष्यं सङ्गच्छते । अत्र प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेवेत्युक्त्या पूर्वोक्तं सूत्रकारसंमतं नित्यस्त्रीत्वं ङिति ह्रस्वश्चेत्यत्र ग्राह्यमिति बोध्यते । अत्र षष्ठीबहुवचनोदाहरणादानेन यूस्त्र्याख्यावित्यत्रेव वामीत्यत्रापि भाष्यकारादिसम्मतं नित्यस्त्रीत्वं ग्राह्यमिति बोध्यम् ।

यत्तु भाष्ये दृश्यमानं श्रिये ब्राह्मणायेत्यादि क्यजन्तात् क्विपि बोध्यमिति; तन्न । शकटये ब्राह्मणाय, धेनवे ब्राह्मणायेत्यादौ क्यजन्तात्क्विपि तुगापत्तेः । यदपि—पदार्थमात्रे शास्त्रीयं लिङ्गत्रयमस्ति तथापि व्यक्तिवस्तुपदार्थादिपदबोध्यत्वकाले तल्लिङ्गोपजननेऽपि स्त्रीपदादिबोध्यत्वदशायां मानाभावादिति । तदपि न । कस्य चित्प्रियस्य पुष्टिकामनादशायां तस्य पुंस्त्वेन बहुवारं बोधे पुष्ट्यापत्तेः । एवं यस्य द्वेषादिना अपुष्ट्यादिकामना तस्य स्त्रीत्वेन बोधे ऽपुष्टिप्रसङ्गात् । एवं यस्य साम्यकामना तस्य नपुंसकत्वेन बहुवारं बोधे साम्यप्रसङ्गाच्च । पुंस्त्वादिशास्त्रीयलिङ्गस्य सत्त्वाद्युपचयापचयादिरूपत्वादिति केचित् ।

न च चञ्चा ब्राह्मणानित्यादौ युक्तवद्भावेन स्त्रीलिङ्गत्वेऽपि

यू किम् । मात्रे । यद्यपि यू इति दीर्घपरं तथापि विभक्तिविपरिणामेन य्वोर्ह्रस्वावित्यन्वयो बोद्धव्यः । एतत्सर्वं वामीत्यत्रापि बोद्ध्यम्* ।

'इदुद्भ्यामौदच्चघेः' इति सूत्रं योगविभागेन व्याचष्टे, इदुद्भ्याम् । अनदीसंज्ञकेषु "अच्च घेः" "औत्"इत्याभ्यां बाधात्, "ङेराम्" इति सूत्रान्नदीग्रहणानुवृत्तेश्चाह–नदीसञ्ज्ञकाभ्यामिति । मत्यामिति । सन्निपातपरिभाषाया* अनित्यत्वाद्यण् ।

त्रिचतुरोः ॥ "अष्टन आ" इत्यतो विभक्ताविति वर्त्तते । तत्फलं त्रिभार्यः । तृतीयान्तेन समासः । भार्यो भरणीयः ।

अचि र ॥ अलोऽन्त्यपरिभाषयैव सिद्धे ऋत इति अनुवर्त्तमानतिसृचतसृ इत्यस्य षष्ठ्यन्तरत्वकल्पनाय । अन्यथा त्रिचतुरोरित्यस्यैवानुवृत्त्यापत्तौ रादेशेन तिसृचतस्रोर्बाधापत्तिरिति दिक् । नुमचिरेति । अत्राचिरांशे"न तिसृ"इति निषेधो मूलम् । एतेन* स्त्रीत्वरूपार्थविशेषविभक्ति-

---

स्वाश्रयपुंस्त्वप्रयुक्तनकारादेशापत्तिरिति वाच्यम् । युक्तवद्भावेन प्रकृतौ यल्लिङ्गयद्वचनप्रयुक्तं कार्यं भवति, यल्लिङ्गयद्वचनप्रयुक्तं च कार्यं न भवति तदुभयोर्भावाभावयोः "अचः परस्मिन्"इत्यनेनेवातिदेशस्वीकारेणादोषात् । न च श्रिये ब्राह्मणायेत्यादौ युक्तवद्भावेन स्त्रियामङ्गस्य वर्तनाद्विकल्पापत्तिरिति वाच्यम् । स्त्रीत्वातिदेशेऽपि पूर्वोक्तसूत्रकृत्संमतानित्यस्त्रीत्वस्य व्यक्तिपदार्थत्वाभावेन युक्तवद्भावेन प्रकृते कन्लुबन्तेऽतिदेष्टुमशक्यत्वात् । एतेन तत्र विकल्पो भविष्यत्येवेत्यपास्तम् । पूर्वोक्तभाष्यविरोधाच्च । तथा च "ङिति ह्रस्वश्च"इत्यत्र पूर्वोक्तं सूत्रकृत्संमतं नित्यस्त्रीत्वमेव ग्राह्यमिति सुधियो विभावयन्त्वित्याहुः ।

*वामीत्यत्रापि बोध्यमिति* । चिन्त्यमिदम्, "प्रथमलिङ्गग्रहणं चेति यच्चोदितं तदत्र द्वेष्यं विजानीयात्" इत्यत्र अत्रेतिपदस्वारस्यभङ्गापत्तेः । ह्रस्वौ च इयङुवङ्स्थानौ च प्रवृत्तौ च प्राक् च प्रवृत्तेः स्त्रीवचनावेव नदीसंज्ञौ भवतो न तु पुंवाचकाविति वार्तिकोदाहरणदानावसरे षष्ठीबहुवचनोदाहरणादानाच्च । एतेन "वाऽचि ह्रस्वश्च"इत्येव सिद्धे "वाऽऽमि" "ङिति ह्रस्वश्च"इति पृथग्योगकरणात्सन्निपातपरिभाषा ज्ञाप्यत इत्यपास्तम् । ङिति ह्रस्वश्चेत्यत्र 'प्रथमलिङ्गग्रहणं च'इति वार्तिकस्याभावेन वामीत्यत्र च तद्वार्तिकस्य सत्त्वेन कथमप्येकयोगस्य कर्तुमशक्यत्वात् । अत एव च "आपि ह्रस्वश्च"इति न सूत्रितम् । आबिति टा इत्यारभ्य सुपः पकारेण प्रत्याहार इति दिक् ।

*अनित्यत्वादिति* । "सोऽचि लोपे च"इत्यादिनिर्देशेन सन्धिकार्ये सन्निपातपरिभाषा न प्रवर्तत इति भावः । *एतेनेति* अर्थे-

सञ्ज्ञानिमित्ततिस्राद्यपेक्षया नुडन्तरङ्ग इत्यपास्तम् । अतो निषेधादेवार्थसञ्ज्ञाकृतबहिरङ्गत्वानाश्रयणम् । अन्यथाऽऽमितिप्रत्ययविशेषापेक्षत्वेऽपि संज्ञाऽर्थविशेषानपेक्षत्वेनान्तरङ्गत्वात्त्र्यादेशे तदसङ्गतिः स्पष्टैव । वस्तुतः स्वरूपेणोपादाने न बहिरङ्गत्वं किं तु केन चिद्विशेषधर्मेणोपादाने एवेति, विशेषापेक्षस्य बहिरङ्गत्वमेव न इति च रुदधातौ निरूपयिष्यामः । तृज्वत्सूत्रे भाष्ये तु "न तिसृतिज्ञापकाद् रादेशो नुड्विषये न । पूर्वविप्रतिषेधेन तु न सिद्ध्यति । अपवादविषये विप्रतिषेधाप्रवृत्तेः । रादेशस्य सर्वापवादत्वात्" इत्युक्तम् ।

त्रिचतुरोर्विशेषणादिति । स्त्रीनिष्ठसंख्यायां वर्त्तमानयोरित्यर्थ इति भावः । नेहेति । त्रिशब्दस्य पुंनपुंसकवृत्तित्वेऽपि समुदायस्य स्त्रियां वृत्तेरङ्गविशेषणत्वे आदेशः स्यादिति भावः । आमि त्विति । तत्राऽऽम् षष्ठीबहुवचनमेवार्थाधिकारादतो न ङेरामि त्रयादेश* इति बोद्ध्यम् । प्रियतिसेति । अङ्गविशेषणत्वेऽत्राव्याप्तिः स्यादिति भावः । प्रिया जस् त्रि जसिति स्थिते 'अन्तरङ्गानपि' इतिन्यायेन विभक्तिलुकि पुनः सुपि तदन्तविधिना निर्दिश्यमानपरिभाषया त्रिशब्दस्यादेशः । ततो "नद्यृतश्च"इति कप्तु न । समासार्थालौकिकवाक्ये ऋकारान्तोत्तरपदत्वाभावात्* । "ऋदुशन"इत्यनङ् । प्रियतिसृणी इत्यादि । अत्र नुमः परत्वात्तिस्रादेशे पुनः प्रसङ्गविज्ञानेन नुम् । "न तिसृ" इति ज्ञापकेन सामान्यत आगमविषये रादेशो नेति ज्ञाप्यते । "प्रत्ययोत्तर"इति सूत्रे चेमौ भाष्ये प्रयोगौ ।

द्वेरत्वे इति । बहिरङ्गासिद्धत्वन्तु "न यासयोः" इति निर्देशेनानित्यत्वान्न प्रवर्त्तते । विभक्ताविति । "युवोरनाकौ"इत्यत्र भाष्ये पाठात्, ङ्याप्सूत्रे तत्परिभाषादोषेषु पाठाच्च । "सख्यशिश्वी"इति ङीप् । "यस्येति च" इतीकारलोपः ।

---

कृतबहिरङ्गत्वस्य स्वीकारे तिसृणामित्यादौ स्त्रीत्वरूपार्थनिमित्तकत्वेन तिस्रादेशस्य बहिरङ्गत्वेनासिद्धत्वात्पूर्वं त्रयादेशे नुटि दीर्घे च लक्ष्येलक्षणस्येतिन्यायेन पुनर्दीर्घाप्रवृत्त्या 'न तिसृचतसृ'इतिनिषेधवैयर्थ्येनेत्यर्थः ।

*त्रयादेश इति* । इदमुपलक्षणं नुड्दीर्घयोरपि । *ऋकारान्तोत्तरपदत्वाभावादिति* । "नद्यृतश्च"इत्यत्र नदीसाहचर्येणालौकिकप्रक्रियावाक्ये ऋदन्तोत्तरपदकसमास एव कप्प्रवृत्तेः । अन्तरङ्गपरि-

लक्ष्मीरिति । "कृदिकारात्" इति ङीषि लक्ष्मीत्यपि । स्त्यायतो ऽस्यां शुक्रशोणिते इति स्त्री । स्त्यायतेर्ड्रट्, टिलोपयलोपौ, टित्वात् ङीप् । इयङिति । स्त्रीशब्दस्येकारान्तत्वादियङेवात्रानुवर्तते इति भावः ।

गुणनेति । "जसि च"इति गुणः। "आङो ना""अच्च घेः""ह्रस्वनद्यापः"इत्येतैरित्यर्थः। बाध्यते इति । स्त्रीशब्दस्येयङ् इत्यनेनान्वयः। नुम्-"इकोचि" इति । पूर्वकारिकोक्तैर्बाधे सति यत्फलितं तदाह—ओस्याविति । अजादौ य इयादेशो विहितः स उपसर्जने पुंसि विद्यमानस्य (स्त्रियाः) स्त्रीशब्दस्यौसादिषु चतुर्ष्वेव, न त्वन्यत्र, गुणादिभिर्बाधादिति भावः। पुंवद्भावादिति । "तृतीयादिषु भाषितपुंस्कम्"इत्यनेनेति भावः । ननु ह्रस्ववाक्येऽप्यस्त्रीत्यस्य संबन्धेन स्त्रीशब्दावयवभिन्नह्रस्ववर्णान्तादित्यर्थेन कथमत्र प्राप्तिरत आह—अस्त्रीति । तत्र बीजमाह—तत्संबद्धस्यैवेति। प्रसज्यप्रतिषेधस्तु न, वाक्यभेदाद्यापत्तेः । नन्वियङुवङ्स्थानावित्यनेनापि ह्रस्वस्य निषेधः किं नेत्यत आह—दीर्घस्यायमिति । तत्र ह्रस्वपदाभावादिति भावः। श्रयन्त्येतामिति श्रीः । "क्विब्वचि"इत्यादिना वागित्यत्रेव कर्मणि क्विब्दीर्घौ । अङ्यन्तत्वान्न सुलोपः ।

नेयङु ॥ ङ्द्वयोच्चारणं स्पष्टार्थम् । स्थानशब्दो भावल्युडन्तः । इयङुवङोः स्थानं स्थितिर्ययोरिति बहुव्रीहिः । सा च बाधकाविषये एव। तेन प्रकृष्टा धीः प्रधीः प्रध्यै इत्यादौ न निषेधः । सा चोपलक्षणं व्याख्यानात् । तेन हे श्रीरित्यादौ निषेधसिद्धिः । श्रियावित्यादौ तत्स्थितिसत्त्वात् । यत्र नदीकार्याश्रये ऽङ्गे बाधकाबाधितेयङादिस्थितिः क्वचित् दृष्टा तस्य तदवयवस्य च निषेध इति फलि-

---

भाषयाऽन्तरङ्गे कपि कर्तव्ये विभक्तिनिमित्तकत्वेन बहिरङ्गत्वेन तिस्रादेशस्यासिद्धत्वाच्च । एतेन समासार्थालौकिकविग्रहवाक्ये समासत्वाभावारोपणे कुण्डोध्नीत्यत्र कबापादनपरभाष्यविरोधादिदं चिन्त्यमित्यपास्तम् । समासार्थालौकिकविग्रहवाक्ये एव च कप्प्रवर्तत इत्युक्त्वा बहुकुमारिकेत्यादौ "गोस्त्रियोः"इति ह्रस्वो न। न च बहु जस् कुमारी जस् इत्यस्यां दशायां परत्वात्कपि स्त्रीप्रत्ययान्तप्रातिपदिकत्वाभावाद् ह्रस्वो न भवत्येवेति वाच्यम्। समासान्ते जाते यदागमपरिभाषया कब्विशिष्टे स्त्रीप्रत्ययान्ततदादित्वस्य प्रातिपदिकत्वस्य च सत्त्वेन निर्दिश्यमानपरिभाषया ह्रस्वस्य प्रवृत्तेर्दुर्वारत्वात् ।

तम्*। अत एव प्रकृष्टा धीर्यस्या, यस्य वा प्रधीरित्यत्रावयवधीशब्दस्य नदीत्वं भवत्येव। तदुक्तं भाष्ये "अवयवस्त्रीविषयत्वात्सिद्धमिति-चेदियङुवङ्स्थानप्रतिषेधे यण्स्थानयोरपि य्वोः प्रतिषेधः प्राप्नोति, अवयवस्येयङुवङ्स्थानत्वात्। आध्यै प्रध्यै। सिद्धं त्वङ्गरूपग्रहणात्। यस्याङ्गस्येयुवौ भवतस्तस्येदं ग्रहणम्। न चैतस्याङ्गस्येयङुवङौ भवतः" इति। श्रियै इति। ङिति ह्रस्वश्चेति विकल्पः।

वामि ॥ आमीतिच्छेदः। प्रधीशब्दस्येति। प्रकृष्टं ध्यायतीत्यर्थकस्येत्यर्थः। वृत्तिकारादीनामिति। अयं भावः—भाष्ये आध्यै प्रध्यै इत्यादावियङ्स्थानत्वान्निषेधमाशङ्क्य यत्र नदीकार्याश्रयेऽङ्गे इत्युक्तरीत्या समाहितम्। तत्र न बहुव्रीहिः, कबापत्तेः। किं तु प्रकृष्टं ध्यायतीत्याद्यर्थकं तत्। तत्र *कैयटोक्तनित्यस्त्रीत्वाभावेन नदीत्वाप्राप्त्या भाष्यासङ्गतिः। अतः "स्त्रीविषयावेव यौ यू नित्यम्"इत्यत्र भाष्ये एवकारो भिन्नक्रमः। नित्यमेव यौ स्त्रीविषयावित्यर्थः। नित्यमेवेत्यस्य पदान्तरं विनापीत्यर्थः। खलपूकटप्रूग्रामणीत्यादीनां क्रियाशब्दतया पुंसि मुख्या वृत्तिः। पुंसः खल्वयमुचितो धर्मः, शक्तत्वाद्भयरहितत्वाच्च। अतस्तेषां न पदान्तरं विना स्त्रीवृत्तित्वम्। ध्यानादि तु स्त्रीपुंससाधारणमिति। अत्रारुचिबीजन्तु सूत्रभाष्याद्यक्षरैरीदृशनित्यस्त्रीत्वालाभः। भाष्योदाहरणे बहुव्रीहिरेव। कप्तु न। ऋकारसाहचर्येण यस्य वृत्तेः प्राग्नदीत्वं तदुत्तरपदके एव तत्प्रवृत्तेः। धीशब्दस्येयङ्स्थानत्वेन प्राङ्नदीत्वनिषेधात्। गतिपूर्वकत्वाद्यणपि सुलभः। "आ-

---

*फलितमिति*। न च प्रधीरित्यादौ धीरूपे ऽङ्गे इयङ्सिद्धेः क्वचिद् दृष्टत्वेन पुनरपि दोषस्तदवस्थ एवेति वाच्यम्। अजादिविभक्तिपरत्वप्रकारकसम्भावनाप्रयोज्या यस्मिन्नङ्गे इयङुवङ्प्रवृत्तिसम्भावना तस्य तदवयवस्य च नदीसंज्ञा न भवतीत्यर्थेनादोषात्। यदङ्गावयवयोर्नदीसंज्ञानिषेधश्चिकीर्षितस्तदुत्तरमजादिप्रत्ययं सम्भाव्य यस्मिन्नङ्गे इयङुवङौ सम्भाव्येते तस्य तदवयवस्य च नदीसंज्ञा नेति फलितम्। *कैयटोक्तनित्यस्त्रीत्वे इति*। स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्व-स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व-स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारताऽप्रयोजकत्वैतत्रितयसम्बन्धेन प्रवृत्तिनिमित्तविशिष्टा या शक्तिः (स्वपर्याप्त्यधिकरणत्व-स्वज्ञानाधीनोपस्थिति-प्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वैतदुभयस-

द्ध्यै इति चिन्त्यमेतत्, क्रियाशब्दत्वेन *नित्यस्त्रीत्वाभावात्'' इति कैयटस्तु चिन्त्य एवेति दिक् ।

लक्ष्मीवदिति । स्त्रियामिति शेषः । पुंवद्रूपमिति । उक्तविग्रहे नित्यस्त्रीत्वाभावात् पुंसीव स्त्रियामप्यनदीत्वादिति भावः । प्रकृष्टा धीरिति विग्रहे इति । ईदृशपदघटितविग्रहे इत्यर्थः । तेन कर्मधारये बहुव्रीहौ च सर्वलिङ्गेऽपि मतद्वये ऽपि लक्ष्मीवत् । ''प्रथमलिङ्गग्रहणश्च''इत्यवयवधीशब्दस्य नदीत्वात् । ''नेयङ्''इति निषेधस्योक्तरीत्या प्राप्त्यभावादिति भावः । विशेष इति । लक्ष्मीशब्दापेक्षयेत्यर्थः । श्रीवदिति । स्त्रियामिति शेषः । विशिष्टस्यापीयङ्स्थानत्वेन ङिदामोर्विकल्पस्यान्यत्र निषेधस्य च प्राप्तेरिति भावः । पुंसि त्वीदृशबहुव्रीहावपि न नदीत्वम् । नेयङिन्त्यवयवस्य निषेधात्, समुदायस्याप्राप्तेश्च । पुंवदिति । 'सुष्ठु ध्यायतीति विग्रहे' इति शेषः । तस्य नित्यस्त्रीत्वाभावेन पुंसीव स्त्रियामप्यनदीत्वादिति भावः । इति विग्रहे त्विति । ईदृशपदघटितविग्रहके स्त्रीलिङ्गबहुव्रीहौ कर्मधारये चेत्यर्थः । तत्र बहुव्रीहावव्यवस्य ''नेयङ्''इति निषेधः ङिति तु समुदायस्य विकल्प इति बोद्धव्यम् ।

स्त्रियाश्च ॥ अत्र'असंबुद्धौ सर्वनामस्थाने' इति न संबध्यते । आरम्भसामर्थ्यात् । ऋन्नेभ्य इति । तदन्तशब्दानां बहुत्वाद् बहुवचनम् । प्रातिपदिकाविशेषणत्वात्तदन्तविधिः । स्त्रियामिति चाधिकारः । क्वासि हे सुभ्रु इति । रावणेन सीताऽपहारोत्तरं रामविलापोऽयम् । विधिना त्वया हापितस्त्याजितः सः ''हे सुभ्रु क्वासि''इत्येवं बहु विललापेत्यर्थः । ''नेयङ्''इत्यनेनावयवस्य समुदायस्य च नदीत्वनिषेधात्प्रश्नः । प्रमाद इति । विरहपीडितत्वेनानवधानलक्षणोऽत्र प्रमादः । स च विरहपोषकत्वात्काव्ये गुणः ।

एकाजुत्तर । एकोऽच् यस्मिन्, तादृशमुत्तरपदं यस्येति सूत्रे बहुव्रीहिगर्भो बहुव्रीहिः । उत्तरपदे इत्यनेनास्य वाक्यस्य समासपदघटितवाक्यैकदेशत्वानुमानात्समासो विशेष्य इत्याह—तस्मिन्समासे

---

म्बन्धेन) तादृशशक्तिविशिष्टत्वरूपनित्यस्त्रीत्वेत्यर्थः ।

*नित्यस्त्रीत्वाभावादिति* । निरुक्तनित्यस्त्रीत्वाभावादित्यर्थः ।

इति। आरम्भेति। "प्रातिपदिकान्त"इत्यनेन विकल्पेन णत्वे सिद्धे इत्यर्थः। पुनरिति। णग्रहणे ऽनुवर्त्तमाने इत्यर्थः। यणामिति। "इग्यणः" इति यणामित्यर्थः। भेकजातावित्येति। "शिली गण्डूपदी भेकी वर्षाभ्वी कमठी डुलिः"इत्यमरादस्य बाह्वादित्वेन वा ङीषिति भावः।

अन्ये त्वस्य गौरादिपाठान्नित्यमेव ङीष्। 'भेक्यां पुनर्नवायां स्त्री' इति यादवस्य-'सुतः पुत्रः स्त्रियामप्यमी आहुर्दुहितरम्'इतिवत् नित्यङ्यन्तत्वे ऽप्युपपत्तेरित्याहुः। गौरादित्वादिकल्पने मानाभावात् अमरे 'वर्षाभूः कमठी डुलिः'इत्येव पाठ इति सुबोधिनीकार इति माधवः। तदनुसारेण मूलं बोद्ध्यम्।

टाब्ङीपौ न स्त इति।*"स्त्रियां यत्प्राप्नोति तन्न"इति व्याख्यानादिति भावः। स्वस्रादिषु मातृशब्दस्य ननान्द्रादिसाहचर्यात्प्रसिद्धत्वाच्च* सस्सम्बन्धिकजननीवाचकस्यैव ग्रहणम्। सन्निपातपरिभाषयैव तिसृचतस्रोर्ङीब्भावे सिद्धे तदनित्यत्वज्ञापनार्थन्तयोर्ग्रहणमिति केचित्। स्वस्रादिषु तिसृचतस्रोः पाठो ऽनार्ष इति कुन्मेजन्तसूत्रस्थभाष्यस्वरसः।

इत्यजन्ताः स्त्रीलिङ्गाः॥

अतोऽम्। अत इत्येतत् अधिकृतस्याङ्गस्य विशेषणम्। 'स्वमोर्नपुंसकात्'इति चानुवर्तते। अम् लुग्बाधको *येन नाप्राप्त इति न्यायात्। 'अ-

---

*स्त्रियां यत्प्राप्नोति इति*। "न षट्स्वस्रादिभ्यः"इत्यत्र "टाबृचि"इत्यतष्टापः, "ऋन्नेभ्यः"इत्यतो ङीपश्चानुवृत्त्योभयनिषेधेन, "डाबुभाभ्याम्"इत्यत्र"न षट्स्वस्रादिभ्यः" इत्यनुवृत्त्या डापो निषेधाच्चेति भावः। *प्रसिद्धत्वाच्चेति*। अवयवशक्तिग्रहानधीनशक्तिग्रहाधीनोपस्थितिविषयार्थे एव लाघवात् तात्पर्यकल्पनं युक्तमित्येतन्मूलिकया "अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी" इति परिभाषयेत्यर्थः॥

*इत्यजन्ताः स्त्रीलिङ्गाः॥

*येन नाप्राप्त इति न्यायादिति*। "स्वमोर्नपुंसकात्"इत्येतदप्राप्तियोग्ये चारितार्थ्याभावविशिष्टा कृतेचारितार्थ्याभावविशिष्टा स्वमोर्नपुंसकादित्येतत्प्रवृत्तिसम्भावनाप्रयोज्या याऽतोऽमितिशास्त्रवैयर्थ्यसम्भावना तादृशसंभावनारूपतृतीयबाधबीजस्य "अतोऽम्"इत्यत्र सत्त्वादिति भावः। एतन्न्यायविषये च "अतोऽम्"इत्येतत्प्रवृत्तियोग्यातिरिक्तत्वेन "अतोऽम्"इतिशास्त्रविधेयघटितातिरिक्तत्वेन च "स्वमोर्नपुंसकात्"इत्यत्र सङ्कोचो भवतीत्यतोऽमित्येतत्प्रवृत्तेः प्राक् तत्प्रवृत्त्यनन्तरं च ज्ञानमित्यादौ "स्वमोर्नपुंसकात्"इति लुग्न भवतीति बोध्यम्।

म्' इतिच्छेदो न तु 'म्'इति* । ज्ञानमित्यादौ "सुपि च"इति दीर्घापत्तेः। सन्निपातपरिभाषया दीर्घवारणे तु* हेज्ञानेत्यादौ सम्बुद्धिलोपस्यानापत्तिः । मनिमित्तस्य प्रकृतिप्रत्ययसन्निपातस्य प्रत्ययलोपेन विनाशात् । अत एव "एङ्ह्रस्वात्"इति सूत्रे ज्ञानेत्यादौ मलोपाय, कतरादित्यादौ लोपाभावाय चाङ्गाक्षेपव्याधिकरणान्वयह्रस्वपदानुवृत्तय आस्थिता भाष्ये, न तु 'म्' इतिच्छेद उक्त इत्यलं भाष्यविरुद्धकल्पनयेति दिक् ।

"जसः शी" "औङ आपः" इत्याभ्यां शी, औङ इति चानुवर्त्तते तदाह—क्लीबादित्यादि ।

यस्येति च । इश्चाश्च यं तस्येत्यर्थो व्याख्यानात् । भस्येत्यधिकारः, तेन "नस्तद्धिते"इत्यतः 'तद्धित'इत्यनुकृष्यते तदाह—भस्येत्यादि । भस्येति किम् । गर्गरूप्यम् । औङः श्यामिति । इत एव निर्देशादस्य नित्यस्त्रीत्वं बोद्धव्यम् । औङ इति स्वरूपकथनं 'सर्वे' इत्यस्य भाधिकारेण सिद्धेः ।

---

*न तु मितीति* । अव्यवहितैकहलादेशस्यास्मिन्शास्त्रे ऽदर्शनादित्यर्थः । *वारणे त्विति* । वस्तुतस्तु सुलुनी इत्यादौ नुम्प्रवृत्तये सन्निपातपरिभाषाया अनित्यत्वेऽपि सुलु इत्यादौ ह्रस्वस्येति तुगापत्त्या "ह्रस्वो नपुंसके"इत्यत्र सामान्यतः "सन्निपातपरिभाषाप्रयोज्यः सङ्कोचो नास्ति"इति वक्तुमशक्यत्वेन यथा सङ्कुचितसङ्कोचस्यैवावश्यमङ्गीकर्तव्यत्वं तथा "गुणात् सम्बुद्धेः"इत्येव वक्तव्ये "एङ्ह्रस्वात्"इति करणेन सन्निपातपरिभाषाया अनित्यत्वस्यावश्यकत्वेऽपि कष्टायेति निर्देशेन ङेर्य इत्यत्र स्वप्रवृत्त्युत्तरकालिकप्रवृत्तिमत्सुपिचेतिशास्त्रातिरिक्तस्वोपजीव्यविघातकातिरिक्तेन शास्त्रेणत्यवं संकोचेऽपि च अतोऽमित्यस्यनुज्ञावाक्ये स्वप्रवृत्त्युत्तरकालिकप्रवृत्तिमदेङ्ह्रस्वादित्येतदतिरिक्तस्वोपजीव्यविघातकातिरिक्तेन शास्त्रेण यस्य साधुत्वं बोध्यते तदपि साध्वित्येवं सङ्कुचितसङ्कोचे 'म्'इति छेदे ज्ञानमित्यादौ"सुपि च"इति दीर्घो वारयितुं शक्य इति सन्निपातपरिभाषया प्रकृते दीर्घवारणे हे ज्ञानेत्यादौ दोषोद्भावनं न युक्तमिति बोध्यम् ।

अन्ये तु "सुपि च" इत्यत्र विघातकशास्त्रे कष्टायेति निर्देशेन "ङेर्यः" इत्येतदतिरिक्तस्वोपजीव्यविघातकत्वाभाववान् दीर्घो भवतीति संकोचे, गुणात्सम्बुद्धेरित्येव वक्तव्ये एङ्ह्रस्वग्रहणेन च अतोऽमित्येतदतिरिक्तस्वोपजीव्यविघातकत्वाभाववान् लोपो भवतीति "एङ्ह्रस्वात्"इत्यत्र च सङ्कोचे च सुपिचेत्यत्र 'अतोम्'इत्येतदतिरिक्तस्वोपजीव्यविघातकत्वाभाववान् दीर्घो भवतीत्येवंसंकोचाभावात् ज्ञानमित्यादौ सन्निपातपरिभाषया न दीर्घः । नापि

जश्शसोः । शस् अत्र सुबेव, व्याख्यानात्* ।

नपुंसकस्य । इदितो नुम् इत्यतो नुम् इति, सर्वनामस्थान इति चानुवर्त्तते । अङ्गस्येति च प्रकृतम् । तच्च झलज्भ्यां विशेष्यते । नपुंसकस्येति श्रूयमाणस्याभावादङ्गस्यैव विशेषणम् । "अस्थिदधि"इत्यादौ तु श्रूयमाणस्यैव । प्रकरणात् श्रुतेर्बलवत्त्वात्* । अत एव "त्रिचतुरोः"इत्यत्र स्त्रियामिति॰ तयोरेव विशेषणमित्याकरः । उपधादीर्घ इति । "सर्वनामस्थाने चासंबुद्धौ"इत्यनेनेति भावः । शेषामिति । कर्मणि घञ् । "घञजपः पुंसि" इति प्रायोवादः ।

अद्ड्डु । द्ड्डेति पाठः । दस्य ष्टुत्वं, डस्य संयोगान्तलोपश्चाऽऽदेशस्वरूपभङ्गभिया न कृत इति कैयटः* । पञ्चभ्य इति अधिकव्यवच्छेदाय । अस्य सर्वाद्यन्तर्गणत्वात् ।

परे तु डतरादिभ्य इति विरुद्धाविभक्तिपञ्चम्यन्तत्वादङ्गस्येत्यनेनान्वयानर्हमिति *डतरादिभ्यो विहितयोः स्वमोरङ्गसंज्ञानिमित्तयोरित्यर्थ इति सर्वादिसूत्रे भाष्ये स्पष्टम् । एवञ्च *परमकतरं कुलमित्यादौ नाद्ड् ।

यत्तु कैयटेनार्थद्वारकं विधानमाश्रयितव्यम् । तेन परमकतरदित्युक्तम् । तन्न । तस्य यदि डतराद्यर्थगतसंख्याभिधायिन इत्यर्थस्तदा पञ्चम्यन्तात्तादृशार्थप्रतीत्यसम्भवः । यदि षष्ठ्यर्थे पञ्चमी, तदा 'विरुद्धविभक्तित्वात्'इतिभाष्यासङ्गतिः, विधानस्य सर्वथाऽनाश्रयेणनार्थद्वारकं विधानमिति तद्ग्रन्थासङ्गतिश्च । न

---

हेज्ञान इत्यादौ सन्निपातपरिभाषया संबुद्धिलोपानापत्तिः । तथा च "म्" इतिच्छेदे न कोऽपि दोषो, न चेङ्न्ह्रस्वादित्यत्राङ्गाक्षेपवैयधिकरण्यान्वयहल्पदानुवृत्तिक्लेशा इत्याहुः ।

*व्याख्यानादिति* । जस्साहचर्यादिति भावः । *बलवत्त्वादिति* । "श्रुतानुमितयोः श्रुतसम्बन्धो बलीयान्"इति परिभाषयेति भावः । *कैयट इति* । अत्रारुचिबीजन्तु हलनुबन्धात्प्रागचोऽज्रूपस्यानुबन्धस्य वा सर्वत्र दर्शनेन प्रकृतेऽपि अकारानुबन्धसहितादडित्येव पाठः सम्यगिति । *डतरादिभ्यो विहितयोरिति* । डतरप्रत्ययान्ततदादि—डतमप्रत्ययान्ततदादि-अन्य-अन्यतर-इतर-इत्येतेभ्यो विहितयोः स्वमोरदड् इति, अङ्गाभिन्नेभ्यो डतरान्ततदादि-डतमान्ततदादि-अन्य-अन्यतर-इतर-इत्येतेभ्यः परयोः स्वमोरद्डिति वाऽर्थ इति भावः । एतादृशार्थकरणस्य फलमाह—*परमकतरं कुलमित्यादौ नाद्डिति* ।

चैतदर्थे उपसर्जनप्रतिषेधारम्भो व्यर्थः स्यादिति वाच्यम् । तत्प्रत्याख्यानायैवैतद्भाष्यप्रवृत्तेः । परमकतरादिव्यावृत्तये ऽवश्याश्रयणीयविहितविशेषणेनैवातिकतरादिव्यावृत्तौ स व्यर्थ इति तदाशयः । "त्यदादीनामः" इत्यत्र षष्ठ्यन्तत्वात्यदादीनामित्यर्थद्वारकं विभक्तिविशेषणम्, "अस्थिदधि" इत्यादावङ्गं तथा तद्विशेषणं व्याख्यानादित्यपि तत्रैव भाष्ये स्पष्टमित्याहुः* ।

डित्त्वफलमाह—टेः । "ति विंशतेः" इत्यतो डितीति वर्त्तते, भस्येति चाधिकृतम् । पञ्चम इति । डटो मटि भत्वाभाव इति भावः । अन्यतमस्येति । डतरादिष्वपाठादिति भावः । एकतरमिति । "एकाच्च प्राचाम्" इति डतरच् । एकतमस्य त्वेकतमदित्येव । परत्वादिति । नुमपेक्षयेति शेषः । शब्दान्तरप्राप्त्या झलन्ताजन्तलक्षणभेदाच्च नुमप्यनित्य इति भावः ।

केचित्तु शिभावात्परत्वाज्जरसि ततः शौ झलन्तत्वान्नुमित्यर्थमाहुः । अत्र यद्वक्तव्यं तद् निर्जरशब्दे उक्तम्* ।

सान्तमहतः । सान्तेति लुप्तषष्ठीकं पृथक् पदं संयोगस्ये-

---

*इत्याहुरिति* । परे तु "संज्ञोपसर्जन" इतिप्रतिषेधकवार्त्तिकसत्त्वे सर्वस्मै, परमसर्वस्मै, अतिसर्वाय, कतरत्, अतिकतरम् इत्यादि रूपाणि भवन्ति । तत्प्रत्याख्यानेऽपि फलैक्याय तथैव रूपाणि यथा भवेयुस्तथा वक्तव्यम् । त्वद्रीत्याऽङ्गाधिकारे यदुच्यते इति प्रत्याख्यानकल्पे "सर्वादीनि" इत्यत्र यदि तदन्तविधिरस्ति तदा अतिसर्वाय,अतितत्, अतिकतरम इत्यादौ दोषो दुरुद्धरस्स्यात् । यदि तदन्तविधिर्नास्ति तदा 'परमसर्वे परमसर्वस्मै' परमसर्वस्मात्, परमसर्वेषां, परमसर्वस्मिन्, परमसर्वत्र, इत्यादिरूपाणि न सिद्ध्यन्तीति "गृह्यमाणविभक्तेः" इत्यस्य गृह्यमाणार्थगतसंख्याभिधायिविभक्तौ परतः, गृह्यमाणार्थगतसंख्याभिधायिविभक्त्योश्च तत्कार्याणि भवन्तीत्युपलक्षणतया निरुक्तभाष्यस्यावश्यं व्याखयेयत्वेन 'परमकतरमित्येव भवति न तु परमकतरत्' इति तदुक्तिः साहसमात्रमेव । "अद्ड्डतरादिभ्यः" इत्यस्य डतरान्ततदादि–डतमान्ततदादि–अन्य–अन्यतर–इतरेत्येतदर्थगतसंख्याभिधायिनौ तदव्यवहितोत्तरौ च यौ स्वमौ तयोरद्ड् इत्यर्थः । एवं "सप्तम्यास्त्रल्" इत्यादेः सर्वनामार्थगतसंख्याभिधायिनी या सप्तमी सर्वनामोत्तरा च तदन्ततदादेस्त्रलादिर्भवतीति 'अतिसर्वाय' 'अतिकतरम्' इत्यादौ कुत्रापि प्रत्याख्यानकल्पे न दोष इति प्राहुः ।

*निर्जरशब्दे उक्तमिति* । अत्र यद्वक्तव्यं तदस्माभिस्तत्रैवोक्तमिति बोध्यम् ।

त्यनेन समानाधिकरणम् । नोपधायाः, सर्वनामस्थाने चासंबुद्धावित्यनुवर्त्तते तदाह—सान्तसंयोगस्येत्यादि । उपधाग्रहणञ्च पूर्वत्वमात्रोपलक्षणम् । पारिभाषिकार्थस्येहासंभवात् । सर्वनामस्थान इति सान्तसंयोगस्य विशेषणम् । अत एव हंसशिरांसीत्यादौ न दोषः । यद्वा अनन्त्यविकारे ऽन्त्यसदेशस्येति न दोषः ।

मांस्पचन्या इति । मांसस्य पचनीत्यर्थः । "मांसस्य पचियुड्घञोः"इत्यप्येतत्सिद्धार्थानुवाद एव । शब्दत्वेन च सादृश्यं, "न लुमता'इत्यस्य च नित्यत्वमित्यभिमानः । वृत्त्ताविति । भाष्यस्वरसस्त्वननुवृत्ताविति भावः । मासश्छन्दसीति । मासस्तकारः स्याद्भादौ प्रत्यये छन्दसीत्यर्थः । 'माद्भिः शराद्भिर्दुरोदरं तव' इत्युदाहरणम् ।

ह्रस्वो नपुंसके । क्लीबवदर्थे वर्त्तमानस्याजन्तस्येत्येव सामर्थ्यात्प्रातिपदिकलाभे प्रातिपदिकस्येत्येतत्सत्त्वप्रधानस्येत्यर्थकम्* ।

---

*सत्त्वप्रधानस्येत्यर्थकमिति* ननु 'वारिणी'इत्यादौ ह्रस्ववारणाय प्रातिपदिकग्रहणं सूत्रे चरितार्थम् । नच तत्र श्यादेशे ईकारोच्चारणसामर्थ्यादेव ह्रस्वो न भविष्यतीति वाच्यम् । तथापि वारिणे वारिणा इत्यादौ ह्रस्ववारणाय प्रातिपदिकग्रहणस्य चरितार्थत्वात् इति चेन्न । अर्थवत्सूत्रात्प्रातिपदिकग्रहणमनुवर्त्य षष्ठ्या विपरिणामेनोक्तदोषवारणेन प्रातिपदिकग्रहणवैयर्थ्यस्य तदवस्थत्वात् । "ह्रस्वो नपुंसके"इत्यस्य नपुंसकत्वशक्तिपर्याप्त्यधिकरणस्याजन्तस्य ह्रस्वो भवतीत्यर्थेन निरुक्तदोषवारणेन प्रातिपदिकग्रहणस्य वैयर्थ्योपपादनं तु न युक्तम् । वैयाकरणमते सुबन्तपदे शक्तिपर्याप्त्यधिकरणत्वस्य सत्त्वेनोक्तदोषवारणस्य कर्तुमशक्यत्वात् । न च प्रातिपदिकग्रहणे ऽनुवर्तमाने पुनः प्रातिपदिकग्रहणादनतिदिष्टप्रातिपदिकस्यैव ग्रहणमिति कैयटरीत्या, "सप्तम्यधिकरणे चेति निर्देशाद् विभक्त्यकृादेशो नान्तवत्" इति दीक्षितरीत्या च काण्डे इत्यादौ दोषाभावात् 'सत्त्वप्रधानस्यैव ह्रस्वो भवति' इति निष्फलमिति वाच्यम् । दोषाभूतमहः इत्यादौ च्विप्रत्ययान्तदोषाशब्दस्य विकारवाचकाहःशब्दसामानाधिकरण्येन नपुंसकवृत्तित्वस्य सत्त्वेन कैयटदीक्षितयोर्मते ह्रस्वस्य दुर्वारतया तत्र दोषवारणाय सत्त्वप्रधानस्यैव ह्रस्वो भवतीत्यवश्यंवक्तव्यत्वात् । सत्त्वप्रधानस्येत्यत्र सत्त्वपदेन लिङ्गान्वयितावच्छेदकं यद्रूपं तद्रूपपुरस्कारेण बुध्यमानं विवक्षितम् । प्रधानत्वं च संसर्गविशेष्योभयवृत्तिः निरवच्छिन्नविशेषणताश्रयावृत्तिर्विशेष्यतासंसर्गताव्यापकीभूतः प्रकारतानिरूपितत्वाख्यः स्वरूपसम्बन्धविशेषः । तथा च सत्त्वप्रधानत्वं यत्किञ्चित्प्रधानतानिरूपितप्रधानत्वासमानाधिकरणलिङ्गान्वयितावच्छेदकरूपावच्छि-

तेन काण्डे इत्यादौ अन्तवद्भावेन प्रातिपदिकत्वेऽपि न ह्रस्वः । विभक्त्यर्थस्य संसर्गत्वेऽपि प्रकृत्यर्थापेक्षया प्राधान्यमस्त्येव । प्रथमाया अपि अन्याभिहितशक्तिरर्थ इति तत्रापि तत्संसर्गको बोध इति तस्याः प्राधान्यम् । काण्डे तिष्ठत इत्यादावाख्यातार्थकर्त्तुः कर्त्तृक्रियाभावेन क्रि-

---

न्नप्रधानताप्रयोजकत्वम् । काण्डे इत्यादौ सप्तम्यर्थसंसर्गनिष्ठप्रधानतानिरूपिताप्रधानत्वसामानाधिकरण्यमेवं लिङ्गान्वयितावच्छेदककाण्डत्वरूपावच्छिन्नप्रधानतायामिति नोक्तं सत्त्वप्रधानत्वम् ।

नन्वेवं श्रीपपुत्र इत्यादौ ह्रस्वो न स्यात् । लिङ्गान्वयितावच्छेदकश्रीकर्मकपालनकर्तृत्वावच्छिन्नप्रधानतायां जन्यजनकभावसंसर्गनिष्ठप्रधानतानिरूपिताप्रधानतासामानाधिकरण्यस्य सत्त्वात् । एवं श्रीपं कुलं, सुलु पश्येत्यादावपि ह्रस्वो न स्यात्; कर्मत्वादिसंसर्गनिष्ठप्रधानतानिरूपिताप्रधानतासामानाधिकरण्यस्यैव तत्तदवच्छिन्नप्रधानतायां सत्त्वात् इति चेन्मैवम् । यस्य ह्रस्वश्चिकीर्षितस्तत्पर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावती या प्रधानता तादृशप्रधानतानिरूपिताप्रधानताऽसमानाधिकरणा या लिङ्गान्वयितावच्छेदकरूपावच्छिन्नप्रधानता, तादृशप्रधानताप्रयोजकतापर्याप्त्यधिकरणत्वं सत्त्वप्रधानत्वमिति परिष्कारेणादोषात् । श्रीपपुत्रः, श्रीपं कुलं, सुलु पश्येत्यादौ संसर्गनिष्ठप्रधानताप्रयोजकतापर्याप्त्यधिकरणत्वस्य विनिगमनाविरहेणोपस्थापकशक्तेरानुभाविकशक्तेश्च समासे वाक्ये च कल्पनेन तत्रैव सत्त्वात् यस्य ह्रस्वश्चिकीर्षितस्तत्र संसर्गनिष्ठप्रधानताप्रयोजकत्वस्याभावेन तत्प्रयोज्यप्रधानतानिरूपिताप्रधानताऽसामानाधिकरण्यस्य लिङ्गान्वयितावच्छेदकरूपावच्छिन्नप्रधानतायां सत्त्वेन प्रकृते सत्त्वप्रधानत्वस्याव्याहतत्वात् ।

न च श्रीपपुत्र इत्यादौ समासात् प्रागेवान्तरङ्गत्वाद्ध्रस्वः स्यादिति अयं प्रयासो विफलः, पदावधिकान्वाख्याने श्रीपं कुलमित्यादौ दोषाभावाच्चेति वाच्यम् । श्रीपपुत्र इत्यादौ समासे लुकि च निरुक्तसत्त्वप्रधानत्वाभावेन लुक्यन्तरङ्गनिमित्तविनाशकत्वस्य सत्त्वात् 'अन्तरङ्गानपि'इति परिभाषया पूर्वं ह्रस्वाप्रवृत्तौ समासोत्तरञ्च पूर्वोक्तरीत्या सत्त्वप्रधानत्वस्याभावेन ह्रस्वाप्राप्त्यैतादृशपरिष्कारस्यावश्यकत्वात् । न च 'यः शिष्यते स लुप्यमानार्थाभिधायी'इति न्यायेन सुलु कुलमित्यादौ संसर्गनिष्ठप्रधानताप्रयोजकतापर्याप्तेः सुलित्यत्र सत्त्वात्पुनरप्युक्तसत्त्वप्रधानत्वस्याभावात्तद्दोषतादवस्थ्यमिति वाच्यम् । यस्य ह्रस्वश्चिकीर्षितस्तत्पर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावदुपस्थितीयप्रधानतानिरूपिताप्रधानत्वासमानाधिकरणा या लिङ्गान्वयितावच्छेदकरूपावच्छिन्नोपस्थितीयप्रधानता तादृशप्रधानताप्रयोजकत्वं सत्त्वप्रधानत्वमिति परिष्कारेणादोषात् ।

नचैवं काण्डे इत्यादौ काण्डवृत्तिनिरुक्तसत्त्वप्रधानत्वस्य पूर्वान्तवद्भावेनैकादेशविशिष्टेऽतिदेशाद्ध्रस्वो दुर्वार इति वाच्यम् । अर्थघटिताशा-

यायामन्वये तदभिन्नप्रथमार्थस्यापि तेन सम्बन्धेनान्वयात्तस्य प्राधान्यम् । स्पष्टश्चेदं भाष्ये । ज्ञानवदिति । दीर्घान्तत्वप्रयुक्तो न कश्चिद्विशेष इति

---

स्त्रीयत्वेन प्रातिपदिकग्रहणसामर्थ्येन च सत्त्वप्रधानत्वस्य पूर्वान्तिवद्भावेनातिदेशो न भवतीति कल्पनेनादोषात् । अत एव प्रगुनेत्यादौ तृतीयादिष्विति न पुंवद्भावः । भाषितपुंस्कत्वस्यार्थघटिताशास्त्रीयत्वात् । अत एव 'सप्तम्यधिकरणे' इति निर्देशः सङ्गच्छते । एतेन एकत्वस्योक्तिः एकत्वोक्तिरित्यादौ ह्रस्वो दुर्वार इत्यपास्तम् । अपरनिमित्तके ह्रस्वे कर्तव्ये बहिरङ्गत्वेन एकादेशस्यासिद्धत्वाच्च ।

अन्ये तु स्वावच्छिन्नप्रकारतानिरूपितविशेष्यताकशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वं,—निरुक्तपर्याप्त्यधिकरणेतरत् यत् स्वावच्छिन्ननिरूपितसंसर्गताकशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणं तद्घटितत्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वम्—एतदुभयसंबन्धेन लिङ्गान्वयितावच्छेदकरूपविशिष्टत्वमेव सत्त्वप्रधानत्वम् । काण्डे इत्यादौ प्रथमसंबन्धसत्त्वेऽपि स्वविशिष्टनिरूपिताधिकरणतासंसर्गताकशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यताधिकरण—निरुक्तविशेष्यतापर्याप्त्यधिकरणेतरसप्तमीविभक्ति-घटितत्वस्य सत्त्वेन दलद्वयघटितसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वरूपो द्वितीयसंबन्धो नास्तीति न तत्र दोषः । तत्र प्रथमसम्बन्धानुपादाने दोषाभूतमहरित्यादौ ह्रस्वापत्तिः । तदुपादाने तु न दोषः । अहःशब्दसामानाधिकरण्येन दोषापदस्य लिङ्गविशिष्टार्थबोधकत्वेऽपि तद्वाच्यतावच्छेदकरूपस्य लिङ्गान्वयिताऽनवच्छेदकत्वात् । द्वितीयसंबन्धघटकविशेष्यानुपादाने श्रीपं कुलं, श्रीपपुत्र इत्यादौ ह्रस्वानापत्तिः । निरुक्तविशेष्यतापर्याप्त्यधिकरणेतरलुप्तविभक्तिघटितत्वात् । तदुपादाने तु संसर्गविषयताप्रयोजकत्वस्य श्रूयमाणपदे एव स्वीकारेण तत्राभावात् काण्डे इत्यादौ सप्तम्यादिविभक्तेरेव तत्सत्त्वात्तद्घटितत्वसंबन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्य सुलभत्वान्न दोषः । तदीयविशेषणदलानुपादाने सुलु पश्य श्रीपपुत्र इत्यादौ ह्रस्वानापत्तिः । संसर्गताप्रयोजकत्वस्य श्रूयमाणे एवाङ्गीकारेण तद्घटितत्वस्यैव प्रातिपदिके सत्त्वेन तदघटितत्वाभावात् । तदुक्तौ तु निरुक्तविशेष्यतापर्याप्त्यधिकरणे तदितरत्वस्याभावेन तदितरसंसर्गताप्रयोजकघटितत्वाभावाद् ह्रस्वः सुलभ इत्याहुः ।

परे तु नपुंसकत्वावच्छिन्ननिरूपितशक्तिविशिष्टत्वं क्लीबत्ववदर्थे वर्तमानत्वम् । वैशिष्ट्यं च स्वपर्याप्त्यधिकरणत्व–स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वैतदुभयसंम्बन्धेन । काण्डे इत्यादौ च निरुक्तोभयसंम्बन्धेन शक्तिवैशिष्ट्याभावान्न दोषः । दोषाभूतमहरित्यादावपि तादृशशक्तेरनङ्गीकारान्न दोषः । अभक्षन्यायेन नपुं-

भावः । श्रीपाणीत्यादौ "एकाजुत्तरपदे" इति णत्वं भवत्येवेति बोद्ध्यम् ।

इकोऽचि । सुपीति वक्तव्ये विभक्ताविति चिन्त्यप्रयोजनम्* । विभक्तौ किम् । मधुन इदं माधवम् । हेचारे हेवारीति । अत एव "इकोऽचि" इतिसूत्रस्थम् "इह किंचिन्नपो' इति, "एङ्ह्रस्वात्" इतिसूत्रस्थं 'हेत्रपु' इति च भाष्यं सङ्गच्छते । वृद्ध्यौत्वेति । वृद्ध्यादीनां क्रमेण गावौ, हरौ, क्रोष्टा, हरये इत्यवकाशः, नुमो वारिणी इति ।

तृतीयादिषु* । भाषितः पुमान् येन शब्देनेत्यर्थे पीलुशब्दे ऽतिप्रसङ्गस्तस्माद्भाषितः पुमान् यस्मिन् प्रवृत्तिनिमित्तरूपेऽर्थे इति बहुव्रीहिः । भाषणक्रियया स्वकरणतयाऽऽक्षिप्तशब्दश्च क्लीबेन समानानुपूर्वीकः समानार्थश्च गृह्यते । प्रत्यासत्तेः । ततो ऽर्शआद्यच् । तत्फलितमाह–प्रवृत्तिनिमित्तैक्ये इति । इकोऽचीति, नपुंसकस्येति चानुवर्त्तते । ते च तत्र षष्ठ्यन्ते । अत्रार्थात्प्रथमान्ते । इक इति किम् । श्रीपेण । टादौ किम् । अनादिनी । अयञ्च ह्रस्वनुमोरभावातिदेशः क्लीबत्वविशिष्टार्थवाचकस्य । पुंस्त्वविशिष्टार्थवाचकरूपातिदेशे क्लीबत्वरूपार्थनिवृत्तेस्तत्प्रयुक्तसर्वकार्याप्रवृत्तेरित्यन्यत्र विस्तरः ।

---

सकत्वावच्छिन्नमात्रनिरूपितोद्भूतशक्तिमत्त्वं विवक्षितम् । तेन पदे न दोषः । अत एवात्रत्यं प्रातिपदिकग्रहणं प्रत्याख्यातमित्याहुः ।

*चिन्त्यप्रयोजनमिति* । वारिशब्दादाचारक्विबन्तात् यङ्लुकि ततस्मात् तृजादौ नुमभावार्थं विभक्तावित्यावश्यकमिति केचित् । वारिशब्दादाचारक्विबन्तादाशीर्लिङि 'वारि–इषीष्ट' इति स्थिते नुमर्थे सुपीति विहाय विभक्तावित्युक्तमिति परे ।

*तृतीयादिषु* । यत्प्रवृत्तिनिमित्तं पुंस्त्वस्यान्वयितावच्छेदकं तदेव यत्र नपुंसकत्वस्यान्वयितावच्छेदकं भवति तद्भाषितपुंस्कमित्यर्थः । पीलुशब्दे च वृक्षत्वव्याप्यजातिरूपं पुंस्त्वस्यान्वयितावच्छेदकं, फलत्वव्याप्यजातिरूपं च नपुंसकत्वस्यान्वयितावच्छेदकमिति न तस्य भाषितपुंस्कत्वमिति भावः ।

परे तु भाषितः पुमान् यया शक्त्या सा भाषितपुंस्का, सा विद्यते यस्मिंस्तद्भाषितपुंस्कम् । अर्शआद्यजिति भावः । तत्त्वं च प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वम् । शक्तौ प्रवृत्तिनिमित्तवैशिष्ट्यं च स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताप्रयोजकत्वं–स्वावच्छिन्नविशेष्यतानिरूपितनपुंसकत्वनिष्ठप्रकारताप्रयोजकत्वमेतदुभयसम्बन्धेन । शक्तिवैशिष्ट्यं च स्वपर्याप्त्यधिकरणत्व–स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्य-

अस्थिदधि ॥ नकारादकार उच्चारणार्थः । अनङ उदात्तस्योच्चारणेन सिद्धावुदात्तग्रहणम् 'असति यत्ने उदात्तादिशब्दैरनुपात्तो गुणो ऽविवक्षितः' इति ज्ञापनार्थम्* । त्रिचतुरोरिति सूत्रे तिसृचतस्त्रित्यत्र द्वन्द्वप्रयुक्तेऽन्तोदात्ते कर्त्तव्ये आद्युदात्तनिपातनं विवक्षार्थम्* । निपातनं नामान्यादृशे प्रयोगे प्राप्ते ऽन्यादृशप्रयोगकरणम् । वधादेशेऽपि हन्त्यनुरूपेऽन्तोदात्ते ऽनुदात्ते वोच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थम् । तदुक्तमसति यत्ने इति । परमास्थिशब्दादावन्तोदात्ते उदात्तगुणस्यापि स्थानित्वेनात्र तद्विवक्षायां न मानमिति भाष्ये स्पष्टम् । उदात्तत्वफलं दध्नेत्यादावल्लोपे उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वं, दधनीत्यादौ श्रवणञ्च । ज्ञापनफलन्तु तृन्तृजन्तानां भिन्नस्वरकान्तानाम् ऋदुशनेत्यनेन तत्स्वरकानङ्सिद्धिरिति दिक् ।

तदन्तेति । आङ्गत्वादिति भावः । अत्रापि नपुंसकस्येति संबद्ध्यते । तेन धाञ "आदृगमहन"इति किप्रत्यये दधिनेत्यादौ न । एतच्च गृह्यमाणस्यैव विशेषणम्* । तेनातिदध्ना ब्राह्मणेनेत्यादि सिद्धम् ।

---

धिकरणत्वैतदुभयसम्बन्धेन । पीलुशब्दे च यदि वृक्षत्वव्याप्यजातिरूपं प्रवृत्तिनिमित्तं भ्रियते तर्हि स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताप्रयोजकत्वस्य तदवच्छिन्ननिरूपितशक्तौ सत्त्वे ऽपि स्वावच्छिन्नविशेष्यतानिरूपितनपुंसकत्वनिष्ठप्रकारताप्रयोजकत्वस्याभावात्, यदि फलत्वव्याप्यजातिरूपं प्रवृत्तिनिमित्तं भ्रियते तर्हि तदवच्छिन्ननिरूपितशक्तौ स्वावच्छिन्नविशेष्यतानिरूपितनपुंसकत्वनिष्ठप्रकारताप्रयोजकत्वस्य सत्त्वेऽपि स्वावच्छिन्नविशेष्यतानिरूपितपुंस्त्वनिष्ठप्रकारताप्रयोजकत्वस्याभावान्न दोष इत्याहुः ।

*ज्ञापनार्थमिति* । "स्वं रूपम्"इत्यत्र रूपपदेनोदात्तत्वानुदात्तत्वस्वरितत्वानुनासिकत्वनिरनुनासिकत्वातिरिक्तश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नस्य ग्रहणमिति ज्ञापनार्थमिति भावः ।

*विवक्षार्थमिति* । न च हन्धातोरेकाच्कत्वेन वधादेश आद्युदात्तोऽन्तोदात्तो वा भवतीति 'स्थान्यनुरूपगुणकस्वरे उच्चारणीये' इत्यसङ्गतमिति वाच्यम् । 'हनो वध' इत्यत्र 'फिष'इतिशास्त्रानुगुणेऽन्तोदात्ते वधादेशे उच्चारणीये आद्युदात्तोच्चारणस्य विवक्षितत्वात्, स्थानिनो हन आद्युदात्तत्वेऽपि "धातोः"इत्यनेनान्तोदात्तत्वरूपेण साधुत्वबोधनात् तेनैव रूपेणान्तोदात्ते पठनीये आद्युदात्तोच्चारणस्य विवक्षितत्वाद्वा, हनधातोरनुदात्तोपदेशत्वेन सर्वानुदात्ते वधादेशे पठनीये आद्युदात्तोच्चारणस्य विवक्षितत्वाद्वेति दिक् ।

सुधियेति। शोभनज्ञानवत्त्वरूपैकप्रवृत्तिनिमित्तत्वात्* पुंवत्। मधीशब्दे प्रकृष्टज्ञानवत्त्वमेकं तत्। माध्वीति। मकरन्द-मद्य-माक्षिकवाचिनः पुंनपुंसकयोः सत्त्वात्पुंवत्त्वम्। मृद्वीकाविकारवाचिनो नित्यनपुंसकस्य तु न। स च "माद्वीकं मधु न द्वयोः"इत्यमरेणोक्तः। भाष्ये मधोस्तृप्ता इत्यस्य लिङ्गव्यत्ययोदाहरणत्वन्तु "माध्वीर्गावो भवन्तु नः"इति-लिङ्गसिद्धक्षीरवाचिनपुंसकमधुशब्दाभिप्रायेणेति दिक्*।

स्नुवेति। "मांस्पृत्स्नूनां पदादिषूपसंख्यानम्" इतिवार्त्तिकेनेति भावः। पूर्वविप्रतिषेधेनेति। न च नित्यत्वादेव नुम्सिद्धः, किं पूर्वविप्रतिषेधेनेति वाच्यम्। तदन्ते नुमि कृतेऽपि अङ्गाधिकारे तदन्तविधेः सत्त्वेन यदागमा इति न्यायेन नुम्विशिष्टस्य तद्ग्रहणेन ग्रहणात् सूत्रे षष्ठीनिर्देशाभावान्निर्दिश्यमानस्य नुमा व्यवधानमित्यस्याभावेन* तृज्वत्त्वप्राप्तेः। सकृद्गतिन्यायान्न पुनस्तृज्वत्त्वम्। नन्वयं क्रुशक्रोष्टुनेइत्यस्यैव भाष्ये उदाहरणात्तृतीयादिष्वचीत्येतद्विषयक एव। अन्यथा प्रथमोपस्थितसर्वनामस्थानोदाहरणत्यागे वीजानापत्तिरिति चेन्न। उदाहरणस्य संकोचकत्वे मानाभावात्। तदुक्तं 'न चोदाहणमादरणीयम्' इति। उदाहृतातिरिक्तोदाहरणाभाव इत्येवंपरतया नादरणीयमिति तदर्थ इत्याहुः।

सुल्वेति। अत्र शोभनलवनकर्त्तृत्वं प्रवृत्तिनिमित्तम्। पुंवत्त्वे ह्रस्वाभावेनाघित्वान्नाभावो न। नुमभावाच्च यण्। धातृ इति। अनङ् न। नलुमतेति निषेधात्। धारणादिकर्त्तृत्वं चास्यैकं प्रवृत्तिनिमित्तम्। हेधातरिति। "ह्रस्वस्य गुणः" इति गुणः।

---

*गृह्यमाणस्यैव विशेषणमिति*। श्रुतानुमितपरिभाषयेति भावः। *एकप्रवृत्तिनिमित्तत्वादिति*। पुंस्त्वनपुंसकत्वयोः शोभनज्ञानवत्त्वस्यैवान्वयितावच्छेदकत्वादिति भावः। *दिगिति*। दिगर्थस्तु "माध्वीर्गावो भभवन्तु नः" इतिमन्त्रे मधुशब्दस्य माधुर्यमेवार्थ इति तत्रत्यमधुशब्दस्य क्षीरवाचित्वे न मानमिति दिक्।

*इत्यस्याभावेनेति*। न च "तृज्वत्क्रोष्टुः" इत्यादौ निर्दिश्यमानपरिभाषाया अप्रवृत्तौ परमक्रोष्ट्रेत्यादौ परमक्रोष्टुशब्दस्य स्थाने तृजन्ततदादिरूपादेशापत्तिरिति वाच्यम्। अनुत्तरपदस्थस्येतिज्ञापकेन क्वचित्तदादिविधेरप्रवृत्त्या परमक्रोष्टु इत्यस्य स्थाने "स्थाने ऽन्तरतम" इति परिभा-

*एच इक्। आदेश इति कर्मणि घञ्। ह्रस्वपदेन कर्मधारयः। निर्द्धारणे सप्तमी*, सौत्रमेकवचनं, तदाह-आदिश्यैत्यादि । मध्ये इत्यपपाठः। तद्योगे षष्ठ्या एवौचित्यात्। एचां पूर्वभागो ऽवर्णसदृशः, उत्तरस्तु इवर्णोवर्णसदृशः। तत्रोभयान्तरतमह्रस्वाभावात्पर्यायेणावर्णादेः प्राप्तावद्वर्णाभावायेदं, तदाह-इगेवेति। यथाप्राप्तमेव नियम्यत इति न यथासंख्यम्। ह्रस्व एचतु नास्त्येव। "एओङ्" इत्यादौ दीर्घनिर्देशादिति स्पष्टं भाष्ये। न चार्द्धमात्राऽवर्णस्याद्ध्यर्द्धमात्रेवर्णोवर्णयोरिति उत्तरभूयस्त्वात्तत्सदृश इगेव भविष्यतीति नार्थः सूत्रेणेति वाच्यम्। अद्ध्यर्द्धमात्राऽवर्णस्याद्र्धमात्रेवर्णोवर्णयेरित्यस्यापि पक्षस्य "प्लुतावैच" इति सूत्रे विनिगमनाविरहेण भाष्ये उक्ततया समप्रविभागपक्षस्यैव भाष्यकृत्संमतत्वादित्याहुः।

प्ररीणामिति। न च "रायो हलि" इति विषयसप्तमी, इति प्रागेवाऽऽत्वम्। निर्दिष्टपरिभाषाबाधे मानाभावात्। आत्वे कृते नुडनापत्त्या हलादिविषयाभावेन पूर्वमात्वाप्रवृत्तेश्च। केचित्तु नुटो निमित्तस्य सन्निपातस्य दीर्घेण विनाशावश्यकत्वेन तद्विषये सन्निपातपरिभाषाया विषय एव न। नामीति दीर्घस्तु "सुपि च" इति दीर्घं नित्यत्वाद् बाधते इति माधवाशयमाहुः*। ग्रामणि कुलमित्यादौ नपुंसकह्रस्वत्वे "ह्रस्वस्य पिति" इति तुग्। समुदितप्रातिपदिकापेक्षह्रस्वस्य बहिरङ्गत्वेन वर्णमात्राश्रये ऽन्तरङ्गे तुकि

---

षया परमक्रोष्टृ इतितृजन्तादेशो भवतीत्यदोषात्।

यद्वा, क्रोष्टुरिति षष्ठ्यन्तमेव। तृज्वदिति च मतुबन्तम्। तथा च क्रोष्टुशब्दस्य स्थाने तृज्वानादेशो भवतीत्यर्थ इति षष्ठ्याः सत्त्वेन निर्दिश्यमानपरिभाषयैव दोषवारणात्। न च तुन्नन्तक्रोष्टुशब्दस्य कथं क्रोष्टुरिति षष्ठ्यन्तं रूपं स्यादिति वाच्यम्। प्रकृतिवदनुकरणमितिपरिभाषया अनेनैव तृज्वद्भावेन "घेर्ङिति" इति गुणेन तद्रूपसिद्धेरिति दिक्।

*एच इक्। निर्धारणे सप्तमीति*। नृणां द्विजः श्रेष्ठ इत्यादौ यथा नागेशमते नृशब्दार्थस्य स्वघटकत्वं—स्वघटकद्विजेतरयावदवृत्तिश्रेष्ठयवत्त्वमेतदुभयसम्बन्धेन, यथा वा ऽस्मन्मते नृपदार्थस्य स्वघटकवृत्तित्वंस्वघटकद्विजेतरयावदवृत्तित्वमेतदुभयसम्बन्धेन श्रेष्ठ्ये अन्वयस्तथा प्रकृतेऽपि नागेशमते स्वघटकत्वं-स्वघटकेतरावृत्त्येच्स्थानिकत्ववत्त्वमेतदुभयसम्बन्धेन ह्रस्वादेशपदार्थस्यैकपदार्थेऽन्वयः, अस्मन्मते च स्वघटकवृत्तित्वं-स्वघटकेतरावृत्तित्वमेतदुभयसम्बन्धेनादेशपदार्थस्यैच्स्थानिकत्वे ऽन्वय इति भावः।

*आहुरिति*। अभ्यनुज्ञावाक्ये विघातकशास्त्रे वा सङ्कुचि-

असिद्धत्वात् । ये तु "षत्वतुकोरसिद्धः" इति वचनात्, "न लोप" इति सूत्रे कृतितुग्ग्रहणाच्च "ह्रस्वस्य पिति" इति सूत्रे ऽन्तरङ्गपरिभाषाया अप्रवृत्तिं वदन्ति तेषामुपजीव्यविरोधान्न तुक् । अजन्तत्वमुपजीव्य ह्रस्वप्रवृत्तेः । न चैवं सन्निपातपरिभाषा व्यर्था । तस्या अप्युपजीव्यविरोधमूलकत्वात् । किं च तस्या अपि स एवार्थः । अत एव सन्निपातपरिभाषादोषनिरूपणावसरे 'वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात्' इत्युक्तम् । न च 'न प्रत्ययः सन्निपातलक्षणः, अङ्गसञ्ज्ञा तद्विनिमित्तं स्यात्' इत्याग्रिमभाष्यविरोध इति वाच्यम् । तस्यैकदेश्युक्तित्वात् । अन्यथा शैव इत्यादावपि सा लोपनिमित्तं न स्यादित्यन्यत्र निरूपितम् । ग्रामणिपुत्रो ग्रामणि कुलमित्यादौ पूर्वोत्तरपदनिमित्ते ह्रस्वे बहिरङ्गपरिभाषयापि (तुग्वारणं) सिद्ध्यतीत्याशयेन "कृन्मेजन्तः" इति सूत्रे ह्रस्वस्य पितीत्यादौ तदुपन्यास एकदेशिन इति न तद्विरोध इत्यलम् ॥

इत्यजन्ता नपुंसकलिङ्गाः ॥

हो ढः ॥ "झलो झलि" इत्यतो झलीति, पदस्येति, स्कोरित्यतोऽन्त इत्यनुवर्त्तते । झलि परे पूर्वस्य पदान्ते विद्यमानस्य* हस्येत्यर्थः । ढस्तु न विहितः । (झषन्तत्वाभावेन भष्भावाप्राप्त्या) धुडित्याद्यसिद्धेः ।

दादेर्धा ॥ दादिग्रहणमौपदेशिकदादित्ववल्लक्षकं व्याख्यानादित्यभिप्रेत्य फलितार्थमाह—उपदेश इति । एतच्च प्रकृतसूत्रे भाष्ये ध्वनितम् । तत्र हि घत्वस्यासिद्धत्वाड्ढत्वं प्राप्नोती-

---

तसङ्कोचमकृत्वा सामान्यतः सन्निपातपरिभाषाया अनित्यत्वविषये सङ्कोचाभावे नि कुलमित्यादौ तुगापत्तिः । सुलुनी इत्यादौ नुमर्थे सन्निपातपरिभाषाऽनित्यत्वस्यावश्यकत्वेन "ह्रस्वो नपुंसके" इत्यत्राभ्यनुज्ञावाक्यं सन्निपातपरिभाषाप्रयोज्यसङ्कोचाभावे नुम इव तुकोऽप्यभ्यनुज्ञादाने प्रतिबन्धकाभावात् इति अत्रारुचिर्बोध्या । सङ्कुचितसङ्कोचे तु सकलेष्टसिद्धिः ।

*इत्यजन्ता नपुंसकलिङ्गाः* ॥

*पदान्ते विद्यमानस्येति* । हस्य पदविशेषणत्वं स्वीकृत्य हान्तं यत्पदं तदवयवस्य निर्दिश्यमानस्येति वक्तुं युक्तम् । यद्वा धर्मिपारतन्त्र्येण हत्वसमानाधिकरणपदान्तत्वाश्रये विद्यमानस्य हस्येत्युचितम् । यद्वा ऽन्ते इत्यस्य षष्ठ्यन्तत्वं प्रकल्प्य पदान्तस्य हस्येतिव्याख्यानमुचितम् । यथाश्रुतन्तु न सम्यक् । लिहावित्यादौ हाविति समुदायस्य पदान्तत्वेन तत्र विद्यमानस्य हस्य ढत्वापत्तेरिति केचित् । वस्तुतस्तु पद-

त्याशङ्क्यापवादत्वेन समाधाय, 'अथवा एवं वक्ष्यामि-हो ढो ऽदा-देरिति। ततो धातोरिति । दादेरिति वर्त्तते, नेतिनिवृत्तम्'इत्युक्तम् । द्रुहेस्तु "वा द्रुह"इत्यनेन ढत्वस्यापि विधानात्तत्र न दोष इति तदाशयः । तत्र धातोरिति-सूत्रे भाष्यकृत्कृतदादेरित्यनुवृत्तेः फलान्तराभावेन* तद् उपदेशवद्दादिलक्षकम् । सामर्थ्यात् । अर्थाधिकारानुरोधाच्च पूर्वत्र निषेधसमर्पकेऽप्येवम् । अत एव नामधातुविषये दामलिडित्यादौ ढत्वघत्वाभावौ सिद्धौ । एवञ्च तदेकवाक्यतया ऽपवादत्वपक्षे ऽपि दादिपदस्योपदेशकालिकदादित्ववल्लक्षकतोचिता । तदनन्तरं दादेरिति वर्त्तते इति भाष्यस्योक्ताशयमजानतो घो दादेरित्युच्यते कथमधोगिति शङ्कायाम् "एकाच"इतिसूत्रार्थमपि प्रसङ्गान्निर्णेतुं धातोरवयवो यो दादिरित्यर्थमुक्त्वा गर्दभयतेरप्रत्यये गर्द्धबित्यादौ भष्भावायोत्तरसूत्रे आवश्यकं वैयधिकरण्यमुक्त्त्वा दोग्धेति तु व्यपदेशिवद्भावात्सिद्धमिति भाष्ये उक्तम् । तत्रोत्तरार्थं वैयधिकरण्यमावश्यकमिति वदता तस्येहानावश्यकत्वं सूचितम् । तेन च दादेरित्यस्योक्तार्थकत्वं सूचितमित्यन्यत्र विस्तरः ।

---

स्य वैयधिकरण्यान्वयात्, धर्मिपारतन्त्र्येण्यान्वयस्यापि अप्रामाणिकत्वात्, अन्ते इत्यस्य षष्ठ्यर्थकत्वकल्पनायां गौरवात् अन्तशब्दस्य प्रकृते ऽवसानार्थकत्वं स्वीकृत्य 'वाऽवसाने' इत्यादाविव पदावसाने विद्यमानस्य हस्येत्यर्थकरणेन लिहौ इत्यादौ ढत्वादिवारणं बोध्यमिति दिक् ।

*फलान्तराभावेनेति* । दादिभिन्ने धातौ घत्वस्यासिद्धत्वाड्ढत्वेन न तत्र घत्ववारणाय सेति भावः । ननु दाद्यवयवभिन्नहस्य ढत्वविधानेन लेढीति लिट् दामनः लिट् दामलिडित्यत्र हस्य दाद्यवयवत्वेन ढत्वानापत्तिरिति चेन्न । अर्थाधिकारानुरोधेनौपदेशिकदादिधात्ववयवभिन्नस्येत्यर्थेनादोषात् ।

परे तु दादेरित्यस्यानुवृत्तेरत्रार्थाधिकारानुरोधाद्दादिधात्ववयवभिन्नस्येत्यर्थसंपादनेन चारितार्थ्यात्तादृशार्थकल्पने प्रमाणाभावः । न चैवं क्यजन्तानिष्पन्नदामलिट्शब्दे ढत्वानापत्तिरिति वाच्यम् । इष्टापत्तेः । अत एव भाष्ये "घोऽदादेरित्युच्यते, कथमधोगिति"इति शङ्कायां धातोरवयवो यो दादिरिति वैयधिकरण्येनैव समाधानमुक्तम् । दामलिट्शब्दे घत्ववारणाय तदर्थमवश्यं लक्षणाश्रयणे तेनैवाधोगित्यत्र निर्वाहे "घोऽदादेरित्युच्यते" इति शङ्काया वैयधिकरण्येन समाधानस्य चासङ्गतिः स्पष्टैव । तस्मात्तादृशार्थे लक्षणा ऽप्रामाणिकी । अत एव सूत्रे धातोरिति चरितार्थम् । अन्यथौपदेशिकदादित्ववतो धातुभिन्नस्याप्रसिद्ध्या तद्वैयर्थ्यं स्पष्टमेवेत्याहुः ।

*धुगित्यादिसिद्धये गो नोक्तः । "औपदेशिकप्रायोगिकयोरौपदेशिकस्य ग्रहणम्"इति परिभाषा तु तत्र तत्रोपदेशग्रहणं कुर्वत्सूत्रविरोधेन "तरप्तमपौ घः" "अत्वसन्तस्य"इत्यादिसूत्रस्थभाष्यविरोधेन चाप्रामाणिकी । तत्र हि भाष्ये इदमुक्तम् "इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति, रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगं, तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते । कोऽसौ ?, उपदेशो नामेति" । अनुबन्धप्रस्तावात्सानुबन्धकेष्वित्युक्तम् । न्यायस्यान्यत्रापि तुल्यत्वादिति बोद्धव्यम् ।

एकाचो ॥ "झष् झषन्तस्य"इति वक्तुं युक्तम्* । भष्पदाशक्तिकल्पनेन लाघवात् । निवृत्तमिति । धुग्भ्यामित्यादौ पदान्तत्वादेव सिद्धिरिति भावः । सामर्थ्यादिति । स्ध्वोर्ग्रहणस्येतरव्यावृत्त्यर्थत्वे तु तदनुवृत्तौ फलाभाव इति भावः । धातोः किम् । *तद्वाडित्यादि* । ननु दुहेर्घत्वे धात्ववयवमेकाज्रूपं दु इति, उघिति च । तत्राद्यो झषन्तो, ऽन्त्ये न बश् । दुघिति तु नावयव इति कथं भष्भावः ?, अत आह–व्यपदेशिवदिति* । विशिष्टोऽपदेशो मुख्यव्यवहारः सोऽ-

---

*गो नोक्तइति । गत्वे झषन्तत्वाभावाद्भष्भावानापत्तिरिति भावः ।

*वक्तुं युक्तमिति* । ननु सर्वे सर्वार्थवाचका इति सिद्धान्ताद्झषो भकारादिषान्तसमुदाये शक्तिः सिद्धैवेति चेन्न । तदर्थे वक्तुस्तात्पर्यकल्पने गौरवात् । लाघवाद्झषो भष् इति वक्तुं न युक्तम् । "झषस्तथोः"इत्यत्र तस्यावश्यकत्वात् । अत एवोज्झधातोः क्विचि उग्धिरिति सिद्धम् । *तद्वाडिति* । ननु भष्भावेऽपि पुनः जश्त्वेन न दोष इत्यत आह– *आदीति* । आदिना गद्वाडित्यस्य सङ्ग्रहः । गदु अहोतीति विग्रहः ।

*व्यपदेशिवद्भावेनेति* । सूत्रकारः स्वघटकावधिकपरत्वं—स्वघटकावधिकपूर्वत्वाभाववत्त्वमेतदुभयसम्बन्धेन स्वविशिष्टत्वरूपान्तत्वं, स्वघटकावधिकपूर्वत्वं—स्वघटकावधिकपरत्वाभाववत्त्वमेतदुभयसम्बन्धेन स्वविशिष्टत्वरूपादित्वं स्वीकृत्य आभ्यामित्यादौ अकारादौ स्वघटकावधिकपरत्वाभावेन अकारान्तत्वाद्यभावेन दीर्घादीनामप्राप्त्या दीर्घादिसिद्ध्यर्थम् "आद्यन्त"इतिसूत्रं प्रणीतवान् । तत्र वार्तिककारः अन्तादिलक्षणयोः स्वघटकावधिकपूर्वत्वस्वघटकावधिकपरत्वरूपसम्बन्धयोः प्रयोजनाभावेन तयोस्तत्रानुपादानेन आभ्यामित्यत्राकारान्तत्वस्य सुवचत्वेन सूत्रं निष्फलमित्याह ।

स्यास्तीति व्यपदेशी *तेन तुल्यमित्यर्थः। इदमाद्यन्तवत्सूत्रे भाष्ये स्पष्टम्। एकाचः किम्। दामलिट्। बशः किम्। क्रोत्स्यति। झषन्तस्य किम् दास्यति। धुगिति। 'अत्वसन्तस्य'इतिसूत्रे ऽधातोरिति निषेधेन *कारकं प्रत्यप्रधानभूतक्रियावाचकस्यापि धातुत्वादिति भावः। *न च "धातोरुच्यमानङ्कार्यन्तत्प्रत्यये भवति"इति परिभाषया कथमत्र घत्वादि ?, तत्प्रत्ययो धातुसंशब्दनेन विहितः प्रत्ययः, इति वाच्यम्। अस्य पदान्तनिमित्तत्वेन प्रत्ययनिमित्तत्वाभावात्। अत एव 'अप्रशान्' इति चरितार्थम्। अन्यथा 'मो नो धातोः'इत्यत्रापि तत्प्रवृत्तौ नत्वानापत्त्या तदसङ्गतिः स्पष्टैव।

वा द्रुह॥ द्रुहेः प्राप्तेरन्येषामप्राप्तेरुभयत्र विभाषेयम्।

इग्यणः॥ यणः स्थाने इति। नन्वेवमदुहितरामित्यादौ लस्योत्तमैकवचने इटि तस्य सम्प्रसारणत्वाद्धल इति दीर्घापत्तिः।

---

भाष्यकारस्तु विषयितासंबन्धेन स्वाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकत्वं-विषयितासंबन्धेन स्वाभाववद्वृत्तितावच्छेदकत्वमेतदुभयसम्बन्धेन समुदायविशिष्टधर्मवत्त्वं घटकत्वं, विषयितासंबन्धेन स्वाभाववद्वृत्तितानवच्छेदकत्वं-विषयितासंबन्धेन स्वाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वमेतदुभयसम्बन्धेन स्वविशिष्टधर्मवत्त्वं घटितत्वं च स्वीकृत्य तयोश्चाद्यन्तलक्षणयोर्निवेशं केवले अकारे मुख्यस्याकारादित्वस्य व्यवहारो मा भूदित्येतदर्थं स्वीकृत्य आभ्यामित्यत्राकारे ऽङ्गे अकाराधिकरणवृत्त्यभावप्रतियोगितावच्छेदकधर्मवत्त्वाभावेन घटितत्वाभावाद् दीर्घार्थं "व्यपदेशिवदेकस्मिन्"इति प्रणीतवान्। तथा चैकस्मिन्नेकसम्बन्धविशिष्टे व्यपदेशिवत् सम्बन्धद्वयविशिष्टवत्कार्यं कर्तव्यमिति फलितोऽर्थः। एतन्मूलकमेवानया घटितत्वघटकत्वे एवातिदिश्येते इति साम्प्रदायिकानां वाद इत्यन्यत्र विस्तरः।

*तेन तुल्यमिति। उपमानोपमेययोः समानविभक्तिकत्वनियमात्सप्तम्यन्ताद्वतिरुचितः। तथा च यथा व्यपदेशिनि सम्बन्धद्वयविशिष्टे कार्यं भवति तथैकसम्बन्धविशिष्टे ऽपि कर्त्तव्यमित्यर्थं इत्युपपादितमेव पूर्वमिति दिक्। *कारकं प्रतीति*। इतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयरूपमुख्यपदार्थघटकेतरपदार्थे प्रत्ययेतरत्वेन संकोचादिति भावः। *न चेति*। क्विपः प्रत्ययलक्षणेन धातुशब्दोच्चारणेन विहितप्रत्ययाव्यवहितपूर्वत्वविशिष्टहस्य पदान्ते विद्यमानत्वेन तत्प्रवृत्तेः सुवचत्वाच्छङ्कासमाधाने अत्र निर्दले। ज्ञापकसाजात्याद्धातुत्वेतरधातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताककार्ये तस्याः प्रवृत्तिस्वीकारेण तस्या अत्राप्रवृत्तेश्चेति दिक्॥

न च यथासंख्यसम्बन्धाददोषः । ऋलृक्सूत्रे 'लृकारोपदेशः किमर्थं' इत्यादिभाष्यविरोधात्; इति चेन्न । विधिप्रदेशेषु 'यण इक्'इत्येव सिद्धे सञ्ज्ञाविधानसामर्थ्येन *तद्भावितपक्षाश्रयणान्न दोषः । 'वाक्यस्य सञ्ज्ञा'इति पक्षे भाष्ये "सम्प्रसारणस्येत्यादौ संप्रसारणजातस्य संप्रसारणग्रहणेन ग्रहणम्"इत्युक्ततया तदेकवाक्यतया ऽत्र पक्षे तद्भावितस्य संज्ञेति भाष्ये सूचितम् । *तेन द्युभ्यामित्यादावपि न दीर्घप्राप्तिः । *अत एव अक्षद्यूश्चासावरुणश्च अक्षद्व्रुण इत्यादौ* पूर्वरूपं न । समानाङ्गग्रहणं तु भाष्ये प्रत्याख्यातम् । तथा च भाष्यं—'शकद्धर्थमित्यादौ पूर्वरूपाभावाय समानाङ्गग्रहणं कार्यम् । न कार्यम् । असंप्रसारणत्वात् । अन्योऽयं संप्रसारणासंप्रसारणयोः स्थाने एक आदिश्यते । यदि नेदं

---

*तद्भावितपक्षाश्रयणादिति* । तेन भावितस्तद्भावितः । प्रयोज्यत्वं तृतीयार्थः । न च यदा तेन संज्ञा तदा तद्भावितत्वं, यदा च तद्भावितत्वं तदा तेन संज्ञेत्यन्योन्याश्रय इति वाच्यम् । सम्प्रसारणपदप्रयोज्यत्वस्योपलक्षणत्वेनादोषात् । खण्डशः शक्तिस्वीकारेण विधेयस्थले सम्प्रसारणपदप्रयोज्यत्वस्य मोषेणादोषाच्चेत्युपपादितं 'प्रत्ययस्य लुक्'इत्यत्रैवेति तत एवावधारणीयम् । *तेन द्युभ्यामिति* । नन्वतद्भाविसंज्ञापक्षेऽपि निरुतं दुरुतमित्याद्यर्थं "हलः" इत्यस्य सम्प्रसारणप्रयोजकप्रत्ययनिमित्तकाङ्गसंज्ञावदवयवहलः परस्येत्यर्थाश्रयणेन 'अद्युहितराम्'इत्यादौ न दोष इति चेन्न । निरुतमितिभाष्यप्रामाण्येन सम्प्रसारणघटिताङ्गघटकहलः परस्येत्यर्थस्वीकारेण तत्र दोषाभावेऽप्यत्र दोषस्य तादवस्थ्यात् । न च तपरकरणसामर्थ्यान्न दीर्घ इति वाच्यम् । दिव्शब्दप्रकृतिकक्यजन्तात्क्विपा निष्पन्ने द्यूशब्दे चारितार्थ्यात्–इति "भाव्यमानोऽप्युकारः" इत्यत्र परिभाषेन्दुटिप्पण्यां विस्तरेणोपपादितम् । ननु निरुतमित्यादिभाष्यप्रामाण्यात् पूर्वोक्त एवार्थ इति अद्युहितरामित्यत्र न दोष इति चेत्–तत्राह—*अत एवेति* । ननु 'समानाङ्गग्रहणं कर्तव्यम्'इत्यस्य प्रत्याख्यानन्तु तद्भावितपक्षाभिप्रायेणैव, अतद्भावितपक्षे तु न तस्य प्रत्याख्यानमित्यत आह—*आदाविति* । आदिना द्युपुत्र इत्यस्य संग्रहः । तत्र हि 'सम्प्रसारणस्य'इति दीर्घापत्तिर्बोध्या । अज्विशिष्टस्य 'यणः संप्रसंसारणसंज्ञां विधाय 'सम्प्रसारणाच्च'इति सूत्रं त्यक्तुं शक्यमिति चेन्न । विद्वांसमाचष्टे विदावयतीत्यत्र नित्यत्वात् टिलोपे अचोऽभावेन संप्रसारणानापत्तेः । इदानीं संप्रसारणे नित्यत्वस्य वक्तुमशक्यतया पूर्वं संप्रसारणे टिलोपे च विदयतीत्येव रूपमित्यस्य वक्तुमशक्यत्वात् । विद्वयतीति तु अङ्गवृत्तपरिभाषायाः सिद्धान्तसम्मतत्वाभावेनायुक्तमेव । विश्वौह इत्यादौ विनिगमनाविरहात् पूर्वाऽज्विशिष्टस्यापि संप्रसासारणेऽनिष्टापत्तेश्चेति दिक् ॥

संप्रसारणम् । 'हलः' इति दीर्घत्वं न प्राप्नोति । वचनप्रामाण्याद्भविष्यति'इति। "न संप्रसारणे"इति निषेधोऽपि वचनप्रामाण्यात्पूर्वरूपोत्तरम् । न च द्यु-उ-अन्-अम् इति स्थिते ऽन्तरङ्गत्वाद्दीर्घे पूर्वरूपं न स्यादिति वाच्यम् । अन्तरङ्गपरिभाषाया अनित्यत्वेनेहाप्रवृत्तेः । न चैवं तत्र सवर्णदीर्घोत्तरं "न संप्रसारण"इति निषेधो न स्यादिति वाच्यम् । 'अचः परस्मिन्'इति स्थानिवत्त्वादिति दिक् ।

वाह ऊठ् ॥ 'भस्य'इत्यधिकारः । 'वसोः संप्रसारणम्'इत्यतः संप्रसारणमित्यनुवर्त्तते, तच्चोठो विशेषणम् । तेन 'अलोऽन्त्यस्य'इति न । तदाह-भस्येत्यादि । ह्रस्व उद् न कृतः । वृद्ध्यनापत्तेः । वृद्धिविधावपि ह्रस्वग्रहणे जनौरित्याद्यसिद्धिः । 'च्छ्वोः शूड्'इत्यत्रापि ह्रस्वकरणे ऽक्षद्यूरित्याद्यसिद्धिः । अतद्भावितत्वेन तस्यासंप्रसारणत्वाद् 'हल'इति दीर्घाप्राप्तेः ।

संप्रसा ॥ "अमि पूर्वः"इत्यतः पूर्व इति, "इको यण्"इत्यतः अचीति, "एकः पूर्वपरयोः"इति चानुवर्तते। तदाह-संप्रसारणादचीत्यादि । ऊठष्ठित्त्वम् 'प्रत्यैधति'इत्यत्र विशेषणार्थम् ।

छन्दस्येवेति । छन्दसीत्यनुवर्त्तमाने "वहश्च"इत्यनेनेति भावः । णिजन्ताद्विजिति । अनेन लोके विश्ववाड्शब्दस्य साधुत्वमात्रमुच्यते । न त्वस्योठ् । णिलोपस्य स्थानिवत्त्वात्* । *अङ्गभसंज्ञाक्षिप्तप्रत्ययेन

---

परे त्वतद्भावितपक्षस्याश्रयणेऽपि न कश्चिद्दोषः । अथ द्युपुत्र इत्यत्र "सम्प्रसारणस्य" इति दीर्घापत्तिः । न च 'उत' इतितपरकरणसामर्थ्येन न दीर्घ इति वाच्यम् । दिव्शब्दात्क्यचि ततः क्विपि सम्प्रसारणे "हलः"इति दीर्घे भ्यामि'द्यू-भ्याम्'इतिस्थिते ह्रस्वार्थं तस्यावश्यकत्वात्; इति चेन्न । उत्तरपदार्थस्य सम्प्रसारणपदार्थे विशेषणत्वेनोत्तरपदनिमित्तकसम्प्रसारणस्यैव तेन दीर्घविधानात् । अतद्भावितपक्षे 'समानाङ्गग्रहणं कर्तव्यम्'इति वार्तिकस्य सत्त्वान्न "द्युश्वः" इत्यादौ पूर्वरूपमित्याहुः ॥

नन्वेवं ह्रस्वे उठि न कश्चिद्दोष इति चेत्, अनेकत्र क्लिष्टकल्पनायां लाघवाभाव एवेति गृहाणेति दिक् ॥

*णिलोपस्य स्थानिवत्त्वादिति* । नन्वेवं 'वहेर्वाहेर्वा ण्विविचावनभिधानान्न स्त एव'इतिपरिभाषेन्दुशेखरस्थग्रन्थविरोध इति चेन्न । तत्र वाह्धातुप्रकृतिकयोस्तयोरनभिधानबोधनेनादोषात् । *अङ्गभसंज्ञाक्षिप्तेति* । ननु

वाहो विशेषणात्। विज्ग्रहणं क्विपोऽप्युपलक्षणम्। 'वच्यादिभ्यो विहिते किति'इति व्याख्यानस्याचः परस्मिन्नित्यत्र काम्यच्सूत्रे च भाष्ये उक्तत्वेन ण्यन्तात्क्वौ संप्रसारणाप्राप्तेः। प्रतिपदोक्ततया क्विशब्दमुच्चार्य विहितविधेरेव "क्वौ विधिं प्रति न स्थानिवत्"इत्यत्र ग्रहणेन णिलोपस्य स्थानिवत्त्वाच्च। तेन काम्यच्सूत्रोक्तविहितविशेषणपक्षतादितरपक्षयोर्न फलभेदः। वस्तुतो "विभाषा पूर्वाह्णापराह्णाभ्याम्"इति सूत्रे 'प्रष्ठौह आगतं प्रष्ठवाद्रूप्यम्'इति भाष्ये लौकिकविग्रहवाक्ये प्रष्ठौह इति प्रयोगादन्यत्रापि ण्विः। तदुक्तम्—इति पक्षे इति।

चतुरनडु। 'इतोऽत्सर्वनामस्थाने'इत्यतः सर्वनामस्थाने इति वर्त्तते।

*सावन। "आच्छीनद्योः"इत्यतो नुमनुवर्त्तते,आदिति च। तदाह-आदित्यर्थीति। विशेषविहितेनेति। यासुटा सीयुडिवेत्यर्थः। न बाध्यते इति। उपजीव्यत्वादिति भावः। अम्रा चेति। "अम्संबुद्धौ"इति विशेषविहितेनामेत्यर्थः। नुम उपजीवकत्वेन विरोधाभावात्। ततः प्राक् तस्याप्राप्तेश्चेति भावः। क्व चित्तु 'आमा च नुम्न बाध्यते' इति पाठः। तत्रायमर्थः। बहुनड्वांहीत्यादौ "नपुंसकस्य" इति नुम् परत्वादामा बाध्येत। पुनःप्रसङ्गविज्ञानात्तु न बाध्यत इति। दत्वं नेति। अनड्वांस्तत्रेत्यत्र रुत्वं भवत्येव। तत्रोपदेशवैयर्थ्याभावात्। संयोगान्तलोपस्येति। रुस्थानिकस्येत्यर्थः। एवञ्च नस्य प्रातिपदिकान्तत्वाभाव इति भावः। अनड्वानिति। अनः शकटं वहतीत्यर्थे वहेः क्विबनसि, अनसो डश्च। यजादित्वात्संप्रसारणम्।

---

'न लुमताऽङ्गस्य'इत्यत्रत्योक्तदिशा प्रत्ययाक्षेपो न स्यादितीदमयुक्तमिति चेन्न। प्राचीनमतमवलम्ब्यैतद्ग्रन्थस्य सत्त्वात्। भसंज्ञायां कर्तव्यायां स्थानिवत्त्वस्य जागरूकत्वेन ऊठोऽप्राप्त्या तदप्रवृत्तावेव तात्पर्याच्च।

*सावनडुहः*। अथ "वसुस्रंसुध्वंस्वनडुहां दः" इति न्यासं कृत्वा उगित्वसामर्थ्यात् असिद्धत्वं बाधित्वा उगिदचामिति नुमा सिद्धेः इदं सूत्रं न कार्यम्। नच,अनडुदीतरेत्यत्र उगितश्चेति समाश्रयह्रस्वविकल्पापत्तिरिति वाच्यम्। तत्र पेचुषितितरेत्यत्र ह्रस्वविकल्पवारणाय विहितविशेषणाश्रयणेन दोषाभावात्—इति चेन्न। स्वनड्वान् स्त्रीत्यत्र उगितश्चेति ङीबापत्तेः। न च पदत्वमुपजीव्य प्रवृत्तं दत्वं पदत्वविघातकङीपो निमित्तं न स्यादिति वाच्यम्। ङीपः साक्षात्पदत्वविघातकत्वाभावात्। परम्परया विघातकस्य विघातकशास्त्रीयोद्देश्यतावच्छेदकसंज्ञाऽति-

ननु हेऽनड्वन् इत्यत्र सम्बुद्धिलोपे ऽवशं प्राप्ते अम आरम्भादमोऽपवादत्वेन तद्विषये सम्बुद्धिलोपानापत्तिः। विषयभेदेऽप्यचिरादेशस्य नुडपवादत्वमाशङ्कितं सप्तमे भाष्ये; इति चेन्न। प्रत्ययलोपविधायकैः प्रत्ययानुत्पत्तेरेवान्वाख्यानेनापवादन्यस्यैवासम्भवात्। ध्वनितञ्चेदं प्रत्ययलक्षणसूत्रे भाष्यकैयटयोः। एवमेव 'अतृणेट्' अनड्वान्' इत्यादेस्तत्सूत्रोदाहरणत्वमुपपद्यते इति दिक्*।

सहेः साडः सः॥ "अपदान्तस्य मूर्द्धन्यः" इत्यधिक्रियते। लोके त्विति। एतेन "तुराषाण्मेघवाहनः" इति व्याख्यातम्। "नहिवृति" इत्यनेन क्विबन्तसहावेव दीर्घविधानादाह—"अन्येषामपि" इति।

दिव औत्। ननु विधेयविषये उच्चारणार्थानामपीत्संज्ञोचिता। अन्यथा तान्तस्य विधानमित्यस्याप्यापत्तेः। ध्वनितञ्चेदमदुङ्सूत्रे भाष्ये। तत्र हि डित्त्वाभावे ऽदादेशे पूर्वसवर्णदीर्घमाशङ्क्यानुनासिकोपधत्वादिति समाहितं, *न तूच्चारणार्थत्वादिति। किं च द्वितीयवर्णोच्चारणे सहायसंपादनेन चरितार्थेषु तत्र तत्र विशेषणार्थेष्वित्र हलन्त्यसूत्राप्रवृत्तौ मानाभावः। अत एव "तस्य लोपः" इति सूत्रेऽनुबन्धानामेकान्तत्वपक्षे "दिव औत्" इत्यादीनां सर्वादेशत्वापादनं भाष्ये

---

रिक्तशास्त्रस्य तु नानया व्यावृत्तिः। अतएव ऊखतुरित्यादौ अभ्याससंज्ञासवर्णदीर्घादीनां प्रवृत्तिर्भवत्येवेति दिक्॥ आन् इत्यसिद्ध्यापत्तेश्चेतिकश्चित्।

*उपपद्यते इति दिगिति*। दिगर्थस्तु इदमयुक्तम्। तथा सति 'सः' इत्यत्रापि प्रथमतो हल्ङ्यादिलोपे प्रत्ययलक्षणेन त्यदाद्यत्वेऽपि विसर्गश्रवणं न स्यात्। किञ्च प्रत्ययस्थानिककार्ये कर्तव्ये प्रत्ययलक्षणाभावेन 'भवतात्' इत्यत्र 'अतो हेः' इत्यनेन लुकि 'भव' इत्येकस्यैव रूपस्यापत्तेः। तस्मात् स्वविषये नाप्राप्तप्रत्ययानुत्पत्तिरपि बाध्यते। ततश्च प्रकृतदोषस्तदवस्थ एव। तस्माद् हल्ङ्यादिलोपविषये तन्न्यायस्यानित्यत्वमेवाश्रयणीयम्। तदनित्यत्वे प्रमाणं तु 'इदमो मः' इति सूत्रमेवेत्यन्यत्र विस्तरः। यद्वा सावपि पदं भवति इति सिद्धान्तादत्र 'भवेत्' इत्यत्रेव तलक्ष्यत्वाभावेन पुनः संयोगान्तलोपेनेष्टसिद्धिरिति विचारणीयं सुधीभिः।

*नं तूच्चारणार्थत्वादितीति*। ननु सम्बुद्धिलोपविषये सन्निपातपरिभाषाया अनित्यत्वादनुनासिकाकारपक्षे सम्बुद्धिलोपप्राप्त्या तस्यैकदेश्युक्तित्वमावश्यकम्। अत एव तत्पक्षे 'साधीयोऽत्र सम्बुद्धिलोपः प्राप्नोति' इति भाष्ये उक्तमिति चेन्न। प्राम-

कृतम् । "तिरस्वरितम्"इति सूत्रे च भाष्ये 'तिति प्रत्ययग्रहणं कर्त्तव्यम्' इति वार्त्तिकस्य द्युभ्यामित्यादौ तदभावः फलमित्युक्तम् । दित्त्वमाश्रित्य च प्रत्याख्यातं तदित्यन्यत् । किं चाऽऽदेशेषु सर्वत्र तकाराणामुच्चारणार्थत्वेनेत्संज्ञकत्वाभावातिति प्रत्ययग्रहणं व्यर्थमेव स्यात् । तथा विधेयविषये उच्चारणार्थानामप्यनुनासिकत्वेनेत्सञ्ज्ञा । अत एव "वेरपृक्तस्य"इत्यत्राऽपृक्तग्रहणाभावे दर्विरित्यत्र लोपमाशङ्क्यानुनासिकपरस्य वेर्ग्रहणमिति भाष्ये उक्तम् । अत एव "इदितो नुम्"इति सूत्रे भाष्ये धातोरित्यस्याभावे सिच इदित्त्वादभैत्सीदित्यादौ नुममाशङ्क्य सजादेशकरणेन समाहितं, न तु सिच इकारस्योच्चारणार्थत्वादिदित्त्वाभावेन । ल्युडादावुकारस्यानाकाभ्यान्नेव निवृत्तिरिति न तस्येत्संज्ञा । अनुनासिकत्वाभावात् । अत एव नन्द्यादिभ्यो ल्युप्रत्यये 'नन्दना'इति टाबन्तप्रयोगो "गाङ् लिटि"इति सूत्रे भाष्ये । 'ल्युः कर्त्तरि पुंसि'इति त्वमरस्य प्रमादः ।

अनुवादविषये तु हलन्त्यसूत्रभाष्योक्तरीत्या तेषां व्यवसितान्त्यत्वाभावेन फलाभावेन चेत्संज्ञाशास्त्राप्रवृत्तेरुच्चारणार्थवर्णसहितसमुदायस्य तद्रहिते लक्षणा । विधौ तु नोचिता सा । 'न विधौ परः शब्दार्थः'इति न्यायात् । "णौ गमिः"इत्यादीनां नुम् तु न । स्थानिवद्भावेन भाव्यातिदेशिकधातुत्वं गृहीत्वेकः सत्त्वात् । 'गमेरिड्'इतिवच्च नोपधालोपः । अत एव सुवुत्पत्तिः । अन्यथा 'हनो वध लिङि'इतिवत् सा न स्यात् । "अस्तेर्भूः"इत्यत्रापि निर्विसर्ग एव पाठ इति केचित् । एवञ्चात्र "तित् स्वरितम्"इति स्वरितापत्तिरिति चेन्न । दिव

---

णि कुलमित्याद्यर्थे सङ्कुचितसंकोचस्यावश्यकत्वेन "ह्रस्वस्य गुणः" "अम्बार्थनद्योर्ह्रस्वः"इत्येतद्वाक्यार्थे "एङ्ह्रस्वात्"इत्येतदतिरिक्तत्वेन सङ्कोचेऽपि अत्र तदतिरिक्तत्वेन सङ्कोचे प्रमाणाभावात् । साधीय इति भाष्यमेकदेशिन इति उपपादितमजन्तनपुंसकान्ते इति तत एवावधार्यम् ।

परे तूच्चारणार्थानां विनैवेत्संज्ञां निवृत्तिस्वीकारे न बाधकम् । उच्चारणार्थमित्यस्योच्चारणमेवार्थः प्रयोजनं यस्येत्यर्थस्य स्वयमेवोक्तत्वेनात्राकारस्योच्चारणे पूर्वसवर्णदीर्घसम्पादनेन चारितार्थ्यादत्रोच्चारणार्थत्वासंभवेन विना इत्संज्ञां तस्य निवृत्तेरसंभवेनानुनासिकोपधः स स्वीकृत इति कोऽदृड्सूत्रस्थभाष्येण विरोधः । "दिव औत्"इत्यत्र तकारस्यापि सर्वादेशत्वसंपादनेन चारितार्थ्यादुच्चारणार्थत्वासम्भवात् 'नानुबन्ध'इतिपरिभाषया फला-

इकारस्योदात्तत्वेन स्रंसनधर्मिणो हलः स्थाने जायमानौकारस्यानुदात्तत्वे- नेकारस्य यणि "उदात्तस्वरितयोर्यणः" इतिस्वरितसिद्ध्या फलाभावात्। तिति प्रत्ययग्रहणं कर्त्तव्यमिति वार्त्तिकेन तदप्राप्तेश्च। अन्तोदात्तं द्यौ- रिति तु द्योशब्दस्य बोद्धयम्।

अल्विधित्वेनेति। "अनल्विधौ"इत्यत्र पञ्चमीसमासस्याप्याश्र- यणादिति भावः। पदान्त इति। एङः पदान्तादित्यनुवृत्तस्य विभ- क्तिविपरिणाम इति भावः। अयमुकारो ऽन्तोदात्तो निपात्यते। तेन 'द्यु- भिरक्तुभिः'इत्यादौ पञ्चम्यानमन्तोदात्तत्वं सिद्धम्। अत्र यथा "हलः"इति दीर्घो न तथोक्तम्*। उतस्तपरत्वन्तु "भाव्यमानोऽप्युकारः सवर्णग्राहकः" इत्यर्थ* ज्ञापनार्थमिति "तित्स्वरितम्"इति सूत्रे भाष्ये उक्तम्। द्युभ्यामित्यत्र

---

भावोपपादकं तद्भाष्यमिति कस्तेनापि सह विरोधः। एवं "तिति प्रत्ययग्रहणं कर्तव्यम्"इतिवार्तिकाभावे तकारस्य तित्वसंपादनेन चारितार्थ्यादुच्चारणार्थत्वा- सम्भवाद्धिनैवेत्संज्ञा निवृत्त्यभावेन तित्त्वमुक्तमिति कस्तेनापि सह विरोधः। तकारस्योच्चारणार्थत्वसम्पादनेन वार्तिकस्य साफल्यान्न वार्तिकवैयर्थ्य- मपि। दर्विरित्यत्र लोपवारणायानुनासिकत्वं स्वीकृत्यानुनासिकान्त्यस्येति व्याख्यानमिति न तेनापि सह विरोधः। सिच इदित्त्वस्य 'अमंस्त' इत्यत्र 'अनिदिताम्'इत्यस्य न विद्यते इदस्मिंस्तेषामित्यर्थेन नलोपाभावार्थमावश्यक- त्वेनेदित्वान्नुमः शङ्कापि युक्तैव। "हनः सिच्"इत्येतज्ज्ञापकादनिदितां धा- तूनामेव ग्रहणेनामंस्त इत्यस्य सिद्धिं मनसि निधाय सजादेशकरणेन समाहित- म्। न च तज्ज्ञापकेन तत्र लोपाभावे फलाभावेन तस्योच्चारणार्थत्वात् पुनः सिजेव कुतो नोक्त इति वाच्यम्। अभैत्सीदित्यत्र नुमभावसम्पादनेन तस्य चारितार्थ्यात् तस्योच्चारणार्थत्वासम्भवात्-इति न तेनापि सह विरोधः।

यदपि 'अनुवादविषये' इत्यादि। तदपि न। सनः सशब्दे लक्षणा, उत शक्तिः? । आद्ये तवापि न। विधौ परशब्दार्थत्वस्य बाधात्। अन्त्ये प्रा- चीनानामपि लक्षणां विनैव निर्वाहात्। यदपि "गमेरिट्"इति दृष्टान्तेनोप- धालोपवारणम्। तदपि रभसादेव। दृष्टान्ते प्राचीनानामुच्चारणार्थेकारसत्त्वेन तन्मते तदप्राप्तौ दोषाभावात्। नुम् तु नाशङ्कनीयः। गम् इति पृथक्करणेन तस्य धात्ववयवत्वाभावेन नुमप्राप्तेः। सुबुत्पत्तिस्तु क्षिय इत्यत्रेव प्रकृतिवद- नुकरणं न भवतीत्यनेन सिद्धा। "अस्तेर्भूः" इत्यत्र निर्विसर्गपाठ इति प्रमा- द एवेत्याहुः॥

*तथोक्तमिति। तद्भावितपक्षाश्रयणादिति भावः। अतद्भा- वितपक्षेऽपि यथा न दोषस्तथोपपादितम्। *ज्ञापनार्थमिति*। स्वांशे चा- रितार्थ्यञ्च दिवशब्दात् क्यचि ततः क्विपि ऊठि बोध्यम्। अनुवृत्तेरि-

ऊद् न । कृङितीत्यनुवृत्तेः* । यत्तु अस्मात्तपरत्वात्, कुरुत इत्यादावुदिति तपरत्वाद् गुणाभावो यथा स्थानिवत्सूत्रे भाष्ये उक्तः, तथा प्रकृते दीर्घाभाव इति कैयटः, तद् एतेन परास्तम्* । दीर्घस्य बहिरङ्गतया तेन व्यावृत्तेरशक्यत्वाच्च । अत एव "ऋत इत्"इति तपरत्वेन चिकीर्षतीत्यादौ "हलि च"इति दीर्घस्य न व्यावृत्तिः । अत एव ग्रूच इत्यादौ "चौ"इतिदीर्घसिद्धिः ।

षट्चतु ॥ रेफान्तस्य षट्संज्ञैव तु न कृता । चत्वार इत्यत्र लुगापत्तेः । तत्र 'रो न'इत्युक्तौ तु पदलाघवाभावः* । केचित्तु षडित्यादि षडाद्यर्थपरम् । अर्थातपरत्वञ्चामः शब्दद्वारकम् । स चार्थः प्रधान एवेति न गौणे ऽतिप्रसङ्ग इति । तन्न । शब्दद्वारकमित्यस्य शब्दनिष्ठपरत्वाद्यवधित्वस्य परत्वस्य वा अर्थे आरोप इत्यर्थः । एवञ्च गौणत्वात्तत्र सम्बन्धे तन्निरूपितसम्बन्धे च न विभक्तिः । परम्परासंबन्धेनान्वय इत्यपि न । प्रकृतिप्रत्ययार्थयोः साक्षात्संबन्धेन क्लृप्तस्यान्वयस्य भङ्गापत्तेः । अत एव गङ्गायां घोष इत्यादौ गौणाधारादावधिकरणत्वादिनिमित्ता विभक्तिः स्वरितत्वप्रतिज्ञादिना भाष्ये साधिता । अत एवेदृशस्थले षष्ठ्यपि न । अत एव "स्त्रियाः पुंवत्"इति सूत्रे स्त्रिया इत्यर्थग्रहणमिति पक्षे भाष्यकृतोक्तं 'भाषितपुंस्कानुपपत्तिश्च, न ह्यर्थेन पौर्वापर्यमस्ति'इति । दिक्शब्दयोगे इत्यस्य दिक्शब्दार्थान्वयभूतेऽवधित्वादौ सम्बन्धे पञ्चमीत्यर्थः । स च सम्बन्धो मुख्य एव साक्षात्सम्बन्ध एव च ग्रहीतुमुचित इति दिक् ।

णत्वं द्वित्वामिति । ननु "पूर्वत्रासिद्धीयमद्वित्वे" इति णत्वात्पूर्वमेव द्वित्वं युक्तम् । वाक् वाक्क् इतिभाष्योदाहरणसिद्धये वर्णद्वित्वे ऽपि तत्प्रवृत्तेरावश्यकत्वात् । अन्यथा चर्त्वस्यासिद्धत्वात् गस्यैव द्वित्वे*

---

ति* । अनुवृत्तौ तु क्सिसाहचर्याद्धातुविहितप्रत्ययग्रहणेनादोषो बोध्यः । *परास्तमिति* । उक्तोदाहरणे तस्य चारितार्थ्याद्वैयर्थ्याभावेन ज्ञापनासम्भवादिति भावः ॥

*पदलाघवाभाव इति* । विहितविशेषणाभावेन 'अतिचतुर्णाम्' इत्यत्रामः षट्संज्ञकात्परत्वेन नुट्सिद्धिरिति भावः ॥

*गस्यैव द्वित्वे इति* । ननु आवसानिकचर्त्वस्य पदान्तजश्त्वापवादत्वात्कस्य द्वित्वे इति वक्तुं युक्तमिति चेन्न । माठरपरिवेषणन्यायेन झल्पदार्थे चरतिरिक्तत्वेन संकोचाज्जश्त्वात्पूर्वं तदप्राप्तेः । उपपादितं चेदं "बाधित्वेति शेषः"

ऽन्त्यस्य चर्त्वे पूर्वत्र गश्रवणापत्तिः । अवसाने चर्त्वस्यासिद्धत्वात् खर्परत्वाभावेन तस्य चर्त्वसंभावनाऽपि न । *न च कस्य द्वित्वे ऽपि अवसाने चर्त्वस्यासिद्धत्वाद्ककारे झशि परे पूर्वस्य जश्त्वे उक्तरीत्यैव चर्त्वाभावे गश्रवणं दुर्वारमिति वाच्यम् । "न मु ने" इतिवत् पूर्वत्रासिद्धीयमित्यस्य द्वित्वे कृते ऽपि प्रत्यासत्त्या द्वित्वाश्रयस्य कार्य्ये कर्त्तव्ये ऽसिद्धत्वं नेत्यर्थ इति न दोषः । एतेन 'द्वित्वे परसवर्णत्वं सिद्धं वक्तव्यं संय्यन्तेत्यत्र त्रियकारकत्वार्थम्'इतिवचनसामर्थ्येन वर्णद्वित्वे तदप्रवृत्तिरित्यपास्तम् । एतदवयुत्यानुवादरूपत्वादिति चेन्न । पूर्वत्रासिद्धीयमित्यस्य द्वित्वे कर्त्तव्ये ऽन्यदसिद्धं नेत्येवार्थो न तु द्वित्वस्याप्यसिद्धत्वं नेति तदर्थ इति णत्वोत्तरमेव द्वित्वमिति भावः ।

---

इत्यत्र टिप्पण्याम् । *न च कस्य द्वित्वेऽपीति* । न च "पूर्वत्रासिद्धीयमद्वित्वे" इत्यनेन चस्य द्वित्वे इति वक्तुं युक्तमिति वाच्यम् । तेन हि असिद्धत्वाभावे बोधिते ऽन्तरङ्गपरिभाषाप्रवृत्तौ बाधकाभावेनान्तरङ्गत्वाद् द्वित्वात्पूर्वं कुत्वे कस्येत्येवमेव वक्तुं युक्तत्वात् । अथ वर्णग्रहणे ऽपि तत्प्रवृत्तौ स्रगिति भाष्यप्रयोगे द्वित्वानापत्तिः । द्वित्वदृष्ट्या "अ अ"इत्यस्य सिद्धत्वेन संवृतस्य प्रयत्नभेदेन सावर्ण्याभावादच्त्वाभावेनाचः परत्वाभावात् । एवं मध्वरिरित्यत्र ।

किं च द्वित्वाश्रयस्य नासिद्धत्वमित्यर्थस्वीकारे वाक्क् इत्यत्र "स्कोः संयोगाद्योः"इत्येतद्दृष्ट्या कुत्वस्य सिद्धत्वेन संयोगादिलोपापत्तिः । मम तु वागितिभाष्यप्रयोगादवसाने चर्त्वस्य खरि चेत्येतद्दृष्ट्या ऽसिद्धत्वाभावबोधनेन "द्वित्वाश्रयस्य कार्ये कर्तव्ये" इत्यादिः प्रत्यासत्त्या अर्थो न कल्पनीय इति न कश्चिद्विरोधो, नापि दोष इति चेन्न । "पूर्वत्रासिद्धीयमद्वित्वे" इत्यनेन द्वित्वदृष्ट्या ऽसिद्धत्वाभावबोधनेऽपि अचिरन्त्येनेत्येतद्दृष्ट्या तस्यासिद्धत्वेन संवृतस्यापि विवृतत्वबुद्ध्या तेनाच्त्वबोधनेन स्रगित्यादिभाष्यविरोधाभावात् । वाक्क् इत्यत्र संयोगसंज्ञादृष्ट्या द्वित्वस्यासिद्धत्वेन संयोगसंज्ञाया अभावेन लोपाप्रसक्तेश्च ।

किं च वर्णग्रहणे ऽप्रवृत्तिं वदता भवताऽपि द्वित्वाश्रयस्येत्यवश्यमुररीकर्तव्यम् । अन्यथोढिमाख्यदौडिढदित्यत्र ढत्वादीनामसिद्धत्वात् "कुहोश्चुः"इत्यनेन चुत्वापत्तेः । वर्णग्रहणे ऽप्रवृत्तिं स्वीकुर्वता भवतापि "खरि च"इत्येतद्दृष्ट्या ऽवसाने चर्त्वस्य नासिद्धत्वमिति न वक्तुं शक्यते । अद्धातोः क्विपि पश्चाद् दाशब्देन समासे ततो णिचि टिलोपे ततः क्विपि चर्त्वे 'अवृत्' इत्यत्र 'खरि च'इति दश्चर्त्वापत्तेरित्यलं पल्लवितेनेति दिक् ॥

रोः सुपि* । अत्र खरीत्यनुवर्त्तते । तेन सप्तमीबहुवचनमेवात्र सुप् । एवञ्च "खरवसानयोः"इति सिद्धे इतरानिवृत्तिफलक एवैष विधिरित्याह–रोरेवेति । विपरीतनियमस्तु न । "हलो ऽनन्तराः संयोगः" इति निर्देशात् । द्वित्वे इति । "अचो रहाभ्याम्"इत्यनेन ।

अचो रहेत्यतो द्वे इति, नादिनीत्यतो नेति च वर्त्तते । तदाह–न द्वे स्त इति । "झरो झरि"इति लोपस्तु वैकल्पिकः ।

प्रियचत्वार इति । आङ्गत्वात्तदन्तस्यापि "चतुरनडुहोः" इति आम् । गौणत्वे त्विति । *अत्र यद्वक्तव्यं तत् "नामि" इत्यत्रोक्तम् । यत्तु "ष्णान्ता" इत्यत्र संख्यापदानुवृत्तेः, तस्य च संख्याबोधकशब्दपरत्वात्प्रधानन्यायेन संख्यारूपार्थस्यानुपसर्जनस्यैव ग्रहणेनोपसर्जने षट्त्वमेव न । संख्यापदेन च संख्येयमुच्यते । अतः संख्येयपरपञ्चादौ तस्य प्राधान्यात् संज्ञा सिद्धा । यद्वा षडित्यन्वर्था संज्ञेति न गौणे सा, इति । तन्न । प्रियपञ्चा द्रौपदीत्यत्र "न षट्"इति डाब्निषेधानापत्तेः* । आकडारसूत्रे भाष्ये ऽस्या डुसञ्ज्ञया व्यवहाराच्च । सर्वनामसंज्ञावदत्रोपसर्जनप्रतिषेधानारम्भाच्च । सर्वनामसंज्ञासूत्रस्थेन "षड्भ्य" इतिसूत्रविषयभाष्येण विरोधापत्तेश्चेत्यलम् ।

कमलिति । 'तदाचष्टे' इति णिचीष्ठवद्भावाट्टिलोपे कर्तरि क्विपि "णेरनिटि"इति णिलोपः । वस्तुतो लण्सूत्रे "न हि पदान्ताः परे ऽणः सन्ति । ननु चायमस्ति कर्तृ हर्तृ" इति भाष्यात् 'भोभगो' इति सूत्रे 'वृक्षव् करोति' इति भाष्यस्यैकदेश्युक्तित्वात् कमल् वृक्षव् इत्यादेरनभिधान*मेवोचितम् । यान्तास्तु नैव सन्ति । क्विपि "लोपो व्योः"इति यलोपात् । णिलोपस्य

---

*रोः सुपि* । "रोः सौ"इति वक्तुं युक्तम् । निरनुनासिकोकारान्तत्वेन न प्रथमैकवचनस्य, प्रत्ययाप्रत्ययग्रहणपरिभाषया च न सुशब्दस्य ग्रहणमिति विभावनीयम् ॥

*अत्र यद्वक्तव्यमिति* । अस्माभिरपि तत्रैवोपपादितम् । *डाब्निषेधानापत्तेरिति* । स्त्रियां यत्प्राप्नोति तन्नेतिव्याख्यानसामर्थ्येन डाब्निषेधे सिद्धे चिन्त्यमेतत् । वस्तुतः षडिव ब्राह्मणः षट् इत्यत्र षष उपसर्जनत्वेन षडेवेत्यन्वर्थसंज्ञयाऽपि गौणे तत्प्रवृत्तेर्दुर्निवारणत्वादिति वक्तुं युक्तम् । *अनभिधानमेवेति* । वस्तुतो ऽनभिधाने दृढतरप्रमाणाभावेनास्याभिधानमेवोचितमित्युपपादितमन्यत्र ॥

स्थानिवत्त्वं तु न। यलोपे तन्निषेधात् ।

प्रशानिति । शाम्यतेः क्विप्। "अनुनासिकस्य" इति दीर्घः। अयं शान्तिसाम्यान्यतरवद्वाचकः सत्त्ववाचीति स्वरादिपाठेऽप्यस्य नाव्ययत्वम् । साम्यवाचिन्यसत्त्वार्थके तु स पाठः सार्थक इति दिक्।

विभक्ताविति । "अष्टन आ" इत्यतो ऽनुवृत्तेरिति भावः । अकच्सहितस्यापीति । तन्मध्यपतितन्यायेन तस्यापि किंशब्दत्वात् । अङ्गानपेक्षत्वेनान्तरङ्गत्वादादेशात्पूर्वमकच् । *यद्यपि निर्दिश्यमानपरिभाषया न प्राप्नोति । अत एव "भिन्धकि इत्यत्राकचि धित्वं न प्राप्नोति" इति भाष्ये पूर्वपक्षं कृत्वा 'अन्तरङ्गत्वाद्धित्वे ऽकच्' इत्याद्युक्तम् । तथापि आवृत्त्याश्रयणेन साकच्कस्यादेश इति कैयटः ।

इदमो मः ॥ "तदोः सः सौ" इत्यतो ऽनुवृत्तेराह—साविति ।

इदोऽय्। "यः सौ" इत्यतः साविति वर्त्तते ।

दश्च ॥ इह 'अष्टन' इत्यतो विभक्तावित्यनुवर्त्तते । साविदमो दस्यासम्भवात् । तदाह—विभक्ताविति ।

हलादाविति । आपीति वर्त्तते । 'हलयश्' इति वक्तुं युक्तम् । *अक इति पर्युदासादिदं गौणे न प्रवर्त्तते इत्याहुः । नन्विदो-

---

*यद्यपि निर्दिश्यमानपरिभाषयेति* । ननु कर्किंशब्दे ऽकचः किंशब्दनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वेन तन्मध्यपतितन्यायेन निर्दिश्यमानत्वादादेशः प्राप्नोत्येव । भिन्धकीत्यत्र तु अकचः तिङन्तनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वेन तिङन्तवृत्तिह्यन्तत्वादेरारोपेऽपि हित्वस्यारोपे प्रमाणाभावेन हेरभावेन 'अकचि कृते धित्वं न प्राप्नोति' इति भाष्योक्तमपि सङ्गच्छते । निर्दिश्यमानपरिभाषयेति तु भाष्ये नोक्तम्; इति चेन्न । परमकिंशब्दात्कुत्साविवक्षायामकचि परमकर्किंशब्दे निरुक्तदिशा किंशब्दान्तत्वेऽपि निर्दिश्यमानकिंशब्दस्याभावेनादेशानापत्तिरित्याशयेनैतद्ग्रन्थस्य सत्त्वात् । निर्दिश्यमानपरिभाषया ऽऽदेशो न प्राप्नोतीत्यस्य तादृशपरमकर्किंशब्दे आदेशो न प्राप्नोतीत्यर्थ इति दिक् ॥

*अक इति पर्युदासादिति* । न च 'अक' इति बहुव्रीहिर्न तत्पुरुषः । तथा च पर्युदासादित्यसंगतमिति चेदत्र कश्चित् । पर्युदासादित्यस्य निषेधकत्वात् 'संसर्गवद्विप्रयोगस्य' इति न्यायेन 'अवत्सा' इतिवत्तस्यैव ग्रहणमित्याशयात् ॥

ऽन्त्यस्य लोपः स्यादत आह—नानर्थके इति । इयमुपधासंज्ञासूत्रे भाष्ये स्पष्टा । फलानामन्यथोपपादनेन भाष्ये प्रत्याख्याता च । प्रत्याख्याने 'अनापि' इत्यतो ऽन् इत्यनुवर्त्त्य हलीति सप्तम्याः षष्ठीं प्रकल्प्यान एव 'अलोऽन्त्यस्य' इति लोपे पररूपे चेष्टसिद्धिर्बोध्या ।

ननु दीर्घापेक्षया लोपस्य नित्यत्वात्पूर्वं लोपे अ भ्यामिति स्थिते ऽङ्गस्याऽकाररूपत्येनादन्तत्वाभावाद्दीर्घो न स्यादित्यत आह—आद्यन्तवदिति। "आदिरन्त्येन" इतिसूत्रोक्तरीत्याऽऽद्यन्तशब्दयोर्विशिष्टशक्ततया तत्प्रयुक्तकार्याण्यसहाये न स्युरित्ययमारम्भः । एकस्मिन्निति । असहाये* इत्यर्थः । तदादितदन्तयोः क्रियमाणं कार्यं तदादौ तदन्त इवासहाये ऽपि स्यादित्यन्वयः । उपमेये सप्तमीदर्शनात्सप्तम्यन्तादिवार्थे वतिस्तदाह-आदाविवेति । एकस्मिन्नित्युक्तेर्दरिद्रातेरिवर्णान्तलक्षणोऽज्न । आदिवत्त्वफलमौपगवे ऽण आद्युदात्तत्वम् । कार्यस्य प्राधान्यादयमपि कार्यातिदेश एव । तदाह—कार्यमिति ।

ननु इद ए इति स्थिते स्मैभावात्परत्वादनादेशो 'सकृद्गतौ' इति न्यायेन स्मै न स्यादत आह—नित्यत्वादिति* । स्मै—आदेशे तु न अनादेशो हलिलोपेन बाधात् । लक्ष्यानुरोधेन बाधकाबाधितकृताकृतप्रसङ्गस्यैवात्र ग्रहणात् ।

---

परे तु अशआद्यजन्तकशब्देन नञ्तत्पुरुषे पर्युदासादित्यपि सुसंगतमित्याहुः । अक इति पर्युदासादित्यादि तु सिद्धान्तेऽपि, न त्वश्करणे एव । एतेनाश्लोपयोः कः फलभेदो, येनाक इत्याद्युक्तमित्यपास्तम् । अथाश्करणे उदात्तानुदात्तयोः स्थाने जायमानो ऽश् स्वरित एव स्यादिति फलभेद इति चेत्—अत्र कश्चित् । स्थान्यनुरूपे स्वरित एवोच्चारणीये उदात्तोच्चारणं विवक्षार्थम् । तेन न स इत्याह । तन्न । इदंशब्देन नञ्तत्पुरुषे तस्माद् भ्यामि अनाभ्यामित्यत्र स्वरितश्रवणापत्तेः । सिद्धान्ते तु 'तत्पुरुषे' इत्यनेन 'पूर्वपदप्रकृतिस्वरत्वाच्छिष्यमाणाकारस्यानुदात्तत्वमिति ।

परे त्विद इत्यनुवर्त्य तत्स्थाने ऽश्विधानेन न दोष इत्याहुः । न च "हलि लोपः" इत्यत्र "झलि लोप" इत्येव सूत्रं कर्तव्यमिति वाच्यम् । वेदे आपः स्थाने यादेशो तत्र लोपानापत्तेरित्यलम् ॥

*असहाये इति* । असहायत्वपरिष्कारस्तु मनोरमाटिप्पण्यां द्रष्टव्यः।

*नित्यत्वादितीति* । परे तु उपसञ्जनिष्यमाणन्यायेनात्रानादेशस्यप्राप्तिरेव नेति नित्यलक्षणे बाधकाबाधितत्वनिवेशो मन्दप्रयोजन इत्याहुः ।

अकोऽकोरित्यनयोः फलमाह—ऋकारयोगे त्विति । 'अव्ययसर्वनाम्नाम्'इत्यकचीति भावः । अस्यानवयवत्वेऽपि तन्मध्यपतितन्यायाच्च द्विशिष्टे प्राप्तिरिति बोध्यम् ।

इदमोऽन्वा ॥ अनुदात्तत्वमाभ्यामित्यादौ 'ऊडिदम्' इति 'सावेकाच'इति वा विभक्त्युदात्तत्वाभावात् । उभयत्राप्यनुवृत्त्यपकर्षाभ्यामन्तोदात्तादित्यस्य सम्बन्धात् । एवञ्चाभ्यामित्यादि सर्वानुदात्तम् । "ऐभिरग्ने अग्रेणा तदेषाम्"इत्यादौ तथा श्रवणात् । नन्वेवमप्यत्वे हलिलोपेनाऽऽभ्यामित्यादेः सिद्धावनुदात्तत्वेनैव सिद्धावश्विधानं व्यर्थमत आह—साकच्कार्थमिति । शित्त्वात्सर्वादेश इति भावः । *संज्ञोपसर्जनयोस्तु नेदम् । 'एतदस्त्रतसोः' इत्युत्तरसूत्रसाहचर्यात्* । न च त्यदाद्यत्वेन सिद्धे ऽकारविधानमेव साकचि सर्वादेशार्थं भविष्यति, किं शित्त्वेनेति वाच्यम् । अन्यार्थतापत्तेः* ।

द्वितीयाटौ ॥ पूर्वसूत्रादिदम इति, 'एतदस्त्रतसोः'इत्यत एतद इति चानुवर्त्तते, अनुदात्त इति च । त्रिधातुमिति । त्रिधानमत्राज्ञातज्ञापनमेव, न तु प्रवर्त्तनाविषयत्वम् । तच्चेदमैवेति नाग्रहः । स्पष्टश्चेदं *भाष्ये ॥

सुगणड्रुस्विति । 'ङ्णोः'इति टुक् । तस्यासिद्धत्वान्न जश्त्वम् । नलोप इति । नकारलोप इत्यर्थः । न चात्र प्रत्ययान्तत्वाद् 'अप्रत्यय' इति निषेधेन प्रातिपदिकत्वाभावात्कथं नलोप इति वाच्यम् ।

---

ननु संज्ञोपसर्जनयोस्त्यदाद्यत्वाप्राप्त्या तत्र विधानार्थमश्विधानं चरितार्थमित्यत आह—*संज्ञोपसर्जनयोरिति* । *साहचर्यादिति* । ननूत्तरसूत्रसाहचर्यस्याप्रयोजकत्वं स्वयमेव शब्दरत्ने उक्तमिति अत्र कथं तेन निर्वाह इति चेन्न । साहचर्यादित्यस्यार्थाधिकारानुरोधादित्यर्थस्वीकारेणादोषात् ।

*अन्यार्थतापत्तेरिति* । तद्विधानसामर्थ्याद् 'अतो गुणे' इत्यस्यैव सुपिचेति दीर्घस्यैव वा बाधापत्तेः । न च साक्षाद्विधिबाधकल्पनापेक्षया लाघवादलोऽन्त्यपरिभाषाबाध एवोचित इति वाच्यम् । विनिगमनाविरहात्कदा चित् 'तस्मिन्' इत्यस्या परिभाषाया अपि बाधापत्तेः ॥

*"अन्वादेशश्च कथितानुकथनमात्रं, न तु इदमा कथितमिदमैव यद्नुकथ्यते"इति ग्रन्थेन ।

पर्युदासे यथोद्देशेन सिद्धेः। न च कार्यकालपक्षे दोषः। व्यवस्थितपक्षद्वयमध्ये एकतरपक्षेण लक्ष्यसिद्ध्या पक्षान्तरेण दोषदानस्य काप्यदृष्टत्वात्। ध्वनितश्चेदं प्रगृह्यसंज्ञाप्रकरणे भाष्ये। न च-प्रसज्यप्रतिषेधे दोषः, तत्पक्षे लोपेनेव जातनिवृत्तेरपि तेन वक्तुं शक्यत्वाद्;इति वाच्यम्। "न ङिसम्बुद्ध्योः"इति निषेधेन प्रत्ययलक्षणेन प्रत्ययान्तत्वमादाय निषेधाप्रवृत्त्या दोषाभावात्। स्पष्टश्चेदमर्थवत्सूत्रे भाष्ये।

न ङि॥ ङौ तु छन्दसीति। राजनीत्यादौ भत्वान्नलोपाप्राप्तेः। राजनीवाचरतीत्यर्थे 'अधिकरणाच्च'इति क्यच् तु लोके नास्त्येव। अनभिधानात्। अत एव 'परमे व्योमन्'इत्यादावयस्मयादित्वाद्भत्वेन सूत्रस्थङिग्रहणप्रत्याख्यानं भाष्योक्तं सङ्गच्छते इति भावः। सामर्थ्यादिति। "न लुमता"इतिनिषेधानित्यत्वप्रतिपादनद्वारेत्यर्थः। एतदनित्यत्वबललब्धमेव 'वा नपुंसकानाम्'इति बोध्यम्। न च परमेव्योमन्नित्यत्र घोषत्वाल्पप्राणत्वादिसादृश्येन पूर्वसवर्णे दकारे "स्वादिषु"इति पूर्वस्य पदत्वात्प्राप्तनलोपनिषेधेनेदं चरितार्थमिति वाच्यम्। 'अन्तरङ्गानपि'इति न्यायेन, संयोगान्तलोपस्यासिद्धत्वेन च पूर्वसवर्णे ऽपि लुक एव प्राप्त्या प्रक्रियालाघवाय लुक एवौचित्यमित्याशयात्। स्पष्टश्चेदं भाष्ये। ङावुत्तरपदे इति। एतद्बललब्धमेव 'ङौ तु छन्दस्युदाहरणम्'इत्युक्तम्।

न चेति। पञ्चमीसमासेन प्राप्तिः। षाष्ठीमिति। 'वाह ऊठ्'इत्यत्र ज्ञापितत्वेन तद्देशस्थत्वादिति भावः। कार्यकालपक्षे ऽपि त्रिपाद्यां तदप्रवृत्तिः प्रागुक्ता। जञोर्ज्ञ इति। जञयोगे लोकवेदसिद्धतादृशध्वनेर्लिपिविशेषस्य चानुवादकमभियुक्तवचनं, न त्विदं वर्णान्तरम्*। शिक्षादावपरिगणितत्वेन तत्सत्त्वे मानाभावात्। अत एव तज्ज्ञानमित्यादौ श्चुत्वसिद्धिः।

सुब्विधाविति। सर्वविभक्त्यन्तावयवकः समास इति भाष्ये स्पष्टम्। विधिशब्दो भावसाधनः, कर्मसाधनश्च। तत्र स्वरादिविषये

*अतएव जिज्ञासेत्यादौ अभ्यासे जश्रवणं सिध्यति। 'ग्ज' इत्येवमुच्चारणे बीजं तु यमानामादेशत्वपक्षे तेषाम् कुँखुँगुँघुँ इत्येवंरूपत्व-

भावसाधनः । सुब्विषये कर्मसाधनः । कृतीत्येतत्सामर्थ्याल्लुक एव विशेषणमित्याह—कृति लुगिति । "पूर्वत्रासिद्धम्"इत्येव सिद्धे ऽन्यत्र निवृत्तिफलकोऽयम् । तदाह—नान्यत्रेति । अन्यनिवृत्तिफलक—सिद्धविषयकविधित्वमेव नियमत्वम् । *अत एव पस्पशायां भाष्ये 'पञ्च पञ्चनखा भक्ष्याः' इत्यत्र "भक्ष्यनियमे ऽभक्ष्यप्रतिषेधो गम्यते"इत्युक्तम् । तदाह—इत्यसिद्धत्वा-

---

कथनम् । जकारस्य स्थाने गुँरूपयमादेशे हि गकारश्रवणं तदुच्चारणं च सिध्यति । एतद्विधानं हि उच्चारणार्थमेव न तु कार्यार्थमिति जिज्ञासेत्यादिप्रयोगाणां च सिद्धिः । यमानामनभिव्यक्तरूपत्वपक्षमवलम्ब्य तु महाराष्ट्राणां विलक्षणोच्चारणं तत्रेति दिक् ।

*अभक्ष्यप्रतिषेधो गम्यते इति । गमेर्ज्ञानसामान्यार्थकस्योपादानेन प्रतिषेधस्यार्थिकत्वं लभ्यते । अन्यथा अभक्ष्यप्रतिषेध उच्यते इति वक्तव्यं स्यात् इति भावः । इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते इत्यत्र लिङ्गस्य विलम्बितप्रवृत्तिकत्वात् प्रथमप्रवृत्तश्रुत्या अश्वरशनाऽऽदाने ऽप्राप्तमन्त्रविनियोगे बोधिते विनियोगाकाङ्क्षाया अभावेन लिङ्गस्याप्रवृत्तेर्गर्दभरशनाऽऽदाने मन्त्रविनियोगो नैव प्राप्नोतीति अन्यनिवृत्तिरार्थिक्येव । एवं पञ्च पञ्चनखा भक्ष्या इत्यत्र शशकशल्लकगोधाखङ्गिकूर्मरूपपञ्चनखभक्षणस्य तदितरवानरादिपञ्चनखभक्षणस्य च रागतो नित्यप्राप्तत्वेन अपूर्वविधिद्वारकान्यनिवृत्तिफलकस्य परिसंख्याविधेः इमामगृभ्णन् इत्यत्राश्रितस्यासम्भवेऽपि सामर्थ्यात् अन्यनिवृत्तिफलको नियमद्वारकः परिसंख्याविधिः पञ्चपदस्य अवधारणविषयबुद्धिस्थशशकादिवृत्तिपञ्चत्वसंख्याविशिष्टे लक्षणयाऽऽश्रयणीयः। अवधारणविषयबुद्धिस्थशशकादिवृत्तिपञ्चत्वसंख्यावन्तः प्रेरणाविषयभूतभक्षणविषया इति बोधः । अवधारणं च स्वविषयसंख्याऽतिरिक्तसंख्याऽधिकरणासंबन्धिसमभिव्याहृतपदार्थप्रकारकज्ञानरूपम् । ततश्च बुद्धिस्थशशकादिवृत्तिपञ्चत्वसंख्यातिरिक्तसंख्याऽधिकरणवानराद्यवृत्तिभक्ष्यत्वरूपसमभिव्याहृतपदार्थप्रकारकं 'वानराद्यवृत्तिभक्ष्यत्ववन्तः'इति ज्ञानम्, तद्विषयसंख्याविशिष्टाःशशकादयः भक्ष्याइति बोधस्य वानरादावभक्ष्यत्वं विनाऽनुपपत्त्या रागतः सामान्यतः प्राप्तस्य भक्षणस्य शशकाद्यतिरिक्तवानरादिपञ्चनखविषयत्वनिवृत्तिः कल्प्यते । नचैतावता शाब्दत्वं शङ्क्यम् । वस्तुतो वानराद्यसंसृष्टस्य समभिव्याहृतपदार्थस्य मानसज्ञानविशेषणतया भानेऽपि शब्देन वानरादौ भक्ष्यत्वाभावस्याप्रतिपादनात् । नच विधिना शब्देन शशकादौ भक्ष्यत्वप्रतिपादने तस्यावश्यानुष्ठेयत्वापत्तिः, अश्वरशनाऽऽदाने मन्त्रोच्चारणस्येवेति वाच्यम् । नियमद्वारकपरिसंख्यायां तथाऽनङ्गीकारात् । यद्वा—प्रापकप्रमाणस्य यत्र नियतत्वं तत्रावश्यानुष्ठेयत्वं यत्र तु तस्यानियतत्वं तत्र नावश्यकत्वम् । अवघाते प्रापकं प्रमाणं पुरोडाशादिविधिरूपं, मन्त्रविनि-

दितीत्यन्यत्र विस्तरः । *सुब्विधिशब्देन सुप्स्वरसंज्ञाप्यधर्मावच्छिन्नो-द्देश्यकविधेर्ग्रहणम् । एतेन दण्डिष्वित्यादौ षत्वरूपसुब्विधौ अप्रा-

---

योगे लिङ्गरूपं श्रुतिरूपं वा नियतमेवेति तदनुष्ठानमावश्यकम् । शशकादिभक्षणप्रापकं रागरूपं तु अनियतम्। दोषदर्शनादिना रागस्य निवृत्तेः । पंञ्च पञ्चनखा भक्ष्या इति शास्त्रं तु रागस्य नियमेन प्रवृत्तिप्रयोजकत्वात् शीघ्रप्रवृत्तिकत्वाच्च पूर्वमेव नियमेन भक्षणप्राप्तौ प्रापकं न भवतीति अन्यनिवृत्तिफलकम् अभ्यनुज्ञामात्रं करोतीति न प्रापकमिति तद्विषयस्य भक्षणस्य नावश्यकत्वम् । अभ्यनुज्ञाविधिविषयस्य च सर्वथानिवृत्तिप्रयोजकबलवदनिष्टसाधनत्वाभावमात्रप्रतीतेः इष्टसाधनत्वस्य विधिनाऽप्रतीतेः रागत एव तत्र प्रवृत्तिरिति न तस्य धर्मत्वमिति विरागिणां तत्राप्रवृत्तावपि न तदननुष्ठानमूलकं पापं तेषामुद्भवति । अत एव विवाहाद्यननुष्ठानेऽपि न तेषां प्रत्यवायः । रागनिवृत्त्या तत्राधिकारस्य तेषां निवृत्तत्वात् । अग्नीषोमीयवपायां हुतायां दीक्षितान्नमश्नीयात् इतिविहिताशनस्यापि अभ्यनुज्ञाविषयत्वमेवेति न तस्य धर्मत्वम् । नापि तस्य अधर्मत्वम् । वेदबोधितानिष्टसाधनताकत्वाभावात् । व्याकरणशास्त्रेऽपि नियमद्वारिका परिसंख्या निवृत्तिफलिकाऽश्रीयते, न तु शाब्दी निवृत्तिः । दोषत्रयापत्तेः । अतएव सर्वत्र एवगर्भ एव वाक्यार्थः प्रदर्श्यते कर्मण्येव षष्ठी स्यादित्यादि । प्रापकप्रमाणस्य सामान्यशास्त्रस्य नियतत्वाच्च तत्तद्विधेयस्यावश्यकत्वमेवेति न पाक्षिकत्वापत्तिरपि । तस्मात् विधिमुखेन प्रवृत्तौ दोषाभावात् दोषत्रयविशिष्टा निषेधमुखेन प्रवृत्तिर्नाङ्गीकार्येति मञ्जूषायां विस्तरः ॥

एतेन "सर्वविधमांसभक्षणस्य रागतः प्राप्तत्वादिच्छायाश्च सङ्कोचासम्भवात् क्वचिन्निषेधमुखेनापि प्रवृत्तिरङ्गीकार्या । गमेर्ज्ञानार्थकत्वेन शाब्दबोधविषय इत्यर्थेनाविरोधात् । किञ्च "पञ्च पञ्चनखा भक्ष्या" इत्यस्य विधित्वे 'अहरहः सन्ध्यामुपासीत' इत्यनेन सन्ध्याकरणाभावस्यानिष्टजनकत्वबोधनवदभक्षणस्याप्यनिष्टजनकत्वबोधापत्तिः ।

प्रवृत्तिरेषा भूतानां, निवृत्तिस्तु महाफला ॥

इत्येतद्विरोधापत्तिश्च । किञ्च विधिमुखेन प्रवृत्तिस्वीकारे "तपस्तपःकर्मकस्यैव" इत्यत्र तप इति योगं विभज्य सकर्मकाणां चेत्तप एवेति नियमेन "सकर्मकाणां प्रतिषेधो वक्तव्यः" इति वार्तिकं प्रत्याचक्षाणेन भगवतोक्ते योगविभागेऽन्यतरयोगस्य वैयर्थ्यापत्तिः" इत्यपास्तम् । सर्वदोषाणां परिहृतत्वात् । तपस्तपः कर्मकस्यैवेत्यत्र तप इति योगस्य तपधात्वतिरिक्ते सकर्मकमात्रे कर्मवद्भावनिवृत्तिफलकत्वेन तपःकर्मकस्यैवेत्यस्य च सुवर्णादिकर्मकतपधातौ कर्मवद्भावनिवृत्तिफलकत्वेन वैयर्थ्याभावाच्चेति दिक् ॥

*सुब्विधिशब्देनेति* । वस्तुतस्तु पूर्वत्रासिद्धमित्यतः पूर्वत्रेत्यनुवर्त्य पूर्वसुप्स्वरसंज्ञातुग्विधिषु कर्तव्येषु नलोपोऽसिद्ध इत्यर्थकरणात् षत्वस्य पूर्व-

प्रासिद्धत्वविधानार्थमिदमित्यपास्तम्* । वैरूप्यापत्तेश्च । संज्ञाविधौ दण्डिदत्तौ, दत्तदण्डिनौ । अत्र नलोपे दण्डिशब्दस्य घित्वे पूर्वनिपातापत्तिः । इष्यते त्वानियमः । असिद्धत्वे तु घित्वाभावात्सिद्ध्यति । न च पूर्वनिपाते नलोपो, नलोपे च घित्वे पूर्वनिपात इत्ययुक्तम् । *यस्य पूर्वपदत्वे घित्वं भवति तत्पूर्वमेव प्रयोक्तव्यमिति सूत्रार्थान्न दोषः । न च घित्वे बहिरङ्गतया नलोपो ऽसिद्ध इति वाच्यम् । संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात् । कृति तुग्विधौ-वृत्रहभिः । कृतीति किम् । वृत्रहच्छत्रम्* । अस्मादेव संज्ञाकृतं, बहिर्भूतनिमित्तकसंज्ञाकृतञ्च बहिरङ्गत्वं परिभाषायां नाश्रीयते । अन्यथा वृत्रहभिरित्यादौ बहिर्भूतभिस्निमित्तकपदत्वनिमित्तो नलोपोऽसिद्धः स्यादिति तद्वैयर्थ्यं स्यात् । भाष्ये तु सन्निपातपरिभाषया वृत्रहभिरित्यादौ तुकं व्यावर्त्येदं प्रत्याख्यातम् । पदत्वद्वारा लोपस्य

---

त्वाभावादस्याप्राप्त्या एतादृशार्थे प्रमाणाभावः । किञ्च त्वन्नये 'इकोऽचि'इत्यस्य सुब्विधित्वाभावेन अज्ग्रहणाभावपक्षे नपुंसकदण्डिन्शब्दाद् भ्यामि नलोपे नुमि लक्ष्येलक्षणन्यायेन पुनर्नलोपाप्राप्त्या नकारश्रवणेन, अज्ग्रहणे नुमोऽप्राप्त्या तदश्रवणेन फलभेदात् 'इह किञ्चित्त्रपो' इतिभाष्यविरोधापत्तिः । यद्यपि सुप्त्वव्याप्यविषयताके इत्याद्यर्थस्वीकारेण न भाष्यविरोधस्तथापि 'अशुद्धं कृत्वा कुचोद्यम्'इति न्यायेनात्र न तादृशार्थं उचित इति दिक् ।

*इत्यपास्तमिति । सपादसप्ताध्याय्यां "नलोपः प्रातिपदिकान्तस्य" इति सूत्रयित्वा नलोपः सुप्स्वरेत्यस्य लाघवादसिद्धत्वविधायकत्वमाश्रयणीयमिति तु नाशङ्कनीयम् । विनिगमनाविरहात् अनुषदात्तोपदेशेतिविहितनलोपस्याप्यसिद्धत्वापत्तौ आगत्येत्यादौ तुगनापत्तेरिति दिक् ॥

*यस्य पूर्वपदत्वे घित्वं भवतीति* । अत एव दूयुकावित्यत्र दूयुशब्दस्य पूर्वनिपातः सिद्धः । ननु सूत्रे संज्ञाग्रहणं न कर्तव्यम् । द्वन्द्वे घि इत्यस्य द्वन्द्वसंज्ञाकालिकघित्ववत एव पूर्वप्रयोग इत्यर्थादनियमो दत्तदण्डिनावित्यादौ सिद्ध एवेति चेन्मैवम् । ग्रामणिवृषभावित्यादौ ग्रामणीशब्दस्य पूर्वनिपातानापत्तेः । तत्र समासे पूर्वपदत्वे "इको ह्रस्वः" इति ह्रस्वत्वे पूर्वनिपातचिकीर्षायां घित्वेऽपि द्वन्द्वसंज्ञाकालिकघित्ववत्त्वाभावात् । अतः यस्य पूर्वपदत्व इत्याद्यर्थस्यावश्यकतया संज्ञाग्रहणस्यावश्यकत्वमिति । द्युकौ इत्येतत्सिद्धिरपि द्वन्द्वे घि इत्येतस्य तादृशार्थकरणे फलम् । अत एव द्युद्रुभ्यां म इत्यादिनिर्देशाः सङ्गच्छन्ते इति दिक् ।

वृत्रहच्छत्रमिति । तुग्ग्रहणं तु राजन्—शब्दात् क्यङन्तात्क्विपि निष्पन्नाद् राजाशब्दादाचारक्विबन्ताद् ण्वुलि राजायक इत्यत्र आतोयुगिति युग्यथा स्यादिति ॥

भिसन्निपातनिमित्तकत्वात् । सन्निपातानिमित्तकनलोपविषयाणां 'वृत्रहधनम्'इत्यादीनामनभिधानमिति तदाशयः । तदभावे कृतीत्यपि व्यर्थमेव । न च-सन्निपातपरिभाषया तुङ्मात्रव्यावृत्तौ प्राप्तायां नियमार्थं कृतीति, 'कृति तुगेव न, अन्यस्तु भवत्येवेति' इति वाच्यम् । वृत्रहच्छत्रमित्यत्र नलोपस्य सन्निपातलक्षणत्वाभावादिति दिक् ।

राजनीति । 'विभाषा ङिश्योः'इत्यल्लोपविकल्पः । प्रतिदिवेति । कनिनन्तम् ।

हलि च ॥ "र्वोरुपधायाः" इति सूत्रं, "सिपि धातोः"इत्यतो धातोरिति चानुवर्तते । र्वोरिति च धातोर्विशेषणम् । पदस्येति सम्बध्यमानमपि इक एव व्यधिकरणं विशेषणम् । तद्ध्वनयन्नाह-प्रतिदीव्न इति । अत्र वान्तस्य भत्वाभावात् "न भकुर्छुराम्"इति निषेधो न । धातोः किम् । अग्निः करोति ।

न संयोगा ॥ अन्तग्रहणं स्पष्टार्थम्* । संयोगस्य वमाभ्यां विशेषणेन तदन्तलाभात् ।

"सर्वनामस्थाने चासंबुद्धौ"इत्येव सिद्धे नियमोऽयमित्याह-शावेवेति । उपधाया इति । तेन 'अनुनासिकस्य'इत्यस्यापि नियम इति भावः । अत्र सर्वनामस्थानग्रहणं न सम्बध्यते । *तेन वृत्रहणी, वृत्रघ्नः, वृत्रघ्नीत्यादौ न 'अनुनासिकस्य'इति दीर्घः । इति निषेधे इति ।

---

*स्पष्टार्थमिति । ननु "न हलो वमाभ्याम्" इत्येव लाघवात्सूत्रमस्तु । हलः परौ यौ वकारमकारौ ताभ्यां परस्यानो ऽकारस्य लोपो नेत्यर्थेन 'यज्वनः, ब्रह्मणः, इत्यादीनां सिद्धेरिति चेन्न । राजन्शब्दे उपपदे मन्धातोर्विच्निष्पन्नाद् राजमन्शब्दात् शसि राजमन इत्यत्र मकारस्य हलः परत्वाभावेन निषेधाभावापत्तेः । सिद्धान्ते तु संयोगसंज्ञायां नलोपस्यासिद्धत्वेन मकारान्तसंयोगात्परत्वसत्त्वात् स्पष्टमेव । किञ्च पटुशब्दादाचक्षाणण्यन्तान्मानिनि ततः शसि पटुमन इत्यत्र णिलोपस्य टिलोपस्य वा स्थानिवत्त्वेन मकारस्य हलः परत्वाभावेन निषेधाप्राप्त्या लोपापत्तेः । यथाश्रुतन्यासे तु संयोगसंज्ञाया उभयलसम्बन्धित्वेन पूर्वमात्रसम्बन्धित्वाभावात् स्थानिवत्त्वाप्रवृत्त्या निषेधप्रवृत्तिः स्पष्टैवेति बोध्यम् ।

*तेन वृत्रहणी इति* । सर्वनामस्थानपदासम्बन्धेनेत्यर्थः । यद्यत्र सर्वनामस्थानपदसम्बन्धः स्यात्तदा सर्वनामस्थाने यदि दीर्घस्तदा शावे-

एतत्फलभूते निषेधे इत्यर्थः। शिस्त्रोरिति वक्तव्ये "सौ च"इति योग-विभाग उत्तरार्थः* ।

हो हन्तेः॥ ञ्णिन्नकारा *हस्यैव विशेषणम् । तत्र ञ्णि-द्विषये येननाव्यवधानन्यायेन द्वाभ्यां व्यवाये घातक इत्यादावेव, न तु हननीयतेर्ण्वुल्यनेकव्यवधाने । *इदं "धातोः कार्यमुच्यमानम्"इति परिभाषया धातुसंशब्दनेन विहितप्रत्यय एव। तेन वृत्रहणमाचष्टे वृत्रहय-तीत्यादौ न । ने तु परे वृत्रघ्न इत्यादावेव, स्थानिवत्त्वकृतव्यवधा-नेऽपि श्रौताव्यवधानसत्त्वात्*, न तु हननमित्यादौ श्रौतव्यवधाने-इति स्पष्टं भाष्ये।

वृत्रघ्न इत्यादौ णत्ववारणाय "हन्तेरत्पूर्वस्य"इति विभज्य व्या-चष्टे-हन्तेरिति । "उपसर्गादसमासेऽपि"इत्यत उपसर्गादिति वर्तते, रषाभ्यामिति च । तात्स्थ्यात्ताच्छब्द्यमित्याह—उपसर्गस्थादिति । प्रकृतोपयुक्तमाह—अत्पूर्वस्येति । अत इति सिद्धे पूर्वग्रहणं स्पष्टार्थम्। अत्र उपसर्गात् इत्यस्य निवृत्त्या* णत्वमात्रस्यायं नियम इत्याह-एकाजु-त्तरेति। णत्वमपीति । अपिना "प्रातिपदिकान्त"इत्यस्य, "कुमति

---

वेति नियमसम्भवाद् वृत्रहणी इत्यादौ नपुंसके "अनुनासिकस्य"इति दीर्घः स्यादेवेति भावः।

*उत्तरार्थ इति* । "अत्वसन्तस्य" इत्येतदर्थ इत्यर्थः।

*हस्यैवेति* । अङ्गस्य तु न, नकारपरकाङ्गासम्भवात् । ननु ञ्णितोरङ्गे एवान्वयोऽस्तु, किमव्यवहितपदार्थे सङ्कोचेनेति चेन्न। तथा सत्येक-धमावच्छिन्ने ऽनन्वयाद् द्वन्द्वानापत्तेः। *इदमिति*। नच ञ्णित्वस्य धातावपि सत्त्वेनास्य प्रत्ययनिमित्तकत्वाभावेन नात्र प्राप्तिरिति वाच्यम्। अङ्गाधिकारी-यत्वेनाङ्गस्य च प्रत्ययांशे उत्थिताकाङ्क्षतया प्रत्ययनिमित्तकत्वात् । *श्रौता-व्यवधानसत्त्वादिति*। नकारे परे कुत्वविधिसामर्थ्याच्छ्रौताव्यवधानस्य निमि-त्तत्वमाश्रीयते इति भावः । श्रौतव्यवधाने तदप्रवृत्तिस्वीकारादेव सूत्रे ञ्णादित्यस्य चारितार्थ्यम् । अन्यथा तत्राप्यनेनैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव ।

*अत्रोपसर्गादित्यस्य निवृत्त्येति* । ननूपसर्गादित्यस्य निवृत्तौ अनुपसर्गात्परस्य णत्वविधानेन चारितार्थ्यम्। न चास्य परिभाषात्वस्वी-कारेण हनवयवनकारस्थानिकमूर्द्धन्यविधायकशास्त्रेऽत्पूर्वस्येत्युपतिष्ठत इत्य-र्थान्न दोष इति वाच्यम् । "कुमति च" इत्यादावपि कदाचित्तदुपस्थित्या

च"इत्यस्य च सङ्ग्रहः। वाद्ध्यसामान्यचिन्ताश्रयणात्सर्वत्राधः। इदमत्पूर्व-ग्रहणं हस्थानिककवर्गाभाववद्धन्तेरुपलक्षणम्। अतो बहुवृत्रहाणीत्यत्र, प्राघानि प्रघनाघन इत्यत्र च न दोष इत्यन्यत्र विस्तरः। यत्तु कार्य-कालपक्षे बहिरङ्गदीर्घासिद्धत्वाद् बहुवृत्रहाणीत्यादौ न दोषः। प्राघानी-त्यादौ यथोद्देश एव लक्ष्यानुरोधादिति। तन्न; तत्पक्षेऽपि त्रिपाद्यां तत्परिभाषाया अप्रवृत्तेरुक्तत्वात्। प्रघनाघन इत्यत्र दोषाच्च। मा-धवेनोक्तमिति। वृत्रघ्नो वृत्रघ्ण इति रूपद्वयं तेनोक्तम्। तद्भा-ष्येति। "कुप्व्यवाये हादेशेषु प्रतिषेधो वक्तव्यः। वृत्रघ्नः, सुघ्नः, प्राघा-नि। हन्तेरत्पूर्वस्येत्यत्पूर्वग्रहणं न कर्त्तव्यं भवति"इति भाष्येत्यर्थः। अत्पूर्वग्रहणस्य तादृशोपलक्षितार्थत्वे मानाभाव इति तदाशयः।

अनिनस्मिन्निति। एतच्च "येन विधिः"इति सूत्रे भाष्ये स्पष्टम्। अन्यत्र तु "अलैवानर्थकेन तदन्तविधिर्न तत्समुदायेन"इति हन्ग्रहणे प्लीहन्ग्रहणं न।

मघवा बहुलम्॥ षष्ठ्यर्थे प्रथमा, तृ इति च वर्त्तते। ऋइदिति। तेनानेकाल्त्वाभावान्न सर्वादेशः।

उगिदचाम्॥ अचामित्यञ्चुधातोर्ग्रहणं व्याख्यानात्*। नलो-पिन इति। अकारलोपाकरणपूर्वकं नलोपकरणस्य विवक्षार्थत्वादि-ति भावः। अत्रोगित् झलन्त* एव व्याख्यानात्। तेन शमी शमि-नावित्यादौ नातिप्रसङ्ग इति."युवोरनाकौ" इत्यत्र भाष्ये स्पष्टम्*। उप-धादीर्घ इति। सर्वनामस्थाने चेत्यनेन। असिद्धत्वाभावकल्पने मा-नमाह—तथा चेति। निपातनादिति। "वनो र च"इति सूत्रे भाष्ये

---

हरिकामिणौ इत्यादौ णत्वानापत्तेः—इति चेन्न। हनवयवनकारस्य णत्वं भवति चेत् अत्पूर्वस्यैवेनियमः, न तु उपसर्गात् परस्य हनोऽवयवस्य नस्य चेत् अत्पूर्वस्यैवेति नियमवाक्ये उपसर्गादित्यस्य निवृत्तेत्यर्थविवक्षणेनादोषात्।

*व्याख्यानादिति। 'प्रत्ययः'इत्यादिनिर्देशरूपादित्यर्थः। प्रत्याहार-ग्रहणे प्रत्ययग्रहणे वा तत्र नुमि निर्देशासंगतिः स्पष्टैवेति भावः *झलन्त-एवेति। "नपुंसकस्य झलचः" इति सूत्रात् झलपदापकर्षणादञ्चुसा-हचर्याद्वेति भावः। *भाष्ये स्पष्टमिति। तत्र हि "युवोरनाकाविति चे-द्धातुप्रतिषेधः। युत्वा, युतवान्—इतिशङ्कायामनुनासिकपरयोर्युवोर्ग्रहण-मिति समाहितम्। अनुनासिकः परोऽवयवो ययोरित्यर्थः। ततो यद्यनु-

तु 'मघवन्शब्दो ऽव्युत्पन्नं प्रातिपदिकम्' इत्युक्तम् ।

मघशब्दादिति । धनार्थादित्यर्थः । आपावामसीति । अपिना छन्दसि । मघवानमीमह इति मध्योदात्तं वनिपि बोध्यम् । आकरे इति । "केशाद्व" इति सूत्रे कैयटे इत्यर्थः । एवञ्च मतुपि "अत्वसन्तस्य"इति दीर्घसत्त्वेन, त्रादेशे तदभावे, फलभेदे ग्रन्थस्वारस्यासम्भव इति भावः । नन्वेवमप्यन्तोदात्तस्य त्रादेशे वकाराकारस्योदात्तत्वं, मतुपि तु "ह्रस्वनुड्भ्याम्"इति प्राप्तस्य मतुबुदात्तत्वस्य "न गोश्वन्"इति प्रतिषेधेन पित्त्वादनुदात्तत्वे घकाराकारस्योदात्तत्वमिति फलभेदो ऽस्त्येवेति चेन्न । त्रादेशपक्षे दीर्घवत् बहुलग्रहणेन घकाराकारोदात्तत्वस्याप्यङ्गीकारात् । तत्रैव मानान्तरमाह—हविरिति । 'मघवानृजीषी' इत्यस्याप्युपलक्षणमिदम् ।

"अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत् ।
मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्" ॥

इत्यत्रत्यवार्तिकरीत्या मघवन्शब्दस्य लोके ऽसाधुत्वं लभ्यते । तथा च तृज्वत्सूत्रे भाष्यम्—"अविशेषविहिता अपि शब्दा नियतविषया दृश्यन्ते इति"इत्यन्यत्र विस्तरः ।

छन्दस्येवेति । न च वनिबन्तस्य संप्रसारणे यस्येतिलोपे मघोन इत्यसिद्धिः । व्याश्रयत्वान्नाभीयासिद्धत्वं लोपे संप्रमारणस्य । नापि बहिरङ्गासिद्धत्वम्, तस्या वाहऊठ्सूत्रस्थतयाऽऽभीयत्वेनाभीयान्तरङ्गस्य तद्दृष्ट्या ऽसिद्धत्वेनात्र तस्या अप्रवृत्तेः । अन्तरङ्गशास्त्राश्रय एव तदाश्रय इति समानाश्रयत्वमव्याहतम्;इति वाच्यम् । निपातितान्तोदात्तमघवन्शब्दमादाय सिद्धेः । "एकादेश उदात्तेनोदात्तः" इत्यस्य प्रवृत्त्या तत्र स्वरे विशेषाभावात् । छन्दस्यापाद्यरूपाभावान्नानिष्टापादनम् । अन्तोदात्तं त्विति । कन्यन्तत्वादव्युत्पन्नत्वाद्वा तत्त्वम् ।

अन्नन्तानामिति । "अल्लोपो ऽनः" इत्यपकृष्यते । तत्र नकारं प्रश्लिष्य नान्तानामित्यर्थः । तेन मघवत इत्यादौ नाल्लोपसंप्रसारणे, धीवरीत्यादौ च नाल्लोपः । स्पष्टश्चेदम् ऋत्व्रकसूत्रे भाष्ये । परे तु नकारप्रश्लेषाभावे ऽपि न दोषः । "अलोऽन्त्यस्य"इत्यस्य सत्त्वेनानः स्थानित्वाभावेन स्थानिवत्सूत्रेणान्नन्तत्वालाभात् । "सर्वे सर्वपदादेशा" इत्य-

नेनापि मघवन्शब्दस्यैव स्थानित्वं नानः । अर्द्धविकारे प्रत्यभिज्ञाऽभावान्नैकदेशविकृतन्यायावसरः । ध्वनितश्चेदं "श्वयुव"इत्यत्र भाष्ये इत्याहुः । मघवतीति । पुंयोगेन स्त्रियां वृत्तौ "उगितश्च"इति ङीप् । विभक्तौ लिङ्गविशिष्टग्रहणान्नुम्न ।

शुन इति । ननु संप्रसारणे वार्णादाङ्गस्य बलीयस्त्वेन पूर्वत्वं बाधित्वा "अल्लोपोऽनः" इति लोपे शुनइति सर्वानुदात्तं स्यात्, उदात्तनिवृत्तिस्वरेणान्तोदात्तं वा स्यात् । पूर्वरूपेणाद्युदात्तमिष्यते । तत्र हि वकारस्थानिकोकारस्य स्रंसनधर्महल्स्थानिकत्वेनानुदात्ततया श्वन्शब्दस्यान्तोदात्ततया ऽकारस्योदात्तत्वेन तयोः स्थाने जातस्यैकादेशस्योदात्तत्वात् । किञ्च लोपे स्थानिवत्त्वेन यणप्रसङ्गः । "अतेः शुनः" इत्यादिनिर्देशैस्तद्वारणे तु बहुश्वा बहुमघवा बहुयुवेत्यत्र "अन उपधालोपिनः" इति ङीब्विकल्पापत्तिः । मघोन इत्यादावन्तोदात्तप्रकृतिके उदात्तनिवृत्तिस्वरापत्तिश्च; इति चेन्न । वार्णपरिभाषाया अनित्यत्वेन क्वचिदप्रवृत्त्या ऽदोषात् । श्वन्शब्दे आभीयतया संप्रसारणस्यासिद्धत्वेन "न संयोगाद्"इति निषेधाच्च ।

न संप्रसारणे [illegible]स्यैव निषेध्यसमर्पके लब्धे पुनः संप्रसारणग्रहणसामर्थ्या[illegible] इति दूरस्थस्यास्य, "व्यथो लिटि"इत्यस्य च निषेधः । न च [illegible]ख्यादावस्य चारितार्थ्येन यून इ-

---

नासिकपरयोर्ग्रहणं तदा इत्संज्ञां प्राप्नोतीत्याशङ्क्य तत्र को दोषः ?, नुमागमप्रसङ्गः । तत्प्रतिषेधो वक्तव्यः । अन्यथा नन्दनः कारकः इत्यत्र नुम् प्राप्नोति इतिशङ्कायां–नुम्विधौ झलग्रहणम् । झलन्तस्योगित इष्यते" इत्युक्तम् ।

*न सम्प्रसारणे इति । अत्र केचित् । इदं सूत्रं माऽस्तु । 'सम्प्रसारणाच्च' इत्यत्र 'सम्प्रसारणादसम्प्रसारणे' इति लाघवात्कर्तव्यम् । तेन 'यून' इत्यत्र वकारस्य सम्प्रसारणे पश्चाद् यकारस्य सम्प्रसारणेऽपि सम्प्रसारणपरतया पूर्वरूपाभावाद् यणेष्टसिद्धिरिति । तन्न । प्रथमोपस्थितत्वेन कदाचित् पूर्वं यकारस्य सम्प्रसारणे तदानीं सम्प्रसारणपरकत्वाभावात्पूर्वरूपप्रवृत्त्या यून इत्यस्यासिद्ध्यापत्तेः । न च असम्प्रसारणग्रहणसामर्थ्यात् सम्प्रसारणयोग्यभिन्नेऽचीत्यर्थस्य विवक्षणेन–वकारस्य सम्प्रसारणे पूर्वरूपोत्तरं सवर्णदीर्घे परादिवद्भावेन यकारोत्तरोकारे सम्प्रसारणत्वसम्भावनया तन्निमित्तकपूर्वरूपाप्रवृत्त्या न दोषः, उभयोः सम्प्रसारणस्य सकृत्प्रवृत्तेश्च; इति वाच्यम् । वाक्यसंस्कारपक्षे 'एष यूनः पश्यति' इत्यत्र यकारस्याऽच्स्थानिकत्वेन स्थानिवद्भावेनाच्त्वारोपे 'एतत्तदोः' इति सुलोपानापत्तेरिति दिक् ।

त्यादौ पूर्वं सवर्णदीर्घरूपैकादेशे तस्य "अचः परस्मिन्"इति स्थानिवत्त्वेन संप्रसारणत्वे ऽपि तेनैव स्थानिवत्त्वेनोकारव्यवधानात्कथं निषेध इति वाच्यम् । व्यथ इति सूत्रे यग्रहणेनैव सिद्ध्या संप्रसारणग्रहणस्यैतन्निषेधकृतयैव चारितार्थ्यस्य वक्तव्यत्वेन व्यवहिते ऽपि प्रवृत्तेः, "यूनस्तिः"इति निर्देशाच्च;इत्याशयेनाह—इति यकारस्येति। न च कार्यकालपक्षे "इग्यण" इत्युपस्थितस्य पदैकवाक्यतयाऽन्वये निमित्तस्य यणाऽन्वयेन येननाव्यवधानन्यायेन पूर्वस्य संप्रसारणाप्राप्तेरिदं सूत्रं व्यर्थमिति वाच्यम् । तत्पक्षेऽपि सञ्ज्ञासूत्राणां वाक्यभेदेनैव संबन्धस्योक्ततया विधायकेषु यण इत्यस्याभावात । अत्र चेदमपि ज्ञापकं बोध्यम् ।

ननु सकृत्प्रवृत्त्यैवोभयोः संप्रसारणे जाते निषेधो व्यर्थो निमित्तत्वानुपपत्तिश्चेत्यत आह—अत एव ज्ञापकादिति । तदुक्तं भाष्ये "इहेङ्गितेन चेष्टितेन निमिषितेन महता वा सूत्रप्रबन्धेनाऽऽचार्याणामभिप्रायो गम्यते, एतदेव ज्ञापयति परस्य पूर्वं भविष्यति"इति । 'लक्ष्ये लक्षणस्य' इति न्यायस्य तु नायं विषयः। कार्याश्रयवर्णभेदेन लक्ष्यभेदात्* ।

अर्वणस्तृ । न तु साविति । पर्युदास एव तूचितः। प्रत्ययत्वेन च सादृश्यम् । अनञ इति बहुव्रीहिः । 'वाजमर्वत्सु'इति प्रयोगात् । तत्पुरुषे ह्यनञः परस्यार्वण इत्यर्थे ऽत्र न स्यात् । सुरत्र प्रथमैकवचनम् । अनञः किमिति । अनञ इत्यस्य कः शब्दो व्यावर्त्य इति प्रश्नः। उत्तरम्-अनर्वेति। यज्वन्शब्दसदृशो ऽनर्वन्शब्दो व्यावर्त्य इत्यर्थः ।

नन्विह निरनुनासिकोच्चारणेऽपि तपरसूत्रस्यानणीव विधीयमाने ऽपि विध्यर्थत्वात्तस्यान्तरतम्यादनुनासिकः स्यात्, तपरसूत्रे ऽप्रत्ययग्रहणानुवृत्तावण्ग्रहणानुवृत्तौ च मानाभावादत आह-आआदिति । विशेष्यविशेषणभावेनान्वयान्न सर्वादेश इति भावः। भाष्ये त्वनुनासिकविधाने प्रतिपत्तिलाघवाय तस्यैवोच्चारणे कार्ये तदनुच्चारणात् शुद्धस्यैव

---

*वस्तुतस्तु एवंलक्ष्यभेदाश्रयणे पथ इत्यत्र पुनः "भस्य टेर्लोपः" इति टिलोपापत्तिः । तस्मात् प्रथमप्राप्तिसमानकालिकप्राप्तिविषयघटिते लक्ष्ये पुनः शास्त्रप्रवृत्तेः एतज्ज्ञापकादेवाश्रयणेन भवेताम्, भूयात् इत्यादौ सलोपादिसिद्धिरित्यन्यत्र विस्तरः।

विधानमित्युक्तम् ।

केचित्तु इदं सर्वं 'गुणा भेदकाः' इति पक्षे । वृद्धिरादैच्-सूत्रभाष्यसंमते सिद्धान्तभूते "गुणा अभेदकाः" इति पक्षे, जातिपक्षे च तत्प्राप्तस्यापि सवर्णग्रहणस्याप्रत्ययग्रहणेन निषेधेनादोषात् । अत एव भाष्ये 'तपरस्तत्कालस्येति प्राप्नोति'इत्युक्तम् । अप्रत्यय इति च वाक्यभेदेन सर्वप्रतिषेधकम्, अणग्रहणस्य च तत्रासम्बन्ध इति तदाशयः । अत एव भाष्ये "भाव्यमानेन सवर्णानां ग्रहणं न"इत्येव पठितं, न त्वणेति । एतदेवाभिप्रेत्याणुदित्सूत्रे ऽनया परिभाषया ऽप्रत्ययग्रहणवैयर्थ्यमाशङ्क्याप्रत्ययग्रहणस्य तत्परिभाषाज्ञापकत्वमुक्तम् । तेन च तस्याव्यापकत्वं सूचितम्, अप्रत्ययग्रहणस्य मदुक्तरीत्या व्याख्यानञ्च सूचितम् । तेन जातिग्रहणप्राप्तस्य गुणाभेदकत्वपक्षप्राप्तस्यचानया ऽणनणसाधारण्येन निषेध इति सूचितम् ।

वस्तुतो ऽणुदित्सूत्रस्थाप्रत्ययग्रहणज्ञापकत्वपरभाष्यस्य एकदेशानुमतिद्वारा परिभाषा बोध्यते इत्यर्थः । प्रतीयत इत्यस्य विधीयत इत्यर्थाप्रसिद्ध्या कैयटोक्तव्याख्या चिन्त्या । परिभाषायां सवर्णपदेन समानजातीयो भिन्नधर्मा उच्यते । तेन जशादिविधौ जत्वादिजात्याश्रयसर्वजकारादिग्रहणसिद्धिरित्याहुः ।

एतेन पथीयतेः क्विपि पन्था इत्यादीत्यपास्तम् । अत्र शुद्धार्थं तदनुच्चारणस्यावश्यकत्वेन भाष्यासङ्गतेः । तस्मात्तदनभिधानमेवोचितम् । न च अदित्येवास्तु, नकारेकारयोरत्वे सवर्णदीर्घेण रूपसिद्धेः, पररूपं तु न, "पथिमथ्यृभुक्षां लोपः, भस्य टेः, इतोऽत्सर्वनामस्थाने" इति न्यासेन नकाराश्रवणसिद्धावकारविधानसामर्थ्याद् इति वाच्यम् । ज्ञानगौरवपरिहारेण स्पष्टार्थमाकारोच्चारणात् ।

इतोऽत् ॥ आदित्यनुवृत्त्यैव सिद्धे ऽद्वचनमृभुक्षणमित्यादौ "वा षपूर्वस्य"इति दीर्घविकल्पे पक्षे ह्रस्वश्रवणार्थम् । इत इति अदिति च तपरत्वं मुखसुखार्थम् । एरदित्युक्तौ ततो लाघवाभावात् । अन्यथा विधेयेऽपि तपरकरणात्कुरुत इत्यादौ गुणाभाववत् पन्थानावित्यादौ दीर्घाभावापत्तिरित्यन्यत्र विस्तरः ।

थो न्थः ॥ थो नुडिति नोक्तम् । इत्संज्ञाया आद्यन्तावित्यस्य

चानुसन्धाने प्रक्रियागौरवात् ।

*भस्य टेः ॥ भस्य किम् । पथिभ्याम् । सम्बुद्धौ नपुंसकानामिति । इदं नलुमतेतिनिषेधानित्यत्वमूलकमित्युक्तम् । यद्यपि भाष्ये वा नपुंसकानामित्येव पठितं, तथापि सूत्रे ङिग्रहणस्य प्रत्याख्याततत्वेन, हे चर्मन्, हे चर्म, इति संबुद्धावेवोदाहृतत्वेन च तावन्मात्रविषयताऽस्येति भावः ।

ष्णान्ता ॥ विशेष्यसाकाङ्क्षात् स्त्रीलिङ्गनिर्देशात् प्रकृतं संख्येत्याकृष्यते । संख्याशब्देन च संख्याप्रकारकबोधजनकाः पञ्चादयो गृह्यन्ते । संख्येतिशब्दे बहुगणडातिषु च तदन्तत्वासम्भवात् । तदाह—संख्येति । सन्निपातेति । बहिरङ्गासिद्धत्वं न । संज्ञायाः कार्यकालपक्षत्वेन समत्वात् । स्पष्टञ्चेदं भाष्ये ।

नोपधा ॥ नलोपस्यासिद्धत्वान्नामीति दीर्घाप्राप्तेरयमारम्भः । नामीत्यस्याङ्गविशेषणतैव न्याय्या । नामः [illegible] । एवञ्च पञ्चानामित्यादौ पकाराकारस्य दीर्घवारणायोपधाग्रहणम् । नेति किम् । चतुर्णाम् । नामि किम् । चर्मणाम् । नलोप इति । "ब्रुवः पञ्चानाम्"इति लिङ्गान्न सन्निपातपरिभाषाविरोधः ।

अष्टन आ । अनण्त्वान्नानुनासिक इति भाष्ये स्पष्टम् । जातिग्रहणेन गुणाभेदकत्वेन तु न सः । भाव्यमानत्वात् । शुद्धोच्चारणादिति तु नात्र वक्तुं शक्यम् । रायो हलीत्युत्तरार्थन्तस्य चारितार्थ्यात् । प्रश्लेषेणापि न निर्वाहः । वाच्यवृत्त्याऽनुनासिकव्या-

---

*अत्र "भाङ्टित्" इति सूत्रयित्वा प्रत्ययस्य ङिद्वद्भावं कृत्वा टिलोपेन सर्वेष्टसिद्धिस्तु न कर्तुं शक्यते । सुपथिन्शब्दादिदमर्थेऽणि टिलोपे आभीयासिद्धत्वेन पुनष्टिलोपानापत्तेः । सिद्धान्ते तु भस्य टेर्लोप इत्यस्याभीयत्वाभावेन तेन पुनष्टिलोपः सिध्यति । न च सिद्धान्तेऽपि नित्यत्वात् परत्वाच्च पूर्वं "भस्य टेर्लोप" इति लोपे नान्तत्वाभावेन नस्तद्धिते इति टिलोपो नैव भवतीति सौपथमित्येव रूपं नतु सौपमिति, अत एव पाथेयमित्यादिप्रयोगाः सङ्गच्छन्ते इति वाच्यम् । एवमपि सुपथिन्शब्दात् णिचि इष्ठनि च "भस्यटेर्लोप" इति लोपे "इष्ठेमेयःसु टेर्लोपः" इत्यर्थकेन टेरित्यनेन पुनष्टिलोपे इष्टानां सुपयति सुपिष्ठ इत्यादीनामसिद्धिप्रसङ्गात् । ङिद्वद्भावेन टिलोपेऽपि आभीयासिद्धेन पुनष्टिलोपानापत्तेरिति दिक् ॥

वृत्तेरनेनालाभात् । प्रत्युत तत्रापि गुणाभेदकत्वाद्दुर्वारत्वेनाऽऽन्तरत-म्यादनुनासिकस्यैव प्राप्तेः । प्रश्लेषस्य पर्यायेण सकलाकारविधानार्थत्वं स्यात् । एवमन्यत्रापि बोद्ध्यम् । "रायो हलि" इत्यतो हलीत्यपकृष्यते ।

अष्टाभ्य औश् ॥ उङिति तु नोक्तम् । सकारस्योकारे 'अष्टा अ उ' इति स्थिते "इण्ङिशीनामाद्गुणः सवर्णदीर्घत्वात्" इति न्या-येनान्तरङ्गत्वात्सवर्णदीर्घे तत आद्गुणे 'अष्टौ' इत्यस्यासिद्ध्यापत्तेः* । हली-त्यपकर्षे कृताकारादित्यनुपपन्नमत आह—कृतात्वेति । कृतात्वानुकर-णमित्यर्थः । लक्षणवशसंपन्नत्वे हि तस्य वैकल्पिकतया लाघवादष्टभ्य इत्येव वदेदिति भावः । ज्ञापयतीति । अयं भावः* । हलीत्यपकृ-ष्यमाणं वाक्यभेदेन पुनर्विधानार्थम् । तेन 'अष्टन' इत्यस्य क्व चिदक्ष्वपि प्रवृत्तिरिति । आत्वमिति । आत्वमात्रमित्यर्थः ।

सूत्रे इति । दीर्घान्तादष्टनः परा ऽसर्वनामस्थानविभक्तिरुदात्तेति तद-र्थः । ज्ञापकादिति । तद्धि 'अष्टाभिः' इति ह्रस्वे ऽन्तोदात्तव्यावृत्त्यर्थम् । एवञ्च ह्रस्वव्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणमात्ववैकल्पिकत्वे ज्ञापकम् । न च अष्टा-भिरित्यत्र सावकाशस्य "अष्टन" इति सूत्रस्याष्टभिरित्यत्र परत्वाद् "झल्यु-पोत्तमम्" इत्यनेन बाधे सकृद्गतिन्यायेन पुनरप्रवृत्तौ व्यर्थमेव तत्, न ह्यष्टा-भिरित्यत्र "झल्युपोत्तमम्" इति प्राप्नोति, कार्यकालपक्षे ऽनान्तत्वेन षट्त्वा-भावात्, अल्विधित्वेन स्थानिवत्त्वाभावाच्च; इति वाच्यम् । पुनःप्रसङ्ग-विज्ञानबोधनद्वारा, एतद्विषये यथोद्देशपक्षस्यैवाश्रयणबोधनद्वारा वा, तद्विकल्पे ज्ञापकमित्याशयादित्यन्यत्र विस्तरः* ।

---

*असिद्ध्यापत्तेरिति* । यद्यपि उङ्विधानेऽपि जश्शसोरकारस्य सकारस्थानिकोकारस्य च स्थाने जायमानस्य गुणस्य प्रत्ययावयवमात्रस्थानि-कत्वेन प्रकृतिप्रत्ययोभयावयवाकारस्थाने जायमानात्सवर्णदीर्घादन्तरङ्गत्वेन पूर्वं गुणे ततो वृद्धौ नायं दोषस्तथापि शसि गुणे कृते अष्टा ओ इति स्थि-ते भसंज्ञायां "आतो धातोरित्यत्र धातुग्रहणमाब्निवृत्त्यर्थमेव" इति शेख-रकारसिद्धान्ते तेन अष्टाइत्याकारलोपे अष्टौ इत्यसिद्ध्यापत्तिरूपो दोषो दु-रुद्धर एव । एतेन "अष्टाभ्य औश्" न्यासोऽपि परास्त इति बोध्यम् ।

*अयं भाव इति* । एतेन हलादिविभक्तौ कृतात्वानुकरणेन हला-दावेव किञ्चिदपूर्वकल्पना स्यान्न त्वजादावात्वकल्पनमित्यपास्तम् ।

*अन्यत्र विस्तर इति* । यथोद्देशपक्षे भविष्यति किञ्चिदनेन प्रयोजन-मित्यभिसन्धिमात्रेण सुबुत्पत्तिदशायामेव षट्संज्ञायां तत आत्वेऽपि नान्तसं-

अष्टानामिति । हलीत्युक्तेरादौ नुट्, तत आत्वम् । यत्तु 'सन्निपातपरिभाषया ऽत्र नात्वं, किन्तु "नोपधायाः" इति दीर्घे नलोपः । अन्तोदात्तत्वन्तु "षट्त्रि"इत्येव सिद्धम् । नलोपे तु न सन्निपातपरिभाषा, नलोपस्यासिद्धत्वात्' इति । तन्न । पूर्वत्र कर्त्तव्ये नलोपासिद्धत्वेऽपि तत्र कृते ऽसिद्धत्वे मानाभावात् । सन्निपातस्याशास्त्रीत्वेन तस्य नलोपासिद्धत्वेनालाभाच्च । आरोपितासिद्धत्वेऽपि वस्तुतो नलोपे तद्विघातस्य जायमानत्वेन नलोपे ऽपि तस्या दुर्वारत्वाच्च । अत एव 'गव्यिता, नाव्यिता'इत्यादौ सन्निपातपरिभाषया यलोपो न । अन्यथा "यस्य हलः"इति यलोपस्य बहिर्भूतऋज्निमित्तकत्वेन बहिरङ्गतयाऽन्तरङ्गावादेशं प्रत्यसिद्धतया निमित्तविघाताभावः स्पष्ट एव । तस्मान्नलोपस्यापि परिभाषाऽनित्यत्वेनैव साध्यतया तस्यासिद्धत्वादात्वमेव युक्तं तदनित्यत्वेन । किञ्च षट्संज्ञासन्निपातेन जातस्य नुट आत्वे नलोपे वा न तद्विघातकत्वम् । स्थानिवद्भावेन कृतात्वेऽपि षट्त्वसत्त्वात् । कार्यकालपक्षे तत्तद्विध्येकवाक्यतापन्नषट्त्वस्य बहिरङ्गतयाऽऽत्वे कृते ऽनान्तत्वेन षट्त्वाभावान्नुट् न स्यादिति हलीत्यपकर्षः । दीर्घग्रहणाज्ज्ञापकादाकारान्तस्य षट्संज्ञाश्रयणे, अत्र यथोद्देशस्यैवाश्रयणेनान्तरङ्गत्वात् पूर्वं षट्त्वे नान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य स्थान्यल्धर्मत्वाभावेन स्थानिवद्भावादाकारान्ते आश्रयणे वा प्रतिपत्तिगौरवमिति बोद्ध्यम् ।

वृत्त्याद्यनुसारेणाह-गौणत्वे त्वित्यादि । स्थानिवद्भावादिति । 'पूर्वत्रासिद्धे'इति तु 'तस्य दोषः'इत्यनेन निषिद्धमिति भावः । कार्यकालपक्षे इत्यादि तु प्राचामनुरोधेनेत्युक्तम् । प्राधान्य एवेति । बहुवचननिर्देशात् । एवञ्च गौणे आदेशाप्रवृत्तौ तज्ज्ञाप्याऽऽत्वमपि नेति भावः ।

परे तु "ष्णान्ता"इति सूत्रे भाष्ये 'अष्टानाम्'इत्येतत्सिद्धये हलीत्यपकर्षमुक्त्वा तत्र पक्षे "प्रियाष्टौ प्रियाष्टा इति न सिद्ध्यति, प्रियाष्टानौ प्रियाष्टान इति प्राप्नोति" इति शङ्किते यथालक्ष-

---

ख्यावाचकत्वसमानाधिकरणधर्मविशेषस्य षट्त्वस्याल्धर्मत्वाभावेन स्थानिवत्त्वेनैकदेशविकृतन्यायेन वा सुलभत्वात् 'अष्टाभिः' इत्यत्रापि "झल्युपो-

णमप्रयुक्ते इति समाहितम्। तत्र यथालक्षणमिति प्रतीकमुपादाय "यस्य विशिष्टः प्रयोगो न स्मर्यते, नापि प्रयोगनिषेधस्मृतिः, तद् यथालक्षणमनुगन्तव्यं तदत्र मा भूदात्वमित्यर्थ" इत्येकमर्थमुक्त्वा "नैव वा लक्षणमप्रयुक्ते प्रवर्त्तते, प्रयुक्तानामेव लक्षणेनान्वाख्यानात्" इति व्याख्यानान्तरमुक्तम्। तत्रान्त्यव्याख्यानमेव ज्यायः। अप्रयुक्ते लक्षणाभावस्यैव योग्यता, न तु लक्षणप्रवृत्तेरित्यर्थसङ्गतेः। आद्यव्याख्यायामप्रयुक्ते इति वाक्यशेषासङ्गतिः। प्रयुक्तेऽपि लक्षणानतिक्रमात्। प्रयुक्तानामिदमन्वाख्यानमित्यन्यत्र भाष्योक्तेश्च। किं च भाष्यकारस्य लक्ष्यैकचक्षुष्कतया इयमेव व्याख्योचिता। एकस्यैव प्रयोगस्य भाष्यफक्किकाव्याख्यानभेदेन साधुत्वासाधुत्वयोरनौचित्याच्च। "न वा" इति सूत्रे भाष्ये पक्षभेदेनैकस्यैव साधुत्वासाधुत्वयोस्तिरस्काराच्च। अत एव हलङ्यादिसूत्रादावस्याप्रयुक्ते लक्षणाभाव इत्येव व्याख्याऽऽदृता कैयटेन। "नाम्रेडितस्य" इति सूत्रेऽपि कैयटः-"प्रयोगमूलत्वादस्य शास्त्रस्य प्रयोगाभावे न प्रवृत्तिः" इति। एवञ्चैषामनभिधानमेवोचितम्। अत एव "अष्टाभ्य औश्" इति सूत्रे भाष्ये "विभाषा आत्वं, यदयमात्वभूतस्य ग्रहणङ्करोति अष्टाभ्य इति। अन्यथा अष्टन इत्येव ब्रूयात्" इत्युक्तम्। कैयटरीत्या गौणे प्रवृत्त्यभावाय बहुवचननिर्देशस्यावश्यक-

---

त्तमम्" इत्यस्य प्राप्त्या ऽष्टन्स्वरस्य निरवकाशतया तदपवादत्वात्। न चाष्टानामित्यत्र तस्य चारितार्थ्यमिति वाच्यम्। "झल्युपोत्तमम्' इत्यस्याप्राप्तावपि "षट्त्रिचतुर्भ्यो हलादिः" इत्यस्य प्रवृत्त्या निरवकाशत्वस्य तदवस्थत्वात्। न चाऽऽकारान्ते उक्तरीत्या षट्त्वे 'अष्टौ' इत्यत्र जश्शसोर्लुगापत्तिरिति वाच्यम्। औश्विधि सामर्थ्यात्तदप्रवृत्तेः। नन्वेवं तत्राष्टन्स्वरस्य चारितार्थ्यमिति चेन्न। अष्टन्शब्दस्य घृतादिपाठनान्तोदात्ततया "एकादेश उदात्तेनोदात्तः" इत्येव तत्रान्तोदात्तत्वसिद्धेस्तदर्थमस्यानुपयोगात्।

ननु प्रियाष्टाभिरित्यादौ तस्य चारितार्थ्यम्। "चतुरः शसि" इति सूत्रस्थभाष्यप्रामाण्येन षट्स्वरविधायके विहितविशेषणाश्रयणेन तस्य गौणे ऽप्रवृत्तेः स्वीकारात्। तत्र हि "स्त्रियां प्रतिषेधो वाच्यः" इति वार्तिकं चतसर्याद्युदात्तनिपातनेन प्रत्याख्याय, चतसृणामित्यत्र विभक्तिस्वरबाधमाशङ्क्य "षट्त्रिचतुर्भ्यो हलादिः" इतिसूत्रस्थहलादिग्रहणस्य—षट्संज्ञायां बहुवचनविषयत्वाद् बहुवचनेषु चाजादिविभक्त्योर्जश्शसोर्लुप्ततया, त्रिचतुर्शब्दयोरपि बहुवचनविषयत्वादसर्वनामस्थानपदानुवृत्तेर्जस्यप्राप्तौ, शसि च त्रिशब्दे "एकादेश उदात्तेनोदात्त" इत्येव सिद्धेश्चतुर्शब्दे "चतुरः शसि" इति स्वरेण बाधाद् फलाभावेन निपातनस्वरस्य विभक्तिस्वराबाधकत्वे ज्ञा-

तया तदसङ्गतिः स्पष्टैव । एवञ्च तत्प्रयोगविचारः सर्वोऽपि निष्फल एवेत्याहुः* ।

निरुपपदादिति । नुमोऽसमास एव विधानेन, सोपपदे "चोः कुः" इति कुत्वेनैव सिद्धत्वेन क्विनि क्विपि च विशेषाभावादिति भावः । कनाविति । इदमुपलक्षणमुच्चारणार्थेकारस्यापि । ककारो गुणप्रतिषेधाद्यर्थः । नकारः "क्विन्प्रत्ययस्य" इत्यत्र विशेषणार्थ इति भाष्ये स्पष्टम् ।

सन्निहिते इति । तत्फलन्तु णिजादीनां संज्ञाऽभावः* ।

अतिङ् किम् । *रुरुदिवेत्यादौ "नेड् वशि कृति" इति निषेधो मा भूदिति । *ज्ञापकेन निर्वाहस्तु व्याख्यानाद्दूरं करणमिति न्यायाननुगृहीत इति सूत्राशयः ।

युजेर ॥ "उगिदचाम्" इत्यतः सर्वनामस्थाने इति, "इदितो नुम्" इत्यतो नुमिति चानुवर्त्तते ।

---

पकत्वमुक्तम् । षट्स्वरस्य गौणेऽपि प्रवृत्तौ प्रियाष्टान इतिव्यावृत्तिफलसत्त्वेन हलादिग्रहणस्य ज्ञापकत्वपरभाष्यासङ्गतिः स्पष्टैव । न च 'कदष्टौ' इत्यत्राऽव्ययपूर्वपदप्रकृतिस्वरसत्त्वेन "अष्टौ, परमाष्टौ" इतिवदेकादेशस्वरेणासिद्धेस्तद्व्यावृत्त्यर्थं हलादिग्रहणमावश्यकमिति वाच्यम् । एतद्भाष्यप्रामाण्येनैतदनभिधानात्, इति चेन्न । दीर्घग्रहणज्ञापकपरभाष्यप्रामाण्येनाष्टन्स्वरस्यापि गौणेऽप्रवृत्तेः स्वीकारादिति दिक् ।

*आहुरिति । वस्तुतस्तु अलक्षणपदस्थलक्षणशब्दस्य लक्षणप्रवृत्तिपर्यन्तं लक्षणायां मानाभावेनाऽऽद्यव्याख्याया एव समीचीनतया तत्प्रयोगविचार आवश्यक एवेति दिक् ।

*तेन स्तूयते इत्यादौ अकृदिति पर्युदासो नेति दिक् ॥

*रुरुदिवेति* । न चात्र 'नेड्वशि कृति' इतिप्राप्तस्यापि निषेधस्य क्रादिनियमेन बाधाद् रूपसिद्धिर्निर्बाधैवेति वाच्यम् । मध्ये ऽपवादन्यायेन क्रादिनियमस्य 'एकाच' इति 'श्र्युक' इतिसूत्राभ्यां प्राप्तस्यैवेण्निषेधस्य नियामकत्वेन परस्य "नेड्वशि" इत्यस्य तेन बाधायोगात् । वस्तुतस्तु 'बभूविव' इति रूपस्य पुरःस्फूर्तिकत्वेन तत्त्यागे बीजाभावाद्, बाध्यसामान्यचिन्तयोक्तप्रकारेण प्रकृते दोषाभावाच्च 'अरुदिव' इति पाठः साधुः । तत्र हि 'रुदादिभ्यः सार्वधातुके' इति प्राप्तस्येटो निषेधाभावाय सूत्रे ऽतिङ्ग्रहणस्यावश्यकत्वादिति वोध्यम् । *ज्ञापकेनेति* 'अकृत्सार्वधातुकयोर्दीर्घः' इतिसूत्रस्थसार्वधातुकग्रहणेन, 'तिङश्च' इति सूत्रेण चेत्यर्थः । तथा हि-अकृत्सार्व' इति सूत्रे सार्वधातुकग्रहणं 'चिनुयात्' इत्यत्र दीर्घाभावाय । यदि तिङः कृत्संज्ञा स्यात्तदा कृत्पर्युदासेनैव दीर्घाभावसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । एवं पचति-

क्विन्प्रत्ययस्य ॥ प्रत्ययग्रहणसामर्थ्यादतद्गुणसंविज्ञानो बहुव्रीहिः । न च तदभावे वस्य कुत्वापत्तिः । तथा सति 'क्विनो घः' इत्येव वदेत्, "नशेर्वा" इत्यत्र घानुवृत्त्यात्वप्यदोषादिति बोध्यम् ।

चोः कुः ॥ "स्कोः" इत्यतोऽन्ते इति, "झलो झलि" इत्यतो झलीति चानुवर्त्तते, "पदस्य" इति चाधिकारः । कुत्वस्यासिद्धत्त्वादिति । अतद्गुणबहुव्रीह्याश्रयणात्प्राप्तिः । सुयुगिति । "सत्सूद्विष" इति क्विप् । धातुपाठोक्त । *व्याख्यानादिति भावः । युगिति । "क्विप् च" इति क्विप् । इष्टेति । "सृजिदृशोः" इति सूत्रे 'रज्जुसृड्भ्याम्' इति भाष्यप्रयोगात्काम्यच्सूत्रे भाष्ये 'उपयट्काम्यति' इति प्रयोगात् "क्विन् प्रत्ययस्य" इति कुत्वं नेत्यर्थः । परिमृडिति । धातोरुच्यमानं कार्यं तत्प्रत्यये" इति परिभाषया ऽत्र सुब्निमित्तिका मृजेर्वृद्धिर्न । क्विब्निमित्तिका तु "क्ङिति च" इति निषेधान्न । परौ व्रजेः । "क्विब्वचि" इत्युणादिपठितमिति मते* ततः क्विब्दीर्घावनुवर्तेते, *व्याख्यानाच्च ताभ्यां पदान्त इत्यस्यासम्बन्धः, किन्तु षेणैवेत्याह— क्विबित्यादि ।

विश्वस्य ॥ "ढ्लोपे" इत्यतो दीर्घ इत्यनुवर्त्तते । ननु षत्वादीनामसिद्धत्वेन राट्शब्दपरत्वाभावः, अत आह—पदान्तेति । तेन विश्वराजावित्यादौ न, विश्वाराड्भ्यामित्यत्र च भवति । 'आदित्यविश्ववसवः' इत्यत्र तु न दीर्घः । "नरे संज्ञायाम्" इत्यतः संज्ञापदापकर्षणात्* ।

---

तमामित्यादौ तिङन्तस्य कृदन्तत्वेन प्रातिपदिकतया 'अतिशायने' इत्यनेनैव तमबादिसिद्धेस्तिङश्चेत्यस्य वैयर्थ्यं स्पष्टमेव; इति सार्वधातुकग्रहणतिङश्चेतिसूत्रयोरुक्तार्थे ज्ञापकत्वं बोध्यम् । तिङः कृत्संज्ञाव्यावृत्तेः फलान्तरं तु पचति, चिकीर्षतीत्यादौ तुग्व्यावृत्तिरिति ॥

*व्याख्यानादितीति* । योगार्थस्य प्राचुर्येण प्रसिद्धेः 'अभिव्यक्तपदार्था' इतिन्यायमूलकाद्व्याख्यानादित्यर्थः । अत एव प्रतिपदोक्तस्यापि कुर शब्दे इत्यस्य "न भकुर्छुराम्" इत्यत्र न ग्रहणमित्याहुः ॥

*इति मते इति* । यदा त्वन्येभ्योऽपि दृश्यते इति दृशिग्रहणात् क्विब्वचीति सिद्धमिति, तदाऽनेन षत्वमात्रं विधीयते इति बोध्यम् ।

*व्याख्यानाच्चेति* परिव्राजाविति लक्ष्यदर्शनमूलकादित्यर्थः ।

*संज्ञापदापकर्षणादिति* । एवञ्च यत्र पूर्वोत्तरपदघटिता संज्ञा तत्रैव दीर्घः । कोशघटकपदानि तु प्रत्येकं संज्ञास्वरूपबोधकानि, न तूभयपदघटिता संज्ञा तत्रोपात्तेति भावः ।

स्कोः सं ॥ 'झलो लोपः संयोगान्तलोपः' इति भाष्योक्तेरत्र झल इत्यस्यासम्बन्धः। तेन झलः परयोः स्कोर्लोप इति नार्थ इत्यन्यत्र प्रपञ्चितम्। झलीत्यनुवर्त्तमानं झलादिप्रत्ययपरम्। "झलो झलि" इत्यत्र "उदः स्था" इत्यारम्भेण तदर्थकतयाऽर्थाधिकारात्। तेन पृथक्स्थाता, पयःस्थितिरित्यादौ न दोषः। *सडीति वार्तिकाच्च। सनस्सकारमारभ्याऽऽमहिङो ङकारात्सङिति प्रत्याहारः। भूयास्तामित्यादौ 'व्यञ्जनपरस्य' इति न्यायेन लोपाभावेऽपि न क्षतिः।

केचित्त्वप्रत्यये संयोगादिलोपप्राप्तियोग्योदाहरणानामनभिधानमेवोचितम्। 'सडीति वक्तव्यं काष्ठशक्स्थाता' इति वार्त्तिकस्य प्रत्याख्यानपरेण "काष्ठशगेव नास्ति, कुतः काष्ठशक्स्थाता" इति भाष्येण तथैव बोधनादित्याहुः।

प्रत्याख्यानमेकदेश्युक्तिः*। सडीति वक्तव्यमेवेति परे।

"चोः कुः" इत्येतत् षत्वेनापवादत्वाद् बाध्यते, क्विन्प्रत्ययस्येत्यस्य तु क्विन्विधानसामर्थ्यादेव न बाध इत्याह- क्विन्नन्तत्वादिति। ऋत्विक्शब्दो यज्ञसम्बन्धिपुरुषविशेषे रूढः।

त्यदादीनामित्यनुवृत्तेराह—त्यदादीनामिति। तेन 'आतपः' इत्यादौ न। तदोः किम्। यः। तोरिति तु नोक्तम्। अनेषेत्यादौ नस्याप्यापत्तेः। न च नुटो बहिरङ्गत्वेनासिद्धत्वम्। बहिर्भूतसुनिमित्तकत्वेनास्यैव बहिरङ्गत्वात्। इदञ्च "तस्मान्नुडचि" इति सूत्रे भाष्ये ध्वनितम्*। सौ किम्। तौ। अत्वसत्वे नेति। गणकार्यत्वादिति भावः।

---

*सडीति वार्तिकाच्चेति*। "परेश्च घाङ्कयोः" इति सूत्रस्थ'सङि लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वादीनि वक्तव्यानि' इतिवार्तिकैकदेशभूतादित्यर्थः। *एकदेश्युक्तिरिति* पृथक्स्थाता, पयःस्थितिरित्यादीनां लोकसिद्धतया तदनभिधाने मानाभाव इति तदाशयः।

*ध्वनितमिति*। तत्र हि तस्मादित्यस्याभावे नञ एव नुटः प्राप्तिमाशङ्क्य "एवं तर्हि पूर्वान्तः करिष्यते। तत्रायमप्यर्थस्तदोः सः सावनन्त्ययोरितीति तदोर्ग्रहणं न कर्तव्यं भवति। तत्र हि तवर्गनिर्देशो एतत्प्रयोजनम् अनेषः करोतीति"। नचात्र परादित्वेऽपि निर्दिश्यमानपरिभाषया नुटो न भविष्यतीति तवर्गनिर्देशो न दोष इति वाच्यम्। निर्दिश्यमानत्वस्य विभक्त्यव्यवहितपूर्वत्वस्य च नुड्रहिते सत्त्वेन तदवयवत्वस्य च आद्यन्तपरिभाषया नुटि सत्त्वेन तवर्गनिर्देशे दोषस्य तदवस्थत्वमित्याशयात्। अत एव

ङे प्रथ ॥ "युष्मदस्मद्भ्यां ङसोऽश्" इत्यतो युष्मदस्मद्भ्यामिति वर्त्तते । ङे इति पृथक्पदम् । अत एव "प्रथमयोरित्युच्यते । कयोः प्रथमयोः ? । विभक्त्योः । वचनयोस्तु न ग्रहणं "शसो न" इति लिङ्गात्" इति भाष्यं सङ्गच्छते ।

त्वाहौ ॥ यद्यपि युष्मदस्त्वादेशः "त्वमावेकवचने" इति सिद्धः, तथापि युष्मानतिक्रान्तो ऽतित्वमित्यर्थमत्र विधानम् । न चैवं तत्रास्य चारितार्थ्यात्केवले परत्वात्त्वमाभ्यां भाव्यमिति वाच्यम् । 'त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः' इत्यस्य वक्ष्यमाणत्वात् । "युष्मदस्मदोरनादेश" इत्यतो युष्मदस्मदोरिति वर्त्तते ।

शेषे । आत्वयत्वयोः प्रागुक्तत्वेन तद्विषयातिरिक्तविभक्तिरिह शेषशब्दार्थस्तदाह—आत्वयत्वेत्यादि । स्पष्टश्चेदं "युष्मदस्मद्भ्यां ङसः" इत्यत्र, प्रकृतसूत्रे च भाष्ये । अत एव "साम आकम्" इति ससुट्कनिर्देशः सङ्गच्छते । एवञ्च शेषग्रहणं स्पष्टार्थं, विशेषविहिताभ्यामात्वयत्वाभ्यां स्वविषये बाधसम्भवात् । अन्त्यस्येति । अलोऽन्त्यपरिभाषयेति भावः । त्वाहादयो ऽकारान्ता इति वृत्त्याद्यनुसारेणाह—अतो गुण इति । "त्यदादीनामः" इतिसूत्रभाष्यकैयटाभ्यां *हलन्ता एवादेशा इति लभ्यते, तदा पररूपस्य प्राप्तिरेव न । यद्यप्युच्चारणार्थानामपीत्संज्ञालोपाभ्यां निवृत्तिः कार्या, तथापि 'अतो गुणे' इत्यस्याप्रवृत्तेन प्रक्रियालाघवमत्र पक्षे । इत्संज्ञालोपयोस्तु सूत्र एव प्रवृत्तिरिति न प्रयोगसाधुत्वज्ञाने गौ-

---

'श्नसोरल्लोपः' इतिसूत्रस्थं तपरकरणं चरितार्थम् । तद्धि आयन् आसन् इत्यादौ आटो लोपाभावाय । अत एव चलीक्लृप्यते इत्यादौ रीगादेर्लत्वम् । यावता पूर्वान्तः । एष दोषो न भवति । ततः पूर्वान्तत्वे अनुष्ण इत्यत्र नलोपमाशङ्क्य नुग्विधिसामर्थ्येन तं वारयित्वा ङमुटः प्राप्तिमुद्भाव्य परादित्वपक्षस्थापनेनेत्यर्थः । नचाजादिपदसन्निपातेन जातस्य नुको ऽजादित्वविघातकङमुटं प्रत्यनिमित्तत्वेन ङमुडप्राप्तौ तदसङ्गतिरिति वाच्यम् । नञो ऽकचि चित्त्वादन्तोदात्तत्वे च कृते अर्मशब्देन नकशब्दस्य समासे ऽकनर्ममित्यत्र "अर्मे चावर्णं द्व्यच् त्र्यच्" इति पूर्वपदस्यानवर्णान्तत्वेनाद्युदात्तत्वाभावापत्तेरिति भाष्याशयात् ।

*हलन्ता इति* । तत्रहि 'शेषे लोप' इत्यस्य ज्ञापकत्वमुक्त्वा द्विपर्यन्तानां ग्रहणं प्रत्याख्याय 'टिलोपष्टाबभावार्थं' इत्यादिना शेषग्रहणस्य टिलोपार्थकत्वमुक्त्वा तत् खण्डितम् । एवमपि त्वाद्यादेशानामदन्तत्वे वार्णादाङ्गस्य बलीयस्त्वात् पररूपं बाधित्वा शेषेलोपे टापः प्रसङ्गतादवस्थ्यं मनसिकृत्य तत्र

रत्वम्। "त्वाहौ सौ" इति गुरुनिर्देशस्तु 'श्वेतवहोक्थशस्' इतिवत्नार्थसाधकः। *णिजन्तात्किपि युष्म् अस्म् इति प्रातिपदिकयोरादेशा एव नेति तदाशयः। 'मपर्यन्तस्य' इतिभाष्यसंमतश्चायमर्थ इत्यनुपदं स्फुटीभविष्यति । अन्तरङ्गत्वादिति । परनिमित्तानपेक्षत्वेन तत्त्वमिति भावः ।

अलिङ्गे इति । एवञ्च स्त्रियामनयोरप्रवृत्तेर्न टाबिति भावः । इदं "साम आकम्" इत्यत्र भाष्ये स्पष्टम्। यद्वेति। इदं "त्यदादीनामः" इति सूत्रे भाष्ये स्पष्टम्, "साम आकम्" इत्यत्र च । मपर्यन्ताच्छेषस्येति । इदमुपलक्षणम् । तेन त्वमित्यादौ लोपप्रवृत्तिवेलायां मपर्यन्ताच्छेषत्वाभावेऽपि न क्षतिः । ननु अदन्तत्वे आदेशानां "वार्णादाङ्गम्" इति परिभाषया पररूपात्पूर्वमेव टिलोपे टाबभाव उपपादयितुमशक्यः। अकारस्य कार्यद्वयेऽपि स्थानित्वेन समानस्थानिकत्वमस्तीति चेन्न । हलन्ता एवादेशा इति कैयटेनात्रैवोक्तत्वेनादोषात् । शेष इत्यस्य सामर्थ्याच्चतन्न्यायाप्रवृत्तिरत्रेत्यन्ये । तन्न । युष्मभ्यम्, युष्मत्, युष्माकमित्यादौ टाब्निवृत्त्या चारितार्थ्यात् । तस्मादनित्यत्वात्तत्प्रवृत्तिरित्येके । तदाह–अतो गुणे कृते इति ।

अत्र वदन्ति । तत्तद्भाष्यप्रामाण्याच्छेषग्रहणसमुदूकनिर्देशाभ्यामस्य सूत्रस्याऽऽवृत्त्याऽर्थद्वये तात्पर्यम् । तच्च लक्ष्यानुरोधाद् व्यवस्थितम् । तेन भ्यमि टिलोपे युष्मभ्यमिति न। अत एव "भ्यसो भ्यम्" इति सूत्रे "यदि भ्यमादेशः, शेषेलोपोऽन्त्यलोप इति एत्वं प्राप्नोति । अथाभ्यमादेशः, शेषेलोपष्टिलोप इत्यन्तस्योदात्तनिवृत्तिस्वरः प्राप्नोतीति, यथेच्छसि तथाऽस्तु" इत्येवोक्तं, न तु भ्यमादेशे टिलोपमादाय फलभेद उक्तः ।

वस्तुतस्तु टिलोपो व्यर्थः । अत एव 'लिङ्गाभावाट्टिलोपवचनानर्थक्यम्' इति 'साम आकम्' इत्यत्र भाष्ये उक्तम् । अत्र लिङ्गाभावादित्युपलक्षणम् । 'शिशीलुङ्नुम्विधिभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधे-

---

मम चादेशेष्वकार उच्चारणार्थो, हलन्ता एव त्वादेशा इति न क्वचिट्टाप्प्रसङ्ग इत्युक्तम् ।

ननु हलन्ता आदेशा इति पक्षे णिजन्तात्किपि मान्तयोर्हलन्तेषु त्वाहाद्यादेशेषु कृतेषु शेषेलोपे वकारहकारयोर्निवृत्त्यापत्तिरित्याशङ्क्याह* णिजन्तादिति*।

न' इति "नेतराच्छन्दसि" इतिसूत्रस्थभाष्यवार्त्तिकबलेन लिङ्गवत्त्वेऽपि सन्निपातपरिभाषया टाबभावस्योपपादयितुं शक्यत्वम् । अत एव सन्निपातपरिभाषया "कुढ्ढ्वौ" इत्यत्र टाबभावः कुन्मेजन्तसूत्रे भाष्ये उक्तः । शेषग्रहणं तु भाष्ये प्रत्याख्यातमेव । "त्यदादीनामः" इतिसूत्रस्थं "टिलोपष्टाबभावार्थः" इति तु वार्त्तिकैकदेशिवचनमिति न दोषः । एतच्च भाष्यप्रदीपोद्द्योते निरूपितम् । अभ्यम्—सूत्रे "यथेच्छसि, तथा ऽस्तु" इति प्रौढोक्त्या भ्यमितिच्छेदस्य प्रौढत्वादत्वं भगवतैव सूचितम् । त्वं यथेच्छसि, तथाऽस्तु । तत्र दोषोद्धारो मया सुकर इति तत्तात्पर्यात् । अभ्यमित्येव तु च्छेदो न्याय्यः । अत एव "युष्मदस्मदोरनादेशे" इति सूत्रे "न चाऽऽदेशो हलादिरस्ति" इति भाष्योक्तिः सङ्गच्छते इति । परमत्वमिति । आङ्गत्वात्तदन्तविधिरिति भावः । गौणेऽप्रवृत्तौ बीजाभावादाह—अतित्वमिति ।

युवावौ ॥ द्विवचनशब्दोऽत्र यौगिको, व्याख्यानात्* । द्वयोर्वचनं बोधनं, तत्र समर्थयोर्युष्मदस्मदोरित्यर्थो, भाष्यप्रामाण्याच्च तद् गृह्यमाणयुष्मदस्मदोरेव विशेषणं, न तदन्तस्य । अङ्गाधिकाराद्धि तदन्तग्रहणम्; इत्याशयेनाह—द्वयोरुक्ताविति । एतत्फलं गौणोदाहरणेषु मूल एव स्फुटम् ।

मपर्यन्तस्य किमिति । *अधिकारसूत्रं किमर्थमित्यर्थः ।

ननु समुदायाऽऽदेशत्वेऽपि "ओकारसकारभकारादौ सुपि सर्वनाम्नष्टेः प्रागकच्, अन्यत्र तु सुबन्तस्य टेः प्राक्" इति व्यवस्थाया युष्मदस्मद्विषये 'त्वयका' इत्यादिसिद्धये वक्ष्यमाणत्वादन्तरङ्गत्वाद् 'युवाम्' इत्येतत्सिद्ध्युत्तरमकजिति युवकामित्यत्र न दोषः, अत आह—त्वयेति । नन्वत्रापि 'अत्वं' इति न्यासेनैकारादेशे ऽयादेशे च सिद्धेराह—युवकाभ्यामिति । हलन्ता आदेशा इति पक्षे तु त्वयेत्यादेरसिद्धिरेव, मादेशस्य* सर्वादेशत्वञ्च न स्यादिति बोध्यम् ।

नन्वेवमपि मान्तस्येत्येवोच्यतां किं पर्ग्रहणेनेति चेन्न । युष्मयत्यादेः क्विपि सुप्यादेशाभावार्थं तत्सत्त्वात् । पर्यन्तशब्देन मान्तापेक्षया शेषस्य लाभात् । 'कटिपर्यन्तं वासः' इत्युक्ते 'अग्रे किञ्चिदस्ति'

---

*व्याख्यानादिति* । त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणमित्यादिप्रत्ययोत्तरपदयोश्चेतिसूत्रस्थभाष्योक्तादिति भावः । विधौ तदर्थमेवेत्याह—*अधिकारसूत्रमिति* ।

मादेशस्येति* । त्वाद्यादेशानामनेकाल्त्वेन तत्सिद्धावपि मादेशस्य त-

इति नियमेन प्रतीतेः। एवञ्च मान्ताद्यत्राग्रे किञ्चिदवशिष्टं तत्रैव युष्मदस्मदोरादेशाः। अत एव भाष्ये "अवधिद्योतनार्थं परिग्रहणं कर्त्तव्यम्। मान्तस्येत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः। क्व च मान्ते ?, युष्मयतेरस्मयतेश्चाप्रत्यये" इत्युक्तम्। अवधिद्योतनार्थमित्यस्यान्तशब्दस्यावधिवाचकताद्योतनार्थमित्यर्थः। पर्यन्तशब्दस्य लोके तथैव प्रयोगात्। अग्रे किञ्चित्सत्त्वे देशकालयोरवधित्वव्यवहारस्य लोके दर्शनाच्च। तत्रैवेत्यस्य—'अनिष्ट एव'इत्यर्थः। परिग्रहणाभावे तु "यतः पूर्वोऽस्ति, परश्च नास्ति सोऽन्त्यः" इतिभाष्योक्तेर्मान्तपदस्य मुख्यार्थत्वलाभायात्रैव स्यात्। क्वौ लुप्तमित्यस्य प्रवृत्तिश्च स्यात्। "अभिव्यक्तपदार्थाः" इति न्यायश्च पदकार्यविषय इति तदाशयः। अत एव भाष्ये प्रयोगदर्शनं न कृतम्।

यत्तु—परिग्रहणाभावे मान्ते यत्र ते तत्रैव स्यात्। सामानाधिकरण्येनान्वयस्यौचित्यात्। सति तु तस्मिन् सामर्थ्याद्युष्मदस्मदोर्यौ मपर्यन्ताविति व्याख्यानाद् दान्ते, व्यपदेशिवद्भावेन युष्मयग्रादेः क्विपि च सिद्ध्यति। "व्यपदेशिवद्भावो ऽप्रातिपदिकेन" इति तु प्रत्ययविधिविषयमिति, तन्न। परिग्रहणस्य वैयधिकरण्येनान्वये मणिमन्त्रादिन्यायेन नियामकत्वकल्पनापेक्षयोक्तस्यैव न्याय्यत्वात्। तत्र हि सामानाधिकरण्यासम्भवाद्वैयधिकरण्यान्वय इत्यन्यत्। किं चात्र व्याख्याने 'अवधिद्योतनार्थम्' इतिभाष्याक्षरास्वारस्यम्*। मपर्यन्तस्येति च तद्गुणसंविज्ञानो बहुव्रीहिरिति दिक्।

अङ्गकार्ये इति। अङ्गाधिकारस्थे इत्यर्थः। मकारान्तरमिति। "शसो न" इत्यनेन संहितया पाठे इति शेषः। परे तु शेषविभक्तिभूताऽमादि-युष्मदादिसन्निपातेन जातस्य लोपस्य तद्विघातकत्वा-

---

त्पक्षेऽलोऽन्त्यपरिभाषया ऽन्त्यादेशत्वापत्तिः। अधिकारसूत्रसत्त्वे तु मपर्यन्तस्य विधानात् मकारादेशस्तस्यैव भवतीति भावः।

*अक्षरास्वारस्यमिति*। वस्तुतस्तु पर्यन्तपदस्य यतो ऽग्रे किञ्चिदवशिष्यते तत्र शक्तिरिति केनाप्यबोधनात् तथापि परिपदस्य तादृशार्थे मणिमन्त्रादिन्यायेनान्तपदशक्तेर्नियामकत्वमावश्यकम्। किञ्च तादृशार्थे नियामकत्वेऽपि वैयधिकरण्येनान्वयस्यावश्यकत्वमिति लाघवात्तत्सामर्थ्येन मदुक्तार्थ एव कल्पनीयः। ननु ममाद्यवधिद्योतनार्थमि-

दिनिमित्तत्वं नेति सन्निपातपरिभाषयैव स्याद्यभावः। सुटस्त्वाकमव-यवत्वान्न तेन सन्निपातविघात इति सकारनिर्देशः "साम आकम्"इत्यत्र। अत एव कृन्मेजन्तसूत्रे "ह्रस्वत्वं तुग्विधेर्ग्रामणि कुलम्"इतिसन्निपातपरि-भाषाप्रयोजनव्याख्यावसरे "यदा ह्रस्वमात्रस्य तुगागमो, न तदन्तस्य *तदेदं प्रयोजनम्"इति व्याख्यातं कैयटेन। मूलोक्तं तु न युक्तम्। भाष्यानुक्तेः। अत एव "नेतराच्छन्दसि"इति सूत्रे "नपुंसकादेशेभ्यो युष्म-दस्मदोर्विभक्त्यादेशा विप्रतिषेधेन"इति वार्त्तिकं व्याख्याय "तेषु कृतेषु पुनः प्रसङ्गात् शिशीलुग्विधयः कस्मान्न भवन्ति?, सकृद्गतिन्यायात्"इत्युक्तम्। त्वद्री त्या पुनः प्रसङ्गस्यैवाभावेन तदसङ्गतिः स्पष्टैव। अत एव च तत्र युष्मदादेर्विभ-क्त्यादेशस्य 'यूयं ब्राह्मणाः' इत्याद्यवकाशप्रदर्शनं कृतम्। अन्यथा तत्रापि जसःशीप्राप्त्या तदसङ्गतिः। यूयमित्यादिप्रयोगकरणेन तत्र स्यादिशङ्कास-माधानाकरणेन च भाष्यकृताऽत्र सन्निपातपरिभाषाविषयत्वं सूचितम्। अङ्गवृत्तपरिभाषया वारणमपि चिन्त्यम्। तस्या अङ्गसम्बन्धिकार्यवि-षयत्वात्*। सूत्रभाष्यस्वरसोऽप्येवमेव। वस्तुतो नैषा लक्ष्यसंस्कारिका। "द्वयोः"इत्यादिनिर्देशासङ्गतेः। अत एव भाष्ये 'किमेतस्या ज्ञापने प्रयोजनम्"इति प्रश्ने 'पिबेर्गुणप्रतिषेधो न वक्तव्यः' इत्येव प्रयोजनमु-क्तं, न तु प्रयोगसिद्धिः प्रयोजनमुक्तमित्याहुः*।

---

त्यक्षरास्वारस्यमिति चेत्। सत्यम्, परं तु तत्रापि तत्रैवेत्यक्षरास्वार-स्यम्। तत्रैवेत्यस्यानिष्टे एवेत्यर्थवन्मयाऽपि अवधिद्योतनार्थमित्यस्य वैयधि-करण्यान्वयद्योतनार्थमित्यर्थस्य कर्तुं शक्यत्वात्। अत एव कैयटे"क्वौ लुप्तम्" इत्यस्य प्रवृत्तिफलत्वेन युष्मयतेः क्विपि निष्पन्नस्य युष्मच्छब्दस्य त्वामित्या-दीनि रूपाण्युक्तानि। तस्मादनभिधाने न दृढं मानम्। न च तथाऽपि पदग्रहणं न कार्यम्। मान्तस्येत्येवोच्यताम्। अन्तग्रहणसामर्थ्याद्वैयधिकरण्येनान्वयो भविष्यतीति वाच्यम्। अन्तग्रहणाभावे मकारस्यैव निर्दिश्यमानत्वेन मकारस्यैव स्वाद्यादेशापत्तेरित्यलं क्षोदक्षेमेणेति दिक्।

*तदेदं प्रयोजनमिति*। अवयवावयवन्यायेन तस्वेऽपि अवयवाव-यवन्यायप्रवृत्तिप्राक्क्षणे तद्विघातस्य सत्त्वात्तत्प्रवृत्तिः स्पष्टैव। "आद्यन्तौ"-इतिसूत्रसहकारेणावयवत्वविशिष्टतत्तत्कार्यस्य विधानेन कस्मिंश्चिदपि क्षणे न सन्निपातविघात इति भावः। *कार्यविषयत्वादिति*। जसः शीत्यादीनां च प्रत्ययसम्बन्धिकार्यतया तस्या अत्र प्रवृत्तेरयोगादिति भावः।

*आहुरिति*। परे तु प्राचीनमतमेव ज्यायः। यत्तु "नेतरा-

त्वमाविति। अत्रापि विभक्ताविति सम्बध्यते। अन्यथा "प्रत्ययोत्तरपदयोश्च"इति व्यर्थं स्यात्। तत्फलन्तु त्वं सुन्दरः पुत्रो यस्य युष्मत्सुन्दरपुत्र इति त्रिपदबहुव्रीहौ नादेश इति। अत्रैकवचनशब्दो यौगिको व्याख्यानात्। तदाह—एकस्येति।

अविभक्तिकमिति। व्याख्यानात्*।

यो ऽचि। अनादेश इति किम्। *त्वद्, मद्। "पञ्चम्या अत्"इत्यादादेशः। आत्वविधायके च भ्यम् नानुवर्त्यः। वस्तुत उत्तरार्थमेव तत्। 'अभ्यम्'इत्येव च्छेदादिति भाष्ये स्पष्टम्।

हलादाविति। *परिशेषलब्धम्। हलीत्यनुवृत्तौ तु योऽचीत्यज्ग्रहणं माऽस्तु।

---

च्छन्दसि"इति सूत्रे "नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन"इति वार्त्तिकं व्याख्याय "तेषु कृतेषु पुनःप्रसङ्गाच्छिशीलुग्विधयः कस्मान्न भवन्ति, सकृद्गतिन्यायात्"इत्युक्तम्, तत्तु मकारप्रश्लेषमबुध्वा ऽङ्गवृत्तपरिभाषायाः प्रत्याख्यानाच्च सकृद्गतिन्यायेन समाहितमिति नास्माकं प्रतिकूलम्। तत्रापि सन्निपातपरिभाषामबुध्वेदं भाष्यं प्रवृत्तमित्यवश्यं वक्तव्यम्। अन्यथा सन्निपातपरिभाषयैव निर्वाहे सकृद्गत्याश्रयणमसङ्गतमेव स्यात्। न च लोकप्रसिद्धपरिभाषयैव निर्वाहे मकारप्रश्लेषे गौरवमिति वाच्यम्। "ते प्राग्धातोः"इत्यादिनिर्देशैः "जसः शी"इतिसूत्रविषये सन्निपातपरिभाषाप्रयुक्तसंकोच एव नेति ज्ञापनेन तस्या अत्राप्राप्तेः। न च न मया विधेये संकोचः स्वीक्रियते, अपि तु अनुज्ञावाक्ये एव। तथा च ते इतिनिर्देशेन "त्यदादीनामः" इत्यस्यानुज्ञावाक्ये जसः ।इत्येतदतिरिक्तत्वेन संकोचेऽपि अत्र संकोचे मानाभाव इति वाच्यम्। "उपजीव्यविरोधो न न्याय्यः" इत्यक्षरस्वारस्यभङ्गापत्तेः। न हि तेन न्यायेनोपजीव्यविरोधकर्तुरनुज्ञादानं पापजनकमिति बोध्यते। अपि तूपजीव्यविरोधस्य पापजनकत्वमुच्यते। अत एव लोकेऽपि उपजीव्यविरोधकर्तैव निन्दितो भवति, न तु तन्मन्त्रयिता। प्रत्युत तन्मन्त्रयितुः प्रतिष्ठा जायते इत्यलं प्रसक्तानुप्रसक्तकल्पनयेत्याहुः।

*व्याख्यानादिति*। ङे प्रथमयोरित्यत्र भाष्ये प्रथममयोर्विभक्त्योर्ग्रहणमित्यत्र शसोनेत्यस्य "यदयं शसोनेति प्रतिषेधं शास्ति" इति ज्ञापकत्वमुपन्यस्य स्त्रियां नपुंसके च युष्मानित्यादिसिद्ध्यर्थं नत्वमनेन विधीयते इति भाष्योक्तादित्यर्थः।

*त्वद् मदिति*। त्वमित्यपि बोध्यम्।

*परिशेषलब्धमिति*। नन्वनादेशग्रहणस्यात्र फलाभाव इत्युपदमेवोक्तत्वेन त्वमित्यत्र यत्वाप्राप्त्या हलीत्यननुवृत्तौ तत्राप्यात्वं प्रसज्येत इति चेन्न। तथा सति 'द्वितीयायां च"इत्यस्य वैयर्थ्येन अनादेशे भवति

भ्यसोऽभ्य । अत्र यद्वक्तव्यं तदुक्तम् । पक्षद्वयेऽपीति । तत्रान्त्यलोपे द्वयोरकारयोः पररूपे "एकादेश उदात्तेन"इत्यभ्यम आद्याकार उदात्तः । टिलोपेऽपि यत्रानुदात्ते वर्णे परे उदात्तो लुप्यते स वर्ण उदात्त इत्यर्थकेन "अनुदात्तस्य च यत्र" इत्यनेन स उदात्त एवेति न विशेष इति भावः ।

*नन्वाकमः पूर्वं लोपाभावेनादन्तत्वाभावात्सुडागमाप्रसक्तेः ससुट्कनिर्देशो व्यर्थः, सूत्रासङ्गतिश्चेत्यत आह—भाविन इति । आकमि शेषे लोपे कृते प्राप्तस्येत्यर्थः । अयं भावः । सामः प्रसङ्गे आकमित्यनेन सुडामोरत्र विषयेऽत्यन्तमप्रयोगो बोध्यते । स्थान्यादेशभावविषये सर्वत्रैवमेव । यथाऽऽर्द्धधातुकविषये ऽस्तेरप्रयोगो, भूप्रयोगश्च "अस्तेर्भूः"इत्यनेन प्रतिपाद्यते, न तु सतो निवृत्तिः।शब्दानित्यत्वप्रसङ्गात् । किं तु प्रसक्तबुद्धेरेव निवृत्तिः । सकारबुद्धिप्रसक्तेश्च प्रकृते सांप्रतिकया असम्भवाद्भाविन्या ग्रहणं, सकारोच्चारणसामर्थ्यादिति प्रथमप्रवृत्त्यैव सुटो निवृत्तिर्न तु प्रवृत्त्यन्तरकल्पनयेति भाष्ये स्पष्टम् । तन्निवृत्तिश्चाऽऽमोऽभावात् । अत्र सामः स्थानित्वोक्त्या स्थानिवत्त्वेन साम्त्वमेव, न त्वाम्त्वम्* । उक्तरीत्या च न स्थानिवद्भावप्रसक्तिः सैवाप्रसक्तिः ससुट्कनिर्देशेन बोध्यते इति बोध्यम् । अत एव 'अतित्वाकम्' इत्यादौ

---

चेद् द्वितीयायामेवेतिनियमात्तत्र तदप्राप्त्या ऽनादेशाजादौ यत्वेन बाधात् परिशेषलब्धमित्यस्य सुवचत्वात् ।

*नन्वाकम इति* । ननूपसंजनिष्यमाणन्यायेनाकृतव्यूहपरिभाषया वा पूर्वं यत्वाप्रवृत्त्या ऽऽकमः पूर्वमन्त्यलोपे ऽदन्तत्वात्सुटि तद्विशिष्टस्याऽऽकम्-विधानार्थं ससुट्कनिर्देश आवश्यकः सूत्रसङ्गतिश्चेति चेन्न । अनादेशे इति निषेधसम्भावनायाः यत्वप्रवृत्त्यभावसम्भावनाद्वारा अन्त्यलोपसुट्प्रवृत्तिप्रयोजिकायाः आकमादेशप्रवृत्तिसम्भावनाप्रयोज्यत्वेन, आकमादेशप्रवृत्तिसम्भावनायाश्च अन्त्यलोपसुट्प्रवृत्तिप्रयोजिका या यत्वप्रवृत्त्यभावसंभावना तत्प्रयोजकानादेशेतिनिषेधसम्भावनाप्रयोज्यत्वेन अन्योन्याश्रयग्रस्ततया ऽन्त्यलोपस्यापि पूर्वमप्रवृत्त्या ससुट्कनिर्देशासङ्गतेस्तदवस्थत्वात् ।

*नत्वाम्त्वमिति* । ननु आमि साम्त्वस्यारोपेऽपि स्वतःसिद्धाम्त्वानतिदेशो दुर्वच इति चेन्न । ससुट्कनिर्देशसामर्थ्यादाम्त्वेतरधर्मस्यैवातिदेशबोधनात् । "भ्रस्जो रोप"इत्यत्रेवात्रोभयपर्याप्तस्थानितानिरूपितादेशताऽऽकमि । तथा चाम्त्वस्य स्थान्येकदेशवृत्तित्वेन न तस्यातिदेशः । पदत्वा-

"प्रत्ययोत्तरपदयोः" इतिभाष्योदाहृते आकम्नुडभावौ सिद्धौ । आम्येव सामृत्वस्याहार्यारोपेणाऽऽदेशः । आदेशस्यामृत्वाभावाच्चात्र न नुट् । *न च यत्र साम् भावी तत्रैवायम् । सामो भावित्वस्य सर्वथा *दुरुपपादत्वात्,

---

दिकं तु आनुमानिकस्थान्यादेशभावेन सिद्धम् । आकमि सुप्त्वातिदेशस्य तु नोपयोग इति । आम्त्वावच्छेदेन साम्त्वारोपे आम्त्वस्यावृत्तत्वान्नातिदेशे-नाकमि तद्बुद्धिः । स्थानिवृत्तित्वेनावभासमानधर्माणामेवादेशेऽतिदेशा-दिति तु तत्त्वम् ।

परे तु साश्च म च साम् । आक् च अम् चेत्याकम् । सौत्रत्वान्न जश्त्व-म् । यथासंख्येन साशब्दस्य स्थाने आक् आदेशो, मकारस्य च स्थाने अमा-देशः । तथा चाम्त्वस्य स्थान्यवृत्तित्वेन न तस्यातिदेशः । अत्रैव तात्पर्य-ग्राहकःससुट्कनिर्देश इत्याहुः ।

ससुट्कनिर्देशादाकमि ङित्त्वमारोप्य टिलोपे तेन सुटो नुटश्चाप्रा-प्तिरित्यन्ये ।

केचित्तु ससुट्कनिर्देशात् युष्मदस्मदोरन्त्यस्य सकारं विधाय युष्मदस्म-च्छब्दान्ताद्विहितविभक्त्यन्ततदादेरवयवस्य सामः स्थाने आकम्-विधा-नेनाम्त्वस्य स्थान्येकदेशवृत्तित्वेन न तस्यातिदेश इत्याहुः ।

कश्चित्तु साम आकमित्यत्र नलोपेन सकारात्पूर्वं नकारं प्रश्लिष्य, आ-कारात्पूर्वं सवर्णदीर्घेण निषेधार्थकाकारं च प्रश्लिष्य सुड्नुटौ न भवतः, आमः स्थाने आकम् च भवतीत्यर्थकल्पने न कश्चिद्दोष इत्याहेत्यलं विस्त-रेणेति दिक् ॥

गौणमुख्यसाधारण्येन आकमादेशप्रवृत्तिप्रयोजकं भाष्यसंमतं साम्त्व-स्याहार्यारोपमनङ्गीकृत्य "यत्र सुड् भावी तत्रैवाकम् न गौणं" इति वादिनो मतं निरसितुमुन्यस्यति *नच यत्र साम् भावीति* । खण्डयति *सामो भावित्वस्य सर्वथा दुरुपपादत्वादिति* । आकमादेशात् पूर्वं बाधकयत्वप्रवृत्तिसम्भा-वनया अन्त्यलोपाप्रवृत्त्या सुटोऽप्रसङ्गेन साम्—रूपासम्भवात् । आ-कम्प्रवृत्तिसंभावनया अन्त्यलोपे सुटि च सत्यपि साकम् इत्येव रूपं स्यान्नतु सामिति सर्वथा तद् दुरुपपादमिति भावः । ननु आकमादेशे आ-म्त्वारोपे सुटि च सकारोत्तरत्वविशिष्टाम्त्वे साम्त्वं सुलभमिति चेत्—एवम-पि तत्सम्भावनया पूर्वमामः स्थाने आकमि अन्त्यलोपे सुडापत्तिर्दुर्वारा । सकारनिर्देशसामर्थ्यान्न सुडिति चेन्न । गौणेऽप्रवृत्त्यर्थं तन्निर्देशस्य सार्थ-कत्वात् । किञ्च आकमादेशे आम्त्वारोपे अतिदिष्टानतिदिष्टधर्मसमुदायरूप-स्य सकारोत्तरत्वविशिष्टाम्त्वस्य अशास्त्रीयत्वेनातिदेशालभ्यत्वान्नातिदेशेन-आमि तल्लाभसम्भव इत्याह—

साम्त्वस्याशास्त्रीयत्वेना* तिदेशालभ्यत्वादिति *भाष्यविरुद्धकल्पना व्यर्थेति दिक् । ह्रस्वादिरकम् तु* न कृतः । अन्त्यलोपे ऽप्यकारस्यैतन्निवृत्त्या चारितार्थ्येन पररूपापत्तौ युष्माकमित्यसिद्ध्यापत्तेः ।

द्विवचनैकवचनशब्दयोरर्थपरतया व्याख्याने फलं दर्शयति—द्व्येकत्वेति । द्वित्वैकत्व*विशिष्टवाचिनी इत्यर्थः । समासार्थो–मुख्यविशेष्यम् । अन्यसंख्यः—युष्मदाद्यर्थगतसंख्येतरसंख्या *युक्तश्चेदित्यर्थः । स्त इति । अर्थपरत्वाश्रयणादिति भावः । एते इति कर्तृपदम् । युवावाविति कर्मपदम् । एवं त्वमावित्यपि । पूर्वविप्रतिषेधत इति । विप्रतिषेधे पूर्व इति, सुप्सुपेति समासः । अत एव "प्रत्ययोत्तरपदयोश्च" इतिसूत्रभाष्ये त्वमाविति सूत्रे शेष इत्यनुवर्त्य सुजमूङेङमूड्व्यतिरिक्तविभक्तावेताविति व्याख्यातम् ॥ त्वमौ न चेति । अर्थपरत्वाश्रयणादेवेति भावः । इति विग्रहे इति । एवं विग्रहे यादृग्रूपाणि तानि वक्ष्यन्ते इति शेषः । आनित्वाकमिति । अत्र यथाऽऽकम्नुडभावौ, तथोक्तम् ।

पदस्य । "अपदान्तस्य मूर्द्धन्यः"इत्यतः प्रागयमधिकारः । तत्फलन्तु राजानावित्यादौ नलोपाभावः । इयं क्व चित्स्थानषष्ठी, क्व चिदवयवषष्ठी । "हो ढः" इत्यादावाद्या । "मादुपधायाः"इत्यादावन्त्या । तेन वृक्ष-

---

*अशास्त्रीयत्वेनेति* । "ननु सामः "स्वं रूपम्"इतिशास्त्रग्राहितसंकेतकत्वेन शास्त्रीयत्वादशास्त्रीयत्वं दुर्वचमिति चेन्न । शास्त्रग्राहितसङ्केतकत्वे सति शास्त्रग्राहितसाधुत्वकवृत्तिविषयताप्रयोजकशास्त्रघटकपदप्रतिपाद्यत्वरूपशास्त्रीयत्वग्रहणेनात्र सामः शास्त्रग्राहितसङ्केतकत्व–शास्त्रघटकपदप्रतिपाद्यत्वयोः सत्त्वेऽपि शास्त्रग्राहितसाधुत्वकवृत्तिविषयताप्रयोजकपदप्रतिपाद्यत्वाभावेनाशास्त्रीयत्वस्य सुवचत्वात् । शास्त्रीयत्वमभ्युपेत्याप्याह भाष्यविरुद्धेति* । साम्त्वातिदेशेऽपि भाष्योदाहृते 'अतित्वाकम्'इत्यत्र सुडप्राप्त्या तत्राकमनापत्तिः, नुडापत्तिश्चेति भावः" इत्येवमपि कश्चिद्व्याचचक्षे ।

*अकम् तु न कृत इति* । परे तु युष्मयतेरस्मयतेः क्विपो ऽनभिधाने प्रमाणाभावस्य पूर्वमुक्तत्वेन तत्र दीर्घोच्चारणस्य चारितार्थ्यमित्याहुः । एतेन "युष्मदस्मदोः" । हलीति वर्तते । ततो "योऽच्यनादेशे"इति पाठनात्वेन सिद्धावाकस्याकारोच्चारणन्न कर्तव्यम्" इत्यपि अपास्तम् ।

*विशिष्ट इति* । समासे युष्मदस्मदर्थगतसंख्याया अभानादिति भावः । *युक्तश्चेदिति* । युक्तश्चेदपीत्यर्थः । तेन द्वित्वैकत्ववाचिन्यन्यपदार्थेऽपि त्वमौ युवावौ च भवन्त्येवेति दिक् ।

वन्तावित्यादौ वत्वसिद्धिः । अन्यथा मत्वन्तपदाभावान्न स्यात् । अत एव "नलोप" इति सूत्रे ऽन्तग्रहणं चरितार्थमिति स्पष्टं भाष्ये । "त्रः संख्यायाः" इत्यत्र नलोपाभावस्तु 'झलाञ्जश् झशि' इत्यत्र जश्त्वाभाववद् बोध्यः ।

पदात् ॥ "कुत्सने च सुपि" इत्यतः प्रागयमधिकारः । "अनुदात्तं सर्वम्" इत्यादिपदत्रयमापादसमाप्तेः । सर्वग्रहणन्तु "तिङ्ङतिङः" इत्यादौ सर्वानुदात्तत्वस्य विनिगमनाविरहाल्लाभेऽपि स्पष्टतया तल्लाभार्थमित्याकरे स्पष्टम् । "आदेः परस्य" "अलोऽन्त्यस्य" इत्यनयोस्तु न प्राप्तिः । पदस्येत्यस्य 'अनुदात्तं' 'तिङ्' इत्यादिश्रुतप्रथमान्तानुरोधेन प्रथमया विपरिणामेन स्थानषष्ठ्यभावात् । तत्र पादशब्देन ऋक्पादः, श्लोकपादश्चाविशेषाद् गृह्यते । अपादादिशब्देन पादान्तपादमध्यस्थवद् छन्दोहीनवाक्यस्थस्यापि ग्रहणम् । 'ग्रामे कम्बलो मे स्वम्' इति भाष्यात् ।

षष्ठ्यादीनि । सर्वस्य पदस्येत्युभयाधिकारसामर्थ्यादिदं लभ्यते इत्यन्यत्र विस्तरः । तौ चानुदात्ताविति । अनुदात्तत्वगुणविशिष्टयोर्विधानादिति भावः ।

उक्तविधयोरिति । पदात्परयोरपादादौ स्थितयोरित्यर्थः । द्वितीयायां त्वामयोरपवादत्वादाह—षष्ठीचतुर्थ्येकेति ।

विभक्तिक्रमलब्धद्वितीयादिक्रमेणोदाहरति—श्रीशेति । दत्तादिपदेन चतुर्थ्यन्तत्वं स्फुटीकृतम् । संवेद्योऽस्मानिति । नन्वत्र सन्ध्यभावे नवाक्षरत्वेनानुष्टुप्पादत्वानापत्तिः । सन्धौ तु 'उभयत आश्रयणे ऽन्तादिवत्त्वाभावेन कथमादेशप्राप्तिरिति चेन्न । संवेद्यो इत्येकादेशविशिष्टस्य पूर्वान्तवत्त्वेन पदत्वात्, स्मानित्यस्य चैकदेशविकृतन्यायेन द्वितीयान्तास्मच्छब्दत्वेन* तत्प्राप्तिरित्याशयात् । सन्निपातान्तरङ्गत्वादादेशा-

---

*अस्मच्छब्दत्वेनेति* । नन्वस्मच्छब्दत्वस्य परिच्छिन्नधर्मसमनियतधर्मत्वेनाक्तपरिमाणत्वात्कथं तत्प्रवृत्तिः । न चैवम् "उदके केवले" इतिसूत्रस्थभाष्यविरोधः, तत्र दकशब्दे उदकशब्दत्वस्यैकदेशविकृतन्यायेनोक्तत्वादिति वाच्यम् । उदकशब्दान्तसमासघटकोत्तरपदाव्यवहितपूर्वपदस्यान्तउदात्तो भवतीत्यर्थेन औदकशब्दे परादिवद्भावेन उदकशब्दत्वात्तदन्तसमासघटकोत्तरपदमेकदेशविकृतन्यायेन दकेति तदव्यवहितपूर्वपदत्वस्य पूर्वान्तवद्भावेन गुडोशब्दे सत्त्वाद् तदव्यवहितं पूर्वपदं गुडो इति, तस्यान्तोदात्तत्वस्य

स्पूर्वमेव । *आदेशे सति 'नः कृष्णः सर्वदा ऽवतु' इति पादादित्वापत्त्यो-*पजीव्यविरोधान्नाऽऽदेश इत्यन्ये । उभयत आश्रयणेऽपि तस्य स्वीकार इति इण्धातौ निरूपयिष्याम इति परे* ।

ननूक्तरीत्या षष्ठ्याद्यन्तानामेवाऽऽदेशा भविष्यन्ति, किं स्थग्रहणेन ?, अत आह—स्थेति । अहानौ स्थशब्द इति भावः । युष्मत्पुत्र इति । युवयोर्युष्माकं वा पुत्र इत्यर्थः । यद्यपि वृत्तौ संख्याविशेषानवगम इति भाष्ये स्पष्टं, तथापि संबोद्ध्यत्वेनैवानेकव्यक्त्यवगतिर्न तु द्वित्वादेर्भानं, नाप्येकत्वस्येति त्वमौ न कृतौ । विग्रहे तु संख्याविशेषभानाद् द्विवचनादि भवत्येव । तस्य लुक्यपि प्रत्ययलक्षणेन द्विवचनाद्यन्तत्वम् । अत एव 'वध्वोरगारं वध्वगारम्'इति प्रगृह्यसञ्ज्ञासूत्रे भाष्ये प्रयुक्तम् । वचनद्वयविषयसूत्रप्रत्युदाहरणलाभाय'इति त्वत्पुत्रः' इति न प्रत्युदाहृतम् ।

समानवाक्ये इति । निमित्तनिमित्तिनोरेकवाक्यस्थत्वे इत्यर्थकं 'समानवाक्ये'इति प्रकृत्य विधेया इत्यर्थः । निघातो नामानुदात्तः । एकतिङिति बहुव्रीहिः, एकतिङन्तघटितमित्यर्थः । तेन 'पचति'इत्येतन्मात्रस्य* न वाक्यत्वम् । इदं स्वशास्त्रकार्योपयोगि एकवाक्यत्वलक्षणम् । तेन 'पश्य मृगो धावति'इत्यादौ लौकिकैकवाक्यत्ववत्यपि नाव्याप्तिः । समर्थसूत्रे भाष्ये स्पष्टमेतत् । अत एव "तिङ्ङतिङः" इत्यत्रैतदाश्रित्य 'अतिङ' इति प्रत्याख्यातं भाष्ये । लौकिकवाक्यत्वञ्च—

---

अन्यथैव सिद्धत्वात्, तस्यैकदेशयुक्तित्वाच्चेत्यरुचेराह—*आदेशे सतीत्यादि* ।

*उपजीव्यविरोधादिति* । तथा विधेये स्वप्रवृत्तिनिमित्तविघातकातिरिक्तत्वेन सङ्कोचादिति भावः । विधेये एवानया सङ्कोचो, न तु पूर्वसूत्रानुज्ञावाक्ये इति पूर्वमुपपादितमेव । अत एव "न चाऽऽदिरेव नकार उदात्तगुणविशिष्टान्तरतमाज्रूपो ऽस्त्विति वाच्यम् । तथा सति निमित्तभूतद्व्यच्कत्वस्य विनाशादुपजीव्यविरोधेनाऽऽद्युदात्ताप्राप्तेः"इत्यादिपरिभाषेन्दुशेखरोऽत्रत्यं भाष्यं च सङ्गच्छते । अन्यथा "वान्तो यि प्रत्यये" इत्यस्योदात्तस्य निमित्तविघातकत्वाभावे तेनानुज्ञादाने बाधकाभावेनैतदसङ्गतमेव स्यादिति विभावनीयम् । *परे इति* । अव्यवहितपूर्वत्वाव्यवहितपरत्वयोर्व्यपवर्गधर्मत्वेन तस्यातिदेशस्तेन दुर्लभ इतीदं चिन्त्यमित्याहुः ।

*एतन्मात्रस्येति* । मात्रशब्दो ऽत्रावधारणे । पचतीत्यस्यैव न वाक्यत्वमपि तु व्यपदेशिवद्भावेन तस्य, तद्घटितसमुदायस्य च । पचतीत्ये-

सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता ।

इत्यमरेणोक्तम् । वाशब्दश्चेदर्थे । कारकान्वितक्रिया चेद्, बोद्धव्येति शेषः । तेन निरर्थकशब्दसमुदायव्यावृत्तिः । सुप् च तिङन्तश्च सुप्तिङन्ते, सुब्विशिष्टं तिङन्तं सुप्तिङन्तं, तेषामेकशेषः । तेन कारकान्वितक्रियाबोधकसुबन्तचय–तिङन्तचय—सुप्तिङन्तचयानां त्रयाणामपि वाक्यत्वलाभः । तत्र सुबन्तचयो—देवदत्तेन शयितव्यम् । द्वितीयं—पचति भवतीत्यादि । तृतीयं—चैत्रः पचतीत्यादि ।

(१)(एतत्समानार्थकमेव "तिङ्ङतिङः" इति सूत्रे 'अतिङ'इति वदत्सूत्रकाराभिप्रेतं वाक्यलक्षणम् 'आख्यातं सविशेषणं वाक्यम्' इति समर्थसूत्रभाष्ये उक्तम् । तत्राऽऽख्यातपदेन क्रियाप्रधानं लक्ष्यते । तेन 'त्वया शयितव्यम्' इत्यादेः संग्रहः । सविशेषणमित्यस्य साक्षात् परम्परया वा यद्विशेषणं, तत्सहितेत्यर्थः । तेन 'नद्यास्तिष्ठति कूले' इत्यादौ नद्यादेः समानवाक्यस्थत्वसिद्धिः । सविशेषणत्वेन विभागे साकाङ्क्षत्वं लब्धम् । एतदेवैकोद्देश्यकैकविधेयकत्वैरूपकार्थत्वगर्भमेकवाक्यत्वलक्षणं बोध्यम् । "अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति जैमिन्युक्तेः । अनेन च "ब्रूहि ब्रूहि" इत्यस्य सङ्ग्रहो, विशेषणानुपादानेन सविशेषणत्वाभावात् । वाक्यत्वफलं त्वत्र प्रश्नोत्तरे "अनन्त्यस्यापि प्रश्नाख्यानयोः" इत्यनेन वाक्यस्य टेः प्लुतसिद्धिः । अतः स्वशास्त्रपरिभाषितं लक्षणम् 'एकतिङ् वाक्यम्' इत्युक्तम् । अत

तन्मात्रस्य तत्त्वफलं तु "अनन्त्यस्यापि प्रश्नाख्यानयोः" इति प्लुतसिद्धिः ।

नन्वेकतिङन्तघटितत्वरूपैकवाक्यत्वस्वीकारे "त्वया शयितव्यम्" इत्यस्यैकवाक्यत्वानापत्तिः, "त्वया शयितव्यमिति रामो वदति" इत्यत्रैकवाक्यत्वापत्तिश्च, इति चेत्, न । मुख्यविशेष्यतायोग्यक्रियाप्रतिपादकत्वप्रकारकतात्पर्यविषय–पदाघटक–पदद्वयाघटितत्वरूपतत्त्वस्वीकारेण त्वया शयितव्यमित्यादौ मुख्यविशेष्यतायोग्या या शयनक्रिया तादृशशयनक्रियाप्रतिपादकत्वेन तात्पर्यविषयभूतं शयितव्यमित्येकमेव पदं, न तु पदद्वयमिति; तादृशपदद्वयाघटितत्वं 'त्वया शयितव्यम्'इति वाक्यस्येति लक्षणसमन्वयः । त्वया शयितव्यमिति रामो वदतीत्यत्र तु मुख्यविशेष्यत्वयोग्यक्रिया वदनक्रिया शयनक्रिया च, शयनक्रियायाः कर्मत्वसंबन्धेन वदनक्रियायामन्वयेन मुख्यविशेष्यत्वाभावेऽपि तदसमभिव्याहारे विशेष्यत्वसत्त्वेन तद्योग्यत्वस्य सुस्थत्वात्–

( १ ) एतत्समानार्थमेवेत्यादिः इत्यलमित्यन्तो ग्रन्थः क्वचित्पुस्तके ।

एव एतदुदाहरणं 'ब्रूहि ब्रूहि' इत्येव भाष्ये दत्तम् । यत्तु अत्रोदाहरणे देवदत्तेति विशेषणं पूरणीयमिति, तन्न । पूर्वलक्षणेनैव सिद्धेः । द्विः प्रयोगस्य भाष्ये व्यर्थत्वापत्तेश्च । यद्यपि पदद्वित्वे ऽवान्तरपदत्वमप्यस्ति, तथापि 'एकतिङ्' इत्यस्य एकानुपूर्वीकैकतिङन्तवदित्यर्थ इति न प्रकृते दोष इत्यलम् । )

ओदनं पचेत्यादि । *समर्थपरिभाषा त्वत्र न प्रवर्त्तते । एकार्थीभावविषये एव *तत्प्रवृत्तेरिति भावः । एते वांनावादय इति । इदञ्च "सपूर्वाया" इत्यत्र भाष्ये स्पष्टम् ।

न चवा ॥ चादयः समुच्चयविकल्पाद्भुतखेदावधारणार्थाः, तेषामन्यतमेन योगे इत्यर्थः । ननु तृतीयानिर्देशेनैव सिद्धे युक्तग्रहणं व्यर्थमत आह—युक्तग्रहणादिति । साक्षादिति । युष्मदस्मदर्थगतसमुच्चयादिद्योतकत्वे इत्यर्थः । परम्परेति । स्वार्थाश्रयान्वय्यन्वयित्वादिरूपेत्यर्थः ।

चेतसेति । "अनालोचनार्थैः" इत्येव पर्युदासेन सिद्धे "पश्यार्थैः" इत्येतद् *इन्द्रियजन्यसकलज्ञानसङ्ग्रहार्थमिति भावः ।

---

तत्प्रतिपादकत्वप्रकारकतात्पर्यविषयभूतं पदद्वयं वदति, शयितव्यमिति च, तद्घटितत्वमेव 'त्वया शयितव्यमिति रामो वदति' इति वाक्यस्येति नातिव्याप्तिः । ब्रूहिब्रूहि राम इत्यत्राव्याप्तिवारणार्थं पदाघटकेति निवेशः । न चैवमपि 'ग्रामं गच्छ, तव'इत्यस्य निरुक्तदिशा तत्त्वापत्तिरिति वाच्यम् । परस्परनिरूप्यनिरूपकभावानापन्नविषयताप्रयोजकपदाघटितत्वमिति विशेषणदानेनादोषात् । यद्वा स्ववृत्त्यानुपूर्वीमत्त्वं—स्वप्रयोज्यविषयताप्रयोजकत्वमेतदुभयसम्बन्धेन मुख्यविशेष्यतायोग्यक्रियाप्रतिपादकत्वप्रकारकतात्पर्यविशेष्यपदविशिष्टतरद् यत् मुख्यविशेष्यतायोग्यक्रियाप्रतिपादकत्वप्रकारकतात्पर्यविशेष्यं पदं तादृशपदद्वयाघटितत्वे सति परस्परनिरूप्यनिरूपकभावानापन्नविषयताप्रयोजकपदाघटितत्वं तत्त्वमिति । लक्षणसमन्वयस्तु स्वयमुन्नेय इत्यलं विस्तरेण ।

*समर्थपरिभाषा त्वत्रेति* । वार्त्तिकारम्भसामर्थ्यादिति भावः । ननु समर्थपरिभाषाया अत्र प्रवृत्तिरेवास्तु, वार्त्तिकं च माऽस्त्वित्याशङ्क्याह—*तत्प्रवृत्तेरिति* । युष्मदस्मदादेशानां प्रवृत्त्यापत्तेरित्यर्थः । यद्वा यतो हि तत्प्रवृत्तेरेकार्थीभाव एव विषयो विधेयम्, अतोऽत्र न प्रवर्त्तते, लक्ष्यानुरोधादिति भावः ।

*इन्द्रियजन्यसकलेति* । ननु ज्ञानमात्रे आत्ममनःसंयोगस्य

परम्परेति । स्वान्वितान्वयित्वादिरूपेत्यर्थः । तदुक्तं भाष्ये "पश्यार्थैश्च प्रतिषेधः समानवाक्ये इति प्रकृत्य वक्तव्यः,। इतरथा हि यत्रैव पश्यार्थानां युष्मदस्मदी साधनं, तत्र प्रतिषेधः स्यात् । ग्रामस्त्वां संप्रेक्ष्य गत इति। इह न स्यात्—ग्रामस्तत्र स्वं संप्रेक्ष्य गतः" इति। समानवाक्ये इति करणेन समानवाक्ये पश्यार्थैर्युक्ते युक्तयुक्ते च युष्मदाद्यर्थे आदेशप्रतिषेध इति कैयटः। एवञ्च "न चवा" इति सूत्रे युक्तग्रहणं स्पष्टार्थमेव। तदभावेऽपि प्रकृतसूत्रस्येव तस्यापि साक्षात्सम्बन्धे एव प्रवृत्तिः स्यात् । समानवाक्ये इत्येतत्सम्बन्धात्तु अस्य युक्तयुक्तेऽपि प्रवृत्तिरित्यन्यत् । अत एव 'देवदत्तस्य पुत्राद् यज्ञदत्तः पृथक्' इत्यादौ देवदत्तशब्दान्न पञ्चमीत्याहुः । भक्तस्तवेति । इह तवेत्यस्य रूपेण सम्बन्धो, न तु साक्षाद्व्यायतिनेति भावः ।

सपूर्वा ॥ सहशब्दो विद्यमानवाची। अवधेरपि सम्बन्धित्वेन विवक्षायां *षष्ठ्यर्थेऽन्यपदार्थे "अनेकम्"इति समासो,"वोपसर्जनस्य"इति सः; तदाह—विद्यमानपूर्वादिति । प्रत्ययग्रहणे तदन्तग्रहणमित्याह-प्रथमान्तादिति । ननु "एते वांनावादयः" इत्यनेनैव विकल्पसिद्धेः किमेतेनेत्यत आह—अन्वादेशेऽपीति । अत्र नेति निवृत्तं, तदाह—आदेशा वेति। तेनेति। भक्तत्वेनेत्यर्थः । प्रक्रान्तार्थत्वान्न यच्छब्दोपादानापेक्षेति भावः । स्पष्टश्चेदं सप्तमोल्लासे काव्यप्रकाशादौ । अत्र 'हरिस्त्वाम्'इत्येकमुदाहरणम् । 'स माम्' इत्यपरम्। त्रायते इत्यस्य च मध्यमणिन्यायेन तन्त्रेणोभयत्रान्वयः । तेन स इत्यस्यापि समानवाक्यस्थत्वेन विद्यमानपूर्वत्वं बोद्धव्यम् ।

साऽऽमन्त्रितम् ॥ "सम्बोधने च"इत्यतः सम्बोधने इति वर्त्तते । 'सा'इत्यनेन प्रथमा परामृश्यते। आमन्त्रणमामन्त्रितमिति महासञ्ज्ञा-

---

कारणत्वेन सर्वमपि ज्ञानमिन्द्रियजन्यमेवेति पुनरपि तद्वैयर्थ्यमिति चेत्, न। इन्द्रियजन्यमित्यस्य इन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यतावदित्यर्थस्य विवक्षणेन सर्वज्ञानस्येन्द्रियजन्यत्वेऽपि तत्तदिन्द्रियत्वावच्छिन्नजनकतानिरूपितजन्यतावत्त्वस्याभावेनादोषात्।

*षष्ठ्यर्थे इति* । "मत्वर्थे बहुव्रीहिः कर्मकर्तृवचनेनाप्रथायाः" इति वार्तिकेन षष्ठीसप्तमीविभक्त्यन्तातिरिक्तार्थे कर्मकर्तृवचनसुबन्तातिरिक्तानाम् अनेकमिति समासाभावस्य बोधनादिति भावः ।

*बलात्तदन्तविधिरित्याह—तदन्तमिति । अत एव है हे भो इत्यादीनामपि संज्ञासिद्धिः। अन्यथा "अन्तरङ्गानपि" इति न्यायेन पूर्वं विभक्तिलुकि प्रथमाया अभावेन 'नखनिर्भिन्नः' इत्यत्रैसभाववदत्र संज्ञा न स्यात् । यद्यप्येषां सम्बोधने शक्तेः प्रातिपदिकार्थसूत्रेणैव प्रथमा, तथापि सम्बोधनविषयप्रथमासत्त्वान्न दोषः। एतदर्थमेव 'प्रथमा' इत्यनुवर्तमाने सेति पदम् ।

अन्ये तु "सम्बोधने च" इत्यस्य तत्र वर्तमानादित्यर्थे अन्यत्रेवात्रापि "सम्बोधने च" इत्येव प्रथमा । प्रातिपदिकोक्तत्वस्याव्यावर्तकत्वेन विभक्त्यप्रतिबन्धकत्वात् । "तिङ्कृत्तद्धितसमासैः" इति परिगणनाच्च । सेति तु विधेयसमर्पिकाया अनुवाद्यत्वाय स्पष्टार्थमित्याहुः ।

अविद्यमानवदिति। "गोतो णित्" इतिवत्सिद्धे* वत्करणमतिदिश्यमानविरुद्धस्वाश्रयस्यापि लाभार्थम् । तेन 'आम्भो देवदत्त' इत्यादौ "आम एकान्तरमामन्त्रितमनन्तिके" इति एकान्तरत्वप्रयुक्तामन्त्रितनिघातनिषेधसिद्धिरिति स्पष्टं भाष्ये। न चात्र "नामन्त्रिते समानाधिकरणे" इत्यनेन निषेधादविद्यमानवत्त्वमेव नेति वाच्यम् । अस्य सम्बोधनमात्रद्योतकत्वेन विशेष्यवचनत्वाभावात् । देवदत्तस्यैव विशेष्यत्वाच्च ।

इहेति। 'अग्ने तव' 'देवास्मान्' इत्यत्रादेशाः, 'अग्ने नय' इत्यत्र "तिङ्ङतिङः" इति निघातः, 'अग्न इन्द्र' इत्यत्र "आमन्त्रितस्य च" इति निघात इति विवेकः। अत्र पूर्वमित्यनेन परस्याऽऽक्षेपात् पूर्वं परस्य कार्ये ऽविद्यमानवदित्यर्थः। तेन 'देवास्मान्' इत्यत्र देवेत्यस्याऽऽमन्त्रिताद्युदात्तत्वं भवत्येव। पूर्वं किम् । पाहि देव । अत्राऽऽमन्त्रितनिघातो भवत्येव ।

प्राचीनमिति । एवमेव 'लक्ष्मीपते ते ऽङ्घ्रियुगं स्मरामि' इत्यादिसिद्धिः । *'नृसिंहाश्रम ते ख्यातिः' इत्यादौ—'गेये केन विनीतौ वाम्' इत्यादाविव विभक्त्यन्तप्रतिरूपकनिपाताङ्गीकारेणा-

---

*बलात्तदन्तविधिरिति। "संज्ञाविधौ" इति परिभाषा नास्त्येवेति पक्षे तु न सामर्थ्यवर्णनमित्यवोचाम ।

*सिद्धे इति* । ननु तदभावे अस्य त्रिपाद्यां प्रवृत्तिर्न स्यात् । राद्धान्ते ऽस्य वतिघटितत्वेन वतिघटितशास्त्राणां त्रिपाद्यां प्रवृत्तेः पूर्वमुपपादितत्वादिति चेन्न । वत्यर्थघटितानामपि त्रिपाद्यां प्रवृत्तिबोधनात् । अत एव प्रत्ययलक्षणसूत्रस्य त्रिपाद्यां प्रवृत्तिरित्यन्यत्र विस्तरः।

*नृसिंहाश्रम इति* । न च "नृसिंहाश्रम" इत्यस्याविद्यमा-

दोषः । अयं समाधिः प्रकृतेऽपि । 'नः' इत्यस्य विभक्तिप्रतिरूपकत्वात् । अन्यार्थन्तु मूलोक्तकल्पनावश्यकत्वम्, तदाह—एवमिति । सर्वेषां निघात इति । अस्य प्राप्त इति शेषः । तत्र यमुने सरस्वतीत्यनयोर्बाधकाभावाद्भवति । शुतुद्रीत्यस्य तु न, पादादिस्थत्वात् ।

एतेन 'आदिभ्यः' 'सर्वेषाम्'इति बहुवचनमसङ्गतमित्यपास्तम् ।

अग्ने तेजस्विन्निति । अनुदात्तं सर्वमित्यनयोः सम्बन्धानर्हत्वेन निवृत्त्या तत्साहचर्येणापादादावित्यस्याप्यविद्यमानवत्सूत्रे निवृत्तिरिति भावः । आमन्त्रिते किम् । देव करोषि * । सामान्यवचनं किम् । 'अघ्न्ये देवि सरस्वति इडे काव्ये' इत्यादौ पर्यायेषु परेषु निषेधो मा भूत् । सामानाधिकरण्यञ्चैकार्थविशेष्यकबोधजनकत्वमेव, न तु प्रवृत्तिनिमित्तभेदगर्भमिति दिक् ।

सुपादिति । शोभनौ पादावस्येति बहुव्रीहिः । "संख्यासुपूर्वस्य"इत्यकारलोपः समासान्तः ।

अश्वेः सुपीति । निपातनैः साहचर्यादिति भावः ।

---

नवद्भावेऽपि नृ इत्यस्य विद्यमानत्वेन ततः परस्य युष्मच्छब्दस्य ते इत्यादेशः स्यादेवेति निपाताश्रयणं विफलमिति वाच्यम् । अवयवे अविद्यमानत्वारोपे समुदायाविद्यमानत्वस्याऽतिदेशसहस्रेणाप्यतिदेष्टुमशक्यत्वात् । अत एव 'इमं मे गङ्गे' इत्यत्र गङ्गे इत्यादीनां निघातसिद्धिः । अन्यथा गङ्गे इत्यस्याविद्यमानवद्भावे ऽपि गकारस्य विद्यमानत्वेन तेन व्यवधानात् पदात्परामन्त्रिताभावेन निघाताप्राप्त्यापत्तेरित्यलं क्षुद्रोपद्रवाणां विद्रावणेन । एतेन परमहरे तिष्ठेत्यत्र परमहरे इत्यस्य अविद्यमानवद्भावेऽपि हरे इत्यस्य पदत्वमाश्रित्य तिष्ठेत्यस्य निघातः स्यात् । अतः उत्तरपदत्वे चेति वार्तिके कार्यित्वनिवेशनं कार्यम् इत्यपास्तम् ॥

*देव करोषीति* । ननु सम्बोधनविभक्त्यन्तदेवपदस्य सिवर्थाश्रयान्वयिसंबोध्यार्थकत्वंपदसामानाधिकरण्ये ऽपि तस्य कृधात्वर्थनिष्ठविशेष्यतानिरूपितसम्बोधनविषयत्वसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वेन, नवीनमतेऽध्याहृतविधेयक्रियानिष्ठविशेष्यतानिरूपितस्वोद्देश्यकप्रवर्तनाविषयत्वसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वेन वा विशेष्यताप्रयोजकत्वरूपसामान्यवचनत्वाभावान्न निषेधप्राप्तिरिति चेत्, न । प्रातीतिकस्य विशेष्यविशेषणभावस्य तस्मिन्निति सूत्रस्थभाष्योक्तरीत्या द्रव्यक्रियादिषु प्रतीतिभेदेन विपरिवर्तमानत्वेऽपि प्रतीतिं विनाऽपि वस्तुनिष्ठस्य सामान्यविशेषभावस्य वर्णोवर्णेनेतिसूत्रस्थभाष्यसंमतया कर्मधारयसमासप्रकरणे शेखरे वक्ष्यमाणया रीत्या वस्तु-

अनिदिताम् ॥ *इत्संज्ञेकारवद्भिन्नाना*मित्यर्थः। अङ्गस्येत्यधिकारः।

अञ्चतेर्भस्येति । "अल्लोपोऽनः" इतिवद् अस्यापि प्रत्ययश्चम-ञ्चति तेन प्रत्यक्चेत्यादौ* पूर्वाकारे न प्रवृत्तिः। अच इयञ्चतेर्लु-प्तनस्य ग्रहणम् । व्याख्यानात्* । भस्य किम् । प्रत्यञ्चौ । लुप्तनस्येति किम् । पूजायां प्रत्यञ्चा ।

चौ ॥ नेदं वर्गग्रहणं व्याख्यानात्, तदाह—लुप्तेत्यादि । अण इति। कर्तृच इत्यादीनामनभिधानमिति भावः। एवञ्चाण्ग्र-हणमुत्तरत्र "सम्प्रसारणस्य"इत्यत्र "तृतीयः"इत्येतद्व्यावृत्त्यर्थमावश्यकमि-हापि संबद्ध्यते, न त्वत्रास्य व्यावर्त्यमस्ति इत्याकरे स्पष्टम् ।

---

नियतत्वेन द्रव्यस्य सामान्यरूपत्वेन क्रियायाश्च विशेषरूपत्वेन एतादृशस्यैव विशेषणविशेष्यभावस्योक्तसूत्रस्थभाष्यप्रामाण्येन "विशेषणं विशेष्येण बहुल-म्" इत्यादिसूत्रेषु आश्रितत्वेन अत्रापि तदाश्रयणात् द्रव्यवचनस्य देवपदस्य सामान्यवाचकत्वस्य सूपपादत्वात् । "स्वोत्तरस्वसमानाधिकरणपदप्रयोज्य-विषयतानिरूपितविषयताप्रयोजकत्वे सति नामपदप्रयोज्यविषयतानिरूपिताभे-दसंसर्गावच्छिन्नविषयताप्रयोजकत्वाभाववत्त्वमेव सामान्यवचनत्वम् । तथा च 'हरे दयालो नः पाहि'इत्यत्र हरिपदोत्तरसमानाधिकरणदयालुपदप्रयोज्यवि-षयतानिरूपिता या हरित्वावच्छिन्नविषयता तत्प्रयोजकत्वं हरे इत्यस्य, नाम-पदप्रयोज्यविषयतानिरूपिताभेदसंसर्गावच्छिन्नविषयताप्रयोजकत्वाभाववत्त्वमपि तस्मिन्निति लक्षणसमन्वयः । देव करोषीत्यत्र च देवपदस्य त्वंपदसामाना-धिकरण्येन कथंचिदभेदसंसर्गावच्छिन्नविषयताप्रयोजकत्वेऽपि तद्विषयताया नामपदप्रयोज्यविषयतानिरूपतत्वाभावेन सामान्यवचनत्वं सुवचम्" इत्यपि कश्चित् । अत्र भैरवव्याख्यायामन्यथा समाहितं, तत्तत एवावधार्यम् ।

*इत्संज्ञेकारवदिति* । बहुव्रीहिरिति भावः । *वद्भिन्नानामिति* । वद्घटितभिन्नानामित्यर्थः । तेनामंस्तेत्यत्र न दोषः। इदं च "इर इत्संज्ञा वाच्या" इतिवार्तिकारम्भपक्षे । तत्प्रत्याख्यानपक्षे तु उबुन्दिर् इत्यादिधातुभ्यो लुङि इरितो वेत्यङि अबुदत् इत्यादौ आरम्भपक्ष इव इष्टस्य नलोपस्य सिद्ध्यर्थं कर्म-धारयाश्रयणेन इत्संज्ञकेकारान्तभिन्नामित्यर्थ आवश्यकः। अत एव उबुन्दिर्-धातौ शेखरे तत्पक्षे अस्य सूत्रस्य इत्थमेवार्थो वर्णितः । तदा अमंस्तेत्यादौ नलोपवारणं सजादेशपक्षे इव "हनःसिच्" इतिज्ञापकाद्विकरणाघटितस्यैवाङ्गस्य ग्रहणाद्बोध्यम् । अन्यथा उपधालोपेन सिद्धौ अनुदात्तोपदेशेतिलोपार्थे किस्व-विधेर्वैयर्थ्यं स्पष्टमेवेति दिक् ।

*प्रत्यक्चेत्यादाविति* । उत्तराच्शब्देन, तद्घटकाकारलोपे ऽवशिष्टेन चकारेण वा व्यवधानादिति भावः । *व्याख्यानादिति* । अकारलोपाकरणपूर्व-कनलोपकरणेन नलोपस्य विवक्षितत्वादिति भावः ।

अकृतेति । तत्परिभाषाऽभावे तु "चौ प्रत्यङ्गस्य* प्रतिषेधो वक्तव्यः" इति वचनमेव भाष्योक्तं शरणम् ।

विष्वग्दे ॥ चात् "आ सर्वनाम्नः" इत्यतः सर्वनाम्न इत्याकृष्यते । *सामर्थ्यादुपसर्जने प्रवृत्तिः । अप्रत्यये इति पाठे ऽविद्यमानः प्रत्ययः, क्विबादिरित्यर्थः । वप्रत्यये इति पाठेऽप्यकारस्याविवक्षितत्वात्स एवार्थः* । अद्र्यादेशसध्र्यादेशावन्तोदात्तौ निपातनादिति स्पष्टं भाष्ये ।

अदसो ॥ 'असेः' इतीकार उच्चारणार्थः । अदस इत्यवयवषष्ठी । सग्रहणं तत्स्थानिकौकाररेफयोरप्युपलक्षणम् । तेन 'अदस्यति, अदोऽत्र, अदः इत्यादौ न दोषः । दादिति किम् । अमुयोरित्यत्रान्त्यस्य मा भूदिति । समाहारद्वन्द्व इति । इदमर्वाचामनुरोधेन । *वस्तुतो ऽयुक्तमेतत् । उ स् ऊ स् इति द्वन्द्वे सुलोपे घ्यन्तत्वाद्ध्रस्वस्य पूर्वनिपाते नपुंसकह्रस्वसवर्णदीर्घयोः प्राप्तयोर्दीर्घस्य शब्दान्तरप्राप्त्या ऽनित्यत्वेन नित्यत्वाद्, अपरनिमित्तकत्वेनान्तरङ्गत्वाच्च ह्रस्वत्वे ततः सवर्णदीर्घे उ इतिरूपा-

---

*प्रत्यङ्गस्येति* । अन्तरङ्गस्येत्यर्थः ।

*सामर्थ्यादिति* पदान्तरप्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपोपसर्जनत्वस्य सर्वत्रैव सत्त्वादिति भावः । परे तु स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वाभावात्तस्योपसर्जनत्वाभावेन सामर्थ्यवर्णनमसङ्गतम् । अत एवातिसर्वद्र्यगित्यत्राऽऽत्वं नेत्याहुः । *स एवार्थ इति* । क्विबादिरित्यर्थः ।

*वस्तुत इति* । परे त्वत्र प्राचीनमतमेव ज्यायः । परनिमित्तापेक्षस्य बहिरङ्गत्वाश्रयणे प्रमाणाभावः, फलाभावश्च । ऊकाल इति निर्देशस्तु इतरेतरद्वन्द्वेनाप्युपपादयितुं शक्यः । "अतोऽम्" इत्यत्र तपरकरणं तु मुखसुखार्थम् । अश्वाऽऽश्वानयोः समाहारे अमित्येव रूपम् । अत एव "अदसो ऽसेर्दादु" इति निर्देशः सङ्गच्छते । अन्यथा तत्रापि पूर्वं ह्रस्वे ततो दीर्घे दीर्घश्रवणापत्तिः । "भाव्यमानोऽप्युकार" इति परिभाषा तु नास्त्येव । फलाभावात् । अत एव "नामि" इति सूत्रस्थं भाष्यं सङ्गच्छते इत्युपपादितमन्तरङ्गपरिभाषाटिप्पण्याम् । अत एव "अचस्तास्वत्" इति सूत्रस्थं भाष्यं सङ्गच्छत इति स्पष्टं विषमस्याम् । न च परिभाषेन्दुटिप्पणोक्तदिशा पूर्वनिमित्तकत्वरूपबहिरङ्गत्वस्वीकारेणोभयोः समत्वान्न दूषणत्रयमपि सम्यगिति वाच्यम् । फलाभावात् । अत एव च "दोषो णौ" इत्यादौ दीर्घविधानं सङ्गच्छते । अन्यथाऽऽन्तरतम्याद्दीर्घस्यैव विधानं भविष्यतीति तद्वैयर्थ्यं स्पष्टमेव । अत एव च उ ऊ इति प्रश्लेषेण गोह इति दीर्घनिर्देशः प्रत्याख्यातः । अत एव दुधूषति सुस्मूर्षतीत्यादीमि

सिद्धेः । अत एव "ऊकालः" इत्यत्र उकाल इति न कृतम् । तस्माद् "दिव उत्" "ऋत उत्"इति च तपरत्वेन भाव्यमानोकारस्य सवर्णग्राहकत्वासिद्धमिति बोध्यम् ।

"ष्यङः सम्प्रसारणम्"इति सूत्रे भाष्ये "अनन्त्यविकारे ऽन्त्यसदेशस्य"इति परिभाषा पठिता । अन्त्यसदेशानन्त्यसदेशयोः*रेकप्रयोगे युगपत् प्राप्तौ*न्त्यसदेशस्यैवेति तदर्थः । अनन्त्यविकार इति च लिङ्गम्* । तामर्थतः पठति–अन्त्यबाधे इति । अन्त्यस्य बाधे–कार्याप्राप्तौ,अर्थादनेकानन्त्यस्य प्राप्तावित्यर्थः । अन्यथा "णो नः"इत्यादि 'नेता'इत्यादावेव स्यात्, न तु 'नमति'इत्यादाविति भाष्ये स्पष्टम् । 'अल्लोपोऽनः' 'अचः' 'सान्त'- इत्यादावनेकक्लिष्टकल्पनापेक्षयेयं न्याय्या ।

किं च भसंज्ञायां कार्यकालपक्षाश्रयणमशक्यम् । परत्वेन पद- संज्ञाबाधकत्वानुपपत्तेः* । 'राज्ञः'इत्यादौ नलोपस्यासिद्धत्वात्पूर्वम् "अल्लोपोऽनः"इति लोपे पश्चात्प्राप्तनलोपैकवाक्यतापन्नपदत्वस्यैतदेकवाक्यतापन्नभत्वेन बाधायोगान्नलोपापत्तेश्च* । तस्मादाकडारस्थसंज्ञासु यथोद्देशाश्रयणमेवावश्यकमिति 'यजादिस्वादिपरो योऽन्'इत्यर्थस्य न तत्र लाभः । "ष्यङः संप्रसारणम्"इति सूत्रस्थं–"कार्यकालं सञ्ज्ञापरिभाषं, भस्येत्युपस्थितमिदं भवति याचि भमिति । तत्र यजादिपरतया ऽन्कारं

---

सिद्ध्यन्ति । अन्यूनानतिरिक्तसमुदायस्य ययोर्निमित्तत्वं तत्रैवापरानिमित्तकशास्त्रस्यान्तरङ्गत्वमित्याद्यनेकक्लिष्टकल्पनाश्रयणाद्वरं प्राचीनमतानुसरणमिति विचारयन्तु धीरा इत्याहुः ।

*अनन्त्यसदेशयोरिति* । क्वचिदिति शेषः । तेन अमू इत्यत्रोभयोः प्राप्त्यभावेऽपि न क्षतिः । *अन्त्यसदेशस्यैवेति* । उपतिष्ठते इति शेषः । *इति च लिङ्गमिति* । येनावयवत्वावच्छिन्नोद्देश्यताकशास्त्रत्वस्य सङ्ग्रहः । अन्त्यविकाराभाव इत्यस्य यत्समुदायनिरूपितावयवत्वावच्छिन्नोद्देश्यता तत्समुदायघटकान्त्यस्य विकाराभाव इत्यर्थः । अन्यथा राज्ञ इत्यत्र राजेतिसमुदायघटकान्त्यस्यैव लोपस्य कर्तव्यत्वेन तत्राप्यस्याप्रवृत्त्यापत्तेः । वस्तुतः "अल्लोपोऽनः"इत्यत्र नास्याः प्रवृत्तिरिति पूर्वमेवावोचाम । *अनुपपत्तेरिति* । यदा तु संज्ञाशास्त्राणामष्टाध्यायीपाठकृतपरत्वस्याश्रयणे न दोषः । "अयादिभ्यः परैव प्रगृह्यसंज्ञा" इति भाष्यं तु 'परैव उत्कृष्टैव' इत्यर्थकरणेन न विरुणद्धीत्युच्यते, तदा ऽयं दोषः प्राचामकिञ्चित्करः । *नलोपापत्तेश्चेति* । यदा त्वेवंरीत्या सर्वत्र लोपप्राप्त्याऽल्लोपस्यापवादत्वात्तदेकवाक्यतापन्नभसंज्ञाया अप्यपवादत्वमुच्यते, तदाऽयं

विशेषयिष्यामः। अनाऽकारम्''इति भाष्यन्त्वेकदेश्युक्तिः*। यजादिप्रत्ययस्याङ्गांशे* उत्थिताकाङ्क्षतया तेनानो विशेषणायोगाच्च। अत एव सर्वफलानामन्यथासिद्धिं प्रदर्श्यापि ''तस्माद् यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्त्तव्या''इति उपसंहृतं भाष्ये इति भावः।

अन्त्यसदेशस्येति। अन्त्येन समानो देशो यस्येत्यर्थः। तत्त्वञ्चान्त्यवर्णतद्वर्णयोरितराव्यवधाने* भवति। ''चलीक्लृप्यते''इत्यादौ ऋकारान्तर्गतरेफस्योत्तराऽभागेन व्यवधानान्नान्त्यसदेशत्वसम्भव इति न तत्रैतत्परिभाषाप्रवृत्तिः। अत एव ''न सम्प्रसारणे''इत्युदाहरणीभूतस्य विद्ध इत्यादेर्नानया सिद्धिः। अत एव ''न सम्प्रसारण''इति सूत्रं सार्थकम्। ''नैतस्याः परिभाषायाः प्रयोजनानि''इति तत्सूत्रस्थभाष्यस्य त्वयमर्थः—एतत्सूत्रसाध्यानि विद्ध इत्यादीन्युदाहरणानि नैतस्याः परिभाषाया भवन्तीति। अन्त्यसदेशत्वाभावादिति च तद्भावः॥

परस्यैवेति। द्रशब्दस्यैवेत्यर्थः। अः सेरिति। अत्र अकारेण आकारस्यापि ग्रहणं, तेनामूदृगित्यादिसिद्धिः। तत्र हि ''आ सर्वनाम्नः'' इति पूर्वपदान्तस्यात्वम्। त्यदाद्यत्वेति। त्यदादीनामत्वविषय इत्यर्थः। पक्षे इति। अत्र तन्त्रेणार्थद्वयेऽपि सूत्रतात्पर्यम्। तत्र लक्ष्यानु-

---

ग्रन्थश्चिन्त्यः। तत्सामर्थ्यादाकडारीयसंज्ञासु यथोद्देशपक्षस्यैव ज्ञापनमुचितमित्याशयाद्वा योजनीयः। *एकदेश्युक्तिरिति*। संज्ञाशास्त्राणां पदैकवाक्यतायाः कथमप्युपपादयितुमशक्यत्वादिति भावः।

*अङ्गांशे उत्थिताकाङ्क्षतयेति*। अव्यवहितपूर्वत्वा-ऽव्यवहितपरत्वैतदन्यतरावच्छिन्नविधेयताश्रयत्वे सति स्व-स्वप्रकृत्यन्यतरार्थप्रत्यायकत्वरूपप्रत्ययत्वस्वीकारात्प्रत्ययत्वस्याङ्गांशे उत्थिताकाङ्क्षत्वादिति भावः।

परे त्वेतादृशप्रत्ययत्वस्वीकारे मानाभावः। तादृशतत्त्वस्वीकारेऽपि पुत्रत्वस्य जन्यत्वघटितस्योत्थिताकाङ्क्षत्वाज् जिज्ञास्यमानदेवदत्तपदार्थस्याजिज्ञासितार्थपुत्रत्वे ऽन्वयवदत्राऽपि अङ्गस्य प्रत्ययेऽन्वयेऽपि प्रत्ययस्याङ्गांशे विशेषणत्वे प्रमाणाभावः। तस्मादेतत् सर्वमविचारमूलमित्याहुः। अन्ये तु निरुक्तप्रत्ययत्वस्य महासंज्ञासिद्धत्वात् अङ्गत्वस्यापि प्रत्ययांशे साकाङ्क्षत्वात् साकाङ्क्षयोरेव विशेष्यविशेषणभावस्य न्याय्यत्वाद् ''अनो विशेषणत्वे मानाभावः'' इति नागेशोक्तिर्युक्तैवेत्याहुः।

*इतराव्यवधाने इति*। अत्रत्यं तत्त्वं पूर्वमुपपादितं विस्तरेण तत एवावधार्यमिति दिक्।

रोधाद्व्यवस्था। अत्र प्रमाणमुपन्यस्यति—उक्तश्चेति। लत्ववदिति। चलीक्लृप्यते इत्यत्र यथा लत्वं रीगृकारयोर्भवति तथेत्यर्थः। अत्र 'अदमुयङ्'इतिरूपवादिमतं *न्याययुतम्। लत्वे उक्तरीत्यैतन्न्यायाप्रवृत्तावपि अत्रैतदप्रवृत्तौ मानाभावात्। अत एव भाष्ये "अदसोऽनोस्रेः"इतिवार्तिकप्रत्याख्यानाय 'अथवा अः सेः'इति पक्षमुक्त्वा "यद्येवम्, 'अमुमुयङ्'इति न सिद्ध्यति, 'अदद्र्यङ्'इति प्राप्नोति, 'अदमुयङ्'इति भवितव्यम् अनन्त्यविकारे इति"इत्युक्तम्। अत्र 'इति प्राप्नोति'इत्युक्त्या तत्रासंमतिरुक्ता। 'इति भवितव्यम्'इत्यनेन पृथक् मुत्वमिति पक्षे संमत्यभावो दर्शितः। 'इति भवितव्यम्'इत्युक्त्या च तत्र शब्दे ऽप्रयुक्तत्वं सूचितमित्याहुः।

विष्वग्देवयोः किमिति। चस्याप्युपलक्षणमिदम्। ननूत्तरपदाधिकारादञ्चुरूपे उत्तरपदे इत्यर्थाद् 'विष्वगञ्चनम्'इत्यादेर्व्यावृत्तौ व्यर्थमप्रत्ययग्रहणमत आह—अप्रत्ययेति। तेनेति। अन्यथा "अतः कृ" इत्यत्र "नित्यं समासे" इत्यतोऽनुवृत्तसमासग्रहणेनोत्तरपदाक्षेपेऽपि कृधातुरूपे उत्तरपदे इत्यर्थापत्तौ 'अयस्कृद्'इत्यादावेव स्यादिति भावः।

उद ईत्॥ अत्र "अचः"इत्यनुवर्त्तते।

समः स॥ "समो मिङ्" इति "सम इङ्" इति वा न कृतम्। परिभाषाज्ञानकृतगौरवापत्तेः*।

---

*न्याययुतमिति*। परे तु सहेतुकवाक्यस्यैव प्रामाणिकत्वेन 'नेत्येके' इत्यस्य सहेतुकत्वाद् 'अदद्र्यङ्' इत्येव रूपं भाष्यकृदभिप्रेतम्। अत एव सर्वत्र केचिदित्युक्त्वा ऽत्र एके इत्युक्तम्। अमुमुयङिति न सिद्ध्यतीत्यादि भाष्यं तु अस्मिन्पक्षे ऽमुमुयङिति न सिद्ध्यति, अदद्र्यङिति प्राप्नोति, अनन्त्यविकारपरिभाषया ऽदमुयङिति भवितव्यमितिवस्तुस्थितिप्रतिपादकमिति न तेन सह विरोध इत्याहुः।

*गौरवापत्तेरिति*। ननु समोऽव्ययत्वादकचि सकम्। तदञ्चतीति समीच इत्यत्र ङित्त्वादन्त्यादेशे फलभेदसत्त्वेन गौरवपर्यन्तमनुधावनं विफलमिति चेन्न। साकच्कापहारकादेशविषये तन्मध्यपतितन्यायाप्रवृत्तेः परिभाषेन्दुशेखरटिप्पण्यामुक्तत्वेनात्र तदप्राप्त्या निर्दिश्यमानाभावेन सिद्धान्ते एतस्याप्रवृत्तेः। न च राद्धान्ते तस्याप्रवृत्तावपीदानीं तस्य साकच्कानपहारकत्वेन तत्प्रवृत्त्या निर्दिश्यमानत्वेनादेशः स्यादिति फलभेदो दुर्वार एवेति वाच्यम्। 'अकचि कृते धित्वं न प्राप्नोति' इति भाष्याद् "अनेकाल्" इतिसूत्रे सर्वपदेलाकजघटितस्यैव ग्रहणेन "उत्सर्गसमानदेशा अपवादाः" इति न्यायेन

*तिरसस्ति ॥ 'अलोपे' इत्यत्र शकन्ध्वादित्वात्पररूपेणाकारः प्रश्लिष्यते। अस्य अलोपो—लोपाभावो यस्मिन्नञ्चतावित्यर्थस्तदाह—अलुप्ताकारेति । तिरश्चेति । श्चुत्वे ऽल्लोपस्य स्थानिवत्त्वं तु न । पूर्वत्रासिद्धीये तन्निषेधात् ।

पूजार्थस्येति । पूजारूपार्थस्य गम्यत्वे इत्यर्थः । अत एवान्याकुलं गच्छतीत्यर्थके 'अञ्चितं गच्छति' इत्यादौ नलोपो न । अन्याकुलगमनेन च पूजा गम्यते, न त्वञ्चतेरेव सोऽर्थ इति स्पष्टम् "अञ्चोऽनपादाने" इति सूत्रे भाष्यकैयटयोः । प्राच इत्यादि चिरन्तनादिरूढस्येति बोद्ध्यम् । एतेन "अञ्चतेर्गतौ"इति नियमेनैव सिद्धौ "नाञ्चेः पूजायाम्"इति व्यर्थमित्यपास्तम् ।

नलोपाभाव इति । *ओपधत्वबोधनद्वारेत्यर्थः । स्पष्टश्चेदं "परेश्च घ"इति सूत्रे भाष्ये । अपिना चसमवधाने "चोः कुः"इति कुत्वाभावो,निरुपपदात् क्विन् इति च निपात्यते इति बोद्ध्यम्। "सङ्"इति व-

---

"ङिच्च" इत्यत्राप्यकजघटितनिर्दिश्यमानान्त्यस्य ग्रहणेनादोषात् । 'इच एकाच' इत्यतो मण्डूकप्लुत्या एकाच्पदानुवृत्त्या ऽदोषाच्चेत्यलम् ।

*तिरस इति* । अकारादावञ्चतौ परे इत्यर्थकं "तिरसस्तिर्य्ये"इति न सूत्रितम् । ओ-शब्दे उपपदे अञ्चनेः क्विनि निरस्शब्देन समासे तिर्योङ् इत्यत्र अकारादित्वाभावात् तिर्यादेशानापत्तेः । नन्वेवमपि अचीत्येवास्तु । अकारादित्वाभावेऽपि अजादित्वस्य विद्यमानत्वात् उक्तरूपं सुसाधमिति अलोपे इति व्यर्थमेवेति चेन्न । अञ्चनेः क्विपि निष्पन्नस्य अक् इत्यस्य पदद्वित्वे तिरस्-शब्देन समासे शसि उत्तरखण्डे अकारलोपेऽपि अकारादित्वस्य अजादित्वस्य च सत्त्वेन तिर्यादेशे तिर्यगक्च इत्यापत्तेः । सिद्धान्ते तु विशिष्टस्य लुप्ताकारत्वात् पूर्वखण्डमात्रस्योत्तरपदत्वाभावाच्च तदप्रवृत्तौ तिरोऽक्च इति सिध्यतीत्यलम् ॥ यत्तु एवं न्यासे तिरायतीत्यत्र तिर्यादेशानापत्तिः । राद्धान्ते त्वत्र टिलोपस्याकारपर्याप्तस्थानिताकत्वाभावे नालोप इति पर्युदासस्याप्राप्त्या स सिद्ध्यतीति । तन्न । "अञ्चष्टिलोपेनापहारेऽपि बहिरङ्गत्वेनासिद्धत्वात्तिरसस्तिरिः" इति कौमुद्यामेव समाहितत्वात् ।

*ओपधत्वेति । नन्वस्य ओपधत्वे अस्मिन् सूत्रे पाठो व्यर्थः । न च नोपधत्वेऽपि कुत्वशङ्कापरभाष्यविरोध इति वाच्यम् । तादृशभाष्येणानुस्वारस्य कुत्वदृष्ट्या सिद्धत्वबोधनेनादोषादिति चेन्न । तत्राप्यनुस्वारस्यासिद्धत्वाभावेन "चोःकुः" इत्यनेनैव कुत्वे सिद्धे अत्र एतत्पाठवैयर्थ्यस्य तादवस्थ्यात् ।

चनाद्वा कुत्वाभावः । षत्वं, स्कोरितीति । सलोपे षत्वस्यासिद्धत्वात्सलोपे कृते षत्वम् । व्रश्चेः क्विपि "ग्रहिज्या"इति संप्रसारणे पूर्वत्वे श्चुत्वस्यासिद्धत्वात्सलोपः । सुवृट्त्स्विति । चर्त्वस्यासिद्धत्वाद् "ङः सि"इति वा धुट् । निपात्यन्ते इति । अतिप्रत्ययान्ता इति शेषः । तत्र पृषद्बृहतोर्गुणाभावश्च, गमेर्जगादेशश्च, महेः कर्मणि प्रत्ययश्च, निपातनात् । शतृवदिति । प्रत्ययग्रहणपरिभाषया शतृप्रत्ययान्तवदित्यर्थः । "शतुरनुमः" इति सूत्रे "बृहन्महतोरुपसंख्यानम्"इति तु पृषदादिभ्याद्वृत्तये नियमार्थमिति बोद्धव्यम् ।

अत्वसन्त ॥ चस्त्वर्थे । अतु इति लुप्तषष्ठीकं पृथक् पदम् । अधातोरिति असन्तस्यैव विशेषणं *तुशब्दात् । तदाह—धातुभिन्नेति । अत एव "उगिदचाम्"इति सूत्रे गोमत्यतेरप्रत्यये गोमानिति प्रयोगो भाष्ये सङ्गच्छते । अङ्गविशेषणतयाऽर्थसिद्धतदन्तविधेरेवानुवादकमन्तग्रहणम् । परमिति । वचनसामर्थ्यादुपधापदासम्बन्धेन चारितार्थ्यादित्यभिमानः । अयमभ्युच्चय इत्याह—नित्यमिति । कृताकृतप्रसङ्गित्वमात्रेणेत्यर्थः । सामर्थ्यादिति । वाक्यार्थबोधकाले विरोधाभावेनोपधासम्बन्धे कृते सामर्थ्यात्पूर्वं दीर्घप्रवृत्तिरेव कल्प्यते इति भावः । धीमानिति । न चैकानुबन्धकपरिभाषया* मतुपो ऽत्राग्रहणम्, सूत्रं तु सर्वादिपठिते ऽनुनासिकोकारविशिष्टे भवतुशब्दे चरितार्थमिति वाच्यम् । पकारादेः समुदायानुबन्धत्वे ऽप्यतोर्द्व्यनुबन्धकत्वाभावात् । अवयवानां नान्तरीयकतया समुदायोपदेशे एव ऋषितात्पर्यमित्यर्थस्य "आदेच उपदेशे" इतिसूत्रस्थभाष्यसंमतत्वेन यदुपदेशप्रयुक्ता यस्येत्संज्ञा तस्य तदनुबन्धताया एव स्वीकारात् । न चोकारलोपे ऽत्वन्तत्वस्याप्यभावः । उकारस्याश्रयणेन तदंशे भूतपूर्वगतिस्वीकारात् । एतेन तदाश्रयणे अतुवन्तमेतत् नात्वन्तमित्यपास्तम् । तदाश्रयणाभावात् । तस्मादनुनासिकोकारविशिष्टो य उपदेशे ऽत् तदन्तस्य प्रयोगस्थस्य दीर्घ इति सूत्रार्थ इति न दोषः ।

नियमार्थमिति । धातोश्चेदुगित्कार्यं तर्हि नलोपिनोऽञ्चतेरेवेति नियम इति भावः । तेन 'उखास्रत् ब्राह्मणी'इत्यादौ नुम्ङीपौ

*तुशब्दादिति* । स्वर्थक-चशब्दादित्यर्थः ।
*एकानुबन्धकपरिभाषयेति* । तदनुबन्धकपरिभाषयेत्यर्थः ।

न। न्यायप्राप्ताल्लोपाकरणपूर्वकं नलोपकरणस्य विवक्षार्थत्वमित्याशयः। यद्यपि अञ्चतेश्चेन्नलोपिन एवेति नियमेऽप्यञ्चतिग्रहणं चरितार्थं, तथापि भाष्यप्रामाण्येन सामान्यापेक्ष उक्तनियमो युक्त इति बोद्धव्यम्।

नन्वत्र धातुत्वात्कथं नुम्, अत आह। अधातोरिति। न चौपदेशिकधातुविषयक एव नियमोऽस्तु, किमनेनेति वाच्यम्। औपदेशिकत्वानन्तर्भावेण सामान्यापेक्षानियमज्ञापनार्थत्वात्। तत्फलं पर्णध्वदित्यादाविव गोमानिवाचरति गोमानिसादिनामधातौ "उगितश्च" इतिङीबभाव इति दिक्। क्यच्पक्षे ऽल्लोपो न स्थानिवत्। क्वौ लुप्तत्वात्। अत्राऽऽचारक्विब् अर्वाचीनमतेन। *वस्तुतो हलन्तेभ्यस्तदभाव इति "ह्रस्वनद्यापः" इत्यत्र भाष्ये स्पष्टम्।

उभे अभ्य ॥ लक्ष्यानुसारेण *गर्गदण्डनन्यायादत्र समुदाये वाक्यसमाप्तिरित्याह— उभे समुदिते इति। द्वे इत्यनुवृत्त्यैव सिद्धे उभेग्रहणं स्पष्टार्थम्। यत्तु उभेग्रहणं सामर्थ्यात्सहभावोपसर्जनद्वित्वविशिष्टार्थकं; तेन समुदिते इत्यर्थलाभ इति, तन्न। अशब्दार्थत्वात्। शब्दाधिक्यादर्थाधिक्यस्य बहुशो भाष्यकृतोपहसितत्वाच्च। ध्वनितञ्चेदं "तदसति प्रयोजने उभेग्रहणं सहार्थं विज्ञास्यते" इति ग्रन्थेन भाष्ये। अत एव सूत्रशेषे भाष्ये गर्गदण्डनन्यायेनैतदर्थसिद्धिमाश्रित्य 'सहग्रहणं कर्त्तव्यम्' इति वार्त्तिकं प्रत्याख्यातम्। तुल्यन्यायात्तदर्थकत्वेन पराभिमतमुभेग्रहणञ्च प्रत्याख्यातमेवेति सुधियो विभावयन्तु। तत्र श्वादिशब्दानामेकापाये* ऽप्रवृत्तेः "ऐत्सन्" इत्यादावभ्यासलोपे कार्यकालपक्षे न संज्ञेति न जुम्। एकादेशात्पूर्वमायन्नादिषूपदेशिवद्वचनेनान्तरङ्गत्वादन्तादेशेऽपि "सर्वे सर्वपदादेशाः" इति न्यायेन स्थानि-

---

*हलन्तेभ्यस्तदभाव इति*। तत्र हि मिदमिदोर्न विशेष इत्युक्तम्। अन्यथा मित्त्वादन्त्यादचः परत्वेन हलन्तेषु विशेषसत्त्वान्मिदमिदोर्न विशेष इत्यस्यासङ्गत्यापत्तेः। विस्तरस्त्वन्यत्र द्रष्टव्यः।

*गर्गदण्डनन्यायादिति*। उद्देश्यतापर्याप्त्यनुयोगितावच्छेदकधर्म एव यत्र विधेयतापर्याप्त्यनुयोगितावच्छेदकस्तत्रास्य प्रवृत्तिः, अन्यत्र ब्राह्मणभोजनन्यायस्य प्रवृत्तिरिति विवेकः। प्रकृते तु उद्देश्यतापर्याप्त्यनुयोगितावच्छेदको धर्मो द्वित्वं स एव विधेयतापर्याप्त्यनुयोगितावच्छेदक इति अस्यात्र प्रवृत्तिरिति भावः। *एकापाये इति*। तद्व्यक्तित्वस्य द्वित्वपर्याप्त्यनुयोगितावच्छेदकत्वा-

वद्भावात् झित्वेन जुसापत्तिः । किं चैकादेशे जुसोऽपवादविषयस्य जायमानत्वेन "प्रकल्प्य चापवादविषयम्"इति न्यायेन पूर्वमन्तिभावाप्रवृत्तौ एकादेशे जुसापत्तिः । यथोद्देशे पूर्वं समुदाये प्रवृत्तसञ्ज्ञायाः स्थानिवद्भावेनाभ्यासलोपे सत्त्वेऽपि पञ्चमीसमासेनैकादेशस्य स्थानिवत्त्वान्न तत्प्रवृत्तिः । अत एव'प्रत्यैषिषन्'इत्यादौ न दोष इत्यलम् ।

नाभ्यस्ता ॥ बहुयोगव्यवच्छिन्नोऽपि नुम् इहानुवर्त्तते सामर्थ्यात् । तदाह—नुम्नेति । दाञः शतरि शपः श्लौ "श्लौ"इति द्वित्वे ऽभ्यासह्रस्वत्वे "श्नाभ्यस्तयोः"इत्यालोपे 'ददत्'इति ।

त्यदादिषु ॥ आलोचनमिह ज्ञानमात्रम् ।

आ स ॥ "दृग्दृश्वतुषु"इति सूत्रमनुवर्त्तते । षत्वापवादत्वादिति । "कुः क्विन्यतः" इति न्यासेन दृष्ट इत्यध्याहारेण च बहुव्रीहिफले सिद्धे प्रत्ययग्रहणेनान्यपदार्थांशे वीप्सागर्भबहुव्रीहिणा लब्धं तादृशादिक्विन्नन्तविषयं लक्षणमचरितार्थमिति भावः । खकार इति । अघोषमहाप्राणशकारतुल्यत्वादिति भावः । कैयटेति । "क्विन्प्रत्ययस्य"इतिसूत्रस्थेत्यादिः । असिद्धत्वादिति । यद्यपि जश्त्वापवादोऽपि कुत्वं, तथापि शस्थानिकजश्त्वस्यैव, *न तु खस्थानिकस्यापीति भावः । वस्तुत इदं चिन्त्यम्, प्रत्ययग्रहणस्य बहुव्रीहिमात्रफलकताया एव भाष्यकृतोक्तेः । तस्माद्धृक्अञ्चु—युजि—क्रुञ्चु अस्य चारितार्थ्येन जश्त्वषत्वापवादता न युक्तेति । तदेतद् 'मते' इति वदता सूचितमिति दिक् ।

नगिति । षडगकाः प्राग्वत् । नड्भ्यामिति । "मस्जिनशोः" इति नुम् तु न । धातुप्रत्यये तद्विधानात् ।

स्पृशोऽनु ॥ अनुदके किम् ।

---

भावादिति भावः। कुत्वस्यासिद्धत्वे शबुद्ध्यैव जश्त्वप्रवृत्तिर्दुर्वारेति शङ्कां निवारयति—*न तु खस्थानिकेति*। ननु यं प्रतीत्यनेन कुत्वैकवाक्यतापन्नपूर्वत्रासिद्धमित्यत्र पूर्वपदार्थे जश्त्वातिरिक्तत्वेन संकोचात्कथं जश्त्वदृष्ट्याऽसिद्धत्वमिति चेन्न । अपवादसूत्रारम्भसामर्थ्येनापवादप्रवृत्तिप्राक्क्षणे ऽपवादशास्त्रस्यासिद्धत्वाभावबोधनेन तस्य चारितार्थ्यात् सर्वथाऽसिद्धत्वबाधे मानाभावेनात्र कुत्वप्रवृत्तिप्राक्काले तस्यासिद्धत्वाभावेऽपि तत्प्रवृत्त्युत्तरं कुत्वस्यासिद्धत्वेन तद्दृष्ट्यां तस्य तत्रापि प्रवृत्तिसत्त्वेन तदप्रवृत्तेरित्याशयात् ।

*उदकस्पर्शः । अन्तोदात्तत्वमिति । नित्त्वादाद्युदात्तत्वं प्राप्तम् । कुत्वस्य जश्त्वं प्रत्यसिद्धत्वादाह—कुत्वात्पूर्वमिति ।

र्वोरु ॥ "सिपि धातोः" इत्यतो धातोरिति वर्त्तते, तच्च र्वाभ्यां विशेष्यते* । पिपठिषतेः क्विपि अतो लोपे प्रातिपदिकत्वात्सौ हल्ङ्यादिलोपे प्रत्ययलक्षणेन पदान्तत्वाद्रुः । रुत्वे ऽल्लोपो न स्थानिवत् । पूर्वत्रासिद्धे तन्निषेधात्* ।

नुम्वि ॥ "इण्कोः" इति वर्तते । व्यवधाने ऽप्राप्तेरिदम् । अयमप्यधिकारः । अत एव "निंस्स्व" इत्यत्र धातोः सस्य नानेन षत्वम् । व्यवायशब्दस्य प्रत्येकं सम्बन्धो व्याख्यानात् । तदाह—प्रत्येकमिति । अपिना ऽव्यवधानेऽपि । नुम्स्थानिकेति । प्रकृतसूत्रस्थं हयवरट्सूत्रस्थञ्च भाष्यमत्र मानम् ॥ व्रश्चेति ष इति । सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतायान्त्रिपादीस्थस्याप्रवृत्तेर्हल्ङ्यादिलोपोत्तरं विविश्स् इत्यवस्थायां षत्वस्यासिद्धत्वात्संयोगान्तलोपे ष इत्यर्थः । कलोप इति । पदान्तसंयोगादिलोपस्य संयोगान्तलोपापवादत्वादिति भावः ।

तडिति । तक्ष्णोतेः क्विप् । ण्यन्ताभ्यामिति । णिलोपस्य स्थानिवत्त्वात् 'तक्स्थाता' इत्यादौ संयोगादिलोपाप्राप्तेः "काष्ठशगेत्र नास्ति, कुतः काष्ठशक्स्थाता" इति "परेश्च घाङ्कयोः" इतिसूत्रस्थभाष्येण न विरोधः । तत्र झल्परसंयोगादिलोपमाशङ्क्य तथोक्तम् । तस्य दोष इति । "कौलुसम्" इति तु न सार्वत्रिकमिति भाव इत्यन्यत्र विस्तरः ।

कुत्वस्यासिद्धत्वादिति । पिपच् स् इत्यवस्थायाङ्कुत्वस्यासिद्धत्वात् तदभावे "स्कोः" इत्यस्याप्राप्तेः संयोगान्तलोप इति भावः । दिधगिति । "दादेः" इति घः । "एकाचः" इति भष्भावः ।

विद्वानिति । विदेः शतुर्वसावदादित्वाच्छपो लुकि शतुर्ङित्वाद् गुणाभावे उगित्त्वान्नुमि "सान्त" इति दीर्घे संयोगान्तलोपे तस्यासिद्धत्वान्नलोपो न ।

---

*उदकस्पर्श इति* । ननु तदत्त्वेऽपि वाऽसरूपन्यायेनापि अस्य सिद्धत्वादिदं प्रत्युदाहरणं चिन्त्यमिति चेन्न । उदकस्पृडित्यस्योपलक्षणत्वेनादोषात् ।

*विशेष्यते इति । तेन प्रियग्रामणिरित्यादौ न दीर्घ इति भावः ।

*तन्निषेधादिति* । अत्रत्यं तत्त्वं नपदान्तसूत्रे निरूपितम् ।

वसोः ॥ प्रत्ययग्रहणे तदन्तग्रहणं, भस्येत्यधिकारः, तदाह—वस्वन्तस्येत्यादि । न च विदेः शतुर्वसोरेकानुबन्धकत्वात्तस्यैव ग्रहणं स्यात् न लिड़ादेशक्वसोरिति वाच्यम् । वसुसादेशेन तस्यापि द्व्यनुबन्धकत्वादिति भाष्ये स्पष्टम् । विदुष इति । सम्प्रसारणपूर्वत्वस्य "षत्वतुकोः"इत्यसिद्धत्वं तु न । पदान्तपदाद्योरेकादेशस्यैव तेनासिद्धत्वात्* ।

सेदिवानिति । षद्लृधातोः "भाषायां सद"इति लिटः क्वसौ द्वित्वे "अत एक" इत्येत्वाभ्यासलोपयोः "वस्वेकाजाद्" इतीट् । अक्रुतेति । परे तु पदावधिके ऽन्वाख्याने सेद् वस् अस् इति स्थिते इट्सम्प्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात् पूर्वं सम्प्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति सेदुष इत्यादिसिद्धिरित्यकृतव्यूहपरिभाषा निष्फला । लक्ष्यानुरोधादत्र पदावधिकमेवान्वाख्यानमित्याहुः ।

साहचर्यादिति । न च महत्यतेः क्विपि महतोऽपि धातुत्वसम्भव इति वाच्यम् । औपदेशिकधातुत्वासम्भवेन तत्साहचर्येणौपदेशिकधातुभिन्नसान्तसंयोगस्य ग्रहणमित्याशयात् । सुहिनिति । नान्तलक्षणदीर्घस्तु संयोगान्तलोपस्यासिद्धत्वान्न । हिंसीत्यस्येदित्त्वात् "अनिदिताम्" इति नलोपो न । ध्वदिति । ध्वंसु अवस्रंसने, क्विप् । अनिदित्त्वान्नलोपः । "वसु"इति दत्वम् ।

विवक्षिते इति । भाष्ये "असुङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वात्"इत्युक्तेरिति भावः । वस्तुतो वचनमेव ज्यायः । विवक्षितसप्तम्यामपि विभक्तिबुद्धिनिमित्तकत्वेन बहिरङ्गत्वात्ततः पूर्वं परमपुमानित्यादौ स्वरप्रवृत्तौ दोषात् । बहुपुंसीति । विभक्तौ लिङ्गविशिष्टाग्रहणान्नासुङ् । विभक्तिविवक्षाया लिङ्गकार्योत्तरमेव सत्त्वेन न ङीपः प्रागसुङिति भावः । पूञ इति । पातेरिति पाठान्तरम् । "स्त्रियाम्"इति सूत्रे भाष्ये तु "सूतेः सस्य पः, ह्रस्वः, म्सुन्प्रत्ययः" इत्युक्तम् । वस्तुत उच्चारणार्थानामपीत्सञ्ज्ञावश्यकत्वादियमुक्तिर्निष्फला । पुमानिति । "सान्त"इति दीर्घः ।

---

*तेनासिद्धत्वादिति* । अत एव वृक्षेच्छत्रमित्यादौ ह्रस्वत्वप्रयुक्तश्छेचेति नित्यस्तुग्न, किं तु दीर्घत्वप्रयुक्तो दीर्घात् पदान्ताद्वेति वैकल्पिक एवेति दिक् ।

उशनेति । वशेः कनसिः, "ग्रहिज्या"इति संप्रसारणम् । अस्य संबुद्धाविति । एतच्च वृत्तौ वाचानिकं पठितम् । वशधातौ माधवस्तु—

"सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्"

इति श्लोकवार्त्तिकमित्याह । भाष्यानुक्तत्वादिदमप्रमाणमेवेति प्रामाणिकाः । उशना—शुक्रः । अनेहा—कालः । 'नञि हन एह च'इत्यसुन्, हन एहादेशश्च । सुव इति । अधातोरित्यस्य धात्ववयवभिन्नासन्तस्येत्यर्थ इति भावः । अन्यथा समुदायस्य धातुभिन्नत्वाद्दीर्घः स्यादेवेति बोध्यम् ।

अदस औ । अदस इति षष्ठी । "तदोः सः" इत्यतः साविति वर्त्तते । औत्वं त्यदाद्यत्वापवादः । ननु "सोर्डौ" इत्येवास्तु इति चेन्न । असावित्यत्र टिलोपे कृते नित्यत्वात्सत्वं बाधित्वा त्यदाद्यत्वे 'असौ' इत्यसिद्धेः* । असुक इति । अमुक इत्यादौ त्वव्युत्पन्नो ऽदःशब्दपर्यायो ऽमुकशब्द इत्याहुः ।

एत ईत् ॥ बहुवचनशब्दो यौगिक इत्याह—बह्वर्थेति । तेन अमी इति सिद्धम्* । पश्चादुत्वेति । उत्वेत्युपलक्षणमीत्वस्यापि ।

ननु मुत्वस्यासिद्धत्वात्कथं नाभाव इत्यत आह—न* मु ने इति ।

---

*इत्यसिद्धेरिति* । शब्दान्तरप्राप्त्याऽनित्यत्वमाश्रित्य परत्वात्, सत्यपि सम्भवे बाधनं भवति इत्याश्रित्यापवादत्वाद्वा अनन्त्ययोरित्येतत्प्रत्याख्याने टिलोपे तदोरिति सत्वेन असौ इत्यस्य सिद्धावपि असकौ इत्यत्र टिलोपे दकारस्य सत्वे च ककारस्य त्यदाद्यत्वेन ककारश्रवणानापत्तिः । सत्वात्वयोः समावेशस्तु स इत्यादौ भवत्येवेति भावः । ननु अदस इत्यस्य पञ्चम्यन्तत्वमाश्रित्य सोरौकारविधानमेवास्तु किं सुलोपविधानेनेति चेन्न । तथा सति असकौ स्त्रीत्यत्र त्यदाद्यत्वे टापि प्रत्ययस्थादित्वप्रसङ्गात् । नच आपीत्यत्राकारप्रश्लेषेणाकाररूपे आपि इत्यर्थात् नित्यत्वादेकादेशे आकाररूपापोऽभावान्नेत्वापत्तिरिति वाच्यम् । एवमपि विभक्त्यनिमित्तत्वेनान्तरङ्गत्वादेकादेशं बाधित्वा इत्वस्य दुर्वारतया ऽऽपत्तेस्तदवस्थत्वात् । अन्यथा द्विवचने कारिके इत्यादौ इत्वं दुरुपपादमिति दिक् ।

*सिद्धमिति* । परिभाषितस्य बहुवचनस्य ग्रहणे तु अमीभिरित्यादावेव स्यात्, तत्परकत्वात् । न तु अमी इत्यत्र, एकादेशे व्यपवर्गाभावादिति भावः ।

*नमुने इतीति* । अत्र मु इत्यस्याभावे मनस इः मनइः तेन मनइना इत्यत्र नाभावे कर्तव्ये कृतेच कस्याप्यसिद्धत्वं नेत्यर्थे लोपः शाकल्यस्येति लोपस्याप्यसिद्धत्वाभावे आद्गुणे उक्तरूपासिद्धिः । एवं किम्-शब्दस्य उञो-

कर्त्तव्ये कृते चेति। एवञ्च ने इति विषयसप्तमीति भावः। भाष्ये तु ने यत्कार्यं तत्रासिद्धत्वं नेत्यर्थेनैव नाभावोऽप्याक्षिप्त इति व्याख्यातम्। मु इति समाहारद्वन्द्वः। कृते चेत्युक्तेर्मुत्वे "सुपि च" इति दीर्घो न*। अमीभिरिति। "नेदमदसोः"इत्यैस् न॥

इति हलन्ताः पुँल्लिङ्गाः॥

नहो धः॥ "झलो झलि"इत्यतो झलीति,पदस्येति, "स्कोः"इत्यतोऽन्त इति चानुवर्त्तते। झलि परे *पदान्ते विद्यमानस्येत्यर्थः। "अलोऽन्त्यस्य" इत्येतल्लब्धं हस्येति। उपपूर्वात् णह बन्धने इत्यतः क्विप्। "नहिवृति"इति पूर्वपदस्य दीर्घः। सोईल्ङ्यादिलोपे धत्वजश्त्वचर्त्वादि।

*दलोपषत्वे इति। पूर्वपदान्तस्य लोपो, धातोः सस्य षत्वम्। "आदेशप्रत्यययोः"इति तु न षत्वम्। पदाद् आदिरिति पक्षे "सात्पदाद्योः"इति निषेधात्। हस्य घ इति। कैयटादिमते षत्वस्येव ढत्वस्यापि कुत्वेन बाधादिति भावः। 'उष्णिगञ्चु'इति निर्देशात्कुत्वस्य जश्त्वे नासिद्धत्वम्। स्वरीत्या तु ढडगका इति बोद्ध्यम्।

द्यौरिति। "दिव औत्"इत्यौत्वं, यण्। चतस्त्र इति। परत्वा-

---

ऽनुकरणेन उशब्देन समासे ततस्तृतीयाविभक्तौ प्रकृतिवदनुकरणमित्युक्त्वातिदेशे मय उञो वो वेत्यस्याप्यसिद्धत्वाभावे वत्वापत्तौ किम्वा इत्यापद्येत। इष्यते च किमुनेति। एवं पयोरुरुणेत्यत्र रोरीत्यस्याप्यस्यासिद्धत्वाभावे परत्वात् हशिचेत्युत्वं बाधित्वा रोरीति लोपे च पयारुरुणेत्यापद्येत। नाभावे उत्वमसिद्धं नेत्यर्थके नो ने इति न्यासे तु प्लुतोऽप्रगृह्यस्येति सिद्धस्य सम्बोधनविभक्त्यन्तस्य छान्दसस्य पटा३उ इत्यस्यानुकरणे तृतीयाविभक्तौ उत्वस्यासिद्धत्वाभावे घित्वान्नाभावे पटा३उना इत्यापद्येतेति दिक्।

*दीर्घो नेति। सन्निपातपरिभाषया तु न दीर्घव्यावृत्तिः। सुपि चेति दीर्घे कर्तव्ये सन्निपातपरिभाषाया अप्रवृत्तेः अतोऽम् इति सूत्रे उपपादितत्वादिति भावः।

॥ इति हलन्ताः पुंलिङ्गाः॥

*पदान्ते विद्यमानस्येति। विद्यमानस्य चेत्यर्थः। *दलोपषत्वे इतीति। तलोपषत्वे इति मूले टीकायां च क्वचित् पुस्तके पाठो लेखकप्रमादाद्बोध्यः। उदःस्था, उद ईत्, उदोऽनूर्ध्वकर्मणीत्यादौ सर्वत्र दान्तपाठेन उदो दान्तत्वस्यैव लाभात्।

॥ इति हलन्ताः स्त्रीलिङ्गाः॥

दामं बाधित्वा चतस्रादेशे सकृद्गतिन्यायात्पुनराम् नेति स्थानिवत्सूत्रे भाष्ये। चतसृणामिति। "न तिसृ"इति दीर्घनिषेधः। सर्वावदिति। सर्वाशब्दवदित्यर्थः। अत एव 'सर्वनाम्नो वृत्तिमात्रे'इति न पुंवत्त्वम्। शब्दपरस्य कदाऽपि सर्वनामत्वाभावादिति भावः।

यः सौ ॥ पुंस्यया बाधात्, क्लीबे सोर्लुका लोपात्, स्त्रियामिदम्। वागिति। वचेः 'क्विब् वचि' इत्यादिना क्विप्, दीर्घोऽसम्प्रसारणञ्च।

अपो भि। "अच उपसर्गात्तः" इत्यतस्त इत्यनुवर्त्तते। अबिति न प्रत्ययो व्याख्यानात्। दिगिति। दिश अतिसर्जने, क्विप्। षडगकाः प्राग्वत्। त्विष गतौ, अस्मात् क्विप्, जश्त्वचर्त्वे। जुषी प्रीतीत्यतः क्विप्। सहस्य सभावे सजूः। अम्भूभिरिति। अदन्तत्वाभावादेत्त्वाभावेन 'एत ईत्'इत्यस्याभावे मूत्वमेव॥

इति हलन्ताः स्त्रीलिङ्गाः॥

दत्वमिति। "वसुस्रंसु" इत्यस्य पदाधिकारस्थत्वात्तदन्तेऽपि दत्वम्। एवमाङ्गत्वादामपि। पूर्वपदस्येवेति। प्रत्ययलक्षणेनेति भावः। अत एव राजपुरुषादौ नलोपादिसिद्धिः। उत्तरपदत्वे चेति। उत्तरशब्देनोत्तरपदं लक्ष्यते। उत्तरपदशब्दश्च समासचरमावयवे रूढः। तेन तस्य पदत्वे तत्प्रयुक्तकार्ये कर्त्तव्ये लुमता लुप्ते प्रत्ययलक्षणं न। पदादिविधौ त्वयं निषेधो नेत्यर्थः। तेन परमवानेत्यादौ न कुत्वं, दधिसेचावित्यादौ "सात्पदाद्योः"इति षत्वानिषेधश्च। निरुपपदादेव विचि षष्ठीसमासोऽत्र। सोपपदाद्विचोऽनभिधानमिति कैयटः। सेचयतेः क्विबित्यन्ये। पदादिविधिश्च प्रतिपदोक्तत्वात् "सात्पदाद्योः"इत्येव। तेन परमबुधावित्यादौ भष्भावो न। "उत्तरपदादिः, कर्णो वर्णलक्षणात्"इत्यादौ तूत्तरपदशब्दस्य समासचरमावयवमात्रे रूढेर्न दोषः। अयञ्च निषेध उत्तरपदस्य कार्यित्व एवेति ङमुट्सूत्रे उक्तम्। बहुच्पूर्वके 'बहुवाचौ' 'बहुसेचौ' इत्यादावपि न दोषः। "बहुच्पूर्वस्य च पदादिविधावेव प्रत्ययलक्षणम्"इति वचनान्तरात्। पूर्ववार्त्तिकमपि 'उत्तरपदत्वे च पदादिविधौ' इत्येवमेव पठितम्। एतत्प्रत्याख्यानप्रकारस्तु गुरुतर इति न युक्त इति भाष्ये ध्वनितं प्रत्याख्यानोत्तरं पुनर्नञ्घटितैतद्वचनपाठेनेति न स

लिखितः । उत्तरपदशब्देन मध्यमपदत्वानाक्रान्तोत्तरपदस्य ग्रहणं व्याख्यानात् । तेन 'पूर्वदण्डिप्रियः' इत्यादाववान्तरतत्पुरुषोत्तरपदेऽपि नलोपादिसिद्धिः । कादेशो नेति । इदंशब्दे "यः सौ" इति च नेत्यपि बोद्धयम् ।

वक्तव्य इति । 'द्वितीयाटौस्सु' इति अत्र सम्बद्ध्यते । अयञ्च सामर्थ्याल्लुका लुप्तेऽपि भवति । एनादेशोऽपि एनमित्यादिसिद्ध्यर्थं वक्तव्यः । येननाप्राप्तिन्यायेनैनतस्त्यदाद्यत्वापवादत्वेन तत्र कृते त्यदाद्यत्वाप्राप्तेः* । अत एव भाष्ये "नपुंसकैकवचने एनद्वक्तव्यः, कुण्डमानय प्रक्षालयैनत्" इत्युक्तम् । अत्र नपुंसकैकवचने इत्युक्त्या ऽन्यत्रैनो वक्तव्य इति स्पष्टमेवोक्तं वार्त्तिककृता सिद्धान्तिना । अपवादत्वमजानत एकदेशिनो यद्येनदित्यादिरुक्तिः । यदिगर्भवाक्ये पूर्वपक्ष्युक्तित्वस्यैवौचित्यात् । भाष्यकृता तु फल्गुत्वान्नात्रोत्तरमुक्तम् ।

सिद्धान्ती तु 'किमुच्यते नपुंसकैकवचने इति, सर्वत्र एनदेव वक्तव्यः' इत्येवंशब्दैः प्रत्याख्यानं कुर्यात् । *अनयोरप्यादेशयोः "एतदस्त्रतसोः" इत्येतत्साहचर्येणोपसर्जने न प्रवृत्तिः, त्यदाद्यत्वेन सिद्धमिति भाष्यासङ्गतेश्च । एनतमादायैनादेशप्रत्याख्यानपरं "यद्येनत्क्रियते" इत्यादि भाष्यं त्वेकदेश्युक्तिरिति भाष्यप्रदीपोद्द्योते निरूपितम् । अन्वादेशविषये इदमेतदोः समासस्यानभिधानमेव* । "यद्येनत्क्रियते, एनो न वक्तव्यः । कथमेनमित्यादि ?, त्यदाद्यत्वेन सिद्धम् । यद्येवमेतच्छ्रितको न सिद्ध्यति, एनच्छ्रितक इति प्राप्नोति; यथालक्षणमप्रयुक्ते" इति भाष्यात् ।

---

*त्यदाद्यत्वाप्राप्तेरिति । वस्तुतस्तु त्यदाद्यत्वविषये तक्रन्यायस्याप्रवृत्त्या, विषयसप्तम्याश्रयणाद्वा एनदादेशेऽपि त्यदाद्यत्वेन सिद्धेः एनादेशो न वक्तव्यः । अतएव स इत्यादौ सत्वे त्यदाद्यत्वसिद्धिः । यदिगर्भवाक्ये पूर्वपक्ष्युक्तित्वमेवोचितमिति तु कल्पनामात्रम् । तत्रोत्तरादानेन भाष्यान्तराविरोधेन च सिद्धान्त्युक्तित्वस्यैव न्याय्यत्वात् ।

*ननु अनुपसर्जने एनदादेशस्य चारितार्थ्यात् कथं त्यदाद्यत्वापवादत्वमत आह *अनयोरप्यादेशयोरिति ।

*समासस्यानभिधानमेवेति । वस्तुतस्तु अनभिधाने न मानम् । यथालक्षणमप्रयुक्ते इत्यस्य अप्रयुक्ते लक्षणानुसारेण साधुत्वं प्रत्येतव्यम् इत्यर्थस्य प्रियाष्टन्—शब्दे व्यवस्थापितत्वात् तकारोच्चारणसामर्थ्येन अन्तरङ्गनपुंसकलुकि प्रवृत्तावपि बहिरङ्गसामासिकलुकि प्रवृत्तौ मानाभावेन एतच्छ्रितक इत्यस्यैव न्याय्यत्वात्तदेव साध्वित्यन्यत्र विस्तरः ।

ब्रह्मणी इति । "न संयोगात्"इति निषेधादल्लोपो न । रोऽसुपि अहर्भातीति । "अहन्"इति रुत्वे 'अहो भाति'इति स्यादिति भावः । नलोपे प्राप्त इति । न च नलोपे ऽकारस्य रौ रे वा विशेषाभावेनान्यतरेणैवोपपत्तावुभयविधानसामर्थ्यादेव लोपो नेति वाच्यम् । संबुद्धौ नलोपनिषेधेन 'अहर्गच्छ'इत्यादावुत्वाभावेन, 'दीर्घाहो निदाघ'इत्यादावुत्वसम्पादनेन च चारितार्थ्यात् । न च नकारोच्चारणसामर्थ्यलब्धेन नकारान्तानुकरणेन नान्तस्याहन्शब्दस्येति व्याख्यानान्नलोपो नेति वाच्यम् । दीर्घाहो निदाघेत्यादौ सम्बुद्धौ प्रवृत्त्या भ्यामादौ व्यावृत्त्या च नकारस्य चारितार्थ्यात्तेन नलोपबाधे मानाभावादिति भावः ।

आवर्त्येति ॥ आवृत्तौ मानं च "रूपरात्रि"इति वार्त्तिकमेव । अन्यथा नलोपेऽकारस्य रेफादेशेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । *भाष्यप्रामाण्याच्च तस्य संबुद्धावप्रवृत्तिः । तज्ज्ञापकसिद्धवचनकल्पनापेक्षया आवृत्तिर्लघीयसीति भावः । आवृत्तस्य पदान्ते अहन् इति निपात्यते इत्यर्थः । इदमसंभव एवापवादत्वमिति वार्त्तिकमते "अहन्"इत्यस्य नलोपोत्तरश्चारितार्थ्याभिमानेन । वस्तुतः सत्यपि संभवे बाधनं भवतीति भाष्यसिद्धान्ताद् रुत्वरत्वे नलोपापवादभूते एव । निषेधविषयेऽपि प्राप्तिमात्रेण येननाप्राप्तिन्यायविषयसत्त्वात् । निषेधेनापि तस्य बाध इत्यन्यत् । एतेन संबुद्धौ चारितार्थ्यमित्यपास्तम् । ध्वनितश्चेदम् 'अपवादो रुर्नलोपं बाधिष्यते' इत्यर्थकभाष्येण । एतदग्रे नलोपे कृतेऽकारे सावकाशत्वशङ्कातत्समाधानादि वार्त्तिकानुसारिणोरित्यलम् ।

तदन्तस्यापीति । पदाधिकारस्थत्वात् । "ग्रहणवता"इति निषेधस्तु प्रत्ययविधिविषय इति "असमासे निष्कादिभ्यः"इति सूत्रे भाष्यकै-

---

*भाष्यप्रामाण्यादिति । नलोपः प्रातिपदिकान्तस्येति सूत्रे "अहो नलोपप्रतिषेधो वक्तव्यः अहोभ्यामिति । न वक्तव्यः, रुरत्र बाधको भविष्यति । सावकाशो रुः, कोऽवकाशः, अनन्त्यः अकारः । नान्तनिर्देशसामर्थ्यात् न नलोप इत्यपि न । संबुद्ध्यर्थं हि वचनम्, हेदीर्घाहो निदाघेति । यत्तर्हि रूपरात्रिरथन्तरेषु पसङ्ख्यानं तज्ज्ञापकं नानन्त्यस्य रुर्भवतीति । नह्यस्ति विशेषो रूपरात्रिरथन्तरेषु रौ रे वा"इति वार्तिकं ज्ञापकमुपन्यस्तम् । एतज्ज्ञापकपरभाष्यप्रामाण्यात् संबुद्धौ नैतद्वार्तिकप्रवृत्तिः । अन्यथा संबुद्धौ नान्ते वार्तिकस्य सार्थक्यात् ज्ञापकोपन्यासोऽसङ्गतः स्यादिति बोध्य ।

यटयोः स्पष्टमिति भावः । तस्यासिद्धत्वादिति । अकृतव्यूहपरिभाषया दीर्घाप्रवृत्तिः स्यादित्यभिमानेनेदम् । दीर्घस्तु परत्वाद्धल्ङ्यादिलोपात्पूर्वमेव बोद्धयः। सम्बुद्धौ त्विति । सुपोऽत्र हल्ङ्यादिलोपात् 'असम्बुद्धौ' इत्युक्तेर्दीर्घाभावे रुत्वे "हशि च" इत्युत्वे आद्गुणः। स्रग्वीणीति। इन्ग्रहणेऽनर्थकस्यापि ग्रहणाद्दीर्घ इति भावः । बहुपूत्रहाणीति। अत्र यद्वक्तव्यं तदुक्तम् ।

पदान्ते कुत्वमिति । "क्विन्प्रत्ययस्य" इत्यस्यासिद्धत्वाद् "व्रश्च" इति षत्वे कुत्वमित्यर्थः । षत्वन्तु सृष्टमित्यादौ सावकाशमिति भावः । भाष्यप्रयोगादिति । अनेन भाष्यप्रयोगेणानव्ययपूर्वपदे कुत्वाभावो बोद्ध्यते । तेनासृगित्यत्र न दोषः । कुत्वापवाद इति । सृजियज्योः पूर्वोत्तरसाहचर्येण पदान्तेऽपि विशिष्य षत्वबोधनेन तत्सामर्थ्यात्कुत्वबाध इति भावः । अत एवोपयट्काम्यतीति काम्यच्सूत्रस्थो भाष्यप्रयोगः सङ्गच्छते । निपातनादेवेति । निपातनेन ह्यनयोरपवादाप्रवृत्तिमात्रबोधनं, कुत्वन्तु स्वशास्त्रेणैव । एतेन निपातनादपदान्तेऽपि कुत्वापत्तिरिति निरस्तम् ।

असृक्शब्दस्त्विति। इदमेव न्याय्यम् । ऊर्गिति। अयं पुंलिङ्गोऽपि। "नपुंसकस्य" इति सूत्रे बहव ऊर्ज्ज इति कैयटात् । नरजानामिति । "बहूर्जि नुम्प्रतिषेधः" इति वार्त्तिकरीत्येदम् । अचः परो यो झल् तदन्तस्य नुमिति तत्प्रत्याख्यातृभाष्यमते तु नुमोऽत्र प्राप्तिरेव नेति बोद्ध्यम् । न चैवं कुण्डानीत्यसिद्धिः । "इकोऽचि" इति सूत्रे ऽचः सर्वनामस्थाने इत्यनुवर्त्त्य अनुवृत्तिसामर्थ्यादिक इत्येतत्साहचर्याच्च सर्वनामस्थाने इति सप्तम्या षष्ठीं प्रकल्प्य वाक्यभेदेनाजन्तस्य क्लीबस्य तत्र नुम्विधानाददोष इति भाष्ये स्पष्टम् । काष्ठतक्षीत्यादौ "दिव औत्" इति सूत्रभाष्योदाहृतेऽचः परझल्त्वजातेराश्रयणान्न दोषः । अन्त्यादिति । इदं वाचनिकमेव बहूर्जूशब्दमात्रविषयकम् । बहूर्ञ्जीति । श्चुत्वस्यासिद्धत्वादनुस्वारे परसवर्णो बोद्ध्यः । स्थानिवत्त्वादिति । "क्वौ लुप्तं न" इति त्वसार्वत्रिकमिति भावः। स्पष्टञ्चेदं "दीधीवेवीटाम्" इति सूत्रे कैयटे ।

जायन्ते नव सौ तथाऽमि च नव भ्याम्भिस्भ्यसां सङ्गमे
षट्संख्यानि नवैव सुप्यथ जसि त्रीण्येव तद्वच्छसि ॥
चत्वार्यन्यवचःसु कस्य विबुधाः शब्दस्य रूपाणि तद्

जानन्तु प्रतिभाऽस्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ॥

इति प्राचीनस्य शुष्कप्रक्रियात। किंकस्य प्रश्ने तदनुसारेणैव श्लोकद्वयेनोत्तरमाह—गवाक्शब्दस्येति। शब्दपरत्वेनापूजार्थकत्वान्नस्य लोपः। भेदत इति। आद्यादित्वात्तसिः। भेदेनेत्यर्थः। नवेति। द्वन्द्वान्ते श्रूयमाणत्वात्प्रत्येकं नवेत्यर्थः। अग्रेऽपि प्रत्येकमेव संख्याऽन्वयः। गवागिनि। सोर्लुका लुप्तत्वान्नुम् न। षण्णामिति। कुक्पक्षे त्रयाणां, गतौ त्रयाणामित्यर्थः। चत्वेस्येति। तेन गतौ त्रयाणामाधिक्यं नेत्यर्थः। कुक्पक्षे इति। पूजायामित्यर्थः। अश्वाक्षीति। सप्तविंशत्यधिका पञ्चशतीत्यर्थः।

घः शत्रेति। शतृप्रत्यय इत्यर्थः।

आच्छीन॥ वेति वर्त्तते उत्तरसूत्रे नित्यग्रहणात्। "नाभ्यस्तात्" इत्यतो नेति तु नानुवर्त्तते। निषेधस्य प्राप्तिपूर्वकत्वात्। अत्र च प्राप्त्यभावात्। नुम्ग्रहणन्तु स्पष्टार्थम्। शतुरवयव इति। परो यः शतेति तु नोक्तम्। तुदन्तीत्यादावेकादेशे उभयत आश्रयणेऽन्तादिवद्भावाभावेन व्यपवर्गालाभेन च नुमभावापत्तेः। अवर्णश्च शतृभिन्नावयव* एव गृह्यते शत्रकारेणाव्यभिचारात्।

शप्श्यनोः॥ आदिति भातीत्यादौ नित्यनुमभावाय। अन्यथा प्रत्ययलक्षणेन स्यात्। आदित्युक्तौ तु वर्णप्राधान्यान्न प्रत्ययलक्षणम्। नलुमतेति निषेधस्तु प्रत्यासत्त्या लुप्तप्रत्ययनिमित्ताङ्गस्य कार्ये एवेति भावः। पचन्तीत्यादिबहुवचने "नपुंसकस्य झलचः" इति नुम्। निरवकाशत्वमिति॥ इदं "छदिरुपधिबलेर्ढञ्" इति सूत्रे* "शेषाद्विभाषा" इति सूत्रे* च भाष्ये स्पष्टम्। परे तु निरवकाशत्वरूपप्रतिपदोक्तत्वस्य बाधकता-

---

*शतृभिन्नावयव इति। तेन कुर्वतीत्यादौ न नुमिति भावः।

*इति सूत्रे इति। छदिरुपधीतिसूत्रविषये उगवादिभ्यो यत् (५।१।२) इति सूत्रे छदिषे हितं चर्मेत्यर्थे छदिरुपधीति ढञः, चर्मणोऽञ् इत्यञश्च प्राप्तौ छदिरुपधिबलेर्ढञ् इत्यस्य पूर्वविप्रतिषेधेन बाधकत्वमुक्तम्। सावकाशस्यापि प्रतिपदविधेर्बाधकत्वे तु छादिषेयं तृणमित्यादौ सावकाशेन छदिरुपधीति ढञा प्रतिपदविधित्वादेव चर्मणोऽञ् इत्यञो बाधे सिद्धे पूर्वविप्रतिषेधाश्रयणं व्यर्थं स्यात्। तस्मात् प्रतिपदविधेर्निरवकाशत्वे सत्येव बाधकत्वं लभ्यते इति भावः।

*शेषाद्विभाषेति सूत्रे चेति। अत्रापि "शेषग्रहणं किमर्थं, ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्ति, अनवकाशा हि विधयो बाधका भवन्ति,

प्रयोजकत्वम् । प्रकृते तदभावेनाबाधकत्वेऽपि प्रतिपदविधित्वेन शीघ्रोपस्थितिकतया पूर्वं प्रवृत्तौ नियामकत्वे बाधकाभावेन पूर्वं दीर्घे ततो नुमि स्वाम्पीत्येवेत्याहुः* ।

धनुरिति । "र्वोः"इति दीर्घस्तु न । रेफान्तस्याधातुत्वात् ।"श्रेयांसि"इत्यादौ युगपद् द्वयोरन्त्यादचः परत्वायोगाद्विरोधेन परत्वाज्झलन्तलक्षणे नुमि कृते उगिल्लक्षणो न । सकृद्गतिन्यायात् । किं च अन्त्यादचः परो मित्त्वयोक्तव्य इति "मिदचः"इत्यस्यार्थेन द्वयोर्मितोरन्त्यादचः परप्रयोगासम्भवेन नात्र नुमुद्वयप्रसक्तिः पुनःप्रसङ्गविज्ञानेऽपि । किं च सत्यपि नुम्द्वये परस्यानुस्वारे तस्य झल्ग्रहणेन ग्रहणात् पूर्वस्यानुस्वारे द्वयोरनुस्वारयोः श्रुतौ न विशेष इति "नपुंसकस्य"इति सूत्रे भाष्ये स्पष्टम् ॥

इति हलन्ता नपुंसकलिङ्गाः ॥

स्वरादि । स्वरादीनामपि निपातसंज्ञैव तु न कृता । स्वरादौ "निपाता आद्युदात्ताः"इत्यापत्तेः। एतेन चादीनामप्यव्ययसञ्ज्ञैव कार्येत्यपास्तमित्यन्यत्र विस्तरः । स्वरित्यादि । अनुकरणान्येतानि । तत्रेत एव निर्देशान्न स्वाद्युत्पत्तिः, तेन विसर्गादिकं न । स्वरादीनामनेकशक्तिप्रधानता । स्वरागतः, स्वः स्थितः, स्वः पश्येत्यादिदर्शनात् । गणे च तन्त्रेण

---

समासान्ताश्च कबभावे सावकाशाः"इति स्पष्टमभिधानात् निरवकाशत्वे सत्येव प्रतिपदविधेर्बाधकत्वं लभ्यते इति भावः ।

*स्वाम्पीत्येवेत्याहुरिति । प्रतिपदविधेरनित्यस्य पूर्वं प्रवृत्तिस्तु क्काचित्की, नित्यस्यतु सेदुष इत्यादौ सर्वत्रैव । तेन इयायेत्यादौ अचो ञ्णितीति वृद्धौ कृतायाम् "परनेकाच" इत्यत परित्यपकर्षविशिष्टस्य "इणो यण्" इत्यस्याप्राप्त्याऽनित्यत्वान्न पूर्वं प्रवृत्तिः । तत्र परित्यपकर्षस्तु आयन्नित्यादौ लावस्थायामडिति सिद्धान्तपक्षे अन्तरङ्गत्वाद् अटश्चेति वृद्धौ कृतायां प्राप्तस्य यणो व्यावृत्तये असिद्धवत्सूत्रे भाष्ये उक्तः । एवं जुहवानीत्यादौ गुणे कृते ऽप्राप्तस्य "ओः सुपि"इत्यत ओरित्यनुवृत्तिविशिष्टस्य हुश्नुवोरिति यणः, अतिक्रये इत्यादौ घेर्ङितीति गुणे कृते ऽप्राप्तस्य "अचि श्नु" इत्यतो य्वोरित्यनुवृत्तिविशिष्टस्य श्रिया इति इयङश्च न पूर्वं प्रवृत्तिः । न चैवं प्रतिपदविधित्वस्य पूर्वप्रवृत्तिप्रयोजकत्वकथनं व्यर्थं, नित्यत्वादेव सिद्धेरिति वाच्यम् । सेदुष इत्यादौ अन्तरङ्गादपि इटः प्राक् संप्रसारणप्रवृत्त्यर्थं तस्य तत्त्वस्वीकारात् । स्वाम्पीत्यादौ क्वचित् अनित्यस्यापि दीर्घस्य नुमः प्राक् प्रवृत्त्यर्थं तत्स्वीकाराच्चेति दिक् ॥ इति हलन्ता नपुंसकलिङ्गाः ॥

सर्वेषामुच्चारणम् । उच्चैरित्यादीन्यधिकरणशक्तिप्रधानानि शब्दशक्तिस्वभावात् । हिरुगादीनि क्रियाप्रधानानि । क्रियाप्राधान्यञ्चैषां क्रियायामेव विशेषणत्वेन । स्पष्टञ्चेदं "तद्धितश्च"इति सूत्रे कैयटे । सायं, चिरं मान्ते अव्यये । "सायञ्चिरम्"इतिसूत्रस्थ*भाष्यप्रामाण्याच्चिरमित्यव्ययमप्रामाणिकमिति परे ।

वदिति । "तेन तुल्यम्" "तत्र तस्येव""तदर्हम्"इति विहितः । "उपसर्गाच्छन्दसि"इति विहितस्य च्छान्दसत्वादेव *न संज्ञा । वस्तुतः"तद्धितश्च"इत्येव सिद्धेर्वद्ग्रहणं व्यर्थम् । अन्तराऽन्तरेणेति ।"अन्तरान्तरेण युक्ते"इति सूत्रे भाष्ये ऽनयोर्निपातत्वोक्तेः स्वरादिष्वनयोः पाठः प्रक्षिप्तः ।

अस्तीति । धनवानित्यर्थके अस्तिमानित्यादौ धनवाचिनः सत्त्ववचनस्य विभक्तिप्रतिरूपकत्वेन न सिद्धिरित्यस्य पाठः । त्रिनिगमनाविरहेण विभक्तिप्रतिरूपकस्य शब्दतोऽर्थतश्च ग्रहणात् । तेनैव सिद्धिरिति तु मतुप्सूत्रे भाष्यकैयटयोः । सत्ताकर्तृत्वेनैव धनबोधादस्ति कथञ्चिदर्थतः साम्यमिति तद्भावः । एवञ्चास्तीत्यस्याप्रामाणिकः पाठ इति तत्त्वम् । नमसेति । "महसां नमसाम्"इति प्रयोगस्तु सत्त्ववाचकत्वे बोद्ध्यः । प्रताम् प्रशामिति । प्रतानिति नान्ताव्ययस्य पृथक् पाठसामर्थ्यादपदान्तत्वाच्चास्य नत्वाभावः । प्रशानिति नान्तपाठो ऽसांप्रदायिकः । मान्तानुकरणे नत्वाप्राप्तेः, स्वरादौ रुत्वादिवत् । *कृन्मेजन्तसूत्रस्थभाष्यस्वरसोऽप्येवमेव । नञः स्वरादिष्वप्रामाणिकः पाठः । "अव्यये नञ्कुनिपातानाम्"इत्यत्र पृथक् नञ्ग्रहणं तु अकरणिरित्यादौ परस्यापि कृत्स्वरस्य

---

*भाष्यप्रामाण्यादिति । तत्र हि सूत्रे सायचिरयोर्मान्तत्व प्रत्ययसंनियोगेन निपात्यते इत्युक्त्वा नैतदस्ति, मान्तः सायम्-शब्दोऽव्ययं, तथा चाव्ययत्वादेव सिद्धे सायम्—शब्दग्रहणं न कार्यमिति प्रत्याख्यानं सायंशब्दविषयकमेव कृतं, न तु चिरंशब्दविषयम्; इति तद्ग्रहणं तत्र मान्तत्वं च कर्तव्यमेवेति सिद्धम् । तथा चैतस्यानव्ययत्वं स्पष्टमेव सूचितम् ।

*न संज्ञेति । अत एव "यदुद्वतो निवत" इत्यादौ विभक्तिश्रवणमिति भावः ॥

*कृन्मेजन्तसूत्रस्थेति । तत्र हि कृदन्तं यन्मान्तमिति पक्षे प्रतामौ इत्यादौ अव्ययत्वापत्तिमाशङ्क्य स्वरादिषु प्रशाम्—शब्दपाठसामर्थ्यात् प्रत्ययलक्षणेन कृदन्तस्याव्ययसंज्ञा नेति ज्ञाप्यते इति समाहितम् । तेन च मान्तपाठ इति स्पष्टमेव लभ्यत इति भावः ।

बाधनार्थमित्याकरः। एवं पाठोऽपि स्वरादौ प्रक्षिप्तः पाठः। यावत्ताव-च्छब्दावव्युत्पन्नौ।

उपसर्गविभक्ति। अत्र प्रतिरूपकत्वं विनिगमनाविरहादर्थतः शब्दतश्च गृह्यते। "गेये केन विनीतौ वाम्" इत्यत्रापि वामित्यस्य युष्मत्प्रकृतिकविभक्त्यन्तसमानार्थत्वमस्त्येव। स्वरांशे तु नाऽर्थतोऽसम्भवात्। एतेन युगं पततीत्यादिव्युत्पत्त्याश्रयणेन युगपदित्यादीनां विभक्तिप्रतिरूपकत्वादेव सिद्धे तेषां गणे पाठो व्यर्थ इत्यपास्तम्। एवन्तदित्यपि लुप्तषष्ठीकं विभक्तिप्रतिरूपकमव्ययम्। अत एव "अविद्या तच्चितोर्योगः" "तत्तदर्थविभाग"इत्यादौ "त्यदादीनि"इति नैकशेषः*। अवदत्तमिति। अत्र क्रियायोगेऽपि—

अवदत्तं विदत्तञ्च प्रदत्तञ्चादिकर्मणि।
सुदत्तमनुदत्तञ्च निदत्तमिति चेष्यते॥

इति भाष्यवचनेनोपसर्गत्वाभावबोधनद्वारा तादेशाभावो बोध्यत इत्याशयः।

आकृतीति।'अहः'इत्यहनीत्यर्थे। ओमिति च स्वरादिषु। तत्र—अश्च उश्च म् चेति व्युत्पत्त्या शिवादिवाचकम्, "अव्ततेष्टिलोपश्च"इति सिद्धम् ब्रह्मण्यङ्गीकारे च। उभयोरपि स्वरादित्वं व्याख्यानात्। अन्त्ये "कृन्मेजन्तः" इति तु न सिद्ध्यति। "चित्वरव्ययम्"इत्युणादिपठितेन नियमादप्राप्तेः। उणादिव्युत्पन्नानाञ्चेच्चादिस्वराद्यपठितानां भवति, तर्हि च्व्यन्तानामेवेति तदर्थः। अन्यथा च्व्यन्तानां (ऊर्यादिच्विडाचश्चेत्यनेन) निपातत्वादेव सिद्धे तद्वैयर्थ्यं स्पष्टमेव। "स्वरादिनिपातम्"इत्यत्र निपातपदे गौणमुख्यन्यायाप्रवृत्तिः, अनित्यत्वात्। अन्यथा "ओत्" इति प्रगृह्यत्वमिवेदमपि न स्यात्। एवमतिशयेन साधुरित्यर्थे *साधीय इत्यपि।

सर्वशब्दोऽत्र सर्वः पटो दग्ध इतिवद् *अवयवकार्त्स्न्ये इत्याशयेनाह—यस्मात्सर्वेति। वचनत्रयात्मिकेत्यर्थः। नेति। किन्त्वेकवचनमेवेत्यर्थः।

---

*नैकशेष इति। त्यदादिषु साहचर्येणानव्ययस्यैव ग्रहणादिति भावः।

*साधीय इति। अत एव तत्र तत्र कश्च साधीय इति भाष्यप्रयोगः सङ्गच्छते। ईयसुनन्तत्वे हि कश्च साधीयानिति स्यादिति भावः।

*अवयवकार्त्स्न्ये इति। सर्वप्रकारान्नभोजीत्यर्थके सर्वान्नीनो भिक्षुः

ननु—"संख्याकारकबोधकैरेकवाक्यतया सुपां विधानम्" इति पक्षे ऽव्ययार्थे संख्याकारकयोरभावात्कथं विभक्तिः। "अव्ययादाप्सुपः" इति ज्ञापकाश्रयणे च सर्वाऽपि।

किं च विहितानां नियमपक्षे ऽपि नास्योपपत्तिः, तत्पक्षे सर्वेष्वर्थेषु विधेयतया प्रधानप्रत्ययानुरोधेन गुणभूतप्रकृतिभेदकल्पनेन सर्वविभक्त्युत्पत्तौ लोपेनेव जातस्य निवृत्तिः। तन्निवृत्तौ च कल्पितगुणस्वरूपं स्वत एव निवर्त्तते। नियमश्च द्विविधः—अर्थनियमः, प्रत्ययनियमो वा। अन्त्योऽपि द्विविधः—प्रकृतार्थापेक्षः, सामान्यापेक्षो वा। तत्र कर्माद्यर्थयोग्यप्रातिपदिकाच्चेत्कर्मणि विभक्तिस्तदा द्वितीयैव। कर्मादिरहिते तद्योग्यप्रातिपदिकार्थे प्रातिपदिकात्प्रथमैवेत्यादिरर्थनियमः*। अत्र पक्षे *सर्वाः सप्तापि विभक्तयो ऽव्ययेभ्यो, विभक्तीनामनियतत्वात्।

कर्माद्यर्थयोग्यप्रातिपदिकाच्चेद् द्वितीया तदा कर्मण्येव, न करणादौ; कर्मादियोग्ये तद्रहितप्रातिपदिकार्थे एव प्रथमा, न कर्मादौ; संख्यावदर्थयोग्यप्रातिपदिकादेकत्वादावेवैकवचनादि, न द्वित्वादावित्यादिः प्रकृतार्थापेक्षप्रत्ययनियमः।*अत्रापि पक्षे सर्वाःसप्तापि विभक्तयो ऽव्ययेभ्यो लभ्यन्ते।

अथ प्रातिपदिकाच्चेद् द्वितीया तदा कर्मण्येव, नान्यत्र; प्रातिपदिका-

---

इत्यादाविव प्रकारकात्स्न्यर्यवाचिनः सर्वशब्दस्य ग्रहणे हि "अव्ययेभ्यः सर्वासां विभक्तीनामेकवचनानि उत्पद्यन्ते" इति पक्षे सूत्रस्यासंभवदुक्तिकत्वं स्यात्, तेभ्यः सर्वप्रकारविभक्त्युत्पादात्। सर्वे घटा रूपवन्त इत्यादाविव व्यक्तिकात्स्न्र्ये वर्तमानस्य ग्रहणे तु तिङामपि विभक्तित्वात्तासां च घटादिप्रातिपदिकेभ्योऽप्यनुत्पादात् तेषामप्यव्ययत्वापत्तिः। सप्त विभक्तय इति प्राचां व्यवहारात् सुब्विभक्तीनामेव ग्रहणे तु मासीयसर्वदिनेषु अधीते इत्यादाविव एकवचनरूपैकदेशोत्पादेऽपि अवयवद्वारा सर्वविभक्तिसम्बन्धात् दोषस्तदवस्थ एवेति अवयवकात्स्न्र्ये वर्तमानस्यैव सर्वशब्दस्य ग्रहणमिति भावः।

*अर्थनियम इति। कर्मणि द्वितीयैव, प्रातिपदिकार्थे प्रथमैव इति नियमो हि "अर्थे नियम" इति व्युत्पत्त्या अर्थनियम इत्युच्यते। कर्माद्यर्थे द्वितीयादिविभक्तीनां नियमनात्। अत एव "यत एवकारस्ततोऽन्यत्र नियमः" इति प्रवाद इति भावः। एवं प्रत्ययनियम इत्यत्रापि बोध्यम्।

*सर्वा इति। वचनत्रयात्मिका इत्यर्थः।

*अत्रापीति। कर्माद्यर्थयोग्यत्वस्य व्यावर्त्यतावच्छेदकत्वेन तस्य चाव्ययेष्वभावेन सामान्यशास्त्रेण सर्वविभक्तीनामस्मिन्नपि पक्षे प्राप्तिरिति भावः।

चेत्प्रथमा तदा मात्रग्रहणात्पर्युदासन्यायेन कर्मादियोग्यतद्रहितप्रातिपदिकार्थे एवेत्यादिः सामान्यापेक्षः प्रत्ययनियमः । तदाऽव्ययेभ्यो विभक्तिप्राप्तिरेव नेति पूर्वोक्तज्ञापकादेव सा, इति सर्वाऽपि । यद्यपि सुपां तिङां संख्याकर्मोभयार्थकत्वेन कर्मण्येव नान्यत्रेति वक्तुमशक्यं, तथापि 'कर्मण्येव, न तु तदभावे' इत्याकारो वक्तुं शक्यः । स्पष्टश्चेदं सर्वं "बहुषु" इत्यादिसूत्रेषु भाष्ये । तत्र हि अर्थनियमे प्रकृतार्थापेक्षप्रत्ययनियमे च सप्तापि विभक्तयः संपूर्णा उक्ताः । सामान्यापेक्षप्रत्ययनियमे च सुपो ऽप्राप्तिरेवोक्ता । "अव्ययादाप्सुपः" इति सूत्रे भाष्ये ऽपि स्फुटमिदम्, इति चेत्—

अत्र "तद्धितश्च" इति सूत्रे भाष्यकृतः—"एकवचनम्" इत्यवे सूत्रं कार्यम् । एकग्रहणञ्च न कार्यम् । विभक्तिविधावुद्देश्यतावच्छेदकावच्छिन्नादेकवचनमित्युत्सर्गः । तस्य द्वित्वबहुत्वयोरितरे *बाधके भविष्यतः । एवञ्चैकत्ववत्यपि भविष्यति, *अलिङ्गासंख्येभ्यो ऽव्ययेभ्यश्चैकवचनम् । द्विवचनादिविधायकयोर्द्विबहुग्रहणसामर्थ्यान्महासंज्ञाबोद्ध्यैकत्वाभावेऽपि तत्प्रवृत्तेः । द्वित्वबहुत्वयोर्द्विवचनबहुवचनोक्तार्थात् *एकवचनस्य "एकवचनम्" इत्येतद्वचनं विनाऽपि द्वित्वाद्यभावे कर्मादौ सिद्धत्वेन सामर्थ्यादप्राप्तप्रापणार्थमेतदिति कर्माद्यभावेऽप्येतत्प्रवर्त्तते इति विनिगमनाविरहात्सर्वविभक्त्येकवचनमनेन । अत एव "अव्ययादाप्सुपः" इति प्रत्याहारग्रहणं चरितार्थं, "तृतीयासप्तम्योः" इति च । प्रथमाऽपि

---

*बाधके इति । एवं रीत्या "शेषे प्रथमः" इति सूत्रे शेषग्रहणमपि सुत्यजम् । युष्मद्योगे "युष्मद्येव मध्यमः" इति नियमशास्त्रेण, अस्मद्योगे "अस्मद्येव उत्तमः" इति नियमशास्त्रेण च प्रथमस्य बाधसिद्धेः । युष्मदस्मद्भ्यामन्यत्रोपपदे तस्य चारितार्थ्यात् । यत्तु युष्मदि मध्यम एवेत्याद्युपपदनियमपक्षे अहं च देवदत्तश्चेति द्वाभ्यां योगे द्वयोः प्राप्तौ शेषे प्रथम एवेति परत्वादुत्तमबाधनार्थं, त्वं च देवदत्तश्चेत्यत्र मध्यमबाधनार्थं च शेषग्रहणम् । तथा च त्वं च देवदत्तश्च पचतः, अहं च देवदत्तश्च पचत इति प्रयोगसिद्धिरिति, तन्न । शेषग्रहणे कृतेऽपि पूर्वविप्रतिषेधेन तत्र मध्यमोत्तमयोरेवेष्टत्वात् । अत एव कौमुद्याम् "मध्यमोत्तमयोरविषये प्रथमः स्यात्" इति शेषे प्रथमः इति सूत्रं व्याख्यातम् । शेषग्रहणं तु भाष्ये प्रत्याख्यातमेवेति दिक् ।

*अपिसमुच्चेयमेवाह अलिङ्गेति । तेभ्यः एकत्वाभावेऽपि भवतीत्यर्थः ।

*एकवचनस्येति । अस्य सिद्धत्वेनेत्यत्रान्वयः । सिद्धिश्च स्वौजसेति सामान्यसूत्रेणेत्यर्थः ॥

मात्रग्रहणाद् यत्प्रातिपदिकार्थस्य कर्मत्वाद्याधिक्यसंभावना तत्रैवेति तस्या अव्ययप्राप्तिरव्ययेभ्यः ।

पचतिकल्पमित्यादौ तु नानेन सर्वैकवचनम् । सर्वथा ऽप्राप्तावेव तस्य विध्यर्थत्वात् । अत्र च न तथा, कर्तृत्वकर्मत्वसत्त्वेन क्रियायां स्वत एकत्वसत्त्वेन सर्वथा तदप्राप्त्यभावादिति बोद्ध्यम् ।

यत्तु—कैयटेन प्रथमातिक्रमे कारणाभावादनेकनियमबाधे गौरवाच्च प्रथमैकवचनस्यैवानेनोत्सर्गत्वं बोद्ध्यते इति तद्धितश्चेति सूत्रे कल्पप्सूत्रे चोक्तम्, तन्न । स्वादिसूत्रे प्रथमायाः प्राथम्येऽपि नियमशास्त्रपर्यालोचनया द्वितीयाया अपि तत्त्वेन तस्याविनिगमकत्वात् । "निजां त्रयाणाम्"इत्यत्र त्रयाणाङ्ग्रहणेन "आद्युदात्तश्च"इति सूत्रे आदिग्रहणेन च पाणिनिना स्वशास्त्रे एतन्न्यायानाश्रयणज्ञापनाच्च ।

अत्र प्रथमा संपूर्णा ऽव्ययेभ्यः, प्रथमाया एवैकवचनम् इत्यादिपक्षान्तराणि अर्वाचीनग्रन्थे दृश्यन्ते, तान्यसङ्गतानि । उक्तरीत्या तेषामुक्तिसम्भवाभावात् । घट इत्युक्ते एकत्वनिश्चयस्तु द्विवचनाद्यभावेन द्वित्वाद्यप्रतीतौ संख्यावदर्थत्वेन सत्त्वभूतत्वात्, प्रकरणाच्च । "बहुषु" इत्यादिसूत्रभाष्योक्तपक्षास्त्वेकदेशिनो, न सिद्धान्तिन इति तत्त्वम् ।

असर्वविभक्तिरितिबहुव्रीहिलभ्यो विशेष्य इत्याह—तद्धितान्त इति । केवलस्य तद्धितस्य प्रयोगाभावेन फलाभावात्संज्ञाविधावपि तदन्तविधिरिति भावः ।

नन्वेवमपि पचतिकल्पमित्यादावतिव्याप्तिः, उक्तरीत्या तेषामसर्वविभक्तित्वात्, उभयशब्दे चातिव्याप्तिः, ततो द्विवचनानुत्पादाद्; अत आह—परिगणनमिति । एवञ्च सूत्रं न कार्य्यमिति भावः ।

तसिलादय इति । "पञ्चम्यास्तसिल्"इत्यारभ्य "द्वित्र्योश्च धमुञ्"इत्यन्ता इत्यर्थः । शस्प्रभृतय इति । 'बह्वल्पार्थाच्छस्'इत्यारभ्य 'अव्यक्तानुकरणाद्'इतिडाजन्ताः । यत्तु—"इवे प्रतिकृतौ"इत्यधिकारे "प्रत्नपूर्वविश्वेमात्थाल्छन्दसि"इति थाल्, तस्य स्वरादौ 'आस्थालो' इति पाठेनाव्ययत्वम् । तत्र "इण आसिः"इत्युणादिसूत्रविहित आसिः । अया इत्युदाहरणम् । आसिविधायके छन्दसीति नानुवर्त्तते । एवञ्च लोके विभक्तिरहितप्रयोगायाव्ययत्वमावश्यकम् । अत्र च स्वरादावासिपाठ एव

लिङ्गम् । "अयासावयसा" इति तु च्छान्दसम् ।

अम् आमिति । "अमु च च्छन्दसि" "किमेत्तिङ्" इति विहितौ । कृत्वोर्था इनि । कृत्वसुच्सुच्धाः । तसिवती इनि । "तेनैकदिक् तसिश्च" "तेन तुल्यम्"इत्यादिविहितौ । एवञ्च स्वरादिषु वदिति पाठे फलं चिन्त्यम् । नानाञाविति । "विनञ्भ्यां नानाञौ न सह"इति विहितौ ।

कृन्मेजन्तः ॥ कृद् यो मान्त इति । "कारयाम्'इत्यामन्ते "आमः"इति लुकेष्टसिद्धिरिति भाव इत्याकरे विस्तरः । कृदन्तस्य तु नैतद् विशेषणं गणे प्रशाम्शब्दपाठात् । अन्यथा श्रुन्या मान्तत्वेन प्रत्ययलक्षणात्कृदन्तत्वे चानेनैव सिद्धे तत्पाठवैयर्थ्यं स्पष्टमेव । तेन प्रतामौ, त्वमाचक्षाणो लौः इत्यादौ नातिप्रसङ्गः । न च—आधये, हे आधे, कुम्भकारेभ्य इत्यादौ गुणे एत्वे च कृते एजन्तत्वेन सञ्ज्ञापत्तिः । न च बहिरङ्गत्वं गुणादेः, सञ्ज्ञायाः कार्यार्थत्वात्सञ्ज्ञाकार्यस्य तत्त्वेन सञ्ज्ञाया अपि तत्त्वात्; लिङ्गसंख्याद्यन्वयित्वेऽव्ययव्ययीभावादाविवात्राप्यापत्तेः—इति वाच्यम् । सन्निपातपरिभाषया बाधात् । न च तया सन्निपातविघातकृलुको बाधेऽपि सञ्ज्ञाबाधे मानाभाव इति वाच्यम् । एज्विषयसन्निपातनिमित्तकाऽऽत्वीयसन्निपातविघातकस्य "क्ङिति च"इति निषेधस्य तया निवृत्तावपि उपादास्तेत्यत्र किर्त्वापत्तेः । किर्त्वफलन्तु तत्सन्नियोगशिष्टत्वसिद्धिः । एवञ्चोपादिस्तेति स्यात् । तत्र हि किदिति व्यपदेशातिदेश एव । इत्वप्रवृत्तिकाले कित्कार्यस्यातिदेश्यस्याभावात् । तस्मादनया सन्निपातविघातकशास्त्रस्येव तच्छास्त्रप्रवृत्तिनिमित्तातिदेशसञ्ज्ञानामपि निवृत्तिरवश्यं वाच्या । साक्षात्परम्परया वा स्वसन्निपातविघातकस्य स्वयमनिमित्तमिति परिभाषाऽर्थः । एतेनात्राकजादि स्यादित्यपास्तम् । अकजाद्येकवाक्यतापन्नाव्ययसञ्ज्ञायां गुणादेरसिद्धत्वाच्च । लुगेकवाक्यतापन्ना तु न गुणादितो ऽन्तरङ्गा । उभयोरपि शब्दतः सुबाश्रयत्वात् ।

अव्ययादा । "ण्यक्षत्रिय"इत्यतो लुगनुवर्त्तते । विहितेति । अङ्गसञ्ज्ञायां विहितत्वांशप्रवेशेन विहितप्रत्ययनिरूपिताङ्गविशेषणादित्यर्थः । आप्सुब्भ्यामाक्षिप्ताङ्गस्याव्ययरूपस्यैव प्रत्यासत्त्या ग्रहणमिति भावः । तेन कुम्भकारेभ्य इत्यादौ सन्निपातपरिभाषया ऽव्ययसञ्ज्ञानिवृत्तिद्वारा लुङ्निवृत्तिपरभाष्येण न विरोधः ।

अत्युच्चैसाविति। अत्राधिकरणशक्तिप्रधानस्यापि उच्चैस्शब्दस्य वृत्तिविषये शक्तिमत्प्रधानत्वाद् द्वितीयान्ततया "अत्यादयः क्रान्ताद्यर्थे" इति समासे अवयवभूतोच्चैःशब्दादव्ययात्परत्वेन लुक् स्यात्। समुदायस्य तु नाव्ययत्वं लिङ्गाद्यन्वयित्वादित्यभिमानः। समुदायस्यापि तत्त्वमाशङ्क्य समाधत्ते—यद्यपीति। तदन्तेति। शब्दस्य विशेष्यत्वात्। "प्रयोजनं सर्वनामाव्ययसञ्ज्ञायाम्" इति वाचनिकस्तदन्तविधिरिति भावः।

न गौणे इति। अयं भावः। सामानाधिकरण्यसम्बन्धेन लिङ्गाद्यनन्वय्यर्थबोधकत्वविशिष्टाव्ययपदवत्त्वेन हि अव्ययपदं बोधकमिति तादृशमहासञ्ज्ञाकरणात्तादृशार्थानां गणे ऽनुकरणावश्यकत्वे इतरेषामनुकरणे मानाभावेन समुदायस्य नाव्ययत्वमिति। वस्तुतो ऽत्रार्थस्य प्रधानाप्रधानन्यायेन सर्वनामसञ्ज्ञासाहचर्य्येण च प्रसिद्धान्तरङ्गपदान्तरानपेक्षानुपसर्जनीभूतस्यैव लिङ्गाद्यनन्वयिनो ग्रहणेन—न समुदायस्य, *नाप्यवयवस्य सञ्ज्ञा। अत एव भाष्ये सर्वनामसञ्ज्ञासूत्रस्थोपसर्जनप्रतिषेधानुवृत्त्या 'अत्युच्चैसौ" इत्यादावव्ययत्वाभावमुक्त्वा तत्प्रत्याख्यानरीत्यैवात्राप्येतत्प्रत्याख्यानमुक्तम्। एवञ्च विहितविशेषणमङ्गाक्षेपो वा व्यर्थ एव। अव्ययात्परत्वस्याप्यभावात्। उच्चैरौ उच्चैराभ्यामित्यादेरभिधाने तु न मानम्। अत एव भाष्ये एतन्नोक्तम्।

अलिङ्गत्वादिति। नन्विदं "सदृशं त्रिषु" इति विरुद्धमत आह—लिङ्गेत्यादि। अयं भावः—यथोपक्रमोपसंहाराभ्यां ब्रह्मपराया अव्यस्याः श्रुतेर्भाष्यप्रामाण्यादत्रोपसंहारः, तथा तत्प्रामाण्यादेव लिङ्गाद्यभावपरताऽपीति। विभक्तिवचनशब्दौ कारकसंख्यापरौ। प्रत्य-

---

*नाप्यवयवस्येति। नन्वेवं सर्वनामसंज्ञाया अपि अवयवेऽनाप्तौ अतिभवकान्, त्वकत्पितृको, मकत्पितृक इत्यादौ अकजनापत्तिरिति चेन्न। तत्र वृत्तेः प्राक् अनुपसर्जनसर्वार्थवाचकत्वेन सर्वनामत्वे ऽकचि च कृते वृत्तौ कृतायाम् अनुपसर्जनार्थबोधकत्वाभावेन सर्वनामत्वाभावेऽपि पूर्वजातस्याकचोऽनिवृत्तेः। अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः। अत्र तु लुक्प्रवृत्तिकाले अनुपसर्जनार्थबोधकत्वाभावेनाव्ययत्वाभावाल्लुग्न प्रवर्तते। यथोद्देशपक्षस्तु लक्ष्यानुरोधान्नात्राश्रीयते। अत्युच्चकैसौ इत्यादौ अकच् तु अतिभवकानित्यादाविव इष्यते एवेति विहितविशेषणं व्यर्थम्। मासपूर्वायेत्यादावनुपसर्जने स्मायादिवारणार्थं सर्वनाम्नः स्मै इत्यादौ विहितविशेषणमिति दिक्।

यपरत्वेऽन्यतरवैयर्थ्यापत्तेः। लिङ्गेषु इत्यादि विषयसप्तमी। तत्तद्विषये सादृश्यञ्च लिङ्गाद्यभावाश्रयत्वेन। लिङ्गाभावेन सादृश्यमव्ययीभावातिरिक्तविषये। तस्य लिङ्गयोगसत्त्वात्। संख्याऽभावस्तु सर्वसाधारणः। तदभावादिसादृश्यादेव, यद् विविधं रूपं तन्न प्राप्नोतीत्यर्थः।

प्रसङ्गादाह—वष्टीति। वशेश्छान्दसत्वेनेह प्रयोगश्चिन्त्यः। भागुरिः-आचार्यः। अपिसाहचर्यादवेऽप्यादेरकारस्यैव लोपः। इदं भाष्ये न दृश्यते। निश्दिशोरिगुपधलक्षणे के ऽदन्तत्वादेव टाप्। क्विनि दिगित्यपि। अत एव "ङ्याप्प्रातिपदिकात्"इति सूत्रे "आब्ग्रहणं न कार्यम्, अकारान्ताट्टाप् तत्रान्तवद्भावात्प्रातिपदिकत्वेनैव सिद्धम्; यस्तर्हि नकारान्तात् कुञ्चा उष्णिहा देवविशा इति, अत्राप्यकारान्तादेव; कुञ्चानालभेत, उष्णिहककुभौ, देवविशमिति, *अन्त्ये "कप्रत्यय एवंविषयः" इत्युक्त्वा बहुराजेति डावन्तार्थमाब्ग्रहणम्" इति भाष्ये उक्तं सङ्गच्छते। तस्माद्वाचेत्यसाध्वेवेति शिवम्।

इति अव्ययानि॥

---

नन्वु देवविशमिति हलन्तत्वेऽप्युपपद्यते, द्वितीयैकवचने हलन्तादन्तयो रूपे विशेषाभावात्, तत् कथं तस्य प्रयोगस्य अदन्तदेवविशशब्दसाधुत्वनिर्णायकत्वम्—अत आह *अन्त्ये इति। अन्त्ये देवविशमित्यत्र रूपे विशेषाभावेऽपि स्वरे विशेषः। अदन्तत्वे हि देवविशशब्दस्य कप्रत्ययान्तत्वात् थाथादिस्वरेणान्तोदात्तत्वे अम्विभक्तेरनुदात्तत्वेऽपि "एकादेश उदात्तेनोदात्तः" इत्यनेनैकादेशस्योदात्तत्वात् देवविशमित्यन्तोदात्तं श्रूयते। हलन्तत्वे तु क्विन्नन्तत्वात् "गतिकारकोपपदात् कृत्" इति कृदुत्तरपदप्रकृतिस्वरेणान्तोदान्तत्वे विभक्तेरनुदात्तत्वे "उदात्तादनुदात्तस्य स्वरितः" इति स्वरितत्वे च देवविशमिति स्वरितान्तं प्रसज्येत—इत्येवं विशेषमुपपाद्य "तस्मात् क एष एवंविषयः" इत्युपसंहृतं भाष्ये। "तस्मात्—स्वरविशेषश्रवणात् एवंविषयः—स्वरविशेषविषयः एषः—देवविशमित्यत्र श्रूयमाणोऽकारः कः—कप्रत्ययः" इति भाष्यफक्किकार्थः। तस्मात् देवविशशब्दस्यादन्तत्वलाभात् अदन्तादेव देवविशेत्यत्र टाप्। ततश्च आब्ग्रहणं व्यर्थमिति शङ्कायां बहुराजेति डाबन्तार्थं तदिति समाहितम्। निशेत्यादौ हलन्तेभ्यष्टाप्स्वीकारे तु तदर्थमेवाब्ग्रहणस्यावश्यकत्वात् डाप्पर्यन्तानुधावनं व्यर्थं स्यादिति भावः।

इत्यव्ययानि॥

स्त्रियाम् ॥ अचेतनखट्वावृक्षादिसाधारणं लिङ्गन्तु *सत्त्वादीनां गुणानामुपचयापचयस्थितिरूपं क्रमेण पुंस्त्रीनपुंसकाख्यम् 'एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वम्'इति भाष्योक्तेरर्थनिष्ठं केवलान्वयि। इयं व्यक्तिः,इदं वस्तु,अयं पदार्थ इति त्रिविधव्यवहारस्य पदार्थमात्रे सत्त्वात् ।केनचिच्छब्देन किञ्चिद्वस्तु एकैकविशिष्टमेव, केन चित्पर्यायेण लिङ्गद्वयविशिष्टं, केन चिल्लिङ्गत्रयविशिष्टमिति लिङ्गानुशासनादितो निर्णयम् । तत्र

"स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः"

इत्यादिलौकिकलिङ्गासम्भवे शास्त्रीयं कार्यं शास्त्रीये उक्त एव। तत्संभवे तु शास्त्रीयविशिष्टे लौकिके। शास्त्रीयमपि शब्दतो बुद्ध्यते, तथा ऽनुभवात् । उपचयापचययोः स्थितेरपि सत्त्वेन तन्मात्रविवक्षायां "सामान्ये नपुंसकम्" इति प्रवाद इत्यन्यत्र विस्तरः। अत इति । वर्णग्रहणात्तदन्तविधिस्तदाह-

---

ननु स्तनकेशवती स्त्री इत्यत्र केशशब्दस्य भगवाचकत्वाद्भगवत्त्वं स्त्रीत्वं, लोमशः पुरुषः इत्यत्र लोमन्—शब्दस्य शिश्नवाचित्वाच्छिश्नवत्त्वं पुंस्त्वं, तत्तदाकारमात्रधारकत्वं नपुंसकत्वम्—इति परिभाषितानि स्त्रीत्वादीनि अप्राणिषु खट्वादिषु नोपलभ्यन्ते इति कथं तद्वाचकशब्देभ्यष्टाबादिकार्यम्—अत आह *सत्त्वादीनामिति । सत्त्वरजस्तमसामुपचयः पुंस्त्वम्, तेषामपचयः स्त्रीत्वम, तेषां स्थितिः नपुंसकत्वमित्यर्थः । उपचयापचयावेव भाष्यकारेण प्रसवसंस्त्यानशब्दाभ्यामुक्तौ । प्रसव आविर्भावः, संस्त्यानं तिरोभाव इति च कैयटेन व्याख्यातम् । उपचयापचययोरपि अन्ततः साङ्ख्यादिमते तद्रूपत्वात् । चितिशक्तिं विना सर्वेषां पदार्थानां परिणामित्वादाविर्भावतिरोभावधर्मकत्वं, मध्ये स्थितेरप्यवश्यम्भावात् स्थितिधर्मकत्वं चेति उपचयापचयस्थितयः पदार्थमात्रधर्मा इति अप्राणिखट्वाघटादिसाधारणं गुणोपचयादिरूपं लिङ्गम् । यद्यप्यवस्थात्रयं प्राकृतपदार्थमात्रवृत्ति तथापि कस्यचिच्छब्दस्य उपचयावस्थावैशिष्ट्येन बोधकत्वं, कस्य चिच्चापचयावस्थावैशिष्ट्येन, कस्यचित स्थित्यवस्थावैशिष्ट्येन, कस्यचिदवस्थाद्वयवैशिष्ट्येन, कस्यचित् अवस्थात्रयवैशिष्ट्येनेति लिङ्गानुशासनतो वृद्धव्यवहारतश्च निर्णीयते। दृश्यते च घटादिशब्देभ्यो गुणोपचयवैशिष्ट्येन प्रतीतिः, घट्यादिशब्देभ्यश्च तदपचयवैशिष्ट्येन । एतेन अचेतनखट्वादौ स्त्रीत्वादिरूपलिङ्गाभावात् खट्वादिशब्दानां स्त्रीलिङ्गादिसंज्ञा एवेति केषां चिदुक्तिः परास्ता। ननु गुणोपचयादिरूपाणां पुंस्त्वादीनां निरवस्थे पुरुषेऽभावात् पुरुषः, चितिः, चैतन्यम् इति प्रतीत्यनुपपत्तिरिति चेन्न ।तस्य निर्धर्मकत्वेन पदवाच्यत्वासम्भवेन शाब्दप्रतीतिविषयत्वस्याप्यनङ्गीकारात्। अत एव किञ्चिद्धर्मिनिष्ठात्यन्ता-

अकारान्तस्य चेति । वाच्यं यत् स्त्रीत्वमिति । *तद्वाच्यार्थगतं यत्तद्वाच्यं स्त्रीत्वमित्यर्थः । एवं व्याख्याने फलमग्रे स्फुटम् । तत्र

---

भावप्रतियोगित्वरूपकेवलान्वयित्वोक्तिः स्त्रीत्वादीनां सङ्गच्छते । किञ्चिद्धर्मारोपेण वाच्यत्वमुपपाद्य शाब्दप्रतीतिविषयत्वोपपादने तु पुंस्त्वादेरप्यारोपेण पुरुष इत्यादिप्रतीतिरुपपद्यते इति दिक् ।

*तद्वाच्यार्थगतमिति । अजाद्यत इत्यस्य पञ्चम्यन्तत्वे अमहत्पूर्वग्रहणेन स्त्रीप्रत्यये तदन्तविधिज्ञापनात् वनोरचेत्यादाविवात्रापि तदन्तविधौ स्त्रियां वर्तमानात् अजशब्दान्तात् प्रातिपदिकात् इत्यर्थे पञ्चाजीत्यत्रापि टाप्प्रसज्येत । अतः अजादोति लुप्तषष्ठोकं पृथक्पदमाश्रित्य अजादेः स्त्रीत्वे इत्येवं योजनेन अजादिपदस्यार्थप्रधानार्थकत्वेन अजादिपदार्थगतस्त्रीत्वे वर्तमानात् (अर्थात् स्त्रीत्ववाचकात्) प्रातिपदिकात् टाबित्यर्थ आश्रितः । अजादीनां वाच्यं यत्स्त्रीत्वमिति तु फलितार्थकथनम् । तथाच पञ्चाजीत्यत्र समुदायवाच्यस्त्रीत्वस्य अजशब्दवाच्यार्थगतत्वाभावान्न टाप् । ननु तदन्तविधिनिरासाय षष्ठ्यन्तत्वमाश्रीयताम्, अर्थप्रधानार्थकत्वं किमिति अजादीतिपदस्याश्रीयते । तावताऽपि तस्य स्त्रीत्वेऽन्वयात् पर्याप्तेरौत्सर्गिकत्वात् अजादिमात्रवाच्यस्त्रीत्वइत्यर्थलाभात् पञ्चाजीत्यत्र स्त्रीत्वस्याजपदमात्रवाच्यत्वाभावेन टाब्वारणसम्भवात् इति चेन्न । तथा सति अजः अः यस्याः सा इत्यर्थे निष्पन्नादजाशब्दाट्टापि स्वाद्युत्पत्तौ हल्ङ्यादिलोपाद्यापत्तेः । पूर्वान्तवद्भावेन एकादेशविशिष्टे अजशब्दत्वस्यारोपेण तन्मात्रवाच्यत्वस्य स्त्रीत्वे सत्त्वात् । अर्थप्रधानार्थकत्वे तु उपस्थिताजत्वादिविशिष्टार्थगतस्त्रीत्वे इत्यर्थलाभात् प्रकृते च अजत्वविशिष्टार्थगतस्त्रीत्वाभावान्न दोषः । तदर्थगतस्त्रीत्वे इत्यर्थेऽपि वाच्यत्वानिवेशे स्त्रीत्वोपलक्षितार्थवाचकात् धनादिशब्दादपि अजेव धनामित्यादौ टाबापत्तिः, अतः स्त्रीत्ववाचकात् इति वक्तव्यम् । स्त्रीत्वे तद्वाच्यत्वविशेषणं तु फलितमेवेति पूर्वमुक्तम् । अर्थप्रधाननिर्देशे साक्षात्तद्वाच्यत्वान्वयस्य तत्रालाभात् । एवं च अजादिपदावच्छिन्नाजत्वाद्यवच्छिन्नधर्मितानिरूपितस्त्रीत्वनिष्ठप्रकारताकबोधतात्पर्येणोच्चरितात् प्रातिपदिकात् टाबित्यर्थः *पर्यवस्यति । अजादिपदावच्छिन्नेति विशेषणेन बर्करादिशब्देभ्यो न टाप् । अजाद्यर्थगतस्त्रीत्वे इतियथाश्रुतार्थे तु ततष्टाब् दुर्वारः । अत एव अजसदृशस्य स्त्रीत्यर्थे अजेति टाप् सिध्यति । यथाश्रुतार्थे तु अजत्वविशिष्टार्थगतस्त्रीत्वाभावान्न स्यात् । अत एव च स्त्रीत्वाविवक्षया स्त्रीप्रत्ययाभावमुपपाद्य "कुक्कुट्यादीनामण्डादिषु"इति वार्त्तिकं प्रत्याख्यातं भाष्ये । अजत्वाद्यवच्छिन्नत्वं च धर्मितायां साक्षादेव ग्राह्यम् । तेन पञ्चाजीत्यत्र समाहारनिष्ठधर्मितायाः अजत्वावच्छिन्नत्वेऽपि न टाप् । एवमेव "शूद्रा चामहत्पूर्वा जातिः"इत्यादावपि अनुसंधेयमित्यलम् ।

द्योत्ये इति । प्रत्ययार्थत्वे हि तस्य *विशेष्यतापत्तिः* । द्योत्यस्य तु *विशेषणत्वमेवेति स्पष्टमाकरे । *वागादिषु विनाऽपि* टाबादिकं तस्य बोधाच्च । अत एव 'व्यावक्रोशी'इत्यादौ "कर्मव्यतिहारे णच् स्त्रियाम्"इति णचि "णचः स्त्रियाम्"इत्यञि च ङीप्सिद्धिः* । 'व्यतिलुनीते'इत्यादौ 'द्विर्बद्धं सुबद्धं भवति'इति न्यायेन समुच्चयस्य* दृष्टत्वात् । टाप्स्यादिति । स चाधिकारात्प्रातिपदिकादेव, तच्च सन्निधानादजादिरूपमेव ।

नन्व*जादिष्वकारान्तपाठो व्यर्थोऽत इत्येव सिद्धेरत आह–अ-

---

*विशेष्यतापत्तिरिति* । "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानम्"इति व्युत्पत्तेरित्यर्थः । तथा च 'औपगवः' इत्यत्रापत्यरूपोऽर्थो विशेष्यः । *विशेषणत्वमिति* । तथा च राम इत्यादावेकत्वविशिष्टो राम इति बोधः । क्वचित् (आख्याते)प्रत्ययार्थस्य प्रकृत्यर्थेऽन्वयदर्शनादाह–*वागादिष्विति* । अयं भावः–स्त्रीत्वस्य प्रकृतेः प्रत्ययस्य चोभयस्य वाच्यत्वे बोधावृत्तिप्रसङ्गः । विशिष्टवाच्यत्वे शक्ततावच्छेदकगौरवम् । तस्मात्प्रत्ययप्रकृत्यन्यतरवाच्यत्वं वक्तव्यम् । तत्र प्रकृतिवाच्यत्वस्यान्यत्र क्लृप्ततया ऽत्रापि प्रकृतिवाच्यत्वमेवेति स्त्रीत्वस्य प्रत्ययद्योत्यत्वे मानमाह–*विनापीति । *ङीप्सिद्धिरिति* । अन्यथा 'उक्तार्थानामप्रयोगः' इत्यनेन ङीपोऽनापत्तिः स्यात् । ननु द्योत्यत्वेऽपि सैवापत्तिरत आह–*समुच्चयस्येति* द्योतकसमुच्चयस्येत्यर्थः । एतेन द्योतकविषये नायं न्याय इति ध्वनितम् ।

अजाद्युक्तिरिति कर्मणि क्तिन् । तेन कर्मण उक्तत्वात् षष्ठ्यप्राप्तौ सप्तमीतत्पुरुषः । तदाह—*अजादिष्विति* अजादिष्वकारान्तानां पाठो व्यर्थ इत्याशयः । अत्र केचित् अजादिषु हलन्तानां पाठस्य ङ्याप्सूत्रस्थभाष्यप्रामाण्येन अव्ययप्रकरणे शेखरे खण्डनत्वादजादिपाठस्यैव वैयर्थ्यात् सप्तमीतत्पुरुषं कल्पयित्वा व्याख्यानं प्राचामनुरोधेन । नच टायामादेशः क्त्वायामिद् इति प्रयोगदर्शनात् अनदन्तानां टादिशब्दानां पाठ आवश्यक इति वाच्यम् । तत्र टाप्त्वारोपेणैव याडादिकार्याणामुपपादनीयत्वात् । अन्यथा ङ्याप्सूत्रस्थभाष्यविरोधात् । तत्रहि आब्ग्रहणस्य टाब्विषये ऽन्तादिवद्भावेनान्यथासिद्धिं प्रदर्श्य डाबर्थत्वमुक्तम् । टाशब्दादिभ्यष्टापि तु तत्र परतः आतोऽनाप इत्यनेनैकवाक्यतया धातुग्रहणस्य आब्मात्रनिवृत्त्यर्थतया आतो धातोः इत्यनेन लोपे पूर्वान्तवद्भावाप्रवृत्तौ तत्र आब्ग्रहणस्य चारितार्थ्यात् तदंशे अन्यथासिद्धिकथनमसङ्गतं स्यात् इत्याहुः ॥

परेतु आतोधातोरिति सूत्रे आद्ग्रहणस्य स्त्रीत्वबोधकघटकभिन्नाकारार्थकत्वस्य "न मु ने" इतिसौत्रनिर्देशसिद्ध्यर्थम् आतोधातोरिति सूत्रे व्यवस्थापितत्वात् टाप्प्रकृतिभूतटाशब्दस्य स्त्रीत्वबोधकत्वात्

जाद्युक्तिरिति । *येननाप्राप्तिन्यायादिति भावः । एतेन ङीपि कृतेऽपि लिङ्गविशिष्टपरिभाषया टाप् चरितार्थ इत्यपास्तम् । ननु प्रत्ययविधौ पञ्चम्या युक्तत्वेनाजादिभ्यष्टाप् स्त्रीत्वे द्योत्ये इत्यर्थ एव युक्तः। स्त्रीत्वञ्च प्रत्यासत्त्या प्रकृत्यर्थनिष्ठमेवेत्यत आह–अजादिभिरिति । *व्याख्यानादेतत् षष्ठ्यन्तमिति भावः । अन्यत्र तु स्त्रियामिति तदन्तस्यापि* विशेषणं व्याख्यानादेव* । एवञ्च पञ्च सुत्वानो यस्यां सा *पञ्चसुत्वरीत्येव ।

पञ्चाजीति । पञ्चानामजानां समाहार इति द्विगौ "अकारान्तोत्तरपद" इति स्त्रीत्वे "द्विगोः"इति ङीप् । अजादिभ्य इति व्याख्याने ऽमहत्पूर्वग्रहणेनानुपसर्जनाधिकारेण च "वनो र च"इत्यत्रेवात्रापि तदन्तविधिसम्भव इति भावः । न च तदन्तविधावपि श्रुतत्वात्स्त्रियामित्यजादीनामेव विशेषणमिति वाच्यम् । अनुपसर्जनाधिकारेण तदन्तग्रहणस्येव स्त्रियामित्यस्य तदन्तविशेषणत्वमित्यर्थस्यापि बोधनात् । अत्र हीति । समासे ऽजशब्दसत्त्वेऽपि समाहारनिष्ठं स्त्रीत्वं समुदायवाच्यं नाजशब्दमात्रवाच्यम् । सामर्थ्येनाजादिमात्रवाच्यस्त्रीत्वस्यैव ग्रहणादिति भावः । चटकेति । क्षिपकादित्वादित्वं न । ह्रस्व इति । असंज्ञायान्तु भस्त्राफलेत्येव । 'संभस्त्रा'इति, 'सदच्'इति, 'मूलान्नञः' इति च

---

तद्वाचकाकारे लोपाप्रवृत्त्या अन्तादिवद्भावस्य सूपपादत्वेन अन्यथासिद्धिकथनं भाष्यकृतो नासङ्गतम् इति हलन्तानां पाठाभावेऽपि आकारान्तपाठोऽस्त्येवेति न सर्वथा अजाद्युक्तिवैयर्थ्यशङ्का, किन्तु अदन्तपाठवैयर्थ्यशङ्केवेति सप्तमीसमासेन व्याख्यानं स्वमतेनैव । अत एव उत्तरत्र शेखरे "अजादिराकृतिगणः तेन "न मु ने" इति सूत्रे "टायामादेश" इति भाष्यप्रयोगः सिद्धः" इति स्पष्टमेवोक्तमित्याहुः ।

एतेन अदन्तव्यतिरिक्तेषु अप्राप्तटाब्विधानार्थत्वेनाजादिपाठस्यावश्यकतयेदं चिन्त्यमित्यपास्तम् । (*येननेति* । तन्न्यायस्य तु नात्र प्राप्तिः । अपवादोत्तरमुत्सर्गप्राप्तावेव तत्प्रवृत्त्या ऽत्र टाबुत्तरं ङीषो ङीपो वा ऽदन्तत्वाभावादप्राप्तेः) । *व्याख्यानादेति* । "अजादिभिः स्त्रियं विशेषयिष्यामः, अजादीनां या स्त्री"इति भाष्योक्तादित्यर्थः । *तदन्तस्यापीति* । तदन्तस्यैवेत्यर्थः । *व्याख्यानादेवेति* । अनुपसर्जनाधिकारसामर्थ्यादित्यर्थः । अन्यथा तेन तदन्तविधिज्ञापनेऽपि तद्वैयर्थ्यस्य तादवस्थ्यात् । स्फुटीभविष्यति चेदमनुपदमेव । *पञ्चसुत्वरीति । चिन्त्यमेतत् । "अनो बहुव्रीहेः"इति निषेधात् ङीपोऽप्राप्तेः । अतिसुत्वरी, अतिधीवरी इति तु युक्तम् ।

"पाककर्ण" इति प्राप्तस्य ङीषो बाधनार्थम् । एवञ्च श्वेतफला त्रिफलेत्यप्यत्र बोध्यम् ।

शूद्रा चेति । जातिलक्षणङीषोऽपवादः । जातिश्चेद्वाच्येत्यर्थः । पञ्चशूद्रीति समाहारे जातिवाचकत्वाभावात् शूद्रशब्दार्थगतस्त्रीत्वाभावाच्च न दोषः । जातिश्चेदित्यस्य कृत्यमाह—पुंयोगे त्विति । न चात्र गौणत्वम् । सदृशलाक्षणिकस्यैव* गौणत्वात् । गौणमुख्यन्यायस्य *पदकार्यविषयत्वाच्चेति भावः । अमहत्पूर्वेत्यत्रापि जातिश्चेदिति सम्बध्यते । महत्पूर्वो न टापं लभते जातिश्चेद्वाच्येति तदर्थः । तत्फलन्तु जात्यन्तरनिवृत्तिपरत्वे पूर्वञ्जातिमात्रविवक्षया महच्छब्दस्य शूद्रशब्देन *मृगक्षीरकुक्कुटाण्डवत्समासे ततः

---

*सदृशलाक्षणिकस्यैवेति । यथा पुरुषकृतधर्माधर्माभ्यां पुण्यपापयोः स्त्रीषु संक्रमः, एवं तद्वृत्तिधर्मान्तरस्यापीत्यग्रे वक्ष्यते । एवं च पत्नीत्वेनारोपो न सदृशत्वेनेति बोध्यम् । *पदकार्यविषयत्वादिति* । स्त्रीत्वानिमित्तकत्वे सति विभक्त्यनिमित्तकत्वं तत्त्वम् ।

तत्र स्त्रीत्वानिमित्तकत्वे सतीत्यस्य अजसदृशस्य स्त्रीत्यर्थे अजेति सिद्धिः फलमिति बोध्यम् । यत्तु इदमेव जातिग्रहणं गौणमुख्यन्यायस्य पदकार्यविषयत्वे ज्ञापकमिति, तन्न । अप्रसिद्धसदृशलाक्षणिकानामेव गौणमुख्यन्याये गौणपदेन ग्रहणात् पुंयोगलक्षणगौणे टावभावाय तस्य सार्थक्यात् ।

*मृगक्षीरकुक्कुटाण्डवदिति* । तत्र भाष्ये "कुक्कुट्यादीनाम्" इति वार्त्तिकप्रत्याख्यानाय पूर्वं स्त्रीत्वाविवक्षया सिद्धानां कुक्कुटस्येत्यादीनाम् अण्डादिशब्दैः समासे समीहितरूपासिद्धिरित्युक्तं, तथा प्रकृतेऽपीति भावः । नचैवमनुपसर्जनाधिकारस्य तदन्तविधिज्ञापकत्वं न सङ्गच्छेत, पूर्वं स्त्रीत्वाविवक्षायां बहुशब्दस्य कुरुचरशब्देन समासे पश्चात्तद्विवक्षायां प्राप्तङीब्वारणार्थं तस्य चारितार्थ्यसंभवादिति वाच्यम् । कुरुचरशब्दस्य बहुशब्देन समासे कुरुचरपदार्थमात्रे "वृत्तस्य विशेषणयोगो न" इत्यनेन स्त्रीत्वान्वयासम्भवेन कुरुचरमात्रान्ङीपोऽप्राप्त्या चारितार्थ्यानवकाशात् । अत्र तु महच्छब्देन समासे विशिष्टे स्त्रीत्वान्वयेऽपि तदन्तविधेः सत्त्वेन जातिवाचकशूद्रशब्दान्तात्प्रातिपदिकाट्टावित्यर्थात् टाप् सिध्यति । अमहत्पूर्वेत्यत्र जातिरित्यस्याभावे तेन निषेधाट्टाप् न स्यात् । अत स्तत्र जातिरित्यस्य सम्बन्ध आवश्यकः । केचित्तु प्रत्याख्यानपरभाष्यप्रामाण्येन मृगक्षीरादौ तथा कल्पनेऽपि सर्वत्र तथा कल्पने मानाभावः । अत एव स्व कृतपूर्वी कटमित्यत्र "एवं रीत्या साधुत्वे ऽत्रत्यं भाष्यमेव मानम्" इति स्वोक्तिः सङ्गच्छते । अमहत्पूर्वेत्यत्र जातिरित्यस्य सम्बन्धफलं तु महाशूद्रेत्यत्र महच्छब्दस्य

*स्त्रीत्वविवक्षायां महतीशूद्रेत्यर्थे महाशूद्रेति टावेव । अमहत्पूर्वेत्यत्र जातिरित्यस्यासम्बन्धेऽनुपसर्जनाधिकारेण प्रधानेन तदन्तविधिसत्त्वात् "जातेः" इति ङीष् स्यात् । शूद्रशब्दे जातिवाचकत्वस्य, स्त्रीत्वे *शूद्रशब्दार्थसमवेतत्वस्यापि सत्त्वेनात्र टाप् निर्बाध इति भाष्यप्रदीपोद्द्योते निरूपितम् । महाशूद्रीति । "आभीरी तु महाशूद्री" इत्यमरः । ब्राह्मणादुग्रकन्यायामाभीरः । नृपाच्छूद्रायामुत्पन्नोग्रजातिकन्या । अत्रानुलोमसङ्कराणां *मातृ-

---

शूद्रशब्देन समासात् प्रागेव शूद्रा चेतिप्राप्तटापः "यद्यत्र टान्न स्यात् तर्हि महच्छब्देन समासे ऽमहत्पूर्वेति निषेधः स्यात्" इति सम्भावनायाः सत्त्वादुपसञ्जानिष्यमाणन्यायेन अमहत्पूर्वेतिनिषेधाभाव एव । तदसम्बन्धे तु तेन न्यायेन तत्र निषेधप्रवृत्तिर्दुर्वारैवे वेत्याहुः । अन्येतु उपसञ्जानिष्यमाणन्यायेन भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचेऽपि तद्घटकातिरिक्तत्वेन संकोचे मानाभावेन तत्र अमहत्पूर्वेतिनिषेधप्रवृत्तौ मानाभावेन टापः सिद्ध्या न तत्र जातिरित्यस्य सम्बन्धस्य फलं निषेधाभावः, किन्तु पूर्वोक्त कुक्कुटाण्डवत् समासे निषेधाभाव एव । अत्रापि अमहत्पूर्वेत्यत्र जातिरत्येतस्य सम्बन्धप्रतिपादिकभाष्यस्यैव पूर्वं स्त्रीत्वाविवक्षया समाससाधुत्वे प्रमाणत्वात् । अत एव गतिकारकोपपदानामित्यस्य व्याघ्री अश्वक्रीती इति फलमुक्तं भाष्ये । अत एवचायजें इन्द्रमित्यादौ गुणसिद्धिः इति प्राहुः ॥

*स्त्रीत्वविवक्षायामिति* । ननु शूद्रशब्दे लिङ्गाविवक्षायां नपुंकसत्वेन "परवल्लिङ्गम्" इति नपुंसकत्वापत्तिरिति चेन्न । अवयवात्समुदायाच्च स्त्रीत्वविवक्षायामवयवस्य स्त्रीलिङ्गत्वेन तस्यैवातिदेशात् । न च महत्पूर्वकशूद्रशब्दान्तप्रातिपदिकात् टाब् नेत्यर्थे महाशूद्रशब्दस्य महत्पूर्वत्वेऽपि शूद्रशब्दस्य तत्त्वाभावात् टाप् सुस्थ इति वाच्यम् । तथा सत्यमहत्पूर्वग्रहणवैयर्थ्येन महच्छब्दपूर्वकशूद्रशब्दान्तप्रातिपदिकावयवाट्टाब् नेत्यर्थस्वीकारेणादोषात् । स्त्रीत्वबोधकप्रत्ययस्यावयवात् समुदायाच्च प्राप्तौ वृक्षप्रचलनन्यायेन समुदायादेव प्राप्तेः सत्त्वाच्च । ननु विशिष्टाल्लिङ्गाविवक्षायां नपुंसकत्वापत्तिः । विशिष्टात् लिङ्गसामान्याविवक्षायामस्य लिङ्गद्वयकार्यभाक्त्वस्य भङ्गापत्त्या विशिष्टात्तद्विवक्षैवेति स्वीकारत् । अन्यथा ऽस्य लिङ्गत्रयप्रयुक्तकार्यभाक्त्वेन नियतलिङ्गकत्वभङ्गापत्तिः ।

*शूद्रशब्दार्थेति । स्त्रीत्वे शूद्रत्वावच्छिन्नधर्मितानिरूपितप्रकारत्वस्यसत्त्वेनेत्यर्थः । तन्मात्रावच्छिन्नत्वनिवेशो मानाभावादिति भावः ।

*मातृजातिवृत्तित्वादिति । स्मृतिषु मातृजातिकर्मोपजीवित्वस्योक्तत्वात् आभीरेषु शूद्रत्वजातिमारोप्य शूद्रशब्दप्रयोगेण शूद्रत्वावच्छिन्नधर्मितानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकतापर्याप्त्यधिकरणत्वं जातिवाचकशूद्रशब्दान्तत्वं च महाशूद्रशब्देऽस्तीति टाप् स्यात् । तन्मा भूदिति अमहत्पूर्व-

जातिवृत्तित्वात्तत्र तां जातिमारोप्य शूद्रशब्दप्रयोग इत्ययं शूद्रशब्दोऽर्थवानेवेति शूद्रशब्दार्थसमवेतस्त्रीत्वमप्यत्रास्ति । तदर्थसमवेतस्त्रीत्वेऽपि शूद्रशब्दादेव टाप् स्यान्न तदन्तात्, "ग्रहणवता" इति निषेधादिति तदन्तविधिज्ञापकता नासङ्गता । अत एव शङ्खस्मृतौ "ब्राह्मणक्षत्रियवैश्यैः क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रियवैश्यशूद्रा एव भवन्ति" इत्युक्तमिति भावः।

यत्तु शूद्राभीरमित्यादौ *सामान्यविशेषवाचित्वाद् द्वन्द्वाभावमाशङ्क्य 'आभीरा जात्यन्तराणि' इति "त्यदादीनि" इति सूत्रे भाष्ये उक्तं, नत्तु अनारोपाभिप्रायेणेति न तद्विरोधः । अजादिराकृतिगणः । तेन "न मु ने" इति सूत्रे 'टायामादेशः' इति भाष्यप्रयोगः सिद्धः । प्रथमाध्यायचतुर्थपादे "चमसवदविशेषात्" इति सूत्रे शाङ्करभाष्यवाचस्पत्ययोरजायां 'छागा' इति टाबन्तप्रयोगो दृश्यते ऽतश्छागशब्दोऽप्यजादिष्विति *के चित् ।

उगितश्च । उगिच्छब्देन प्रातिपदिकस्य विशेषणात्तदन्तविधिः । प्रत्ययविधाविति निषेधस्तु न । "उगिद्वर्णग्रहणवर्जम्" इत्युक्तेः* तदाह—उगिदन्तादिति । भवतीति । "व्यपदेशिवद्भावो ऽप्रातिपदिकेन" इति निषेधस्तु सूत्रोपात्तान्तादिशब्दविषय* एवेति भावः । भवतु इति उगितः प्रातिपदिकस्यापि सत्त्वात्

---

ग्रहणम् । तदन्तविध्यसत्त्वे महत्त्वविशिष्टशूद्रत्वावच्छिन्ने एव स्त्रीत्वान्वयात् शूद्रत्वावच्छिन्नधर्मिताानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वपर्याप्तिर्महाशूद्रशब्दे एव न शूद्रशब्दे इति न ततष्टाप्प्रसक्तिरिति अमहत्पूर्वग्रहणस्य तदन्तविधिज्ञापकत्वं सङ्गच्छते । सति तु तदन्तविधौ उक्तरीत्या टापः प्राप्तौ अमहत्पूर्वेति निषेधश्चरितार्थ इति प्रघट्टकार्थः ॥

*सामान्यविशेषवाचित्वाद् द्वन्द्वाभावमिति* । साहित्याभावादित्यर्थः । केचिदिति* । भाष्यतत्त्वविदः । यत्तु केचिदिति प्रतीकमुपादाय अत्रारुचिबीजं तु बहुशः 'छागी' इति प्रयोगदर्शनात् तत्पाठस्य भाष्यानुक्तत्वाच्च सोऽसाधुरिति वदन्ति, तत्तु नागेशाशयमबुध्वा भ्रान्तानामनादरणीयमेव । तदाशयस्तूभयप्रयोगदर्शनादजादिगणे अन्यगणसूत्रवत् 'छागाद्वा' इति पठनीयमिति । छागा इति प्रयोगं वदन् बौधायनसूत्रकारोऽप्यत्रैवानुकूलः ।

*इत्युक्तेरिति* । अनुपसर्जनाधिकारेणामहत्पूर्वग्रहणेन च स्त्रीप्रत्यये तदन्तविधेर्ज्ञापितत्वाच्चेत्यपि बोध्यम् । *सूत्रोपात्तान्तादिशब्दविषय एवेति । एवं च रौण इति सिद्धौ स्वस्येत्यनुवृत्त्यर्थं चकारो न कार्य इति भावः । वस्तुतस्तु एतत्सर्वं कैयटमतेन । नागेशमते तु नायं नियमः । अत एव त-

प्रत्ययमात्रग्रहणाभावेन "प्रत्ययग्रहणे" इति परिभाषाया अप्रवृत्त्या *निर्यवमतीत्यादौ न दोषः । अश्वतेस्त्विति* । नलोपिनोऽश्वतेरित्यर्थः । नियमोऽपि नलोप्यश्वतिविषय एवेति निरूपितम् ।

व्यपदेशिवद्भावलब्धमर्थं स्पष्टप्रतिपत्तये आह—वन्नन्तादिति । नन्वेवं प्रत्ययग्रहणपरिभाषया बहुधीवरी न सिद्ध्येदत आह—तदन्ताच्चेति । तत्परिभाषालब्धवन्नन्तेन *प्रातिपदिकस्य विशेषणादिति भावः । सामान्येति । सूत्रे ऽनुबन्धानुच्चारणात्तदनुबन्धकपरिभाषाया विषयो नेति भावः । इदं "मतुवसोः" "जाग्रो वि" इतिसूत्रेषु भाष्यकैयटयोः स्पष्टम् । इदं सूत्रं न ङीब्विधायकं, किं तु "ऋन्नेभ्यः" इतिप्राप्तङीबनुवादेन तत्संनियोगशिष्टरभावमात्रविधायकम् । उभयविधौ गौरवात् । शर्वरीति । शॄधातोः "अन्येभ्योऽपि दृश्यते" इति वनिप् । एतत्सिद्ध्यर्थमाह—*हशन्ताद्विहित इति । अर्थवतो ग्रहणान्नेह—मघोनी । कनिप्रत्ययान्तनिपातितस्येदम् ।

बहुव्रीहौ वा ॥ "अनो बहुव्रीहेः" इति प्रतिषेधे प्राप्ते इदम् । एतच्च वार्त्तिकम् 'अन उपधा' इतिसिद्धङीबनुवादेन रादेशविधायकम् । अत एवेदमनुपधालोपिनि सुपर्वेत्यादौ नेति विकल्पोऽर्थसिद्धः । "वनो र च" इत्येतत्तु ऋन्नेभ्य इत्येतन्ङीब्विषयमेवेत्युक्तम् । पक्षे डाबिति । तेन द्विवचने रूपत्रयम् ।

कृतसमासान्त इति । उत्तरसूत्रे ऋच्यभिधेयायां तस्यैव सम्भवेनार्थाधिकारानुरोधादिति भावः । तेन पादयतेः क्विबन्तस्य ग्रहणं

---

त्परिभाषाऽवतरणे एकगोपूर्वादित्यस्योपादानं सङ्गच्छते । तन्मते समाधिस्तु प्रातिपदिकग्रहणे एव तत्परिभाषाप्रवृत्तिस्वीकार इति । तत्त्वं च उगिद्ग्रहणभिन्नत्वे सति वर्णग्रहणभिन्नत्वे सति प्रत्ययग्रहणभिन्नत्वम् । एतत्सर्वम् "इयं प्रातिपदिकग्रहणे एव" इति व्याख्याने तत्रैव परिभाषेन्दुशेखरटिप्पण्यां स्पष्टम् । *निर्यवमतीति* । यवमतो निष्क्रान्ता इति विग्रहः । एतेन वृत्तेः पूर्वं ङीबित्यपास्तम् । *नलोपिनोऽश्वतेरिति । अत एव पूजायां प्राञ्ची इत्यसाध्वेवेति भावः ।

*प्रातिपदिकस्य विशेषणादिति* । विशेष्यान्तरसत्त्वेऽप्यत्र तदन्तविधिरनुत्तरपदस्थग्रहणादिति भावः ।

*हशन्तादिति । शर्वरीतिसिद्ध्यर्थमेव विहितविशेषणं हशग्रहणमिति भाष्योक्तेः ।

न। द्विपदीति। द्वौ पादावस्या इति बहुव्रीहौ "संख्यासुपूर्वस्य" इति पादशब्दान्तलोपस्ततो ङीपि पादः पत्।

टाबृचि॥ पूर्वसूत्रप्राप्तङीपोऽपवाद इति प्राञ्चः, तच्चिन्त्यम्। "शेषाद्विभाषा" इतिसूत्रस्थभाष्यविरोधात्। तत्र हि प्रतिपदविहितसमासान्तानां कपो वैकल्पिकत्वेन कबभावे सावकाशत्वमुक्तं, तद्रीत्या ऽस्यापि पूर्वसूत्रस्य वैकल्पिकत्वेन तदभावे सावकाशत्वात्। "बहुव्रीहेरूधसः" इत्यत्रापि भाष्ये स्पष्टमेतत्। *अत एव "ङ्याप्प्रातिपदिकात्" इति सूत्रे पादशब्दसमानार्थमकारान्तं पदशब्दमङ्गीकृत्यैतत्प्रत्याख्यातम्, "श्रूयते च छन्दसि तस्याः सप्ताक्षरमेकं पदम्, एकः पाद इत्यर्थः" इति च भाष्योक्तं सङ्गच्छते। *तदा हि ऋच्यपि एकपदी एकपात् इतीष्यत एव। एवञ्च एकपाद् ऋक् इत्यस्य सूत्रमते सिद्धये "टाबृचि" इत्यत्राप्यन्यतरस्याङ्ग्रहणमनुवर्त्यम्। *पादन्तस्य ऋच्यनभिधानमिति तु न भाष्याशयः। *ङीबन्तप्रयोगस्य सूत्ररीत्येष्टस्यासिद्ध्यापत्तेरिति बोद्ध्यम्। केवलपाच्छब्दस्य स्त्रियाम् ऋचि वा ऽसम्भवेनात्र तदन्तविधिः।

---

*अत एव ङ्याप्प्रातिपदिकादितीति*। भाष्यकृता पाच्छब्दसमानार्थकपदशब्दान्ताद् द्विपदेति संसाध्य सूत्रं प्रत्याख्यातम्। तदा पाच्छब्दान्तात् ङीपि द्विपदीति इष्यते एव। अपवादत्ववादिनां नये तु द्विपदीत्यस्याभावात्प्रत्याख्यानमसङ्गतमेव स्यात्।

ननु प्रत्याख्यानपक्षे ङीपो वैकल्पिकत्वात् ऋचि वाच्यायामेकपदा एकपदी एकपादिति रूपत्रयम्। आरम्भपक्षे तु एकपदी एकपदा इति रूपद्वयमिति तवापि फलभेदोऽस्त्येवेत्यत आह—*तदा हीति*। उभयविकल्पे रूपत्रयं फलितमिति भावः। न च त्वयापि अपवादत्वमस्वीकृत्यैका कल्पना करणीया। मयाप्यारम्भप्रत्याख्यानयोः फलैक्याय ऋचि वाच्यायां पादन्तस्यानभिधानमिति कल्प्यते। ततश्च न भाष्यविरोधो ऽत आह—*पादन्तस्येति*। *ङीबन्तप्रयोगस्य सूत्ररीत्येष्टस्येति*। ननु ऋचि वाच्यायां पादन्तस्यानभिधाने एकपदेति टाबन्तप्रयोगस्यैवेष्टत्वात् ङीबन्तप्रयोगस्येष्टत्वकथनमसङ्गतम्। न च प्रत्याख्यानपरभाष्यमते पाच्छब्दान्तस्य अनभिधानमिति एकपदेत्येव, सूत्रकारमते टाबृचीतिसूत्रकरणादेव नानभिधानमिति अपवादत्वाभावपक्षे एकपदी एकपदा इति रूपद्वयमिति फलभेदः स्पष्ट एवेति अनभिधानं न कल्पनीयं, किं तु तत्पक्षे रूपत्रयस्येष्टत्वादारम्भपक्षेऽपि अन्यतरस्याङ्ग्रहणानुवृत्त्या रूपत्रयस्येष्टत्वमिति ङीबन्तप्रयोगस्येष्टत्वकथनं नासङ्गतमिति वाच्यम्। सूत्रकारमतेऽपि टाबुद्देश्यत्वेनापरिकल्पितऋग्वाचकपाच्छब्दान्तस्यानभिधान-

असिद्धत्वादिति । *आपः परिगणितेष्वभावान्न तत्र नलोपासिद्धत्वम् । इदञ्च कार्यकालपक्षे* । अयं निषेधः प्रियपञ्चा द्रौपदी इत्यादौ *तदन्ते ऽपि । 'स्त्रियां यत्प्राप्नोति तन्न' इत्यर्थात् "अन उपधा" इति ङीबपि नेति बोद्ध्यम् । *ध्वनितश्चेदं भाष्ये । *परे त्वत्र बहिरङ्गासिद्धत्वाप्राप्तिः । नलोपस्य तत्त्वाभावात् । संज्ञाकृत-

---

कल्पने अपवादत्वाभाववादिनामपि फलभेदाभावेन एतादृशकपोलकल्पनाया अनुचितत्वात् । ततश्च ङीबन्तप्रयोगस्येष्टत्वकथनमयुक्तमेवेति चेत्—अत्र केचित्—"शेषाद्विभाषा" इति सूत्रस्थभाष्याविरोधायापवादत्वाभावस्य पूर्वमेव सुसाधितत्वेनेष्टप्रयोगासिद्धिरिति वदन्ति, ते तु अतएवेत्यादितोऽपवादत्वाभाव-ज्ञापनाय प्रवृत्तग्रन्थात्पूर्वमेवापवादत्वाभावसिद्ध्यभिमानिनः समुपेक्ष्या एव । "न षट्स्वस्रादिभ्यः" इत्यनेन टाब्ङीपोरुभयोर्निषेधार्थम् "ऋन्नेभ्यः" इत्यतो ङीबनुवृत्तिरावश्यकी । तस्यां मण्डूकप्लुतौ मानाभावेन "टाबृचि" इत्यत्रापि तदनुवृत्ति-र्निराबाधैव । एवं च सूत्ररीत्येष्टस्येत्यादिग्रन्थः सुललित इति परे । अन्ये तु ङीप्पदे मण्डूकानुवृत्तिप्रयोजकस्वरितत्वस्यैव कल्पनेन टाबृचीत्यत्र ङीबनुवृत्त्य-भावेन सूत्रमते एकपदीत्यस्यानिष्टत्वेन अनभिधानेऽपि न फलभेद इत्याहुः ।

*आपः परिगणितेष्वभावादिति* । "नलोपः सुप्" इति सूत्रे इत्यर्थः । सुबिति आपः पकारेण प्रत्याहाराश्रयणेन आब्विधावपि असिद्धत्वं तु न शङ्क्यम् । बहुचर्मिकेत्यादौ आब्निमित्तकेत्वविधावपि नलोपस्यासिद्धत्वादित्वानापत्तेरिति स्पष्टं भाष्ये । *कार्यकालेति* । यथोद्देशे तु स्थानिवत्त्वेनैव षट्त्वं सुलभम् । तस्य संकेतसंबन्धेन षट्पदवृत्त्वरूपत्वेन अल्धर्मत्वाभावादिति भावः ।

*तदन्तेऽपीति । स्त्रीप्रत्यये तदन्तविधिसत्त्वात् अर्थप्राधान्याश्रयणे मानाभावाच्चेति भावः ।

*ध्वनितमिति । तत्रहि अनन्तरस्य ङीपो निषेधे पञ्चेत्यत्र टापो नि-षेधो न स्यादित्याशङ्क्य उभौ न भवत इति व्याख्याय "अथवा उभाविति न वक्तव्यम्, स्त्रियां यत्प्राप्नोति तस्य प्रतिषेधः" इत्युक्तम् । तेन अनन्तरस्येत्या-दिन्यायानाश्रयणात् ङीप इव विप्रकृष्टटापः, उत्तरस्य ङीपो, डापश्च निषेध इति ध्वन्यते इति भावः ।

*नलोपः सुप् इति सूत्रे भाष्ये संज्ञाविधौ नलोपासिद्धत्वस्य न फलम् । षट्संज्ञां विना विभक्तिलुकोऽभावेन नलोपाप्राप्त्या कृतायां षट्संज्ञायां लुकि नलोपे च प्राप्तस्य टापः जातषट्त्वाश्रयणेनैव निषेधसिद्धेः इत्युक्त्वा दण्डिदत्तौ दत्तदण्डिनाविति घिसंज्ञायां प्रयोजनमुक्तम् । तत्र षट्त्वस्य अल्धर्म-त्वान्निषेधानुपपत्तिमाशङ्क्य बहिरङ्गपरिभाषया नलोपासिद्धत्वं कैयटेनोक्तम्—तत्खण्डयति *परेत्विति । अत्रायं ग्रन्थः प्रक्षिप्तः, मूलसंदर्भविरोधादिति वदन्ति ।

बहिरङ्गत्वानाश्रयणात् । पञ्चेत्यत्र तु स्त्रियां यत्प्राप्नोति तन्नेत्यर्थाश्रयण* बलाद् भूतपूर्वषट्त्वाश्रयो निषेधः । अत एव षट्संज्ञायां नलोपासिद्धत्वस्य न फलमिति "नलोपः सुप्"इत्यत्र भाष्ये उक्तमित्याहुः ।

मनः ॥ न ङीबिति । अयम्, "अन"इति च उक्तरीत्या टाब्ङी- पोरुभयोरपि निषेधः । एतेन सीमभ्यां बहुयज्वभ्यां बहुधीवभ्यामित्यत्र डाब्ङीपोरभावे नलोपे टाब् दुर्वार इत्यपास्तम् ।

डाबुभा ॥ उभाभ्यांग्रहणाभावे संनिहितस्यान एवानुवृत्तिः सम्भाव्येत । वचनसामर्थ्याद् डाब्निषेधयोः पर्याये सिद्धे ऽन्यतरस्यामिति स्पष्टार्थम् । भाष्ये त्वन्यतरस्याङ्ग्रहणं वाक्यभेदेन "अनो बहुव्रीहेः"इत्यनुवर्त्य ततः पक्षे "ऋन्नेभ्यः"इति ङीबर्थम् । एवञ्च "अन उपधा"इति सूत्रं नियमार्थमिति बहुधीवरीत्यत्र "ऋन्नेभ्यः"इति ङीबिति तत्सन्नियोगेन रेफादेशः सिद्ध्यती- ति बहुव्रीहौ वेति वचनं प्रत्याख्यातम् । "*अन उपधा"इति "ऋन्नेभ्य" इत्यस्यैवानुवाद इति नियमस्य विधिमुखेन प्रवृत्तावपि न दोषः ।

अन उ । "बहुव्रीहेरूधस" इत्यतो बहुव्रीहेरिति "संख्या- ऽव्ययादेः"इत्यतो ङीबिति चानुवर्त्तेते । अनुपसर्जनादित्यनुवृत्तमप्यत्र न सम्बद्ध्यते । तस्य गृह्यमाणविशेषणतया गृह्यमाणस्य चान्नन्तबहुव्रीहाव-

---

*आश्रयणेति* । अनुपदोक्ते प्रियपञ्चा द्रौपदीत्यत्र डाबभावार्थं व्याख्या- नस्य चारितार्थ्यादेतच्चिन्त्यमिति केचित् । अन्ये तु पूर्वोक्तलक्ष्यसिद्ध्यर्थमुक्तार्थ- करणे टाबनुवृत्तेर्व्यर्थत्वाद् अर्थाश्रयणबलादित्यस्य अर्थाश्रयणप्रयोजकीभूतटाब- नुवृत्तिसामर्थ्यादिति कथं चिद्योज्यमित्याहुः । वस्तुतस्तु षान्तनान्तसंख्या- वाचकत्वसमानाधिकरणत्वोपलक्षितस्य संकेतसम्बन्धेन षट्पदवत्त्वरूपषट्त्व- स्य अलधर्मत्वाभावेन स्थानिवद्भावेनैवारोपान्नासिद्धत्वोपयोगः । एवं च अर्थाश्रयणबलादित्यस्य अर्थस्वभावेनेत्यर्थः । भूतपूर्वेत्यादेश्च पूर्वं भूतं— स्थानिनि स्थितं षट्त्वमादायेत्यर्थः । स्थानिवत्त्वेनेति शेषः । यद्वा कार्यकालपक्षे यदा कार्यं तदा संज्ञाया आवश्यकत्वात् तस्याश्च नलोपोत्तरं नान्तत्वाभावेना- प्राप्त्या भूतपूर्वगत्याश्रयणम् । अत एव च अर्थाश्रयणबलादिति हेतूपन्यासः । एवं च न कश्चिद्विरोध इत्यलम् ।

ननु नियमशास्त्राणां लाघवाद्विधिमुखेनैव प्रवृत्त्या वन्नन्तबहुव्रीहौ अनउपधेति ङीपि "ऋन्नेभ्य" इतिङीबनुवादेन विधीयमानो रादेशो न स्यादत आह—*अन उपधेतीति* ।

नुपसर्जनस्यासम्भवात्* । *ध्वनितश्चेदं "वनो र च"इति सूत्रे भाष्ये । *तत्र हि "अनो बहुव्रीहेः"इत्यनन्तरम् "उपधालोपिनो वा"इति न्यासो दर्शितः । विद्ध्यर्थमिदम् । अन्यतरस्याङ्ग्रहणं तु अनुपधालोपिसुपर्वेत्यादौ सावकाशयोर्डाप्प्रतिषेधयोरुपधालोपिन्यनवकाशेन ङीपा बाधो मा भूदिति । अन्यथा विधानसामर्थ्येन त्रयाणां पर्यायसिद्धौ तद्वैयर्थ्यं स्पष्टमेव ।

ककारादिति । *अनेन वर्णमात्रं विवक्षितम्, अकार उच्चारणार्थ इति सूचयति । न च कारिकेत्यत्राकारेण व्यवधानादाप्परककाराभावेनेत्वानापत्तिः,एकादेशेऽपि "अचः परस्मिन्"इति स्थानिवत्त्वाद् व्यवधानमेव। अपि परतो ऽकारस्य कात्पूर्वस्येत्यर्थेऽपि निर्दिष्टपरिभाषोपस्थितेर्व्यवहिते *न प्राप्नोतीति वाच्यम् । आनन्तर्यांशोपस्थितावपि 'येन नाव्यवधानम्'इति न्यायेनाकारव्यवधानेऽपि प्रवृत्तेः । रथकव्यादौ च नातिप्रसङ्गः । क इति सङ्घातग्रहणे तु एतिका इत्याद्यसिद्धिः । अकचकारस्योच्चारणार्थतया कशब्दाभावात् । "न यासयोः"इति ज्ञापकेन वर्णग्रहणमित्येव ज्ञाप्यते । अकज्विधायकस्थमकारवैशिष्ट्यमादायेत्वप्रवृत्तिज्ञापकत्वाश्रयणे तु गौरवम् । तावताऽपि प्रत्ययस्थत्वांशानुपपत्तेश्च* ।

---

*अनुपसर्जनस्यासम्भवादिति* । नन्वनो गृह्यमाणस्य बहुव्रीहावनुपसर्जनत्वाभावेऽपि अतिबहुदामा अतिबहुराजा ब्राह्मणीत्यादौ बहुव्रीहेरुपसर्जनत्वेन तत्र ङीब्वारणाय बहुव्रीहिविशेषणस्य "अनुपसर्जनात्"इत्यस्यावश्यकत्वमित्याशङ्कां निराकुर्वन्नाह—*ध्वनितमिति* । तदेवाह—*तत्र हीति* । "अनो बहुव्रीहेः" "डाबुभाभ्यामन्यतरस्याम्""अनुपसर्जनात्"इति सूत्रपाठे भाष्यकृता अनो बहुव्रीहेरित्यनन्तरम् "उपधालोपिनो वा"इति न्यासप्रदर्शनेन तत्रासम्बन्धो ध्वनितः । अन्यथा सिद्धान्ते तत्सम्बन्ध इदानीन्नेति व्यत्यास आपद्येतेति भावः । वस्तुतस्तु इत्यस्यानन्तरमिति प्रतीकमुपादाय शब्दरत्नकृता "अनो बहुव्रीहेः, डाबुभाभ्याम्, अनुपसर्जनात्, उपलोपिनो वा इति पाठ्यमिति भावः । यथाश्रुते अनुपसर्जनात् इत्यस्य सम्बन्धो दुर्घटः । अत एव बहुदामानि पुराण्यतिक्रान्ता नगरीत्यत्र ङीब् न"इति भाष्यतात्पर्यस्य, तत्सम्बन्धे फलस्य च प्रदर्शनेन तद्विरोधाभावात्, विभाषासपूर्वस्येत्यत्र गृह्यमाणान्ते गृह्यमाणे सपूर्वपदार्थे अनुपसर्जनादिति सम्बन्धस्य तत्फलस्य च अग्रे शेखरकारेणाप्युक्तत्वाच्च बहुव्रीहिविशेषणार्थम् अनुपसर्जनादित्यस्य सम्बन्ध एवोचित इति दिक् ।

प्रत्ययस्थात् । *अनेनेति* । कारप्रत्ययान्तनिर्देशरूपव्याख्यानेनेत्यर्थः । अन्यथा वर्णबोधकत्वाभावेन तदसङ्गतिः स्पष्टैव । *न प्राप्नोतीति* । तस्मिन्निति परिभाषाबाधकल्पने तु रथकव्यादावतिप्रसङ्गः स्यात् । *अनुपपत्तेश्चेति* ।

न च वर्णग्रहणपक्षे एतिका इत्यादावकारद्वयव्यवधानादित्वाप्राप्तिः। द्वयोरकारयोरेकादेशे टापा सहैकादेशस्य स्थानिवद्भावादेकेनैवाकारेण व्यवधानात्। पुनः स्थानिवत्त्वन्तु न। *लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तेः। टापा सहैकादेशस्य स्थानिवत्त्वं विना पूर्वैकादेशस्य स्थानिवत्त्वन्तु वक्तुमशक्यम्। तस्य टाबेकादेशेनापहारेणादर्शनात्। अत एव "न यासयोः" इतिनिषेधसार्थक्यम्।

स्थग्रहणन्तु स्पष्टार्थम्। केवलककारस्य प्रत्ययस्याभावात्। असुप इति बहुव्रीहिणा नाङ्गविशेषणम्। बहुचर्मिका इत्यादावित्वानापत्तेः। प्रत्ययलक्षणेनाङ्गस्य सुब्वत्त्वात्। "न लुमता" इति तु नात्र। लुमता लुप्ते प्रत्यये यदङ्गं तस्य कार्ये तन्निषेधप्रवृत्तेः। इदन्तु टाप्यङ्गमिति दिक्।

सर्विकेति। "अव्ययसर्वनाम्नाम्"इत्यकच्। कारिकेति। करोतेर्ण्वुल्। नौशब्दात्स्वार्थे कः। सुपः परो नेति प्रसज्यप्रतिषेधेन व्याख्याने फलमाह—बहुपरिव्राजकेति। पर्युदासे हि समुदायस्य सुभिन्नत्वेन सुबन्तभिन्नत्वेन च ततः परत्वादित्वं दुर्वारमिति भावः। परिपूर्वाद् व्रजेर्ण्वुलि बहुव्रीहौ सुपो लुक्यपि प्रत्ययलक्षणेनापः सुबन्तात्परत्वं बोद्धव्यम्। कटुकेति। आपा सह सवर्णदीर्घात्पूर्वं वार्णादाङ्गस्य

---

सौत्रस्य प्रत्ययघटकत्वाभावादिति भावः। *लक्ष्ये लक्षणस्येति*। नन्वस्य संस्कारकविधिष्वेव प्रवृत्तेः "एकः पूर्वपरयोः"इति भाष्ये स्पष्टत्वादिदमयुक्तमिति चेन्न। कार्यातिदेशस्य मुख्यतया अस्यापि संस्कारकविधित्वमित्यभिमानात्। वस्तुतस्तु इदं सर्वमयुक्तम्। स्थानिवत्त्वस्यातिदेशत्वेन लक्ष्येलक्षणन्यायाप्रवृत्तेः। पुनःपुनः स्थानिवत्त्वन्तु भवत्येव। अत एव सुनयिका सुपाकिकेत्यादौ "धात्वन्तयकोः"इतीत्वं सिध्यति। अन्यथा ने इत्यस्मिन् फलाभावेन धातुत्वानातिदेशे ऽयादेशोत्तरं नय् इत्यस्मिन् तदसिद्ध्या इत्वानापत्तिः स्यात्। एवं सुपाकिकेत्यत्रापि पच्वृत्तिधातुत्वस्य पाच् इत्यत्रारोपे फलाभावेन पाक् इत्यवस्थायां तदलाभे इत्वानापत्तिर्बोध्या। तद्वार्तिकं तु अयधातोः अयिकेत्यत्र चरितार्थम्। अत एव तण्डुलानित्यत्र प्रत्ययान्तत्वम्। अत एव च इयायेत्यत्र वृद्धेरायादेशोत्तरमपि स्थानिवत्त्वेन सवर्णाच्त्वबुद्ध्या असवर्णे इति निषेधे "अभ्यासस्यासवर्णे"इतिसूत्रं व्यर्थं सत् "अभ्यासकार्ये तदुत्तरखण्डाजादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं न"इति निषेधे ज्ञापकमिति ग्रन्थकृतोक्तं सङ्गच्छते। वस्तुतस्त्वत्र "न यासयोः"इति ज्ञापकेन तादृग्व्यवधानं सह्यत इति, स्थानिवत्त्वं न भवतीति, श्रौतवर्णकर्तृकव्यवधानाभावो ऽव्यवहितपदेन गृह्यते इति वा कल्पनं युक्ततरमिति।

बलीयस्त्वादपवादत्वाच्चान्त्यककारादुत्तरस्याकारस्येत्वं स्यादिति भावः* । मामकेति । कस्य प्रत्ययस्थत्वाभावादप्राप्ते वचनम् । ममेयमिति विग्रहे "युष्मदस्मदोरन्यतरस्याम्"इत्यणि "तवकममकावेकवचने"इति ममकादेशे आदिवृद्धिः । नरानिति । कै शब्दे इत्यस्य "आदेच उपदेशे" इत्यात्वे 'आतोऽनुपसर्गे'इति के "आतो लोप इटि च"इत्यालोपः ।

न यासयोः ॥ प्रत्ययस्थादिति प्राप्ते निषेधोऽयम् । यकेति । यत्तदोरकच्, त्यदाद्यत्वे टाप् । सन्निपातपरिभाषा ऽस्मादेव निषेधान्निर्देशाच्चानित्येति तद्विरोधात्कथं टाविति न शङ्क्यम् । त्यकनश्चेति । "मृदस्तिकन्"इति इत्वभूतनिर्देशेन ज्ञापकेनास्येत्वं वारयितुं शक्यमिति भाष्यकृतः । पञ्चभिर्मृत्तिकाभिः क्रीत इत्यर्थे पञ्चमृत्तिक इत्यस्यानभिधानमिति तदाशयः । अत्र त्यिकनि कर्त्तव्ये ऽकारोच्चारणादित्वं नेति न व-

---

*इति भाव इति* । प्रत्ययस्थादिति सूत्रे पूर्वस्य-ग्रहणाभावे कादिति दिग्योगलक्षणपञ्चमीश्रुत्या "तस्मादित्युत्तरस्य" इति परिभाषाया अव्यवहितत्वोत्तरत्वविधेयान्वयिषष्ठ्यर्थेत्यंशत्रयाणामुपस्थितौ प्रत्ययस्थात् ककारादव्यवहितोत्तरस्य ह्रस्वाकारस्येत्वं भवत्यापि परे इत्यर्थेन कटुकशब्दाट्टापि कृते कटुक आ इति स्थिते सवर्णदीर्घमाङ्गत्वेनापवादत्वाच्च प्रबाध्य इत्वं स्यात् । न चैवं सर्विकेत्यत्रैव सर्वक आ इति दशायामुक्तप्रकारेणेत्वापत्तिसत्त्वेन कटुकापर्यन्तमनुधावनस्य वैयर्थ्यमिति वाच्यम् । सूतकापुत्रिकेति वार्तिके प्रश्लेषेणाकारविधानसामर्थ्येन प्रत्ययस्थादिति सूत्रे तस्मादिति परिभाषाया अप्रवृत्तिज्ञापनाद् दिग्योगलक्षणपञ्चम्याऽऽकाङ्क्षितदिग्वाचकपदाध्यारे प्रसक्ते परस्येत्यस्यैव स इतिनियमाभावेन परस्येति पदस्याध्याहारे सवर्णदीर्घबाधकल्पनं पूर्वस्येतिपदाध्याहारे तु नेति सूत्रबाधपरिहारलाघवेन सर्विकेत्यादिलक्ष्यसंस्काराय पूर्वस्येत्यस्यैवाध्याहारेण तत्र दोषाभावात् । यत्रोदाहरणे पूर्वोऽकारो न सम्भवति तत्रागत्या परस्येत्यस्याध्याहार इति कटुका इत्यत्र पूर्वाकारासम्भवात्तत्रेत्वप्रवृत्त्यर्थं परस्येत्यध्याहारे दोषः स्पष्ट एवेति तत्पर्यन्तानुधावनस्य सार्थक्यात् ।

प्रत्ययस्थादिति सूत्रे तस्मादितिपरिभाषाप्रवृत्तौ तु सूतका पुत्रिका वृन्दारका इत्यत्र ककारात्परस्याकारस्यैव सत्त्वेन तस्य विकल्पेन इत्वविधानेऽपि रूपद्वयसिद्धौ प्रश्लेषेणाकारविधानस्य वैयर्थ्यं स्पष्टमेव । इदानीं तु सूतका वृन्दारका इत्यत्र ककारात्पूर्वस्याकारस्य सत्त्वेऽपि पुत्रिका इत्यत्र ककारात्पूर्वस्येकारस्याकारविधाने पुत्रका तदभावपक्षे पुत्रिका इति रूपद्वयसिद्धिरिति तत्सार्थक्यम् ।

यत्तु अकारान्तादेव टाब्विधानेन ककारोत्तरस्य आप्परकस्याकार-

क्तुं शक्यम् । पञ्चोपत्यको ग्राम इत्यादावकारश्रवणानापत्तेः । टापो लुकि प्रत्ययलक्षणं स्थानिवत्त्वञ्च न। उभयोरपि "न लुमता" इत्यनेन निषेधात् । अत एव कतीत्यादौ वार्त्तिकमतेऽपि न गुण इत्यन्यत्र विस्तरः ।

आशिषि वु । आशिषि विहितस्य वुनोऽस्येत्वं नेत्यर्थः । जीवतादित्यर्थे "आशिषि च" इति वुन् । देवदत्तशब्दादनुकम्पायां कनि "अनजादौ च विभाषा लोपो वक्तव्यः" इति दत्तशब्दस्य लोपः । देवदत्तिकेत्युपन्यासस्तु दत्तलोपमभिव्यङ्क्तुम् । ध्रुवकेति । ध्रु स्थैर्ये पचाद्यचि कुटादित्वाद् गुणाभावे उवङ्, ततष्टाप्यज्ञाताद्यर्थे कः, "केऽणः" इति ह्रस्वः, पुनष्टाप् । चटे संज्ञायां क्वुन् । वार्त्तिकोक्ता गणा आकृतिगणाः । तेन कन्यकाधुवकाऽलकेष्टकादयः साधवः । उदीचामित्विति । अत्रापि शकुनाविति संबद्ध्यते । तेनान्यत्र नित्यमेवेत्वम् ।

सूतका पुत्रि । पुत्रकेत्यकारसहितः पाठोऽपपाठः, कैयटाद्यसंमतेः । सूतशब्दात् स्वार्थे कन् । वृन्दशब्दात् "शृङ्गवृन्दाभ्यामारकन्" इति मत्वर्थीय आरकन । वृन्दारकशब्दो मुख्यवाची त्रिलिङ्ग इति भावः । ङीन इति । शार्ङ्गरवादित्वाज्जातस्येति भावः । अन्यत्र—सूतकादौ ।

उदीचाम् । यकपूर्वत्वञ्चाव्यवहितमेव । एवं "प्रत्ययस्थात्" इति सूत्रे कात्पूर्वत्वमपि । "उदात्तस्वरितयोः" इत्यादाविवानुवादेऽपि निर्दिष्टपरिभाषाप्रवृत्तेः । तेन कुशराशब्दात्के ह्रस्वे इत्वविकल्पो न । नेत्यनुवृत्तावपि निषेधविकल्पे विधिविकल्पस्य फलितत्वादाह—इद्वेति । आतः

---

स्यैव सम्भवेन प्रत्ययस्थादितिसूत्रे अद्ग्रहणस्य तपरकरणस्य वा वैयर्थ्येन तत्सामर्थ्यादत्र तस्मादितिपरिभाषाया अप्रवृत्तिज्ञापनेन सर्विकेत्यत्रोक्तरीत्या दोषाभावेन कटुकेति प्रत्युदाहरणमिति, तन्न । भवतु इति तिङन्तात् "तिङश्च" इत्यकचि अशब्दादाचारक्विबन्तात् लोटि सिपि हौ हेर्लुकि द्वयोः (भवतकु अ इति यस्यां क्रियायामिति) समासे ततष्टापि भवतका इत्यादावुकारस्येत्वापत्तेः । भविता इत्यस्मादकचि टाबन्तेनाशब्देन समासे भवितका इत्याकारस्य अशब्दाज्जातेन टापा जातस्य सवर्णदीर्घस्य परादिवद्भावेनात्स्वादित्वापत्तेश्चोभयोश्चारितार्थ्यात् । सवर्णदीर्घस्य स्थानिवत्त्वं तु न । आकारस्य पदान्तत्वेन नपदान्तेति तन्निषेधात् । न च भवतकु अ आ इति स्थिते सवर्णदीर्घात्पूर्वं प्रत्ययस्थादित्यस्याकारेण व्यवधानादप्राप्त्या सवर्णदीर्घात्पूर्वमन्तरङ्गत्वादुकारस्य यणि ततष्टापा सवर्णदीर्घोत्तरमुकाराभावेन नोक्तापत्तिरिति वाच्यम् । वकारस्यैवेत्वापत्तेः, भवितका इत्यत्रेत्ववारणाय तपरकरणस्यावश्यकतया तदर्थमपि तद्ग्रहणस्यावश्यकत्वाच्चेति दिक् ।

क्विमिति । 'उदीचां यकपूर्वायाः' इत्येवास्तु । य-क-पूर्वस्त्रीबोधकाकारस्येत्यर्थः । सांकाश्यके च नातिप्रसङ्गः । प्रत्ययावयवत्वेनाकारस्य स्त्रीबोधकत्वाभावादिति प्रश्नः । 'बहुलक्ष्यसंस्कारानुरोधादवयवषष्ठ्येव स्यात् । न च प्रतिपदोक्तस्त्रीप्रत्ययस्यैवात्र ग्रहणम् । विशिष्य तदनुपादानात्' इत्युत्तरम् । स्त्रीप्रत्ययस्य किमिति । यकपूर्वाया इति स्त्रीलिङ्गनिर्देशः किमर्थ इति प्रश्नः । धात्वन्तेति । धात्वन्तयकारककारपूर्वयोरकारयोरित्यर्थः । इत्वमिति शेषः ।

भस्त्रैषा । अयमपि निषेधविकल्प इत्याह-अत इति । अत्राप्यातः स्थान इत्यनुवर्त्तते । तदन्तेति । "येन विधिः" इति सूत्रे 'त्यदादिविधिभस्त्रादिग्रहणञ्च प्रयोजनम्' इति भाष्यात् । अपिना नञ्भिन्नपूर्वाणामपूर्वाणाञ्च सङ्ग्रहः । अत्र नञ्पूर्वाणामपीति स्पष्टार्थम् । "पदाङ्गाधिकारे तस्य च" इति सिद्धेः । उपसर्जनार्थमिति । एवञ्चानुपसर्जने "आदाचार्याणाम्" इत्यात्वं भवत्येव, उपसर्जने ऽस्य चारितार्थ्येन बाधे मानाभावात् । अन्यस्य-अनुपसर्जनस्य । उत्तरसूत्रम्-'अभाषितपुंस्काच्च' इति ।

अन्तर्वर्त्तिनीमिति । न एतद् सु इति स्थिते अकचि कृते अकृते वा नञा तत्पुरुषे 'अन्तरङ्गानपि' इति न्यायेन त्यदाद्यत्वात्प्राक् सुपो लुकि ततो ऽकचि वा पुनर्विशिष्टात्सुपि सदाद्यत्वे टापि समासात्पूर्वोत्पन्नसुपः पर एव टाबिति भावः । बहुव्रीहौ तु प्रियैतत्का प्रियैतकत्का वा, कवभावे प्रियैतकदित्येव । सर्वथा नेत्वप्राप्तिः । अनेषकेति । अज्ञाता एषा एषका, न एषकेति विग्रहः । पूर्वं नञ्समासे अज्ञाता अनेषा इति । असम्भवादिति । 'एषाद्वा' इति निर्देशात्संज्ञोपसर्जनयोरप्राप्तेः*रिति भावः । अकजर्हे इति । एवञ्च तदकारस्याऽऽतःस्थानिकत्वाभाव इति भावः । अर्थान्तरे त्विति । आत्मज्ञातिधनेष्वित्यर्थः ।

स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वो ऽस्त्रियां धने ।

इति कोशादिति भावः । कप्रत्ययान्तत्वादिति । तत्र च नान्तर्वर्त्तिविभक्त्या सुपः परत्वं, केन व्यवधानादिति भावः । "संज्ञापूरण्योश्च" इति निषेधेन संज्ञाया अपि भाषितपुंस्कत्वबोधनेन संज्ञाभूते न "अभा-

---

*संज्ञोपसर्जनयोरप्राप्तेरिति । अनुपसर्जनयोस्तु सर्वनामत्वेनाकच्प्रत्ययविशिष्टतया तदवयवाकारस्य कात्पूर्वस्य आतःस्थानिकत्वासम्भव इति भावः ।

षितपुंस्काच्च"इत्यनेन सिद्धिः । आत्मीयत्वपुरस्कारेणैव संज्ञाकरणादिति बोद्धयम् । नित्यमेवेति । तत्र ह्यकचि कृते आतःस्थानिकत्वाभाव इति भावः । एवमत्यन्तस्वार्थिककान्ते ऽपि नित्यमेवेत्वम् । अकचो ऽत्यन्तस्वार्थिकापवादत्वाभावात् । निःस्वकेति । स्वस्या निष्क्रान्तेति विग्रहः । उपसर्जनह्रस्वः, टाप्, अज्ञातादौ कः ।

अभाषित । "स्त्रीविषयाच्च"इति नोक्तम् । स्त्रीनपुंसकदामशब्दाड्डापि अज्ञाता दामा दामिका दामाका दामकेत्यसिद्ध्यापत्तेः । विहितस्येति व्याख्याने फलमाह—बहुव्रीहिरिति । अविद्यमाना खट्वा यस्या इति विग्रहे पाक्षिककबभावे "गोस्त्रियोः"इत्युपसर्जनह्रस्वे ऽखट्वशब्दादापि सुप्यज्ञातादौ के सुब्लुकि "केऽणः"इति ह्रस्वे पुनष्टाप्यभाषितपुंस्काद्विहिताकारस्थानिकाकाराभावेनैतद्विकल्पाप्राप्तावुत्सर्गेण नित्यमेवेत्वं, परविशेषणत्वे तु तादृशखट्वशब्दात्परत्वेन दोषः स्यादेवेति भावः ।

शैषिके कपीति । न खट्वा सु इत्यवस्थायां कपि सुब्लुकि प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात्समाससंज्ञायां "समासान्ताः" इतिशास्त्रबलात्कबन्तस्यैव समासत्वेनोपसर्जनस्त्रीप्रत्ययान्तान्तसमासरूपप्रातिपदिकाभावाद् "गोस्त्रियोः"इति ह्रस्वाभावे "केऽणः"इति ह्रस्वे "न कपि"इति निषिद्धे "आपोऽन्यतरस्याम्"इति ह्रस्वे कपः प्राग्वर्त्तिनः खट्वशब्दात्परस्यापो ऽभाषितपुंस्काद्विहितत्वेन तत्स्थानिकाकारस्यायं विकल्पः, ह्रस्वाभावे तु 'अखट्वाका'इति इति भावः ।

अयमेवेति । *आचारक्विबन्तप्रकृतिककर्त्तृक्विबन्तानामनभिधानमेव स्त्रियाम्, एतद्भाष्यप्रामाण्यात् । पञ्च स्त्रीगोव्यक्तयो धनं यस्य स

---

*अनुपसर्जनात् । *आचारक्विबन्तप्रकृतिकेति* । अनुपसर्जनाधिकाराभावे गौर इवाचरति गौरायते, गौरायते इति गौरा इत्यत्र "षिद्गौर"इति ङीष् स्यात्; तद्व्यावृत्त्यर्थमनभिधानाश्रयणम् । न च तत्र सूत्रे ऽत इत्यनुवर्त्य अदन्तेभ्यो गौरादिभ्यो ङीषित्यर्थेन प्रकृते ऽदन्तत्वाभावादेवाप्राप्तिरिति वाच्यम् । बहुशब्दादाचारक्विबन्तात् कर्तरि क्विपि "बह्वादिभ्यश्च"इत्यस्याप्रवृत्त्यर्थम् अनभिधानस्यावश्यकत्वात् । एवमनडुह्शब्दस्य अशब्देन समासे तस्मादाचारक्विबन्तात्कर्तरि क्विपि अतो लोपे ऽनडुह् इत्यस्मादपि ङीषभावो ऽनभिधानफलं बोध्यम् । न चानडुह्शब्दादाचारक्विबन्तात् कर्तरि क्विप्येव दोषसत्त्वेन अशब्देन समासपर्यन्तमनुधावनं विफलमिति वाच्यम् । "ह्रस्व-

पञ्चगवधन इत्यत्रार्थवत्सूत्रोक्तार्थवत्त्वाभावात्टजन्तस्य प्रातिपदिकत्वाभावेन न ङीप्। आपिशलिना प्रोक्तमधीते आपिशला ब्राह्मणीत्यत्र तु

---

नद्यापो नुट्" इति सूत्रे "प्रत्ययान्तादयं विधीयते तत्र नास्ति विशेषः "मिद्चोऽन्त्यात् परः" इति वा परत्वे, "प्रत्ययः परश्च" इति वा परत्वे" इत्यादिभाष्याद्धलन्तेभ्य आचारक्विपोऽनभिधानस्य क्लृप्तत्वेन तत्प्रकृतिककर्तृक्विपो दुर्लभत्वेन समासपर्यन्तानुधावनादृते गत्यन्तराभावात्। तुल्यन्यायात् "प्रातिपदिकात्" इतिविहितणिजन्तप्रकृतिकक्विबन्तानामप्यनभिधानं स्त्रियां बोध्यम्। एतेन तत्र चारितार्थ्ये संभवति ज्ञापकत्वोपवर्णनमसंभवदुक्तिकमिति वदन्तः परास्ताः।

अथ सर्वादिसूत्रे "संज्ञोपसर्जनप्रतिषेधो वक्तव्यः" इति वार्तिकस्वीकारेऽपि "त्यदादीनामः" "अद्ड् डतरादिभ्यः पञ्चभ्यः" इत्यनयोरुपसर्जने प्रवृत्तिः कस्मान्नेत्याशङ्क्य "अनुपसर्जनात्" इत्यधिकारसूत्रे अनुपसर्जन अ अत् इति प्रश्लिष्य "अकारात्कारौ शिष्यमाणावनुपसर्जनस्य द्रष्टव्यौ" इति भाष्ये उक्तम्। तेन चानुपसर्जनत्वं तत्रत्यमत्रत्यं चैकमेवेति व्यज्यते। "किं च तद्" इति जिज्ञासायाम् उपसर्जनभिन्नत्वं तत्त्वम्। उपसर्जनत्वं च यदि स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वम्, अतिसर्वेत्यत्र च स्वं सर्वशब्दः तदन्तमतिसर्वे इति तत्पर्याप्ता शक्तिः सर्वकर्मकातिक्रमणकर्तृत्वावच्छिन्ननिरूपिता, तन्निरूपको ऽर्थो ऽतिक्रमणकर्तृत्वावच्छिन्नस्तदर्थनिष्ठविशेष्यतानिरूपितानेकारब्धसमुदायत्वावच्छिन्नप्रकारताप्रयोजकत्वं सर्वशब्दे इति, एवं बहुकुरुचरेत्यत्र स्वं टच् तदन्तं बहुकुरुचरेति तत्पर्याप्ता शक्तिर्बहुभिन्नकुरुचराधिकरणत्वावच्छिन्ननिरूपिता तन्निरूपकोऽर्थोऽन्यपदार्थः तन्निष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकष्टच् इति लक्षणसमन्वय इत्युच्यते-तर्हि सर्वशब्देऽपि सर्वनिष्ठविशेष्यतानिरूपितसर्वत्वनिष्ठप्रकारताप्रयोजकत्वमस्त्येवेत्युपसर्जनत्वं स्यात्। यदि च यस्योपसर्जनत्वं वक्तव्यं तदितरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपं तद्। तथा च सर्वशब्दे इतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वाभावेन न दोषः इत्युच्यते, तदा आचारक्विबन्तस्थले इतरपदार्थनिष्ठविशेष्यताया अभावादनुपसर्जनाधिकारसत्त्वेऽपि ङीपो दुर्वारत्वेन फलभेदाभावात्, अनभिधानाश्रयणमयुक्तम्। न चाचारक्विप्स्थले इतरपदं क्विप् तत्प्रयोज्यविशेष्यतानिरूपितप्रकारताप्रयोजकत्वस्य सत्त्वेनोपसर्जनतया सिद्धान्ते ङीपो ऽप्राप्त्या इदानीमपि तदभावार्थमनभिधानमावश्यकमिति वाच्यम्। क्विपमादायोपसर्जनत्वे "द्वीयतेरप्रत्यये द्व इति प्राप्नोति स्व इति चेष्यते" इति भाष्ये सत्वाप्राप्त्या 'स्व इति चेष्यते' इत्यनेन विरोधापत्त्या तदेकवाक्यत्वाय इतरपदस्य श्रूयमाणस्यैव ग्रहणेन प्रकृते क्विपो ऽश्रूयमाणत्वेनैवेष्टसिद्ध्या सामञ्जस्येऽनभिधाने दृढप्रमाणाभावात्।

नन्वेवमपि परमसर्वघटकसर्वशब्दे उपसर्जनत्वं दुर्वारम्। स्वं सर्वं इति

न ङीप्। प्रोक्ताणः स्त्रियामवर्त्तनात्। अध्येत्रणु लुप्तः। अण् योऽकार इति व्याख्यानेन वर्णाश्रये प्रत्ययलक्षणाभावात्। अद्ध्येत्रर्थगतस्त्रीत्वमादाय *तदण्निमित्तकस्य न प्राप्तिः। स्त्रियामित्यस्य गृह्यमाणविशेषणत्वात्तदण एतत्स्त्रीत्वे ऽवर्त्तनात्। *अत एव काशकृत्स्निना प्रोक्तां मीमांसामधीते काशकृत्स्ना ब्राह्मणीत्यत्रापि न ङीप्। प्रोक्तार्थगतस्त्रीत्वमादाय तु पुनर्न ङीप्। लक्ष्येलक्षणस्येति न्यायात्। तस्माद् बहुकुरुचरा इत्येत्र तद्व्यावर्त्त्यम्। तत्र च तदन्तविधिं विना प्राप्तिरेव न। ज्ञापिते तु तदन्तविधौ *प्राधान्यादेतदारम्भाच्च* स्त्रियामिति ङीप्प्रकृतिविशेषणमेव। *अत एव

---

तदितरच्छ्रूयमाणं पदं परमेति तदर्थनिष्ठविशेष्यतानिरूपिताप्रकारता सर्वत्वनिष्ठा तत्प्रयोजकत्वं सर्वशब्दे इति। एवमापिशलिना प्रोक्तमधीते या स्त्रीत्यत्राणोऽश्रूयमाणत्वेनोपसर्जनत्वाभावात् अनुपसर्जनाधिकारफलप्रतिपादनपरभाष्यविरोधश्चेति चेन्न। स्वविशिष्टप्रकारताप्रयोजकत्वमुपसर्जनत्वम् इति स्वीकारेणादोषात्। वैशिष्ट्यं च स्वान्तपर्याप्तशक्तिनिरूपकार्थनिष्ठविशेष्यतानिरूपितत्व—स्वपर्याप्तशक्तिज्ञानाधीनोपस्थितीयविशेष्यतासामानाधिकरण्यैतदुभयसम्बन्धेन। स्वान्तत्वं च व्यपदेशिवद्भावानतिदिष्टं ग्राह्यम्। एवं चापिशलेत्यत्र स्वं प्रोक्ताऽर्थे जायमानोऽण् तदन्तमापिशल इति तत्पर्याप्ता शक्तिरापिशलिप्रोक्तग्रन्थकर्मकाध्ययनकर्तृत्वावच्छिन्ननिरूपिता तन्निरूपकोऽर्थो निरुक्तस्तन्निष्ठविशेष्यतानिरूपितत्वमण्प्रत्ययवाच्यप्रोक्तरूपार्थनिष्ठप्रकारतायाम्, एवं स्वं प्रोक्तार्थेऽण् तत्पर्याप्ता शक्तिः प्रोक्तत्वावच्छिन्ननिरूपिता तज्ज्ञानजन्या योपस्थितीया विशेष्यता प्रोक्तत्वावच्छिन्ननिष्ठा तत्सामानाधिकरण्यमपीति संपन्नमुपसर्जनत्वम्। परमसर्वघटकसर्वशब्दे सर्वत्वनिष्ठप्रकारतायां पूर्वसम्बन्धसत्त्वेऽपि निरुक्तोपस्थितीयविशेष्यतासामानाधिकरण्याभावान्न दोषः। द्वीयतेरप्रत्ययेऽप्यनतिदिष्टस्वान्तत्वाभावान्नानभिधानं कल्प्यम्। एवञ्चानडुह्शब्देऽपि स्वान्तत्वाभावादुपसर्जनत्वाभावेनानभिधानाश्रयणमयुक्तमेवेति विचारणीयं सूरिभिः।

नन्वेवं स्वीकृते अर्थवत्सूत्रे शेखरकृता 'पञ्चनावेत्यस्यानेन न प्रातिपदिकत्वं, नाप्युत्तरसूत्रेण। प्रातिपदिकत्वे तु टाबापत्तिः' इत्युक्तं कथं सङ्गच्छेत। पञ्चनावेत्यस्य निरुक्तोपसर्जनत्वाभावेन ङीपा टापो बाधादिति चेन्न। तत्र "ङीबापत्तिः" इत्यस्यैव पाठस्य युक्तत्वात्। यद्वा एतादृशोपसर्जनत्वस्य नागेशासंमतत्वेन तथोक्तिः। अतएव तेन द्वीयतेप्रत्यये इत्यादिभाष्यस्यैकदेश्युक्तित्वम् आचारक्विवन्तप्रकृतिककर्तृक्विबन्तानां स्त्रियामनभिधानं चोक्तमिति न निरुक्तोपसर्जनत्वे तद्विरोध उद्भावनीयः। अनेकभाष्यसंमतत्वादिति दिक्। *तदण्निमित्तकस्य—प्रोक्तार्थकाण्निमित्तकस्य। *अत एवेति। प्रोक्ताणो ऽध्येत्रर्थगतस्त्रीत्वे ऽवर्तनादेवेत्यर्थः। *प्राधान्यादिति*। "प्रधानाप्रधानयोः प्रधा-

धीवानमतिक्रान्ता 'अतिधीवरी'इति सिद्धम् । एतच्चापिशलेत्याद्यप्यस्यैव व्यावर्त्यम् । अनुपसर्जनादिति च *सामर्थ्याद् गृह्यमाणविशेषणमेवेति भावः।

तदन्तविधिमिति। अण्णन्तादेः प्रातिपदिकविशेषणत्वेनाणन्तान्त इत्येवंरूपमित्यर्थः । अन्यथा प्रत्ययविधौ प्रतिषेधात्स दुर्लभः स्यात् । प्रत्ययग्रहणपरिभाषालभ्यस्य तु नायं निषेधः । *प्रातिपदिकादित्यनेन सहानन्वयापत्तेः । *तत्फलं कौम्भकारेयसिद्धिः । अन्यथा कुम्भकारेय इत्यापद्येत । कुम्भेन समासे ङीपि कुम्भविशिष्टस्यापत्येन योगे कार्यर्थे तद्योगस्य वक्तुमशक्यत्वात् कदाचित्ततोऽपि ढकि कुम्भशब्दोकारे वृद्ध्यभावस्याप्यापत्तेः । निष्कृष्यैकार्थीभाव एव वृत्तिनिमित्तमिति तु वक्तुमशक्यम् । "तद्धितार्थ"इत्युत्तरपदे समासविधानात्समुदायेनैकार्थीभावे ऽवयवेनापि तस्यैव सत्त्वात् । कृद्ग्रहणपरिभाषायाः *कृन्मात्रग्रहणे प्रवृत्त्या न तया विशिष्टादेव ङीबुत्पत्ति प्रत्याशा ।

---

ने कार्यसम्प्रत्ययः" इति न्यायेन प्रातिपदिकविशेषणत्वस्यैव न्याय्यत्वादिति भावः । ननु ज्ञापितेऽपि तदन्तविधौ श्रुतानुमितपरिभाषया स्त्रियामित्यस्य टिदादीनां विशेषणत्वे बहुकुरुचरेत्यत्र टितः स्त्रियां विद्यमानत्वाभावादेव ङीपोऽप्राप्तौ पुनरपि अनुपसर्जनाधिकारवैयर्थ्यमित्यत आह–*एतदारम्भाच्चेति । अनुपसर्जनाधिकारेण तदन्तविधौ ज्ञापितेऽपि स्वांशे चारितार्थ्याभावेन प्रातिपदिकविशेषणत्वमेव स्त्रियामित्यस्योचितमिति भावः। अत एवेति* । गृह्यमाणप्रातिपदिकेनापि तदन्तविधिस्वीकारादेवेत्यर्थः । अन्यथा 'ग्रहणवता'इत्यनेन द्वितीयतदन्तविधिनिषेधाद्"वनो र च"इत्यस्य वन्नन्ततदादित्वविशिष्टप्रातिपदिकादित्यर्थेनातिधीवन्नित्यस्य वन्नन्ततदादित्वाभावात्तद्रूपासङ्गतिः स्पष्टैव । *सामर्थ्याद् गृह्यमाणविशेषणमेवेति* । तदन्तप्रातिपदिकस्य सर्वत्रानुपसर्जनस्यैव सत्त्वेन तद्विशेषणत्वे तद् व्यर्थं स्यादिति भावः। *प्रातिपदिकादित्यनेनेति । यद्यप्यण्रूपप्रातिपदिकस्य अशब्दात् तस्येदमित्यर्थे शैषिकेऽण्यकारलोपे कृते ऽस्ति सम्भवः, तथापि ढादीनां तादृशानामसम्भवो दुर्वार एव । *तत्फलमिति* । अनुपसर्जनाधिकारज्ञापितद्वितीयतदन्तविधिफलमित्यर्थः ।

*कृन्मात्रग्रहणे इति* । कृत्त्वव्याप्यधर्मपुरस्कारेणोपादाने एवेत्यर्थः । "टिड्ढाणञ्"इत्यत्राणत्वस्य कृदकृत्साधारणत्वेन कृत्त्वव्याप्यत्वभावादप्रवृत्तिः । "अत्र प्रमाणं समासग्रहणस्य नियमार्थत्वपरं भाष्यम् । कृदकृत्साधारणे तस्याः प्रवृत्तौ हि अर्थवत्सूत्रेऽपि तत्प्रवृत्त्या कुम्भकारेत्यस्य प्रत्ययान्ततदादित्वेन तद्भिन्नत्वाभावादप्राप्त्या समासग्रहणस्य विध्यर्थत्वं दुर्वारं स्यात् । सिद्धान्ते तु

न च तदन्तग्रहणेऽपि कारशब्दस्य व्यपदेशिवद्भावेनाणन्तान्तत्वात्ततोऽपि कदाचिन्ङीपि कुम्भकारेयो दुर्वारः । किं च समुदायान्ङीप्यपि स्त्रीप्रत्यये तदादिनियमाभावेन केवलादपि कदाचिड्ढकि स दुर्वार इति वाच्यम् । एतदधिकारादेव ज्ञापकादसहाय एव व्यपदेशिवद्भावप्रवृत्तेः । अर्थवत्सूत्रोक्तार्थवत्त्वाभावेनाणन्तस्याप्रातिपदिकत्वाच्च । तदादिनियमाभावेनाधिकस्य कार्यं बोध्यते, न तु न्यूनस्येत्यदोषाच्च । अन्यथा तदन्तग्रहणे फलाभावेन तद्वैयर्थ्यं स्पष्टमेव । एतदेवाभिप्रेत्यात्र भाष्ये उक्तं "समासे च कृतेऽवयवादुत्पत्तावयवस्य वृद्धिः स्यात्"इति । "येन विधिः"इति सूत्रे च प्रत्ययग्रहणे

---

प्रत्ययत्वस्य कृदकृत्साधारणत्वेनास्या अप्रवृत्तौ पूर्वसूत्रेण सिद्धे समासग्रहणं नियमार्थमित्युपपद्यते" इति केचित् । वस्तुतस्तु अनया परिभाषया संघातादुत्पत्तिर्न भविष्यतीत्याशङ्क्य "कृद्ग्रहणे इत्युच्यते, न चैतत्कृद्ग्रहणम्, कृदकृद्ग्रहणमेतत्, कृदप्ययमण् तद्धितोऽपि" इति प्रकृतसूत्रस्थं भाष्यमेवात्र मानम् । समासग्रहणस्य नियमार्थत्वपरं भाष्यं तु कुम्भकारेत्यादेः पूर्वसूत्रेणाप्राप्तावपि उत्तरसूत्रेण कृदन्तत्वात्प्राप्त्याऽपि योजयितुं शक्यते इत्याहुः ।

अत एव पुष्पसुहारिणीत्यादौ "इनः स्त्रियाम्"इति कब् न । अन्यथा विशिष्टे तदादित्वारोपात्तदापत्तिर्दुर्वारा । एवं दृतिहरिरित्यत्र नित्स्वरो न । नित्त्वस्य ठनादितद्धितसाधारणत्वेन कृत्त्वव्याप्यत्वाभावात् ।

नन्वस्तु कारशब्दादेव ङीप्, ढक् तु कुम्भकारीत्यस्मादेव स्यात् । "स्त्रीभ्यो ढक्"इत्यत्र स्त्रीवाचकाड् ढगित्यर्थस्य पैतृष्वसेय इत्याद्यर्थमावश्यकत्वात् । अन्यथा तत्र स्त्रीप्रत्ययान्ततदादित्वाभावाड् ढग् न स्यात् । अत एव "ढकि लोपः" इति सूत्रं चरितार्थम् । तस्मिन्नर्थे सति कुम्भकारीति प्रातिपदिकस्य कुम्भकर्मककृतिकर्तृत्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वात् । न च कृतिकर्तृत्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वं तु कारीत्यत्रापि वर्तते इति तस्मादपि कदाचिड् ढक् स्यादिति वाच्यम् । वृक्षप्रचलनन्यायेन समुदायादेव प्रवृत्तेरिति चेन्न । स्त्रीवाचकाड् ढगित्यर्थे दरच्छब्दाद् "द्व्यञ्मगध"इत्यणि तस्य स्त्रीत्वे वाच्ये "अतश्च"इति लुकि निष्पन्नाद्दरच्छब्दादपत्यार्थे ढकि दारद इत्यस्यासिद्धेः । न च तस्य शिवादिगणे पाठकरणेनेष्टसिद्धिरिति वाच्यम् । तादृशानामिडबिड्–उशिज्–पृथ्–इत्येषां पाठकल्पने गौरवात् । पैतृष्वसेय इत्यत्र तु "ढकि लोपः"इति ज्ञापकादेव ढक् । वैमात्रेय इत्यत्र विमातृशब्दस्य शुभ्रादिगणे पाठादेव ढक् । अत एव स्त्रीभ्यो ढगिति सूत्रे भाष्ये स्त्रीप्रत्ययान्ताड् ढगित्येवार्थः सिद्धान्तत्वेनोक्तः । कव्यन्धकेतिसूत्रे जम्बूशब्दाड् ढगापादनं तु एकदेशिमताभिप्रायेणेति न तद्विरोधः ।

तदादितदन्तविधेः प्रयोजनं गार्ग्यायणः परमगार्ग्यायणः इति उक्तं भाष्ये । तत्रैकदेशात्प्रत्ययाभावे परमश्चासौ गार्ग्यायण इति तदर्थो वाच्यः । तथा सति नैव परमगार्ग्यात्प्रसक्तिरिति तत्प्रयोजनत्वोक्तिरसङ्गता स्यात् । मम तु परमगार्ग्यस्यापत्यमित्यर्थे ऽप्युक्तन्यायाद् गार्ग्यशब्दादेव प्रत्ययो न तु परमगार्ग्यात्, तथा सति 'पारमगार्ग्यायण इति स्यात्' इति तत्प्रयोजनत्वोक्तिसङ्गतिः । कैयटो ऽपि 'तदादिनियमावश्यकत्वप्रदर्शनाय परमगार्ग्यायण इत्युपन्यासः' इत्युक्तवान् । यत्तु सर्वादिसूत्रे भाष्ये "अनुपसर्जनादित्येष योगः प्रत्याख्यायते" इत्युक्तं, तत्तत्र वार्त्तिककृता तस्य प्रत्याख्यानात्तदभिप्रायकमिति भाष्यप्रदीपोद्द्योते विस्तरः ।

टिड्ढा ॥ ठेत्येव सिद्धे ठक्ठञोरुपादानं ठन्ठिठपोर्व्यावृत्त्यर्थम् । अदन्तमिति । प्रत्यासत्त्या टिदाद्यवयवाकारान्तमित्यर्थः । तेन पञ्चाश्वेत्यादौ ठन्निमित्तोऽपि न ङीप् । कुरुचरीति । कुरुषु चरतीत्यधिकरणे उपपदे चरेष्टः । टितो ऽप्रत्ययस्यापि सत्त्वात्प्रत्ययग्रहणपरिभाषाया अप्रवृत्त्याऽत्र टिदन्तत्वं कुरुचरशब्दस्येति बोद्धव्यम् ।

वक्ष्यमाणेति । वचेर्लृटः शानच् । टित्त्वादिति । स्थानिवत्त्वेनेत्यादिः । "न ल्यपि" इति लिङ्गाट्टित्त्वादेरशास्त्रीयस्याप्यतिदेशः, अनुबन्धकार्ये "अनल्विधौ" इतिनिषेधाप्रवृत्तिश्चेति भावः । ङित्त्वेनेति । लिङ्गादेशानां स्थानिवत्त्वेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव । तद्धि अवयवे ऽचरितार्थतया समुदायोपकारकम् । न चेदं ङित्त्वं 'स्तुयात्' इत्यादावनिग्लक्षणवृद्धिनिषेधार्थमिति

---

न च कुम्भकारीशब्दाड् ढक् दुर्लभः । तस्य शिल्पिवाचकत्वेन "सेनान्तलक्षणकारिभ्यश्च" इति ण्यप्रत्ययेन बाधादिति वाच्यम् । हिंसार्थकात्कृधातोराणि घटस्फोटकवाचकस्य, यौगिकस्यान्यार्थकस्यापि कुम्भकारशब्दस्य सत्त्वात् ।

ननु प्रत्ययार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकतापर्याप्त्यधिकरणीभूतप्रातिपदिकात् प्रत्ययो भवति । अत एव राजपुरुषस्यापत्यमित्यर्थे राजपौरुषिरित्यनिष्टरूपापत्तिर्न । अत एव च सूत्रनडस्यापत्यमित्यर्थे सौत्रनाडिरित्येव । तथेहापि अपत्यार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकतापर्याप्त्यधिकरणीभूतप्रातिपदिकं कुम्भकारीति न तु कारिति, तत्कथं तस्माद् ढगापादनं भाष्यादाविति चेन्नैवम् । तस्य नियमस्य प्रत्ययनिष्ठोद्देश्यतावच्छेदकताकप्रत्ययनिष्ठविधेयताककार्यातिरिक्ते एव प्रवृत्तेः । "स्त्रीभ्यो ढक्" इत्यत्र स्त्रीप्रत्ययनिष्ठोद्देश्यतावच्छेदकता ढक्प्रत्ययनिष्ठा विधेयता च वर्तते इति तन्निरूपककार्यत्वस्यैव सत्त्वान्न तन्नियमप्रवृत्तिः । अत एव

वाच्यम् । विनिगमनाविरहात् । उत औदिति वक्तव्ये वृद्धिग्रहणेन स्थानिनिर्देशेऽपीक्परिभाषोपस्थित्या तस्या अपि इग्लक्षणत्वाच्च ।

नन्वेवं 'ब्रूतात्'इत्यत्र ब्रुव ईट् प्राप्नोति । लाश्रयानुबन्धकार्यस्य तदादेशेष्वभावे ऽपि तिपः पित्त्वस्य तदादेशे तातङ्यभावकल्पने माना-भावादत आह—इन इति । क्वचिदिति । लक्ष्यानुरोधेन च व्यवस्था ।

परे तु यासुटो ङित्त्वं न ज्ञापकम् । "पिदर्थं ङित्त्वम्"इति भाष्यात् । "सार्वधातुकम्"इति सूत्रे ऽपिदित्यावर्त्य प्रसज्यप्रतिषेधसिद्धेन "ङिच्च पिन्न, पिच्च ङिन्न"इत्यनेन "हलः श्नः" इतिसूत्रभाष्योक्तेन पित्सु ङित्त्वाप्रसक्तेः । शानचः शित्त्वमपि तत्सूत्रे एव भाष्ये प्रत्याख्यातम् । हेर-पित्त्वस्य तातङो ङित्त्वस्य वैयर्थ्यापत्तिश्च ज्ञापकत्वे दूषणमप्युक्तं भाष्ये । तस्माद्वक्ष्यमाणेत्यादौ सत्यभिधाने ऽजादिपाठाट्टाप् ।

यत्तु "क्ङिति च"इतिसूत्रभाष्ये यासुटो ङिद्वचनस्य न ङिदादेशानां

---

परमगार्ग्यस्यापत्यमिति विग्रहे परमगार्ग्यायण इत्यस्य सिद्धिः । अन्यथा गार्ग्यें-तियञन्ततदादेः तादृशप्रकारताप्रयोजकतापर्याप्त्यभावेन स न स्यादित्यर्थः । अत एव च शिवभागवत इत्यस्य अयःशूलेतिसूत्रभाष्ये प्रयुक्तस्य सिद्धिः । तदर्थं "भक्तिः" इति सूत्रे मत्वन्तभगवत इत्यस्य पाठकल्पनात् ।

लिङ्गविशिष्टपरिभाषया च देवीभागवत इत्यस्य सिद्धिः । ग्रन्थेऽपि प्रतिपादकत्वेन सेवकत्वोपचारात् तत्प्रयोगः साधुः । एतेन ग्रन्थे "देवीभागव-त" इति प्रयोगमशुद्धं वदन्तः परास्ताः ।

ननु कारीतिङीपोऽनुपसर्जनस्त्रीप्रत्ययत्वात् "स्त्रीप्रत्यये चानुपसर्जनेन" इति परिभाषया तदादिनियमनिषेधाद् वृक्षप्रचलनन्यायेन कुम्भकारीत्यस्मादेव ढकि कौम्भकारेयसिद्ध्या द्वितीयतदन्तविधिस्वीकरणं व्यर्थम् । नच विशिष्टे तदादित्वारोपेऽपि ङीपः विशिष्टप्रकृतिकत्वाभावेन विशिष्टवृत्तिप्रातिपदि-कत्वादेः तदन्तेऽनारोपान्न ततो ढकः सिद्धिरिति वाच्यम् । परमगार्ग्यायण इत्यादाविवार्थवत्सूत्रेण प्रातिपदिकत्वे ढकः सिद्धेरिति चेन्न ।

कुम्भकारीव मनुष्यः कुम्भकारीत्यत्र इवार्थे कनि तस्य "लुम्म-नुष्ये"इति लुपि स्त्रीप्रत्ययस्यान्यपदार्थनिष्ठविशेष्यतानिरूपितप्रकारतानिरूपि-तस्त्रीत्वनिष्ठावच्छेदकताप्रयोजकत्वरूपोपसर्जनत्वस्य सत्त्वेनोपसर्जनस्त्रीप्रत्यये तदादिनियमनिषेधाभावेन कारीत्यस्माड् ढकि कुम्भकारेय इति स्यात् तद्व्या-वृत्त्यर्थं द्वितीयतदन्तविधेरावश्यकत्वात् । न च द्वितीयतदन्तविधिलाभे कुम्भ-कारेत्यस्मान्ङीप्यपि "स्त्रीप्रत्यये चानुपसर्जनेन"इति परिभाषया अतदादावपि कारीत्यत्र तदादित्वस्यारोपात्कुम्भकारेय इति स्यादेवेति वाच्यम् । अनुपसर्जना-धिकारसामर्थ्यात्तदादिघटिते एव तदादित्वस्यारोपो न तु तद्घटके इति-

ङित्त्वमित्यर्थे ज्ञापकतोक्ता, तत्तु वार्त्तिकमतम् । किञ्च पिन्नित्यादेस्तेनानुक्तेः । यदपि "गाङ् लिटि" इति सूत्रे गाङो ङित्त्वं सानुबन्धकादेशे ऽनुबन्धास्थानिवत्त्वस्य ज्ञापकमुक्तं वार्त्तिककृता, तदपि 'प्रयोजनाभावात्' इत्यादिना भाष्ये दूषितमित्याहुः ।

निरनुबन्धकस्य स्त्रियां वृत्तेरसम्भवात्सानुबन्धकस्य ढको ग्रहणमित्याह—सौपर्णेयीति । सुपर्णीशब्दादपत्ये "स्त्रीभ्यो ढक्" इति ढक् । स्पष्टश्चेदं भाष्ये* । ऐन्द्रीति । साऽस्य देवता" इत्यण् । ऊरुदघ्नीत्यादि* । प्रमाणे द्वयसज्दघ्नञ्मात्रचः । संख्याया अवयवे तयप् । मात्रजिति मात्रशब्दारभ्यायचश्चकारेण प्रत्याहार इति* 'उभयी' इति सिद्धिः ।

---

कल्पनेन वृक्षप्रचलनन्यायेन वा विशिष्टादेवोत्पत्तेः । केचित्तु वृक्षप्रचलनन्यायस्य प्रकृते न विषयः । समुदायस्य कार्यसम्बन्धे यत्रावयवस्य कार्यसम्बन्धो नान्तरीयको भवति, अवयवस्य कार्यसम्बन्धे च समुदायस्य कार्यसम्बन्धो नान्तरीयको न भवति तत्रैव तन्न्यायविषयत्वात् । प्रकृते च ढग्रूपकार्यस्य अवयवेन कारीशब्देन अव्यवहितोत्तरत्वसम्बन्धे समुदायेन कुम्भकारीशब्देनापि तत्सम्बन्धस्य जायमानत्वात्, ढक्प्रयोज्यादिवृद्ध्यादिरूपकार्यस्य च समुदायेन कुम्भकारीशब्देन सम्बन्धे अवयवेन कारीशब्देन सम्बन्धस्याजायमानत्वात् इत्याहुः—इति प्रघट्टकार्थः ।

*भाष्ये इति* । तत्र हि "ढग्रहणे सानुबन्धकस्योपसंख्यानं कर्तव्यम्, अननुबन्धकग्रहणे हि न सानुबन्धकस्य ग्रहणम्" इत्याशङ्क्य "न कर्तव्यम्—अननुबन्धको हि ढः स्त्रियां नास्तीति कृत्वा सानुबन्धकस्य ग्रहणं विज्ञास्यते" इति समाधाय "ननु चायमस्ति शिलाया ढ इति । नैष स्त्रियां वर्तते । अयं तर्हि सभाया यः ढश्छन्दसीति । एषोऽपि न स्त्रियां वर्तते । तत्र साधुरिति वर्तते । कथं च स्त्री नाम सभायां साध्वी स्यात्" इत्युक्तम् । अत्र कैयटः—शिलेव शिलेयम् इति नपुंसकलिङ्ग एव शिलेयशब्दः स्वभावात् । यज्ञसभायां विदुषामेव पुरुषाणां साधुत्वाधिकारात् । ननु सभायां साधुरियं ब्राह्मणपङ्क्तिः परिषद्वेति सम्भवति स्त्रियाः सभायां साधुत्वम् । एवं तर्हि छन्दसि सभेयशब्दस्यैवंविधायां स्त्रियां प्रयोगाभाव इत्याह । एतेन सभेयशब्दस्य स्वभावतः पुंस्त्वं प्रदर्शितमिति ।

*ऊरुदघ्नीत्यादीति* । ऊरुद्वयसीत्यादीति पाठः साधुः ।

*प्रत्याहार इतीति । नन्वेवं डतिप्रत्ययस्यापि प्रत्याहारे ग्रहणेन कतीत्यत्र ङीबापत्तिरिति चेन्न । अत इत्यनुवृत्तेः सत्त्वेन डत्यन्तस्यानदन्ततया तदप्राप्तेरदोषात् । नचैवं चकारेण मात्रशब्दस्याविशेषितत्वाद् "दुयामाश्रुभसिभ्यस्त्रन्" इतित्रन्नन्तमात्रशब्दादपि तदापत्तिरिति वाच्यम् । प्रमाणे

*तत्र ह्ययच् प्रत्ययान्तरम् । अत एवोभयशब्दस्य जसि सर्वनामत्वविकल्पो नेति "नवेति" इत्यत्र भाष्ये स्पष्टम् । आक्षिकीति । "तेन दीव्यति" इति ठक् । "तदस्य पण्यम्" इत्यधिकारे लवणाट्ठञ्* । यादृश्यां "त्यदादिषु दृशः" इति कञ् । इत्वरीति । "इण्नशजि" इति क्वरप् । अनुबन्धद्वयोपादानं स्पष्टार्थम् । वरञ्व्यावृत्तेरन्यतरेणापि सिद्धेः । *चौरीति । चुरा शीलमस्या इत्यर्थः ।

नञ्स्नञ् । तरुणतलुनयोः "वयस्यचरम" इति ङीपि सिद्धेऽपि गौरादिपाठात्परत्वात्प्राप्तेन ङीषा बाधाभावाय पुनरत्र ग्रहणम्* । तयोश्च स्वरे विशेषः । एतौ हि "त्रो रश्च लो वा" इत्युननन्तत्वादाद्युदात्तौ । स्त्रीपुंसाभ्यां नञ्स्नञौ । "प्रहरणम्" इत्यधिकारे शक्तियष्ट्योरीकक् । "आढ्यसुभग" इति ख्युन् ।

यञश्च ॥ "प्राचां ष्फ" इत्यत्र यञ एवानुवृत्तये योगविभागः ॥

हलस्त ॥ हल इति पञ्चमी, यस्येति सूत्राद् 'ईति' इत्यनुवर्त्तते, "सूर्यतिष्य" इत्यतो 'य उपधाया' इति च । यलोपे ऽल्लोपस्याभीयासिद्धत्वाद्यस्य ईकारपरत्वाभावाद्वचनसार्थक्यायोपधाग्रहणानुवृत्तिः । अनपत्याधिकार-

---

वर्तमानाद्विहितस्य प्रमेयार्थकस्यैव मात्रशब्दस्य प्रत्याहारघटकत्वेन समानानुपूर्वीकत्वमात्रेणार्थान्तरवाचकस्य ग्रहणे मानाभावेनादोषात् ।

ननु 'उभयी' इत्यत्र स्थानिवत्त्वेन तयबन्ततया तयब्ग्रहणेनैव सिद्धेः प्रत्याहाराश्रयणं विफलमित्यत आह—*तत्र ह्ययजिति* ।

*लवणाट्ठञिति* । ठक्ठञोर्भेदेनोपादानं ठन्निवृत्त्यर्थम् । तेनेह न । दण्डोऽस्त्यस्या इति दण्डिका । 'अत इनिठनौ' इति ठन् । अत एव ञिठान्तेऽपि न । काशिषु भवा काशिका । काश्यादिभ्यष्ठञ्ञिठौ । *चौरीतीति* । "शीलं छत्रादिभ्यो णः" इति विहितो यो णस्तस्मिन् अण्कार्यं भवति इत्येतदर्थक-'ताच्छीलिके णेऽपि' इति परिभाषया अण्णन्तत्वारोपे ङीबिति बोध्यम् । अत्र च 'कार्मस्ताच्छील्ये' इति ज्ञापकम् । तत्र हि 'अन्' इति सूत्रेणाणि परे विहितं प्रकृतिभावं बाधितुं टिलोपो निपात्यते । यदि तु णप्रत्यये अण्कार्यं न स्यात्तर्हि किं तेन । ताच्छीलिकस्यैव णप्रत्ययस्याण्कार्यज्ञापनात् 'तदस्यां प्रहरणमिति क्रीडायां ण' इति विहितस्य णस्य नाण्कार्यं, दाण्डेति । न चैवं लाघवात् छत्रादिभ्यो ऽणेव विधीयतां किं णप्रत्ययविधानेन, तस्याण्कार्यज्ञापनेन चेति वाच्यम् । ज्ञापकसिद्धस्यासार्वत्रिकतया छात्रा इत्येतत्सिद्ध्यर्थत्वात् ।

*पुनरत्र ग्रहणमिति* । उभयत्र पाठसामर्थ्यादुभयसिद्धिरिति भावः । न च बह्वादिगणमात्रे तस्य पाठेन 'बह्वादिभ्यश्च' इति ङीषो वैकल्पिकतया पक्षे

स्थादिति। अपत्याधिकारस्थभिन्नादित्यर्थः। यञ्शब्देन *व्याख्यानादपत्याधिकारस्थस्यैव ग्रहणमिति भावः।

*प्राचां ष्फ॥ यञ इति वर्त्तते, अत इति च। यञो यो ऽकार इति चार्थः। तेन वतण्डीत्यत्रोदीचां मते सावकाशं शार्ङ्गरवादिङीनं बाधित्वा आवट्यायनीत्यादाविव सर्वत्रग्रहणात्प्राचां मते प्राप्तोऽपि ष्फो न। अत्र हि "वतण्डाच्च"इति यञो 'लुक् स्त्रियाम्'इति लुक्, वर्णाश्रयत्वाच्च न प्रत्ययलक्षणम्।

षः प्र॥ "आदिर्ञिटुडवः"इति सूत्राद् आदिरित्यनुवर्त्तते। प्रत्ययस्येति किम्। षोडश। "षष उत्वम्"इत्यत्र षष्शब्दस्य निपातनादुपदेशस्थोऽयं षकारः। वस्तुत उपदेशे इत्यस्य स्वरितत्वमेव नेति पूर्वं निरूपितम्। आदिरिति तूत्तरत्रावश्यकमुपरञ्जकतयाऽत्रापि सम्बन्धितम्।

आयने॥ आयनो नस्य नेत्त्वं फिनो नित्करणात्। तत्साहचर्यादीनो ऽपि नस्य नेत्त्वम्। आदिग्रहणं किम्। ऊरुद्घ्नम्। प्रत्ययेति किम्। फक्कति, खनति। खच्घञादौ 'घिण्यतोः' 'खित्यनव्ययस्य'इत्यादिलिङ्गादित्संज्ञैव नादेशः। उणादीनां बहुलवचनान्नादेशाः।

---

'वयस्यचरमे' इति ङीपा तत्सिद्धिरिति वाच्यम्। तरुणस्य स्त्री तरुणी इत्यत्र, तरुणी सुरेत्यत्र च वयोवाचकत्वाभावेन ङीबप्राप्तेरिति दिक्।

*व्याख्यानादिति। "आपत्यग्रहणं द्वीपाद्यञः प्रतिषेधार्थम्"इतिवार्तिकमूलादित्यर्थः। वार्तिकेच आपत्यपदमपत्याधिकारस्थपरम। कञ्क्रपः अयञश्चेतिप्रश्लेषेण तस्य प्रत्याख्याने देवाद्यञञाविति प्राग्दीव्यतीयस्यापि अग्रहणात्। तदेकवाक्यतयाऽत्र पक्षेऽपि तथैवौचित्यात्।

*प्राचां ष्फ तद्धितः। अत्र तद्धितग्रहणं षित्करणसामर्थ्यादेवात्र ईकारो भविष्यतीत्याश्रित्य भाष्ये प्रत्याख्यातम्। कौरव्यमाण्डूकाभ्यांचेति सूत्रे आसुरेरुपसंख्यानम् आसुरायणी इत्युक्तम्। तेनच तद्धितग्रहणस्य यस्येतिलोपसिद्धिः प्रयोजनमिति लभ्यते। तावन्मात्रप्रयोजनत्वे प्राचां ष्फङ् इति ङिदेव कार्यं इति प्रत्याख्यानभाष्याशयः। वस्तुतस्तु षित्करणसामर्थ्यात् ङीषः सिद्धावपि ङीषः प्रातिपदिकप्रकृतिकत्वाभावेन लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वानारोपात्ततः सुबाद्यसिद्धिः। स्वाप्रकृतिकलिङ्गबोधकप्रत्ययान्ते स्ववृत्तिधर्मारोपे तु परमकुम्भी-कुम्भपुत्राशब्दादावपि परतः सत्वापत्तिः। षित्करणसामर्थ्यादेवात्र ईकारो भविष्यतीतिभाष्योक्त्या च स्त्रीप्रत्यये कर्तव्ये लिङ्गविशिष्टपरिभाषायाः प्रवृत्त्यभावो व्यज्यते। तेन भवतीमतिक्रान्ताऽतिभवतिरित्यत्रोगितश्चेति ङीप्, धीवरीमतिक्रान्ताऽतिधीवरिरित्यत्र वनोर चेति रादेशसन्नियोगशिष्टो ङीप्

*घचश्चित्त्वसामर्थ्यादेते प्रत्ययसम्बन्धयादेशा उपदेशसन्नियोगशिष्टकार्यादपि पूर्वमेव। तेनान्तोदात्तत्वाय चित्त्वं सफलम्। अन्यथाऽऽद्युदात्तत्वेनैव सिद्धौ तद्वैयर्थ्यं स्पष्टमेव। ननु स्त्रियामेव ष्फविधानाद् 'उक्तार्थानामप्रयोगः' इति ङीष् न स्यादत आह—षित्त्वसामर्थ्यादिति।

ष्फेणोक्तेऽपीति। द्योतितेऽपीत्यर्थः। 'द्विर्बद्धं सुबद्धं भवति' इति न्यायेन क्वचित्समुच्चयस्य दृष्टत्वात्। षित्त्वमपि तदाश्रयणे ज्ञापकम्।

सर्वत्र॥ सर्वेषां मते इत्यर्थस्तदाह—नित्यमिति। प्राचामित्यस्य निवृत्त्या नित्यत्वे सिद्धेऽपि "प्राचां ष्फ" इत्यस्य सर्वत्रग्रहणापकर्षेण बाधकविषये ऽपि प्रवृत्त्यर्थं *तत्। तेन 'आवट्यायनी' इत्यत्र "आवट्याच्च" इति चापं बाधित्वा प्राचां मते ष्फ एव। अवटो गर्गादिः। चाप्तु उदीचां मते प्राप्तङीब्बाधनेन चरितार्थः। सर्वत्रग्रहणात्तद्बाधकत्वमेव चापो न तु अनन्तरष्फबाधकत्वम्। चापि कृते तु न ष्फप्राप्तिरत इत्यधिकारात्। लोहितादिर्गर्गाद्यन्तर्गणः। यद्यपि तत्र कतशकलकण्वेति पाठात् शकलस्य लोहितादिकण्वादिबहिर्भूतत्वात् ष्फाणौ न ततः प्राप्नुतस्तथापि कतन्तेभ्यः कण्वादिभ्य इत्युभयत्रापि षष्ठीतत्पुरुषबहुव्रीह्योरेकशेषेण न दोषः। कतन्तशब्दे शकन्ध्वादित्वात्पररूपम्। तेन शाकलायनी शाकल्यस्य छात्राः शाकला इति च सिद्धम्। टाप्ङीषोरिति। कौरव्यशब्दे योपधप्रतिषेधाट्टाप्, माण्डूकशब्दे जातित्वान् ङीषिति भावः। टाब्ङीपोरपवाद इति पाठस्तु प्रामादिकः।

वयसि॥ प्राणिनां कालकृतावस्थाविशेषो वयः। वयसीत्यस्य वयोरूपे प्रवृत्तिनिमित्ते इत्यर्थस्तदाह—प्रथमवयोवाचिन इति। तेनोत्तानशयेत्यादौ न। प्रकरणादिना वयःप्रतीतावपि नायं तद्वाचकः। याऽपि व्याध्यादिवशादुत्ताना शेते तस्या अपि प्रतीतेः। द्विवर्षेत्यादिरपि न वयोवाची। शालादावपि प्रयोगात्। कौमारयौवनवृद्धत्वभे-

---

च नेति। एतेन लिङ्गविशिष्टपरिभाषया ष्फान्तस्य प्रातिपदिकत्वात् तत्प्रकृतिकङीषन्तेऽपि प्रातिपदिकत्वारोपात् सुबादिसिद्धिरित्यपास्तम्। अतएव भाष्ये तद्धितग्रहणं न कर्तव्यमिति नोपसंहृतम् इत्याहुः।

*घच इति। क्षेत्रियच् परक्षेत्रे चिकित्स्य इतिनिपातनानुमितघच इत्यर्थः। *तत्-सर्वत्रग्रहणम्।

दात् त्रीणि वयांसि, आयुषश्चतुर्भिर्भागैश्चत्वारि वा । त्र्यनीका । समाहारे "तद्धितार्थ" इति द्विगुः । अकारान्तोत्तरपदत्वात् स्त्रीत्वम् ।

*अपरिमाण ॥ अत्र परिमाणशब्देन "परिमाणन्तु सर्वतः" इति पारिभाषिकमेव गृह्यते । "सुवर्णबिस्तौ हेम्नोऽक्षे कम्बल्यमूर्णापलशतम्" इति कोशबलेनोन्मानभूतबिस्तकम्बल्यग्रहणन्तु उन्मानस्य चेद्बिस्तकम्बल्ययोरेवेति नियमार्थम् । तेन द्विनिष्की सिद्धा । द्वेवर्षे भूता, द्वाभ्यां शताभ्यां क्रीतेत्यर्थे द्विवर्षा, द्विशता, तिर्यङ्माने द्विहस्ता भित्तिरित्यादौ च निषेधः सिद्धः । "काण्डान्तात्" इति तु क्षेत्रे एवेति नियमार्थम् । तेन द्विकाण्डी रज्जुरित्यत्र न । द्वौ बिस्तौ पचतीति । पचेर्द्वैभात्रानुकूलो व्यापारोऽप्यर्थः । अत्रोन्मानत्वाट्ठको लुक् । "आचितः शाकटो भारः" इत्युक्तेराचितः परिमाणमित्येके । "आचितो दश भाराः स्युः" इत्युक्तेरुन्मानमेतदिति एतदपि नियमार्थमित्यन्ये ।

---

*अपरिमाण* । अत्र परिमाणशब्देनाऽऽरोहतः परिणाहतश्च येन काष्ठादिनिर्मितेन मीयते तत् प्रस्थादि गृह्यते । "परिमाणन्तु सर्वत" इति आर्हादितिसूत्रभाष्ये परिभाषणात् । न चैवमुन्माने द्विनिष्कीति न सिद्ध्येदिति वाच्यम् । 'सुवर्णबिस्तौ हेम्नोऽक्षे, कम्बल्यमूर्णापलशतम्' इतिकोशबलेनोन्मानभूतबिस्तकम्बल्यग्रहणस्य उन्मानस्य चेन्निषेधो बिस्तकम्बल्ययोरेवेतिनियमार्थत्वात् । अत एव "वयसि प्रथमे" इतिसूत्रभाष्ये प्रयुक्ते द्वे वर्षे भूता द्विवर्षेत्यादौ, द्वाभ्यां शताभ्यां क्रीतेत्यर्थे आर्हादितिसूत्रभाष्ये प्रयुक्ते द्विशता इत्यादौ, तिर्यङ्माने द्विहस्ता भित्तिरित्यादौ च निषेधः सिद्धः । द्विकाण्डी रज्जुरित्यत्र तु "काण्डान्तात्क्षेत्रे" इत्यस्य क्षेत्रे एवेति नियमार्थत्वान्न निषेध इति नागेशभट्टेरुक्तम् । तत्र भाष्यविरोधत्रिकमापाद्यते । एकः प्रकृतसूत्रस्थः । द्वितीयः "कम्बलाच्च संज्ञायाम्" इतिसूत्रस्थः । तृतीयः "संख्यायाः संवत्सरसंख्यस्य च" इतिसूत्रस्थः । तत्राद्ये "इमौ द्वौ प्रतिषेधावुच्येते । तत्रैकः शक्योऽवक्तुम् । कथम्? एवं वक्ष्यामि परिमाणान्तात्तद्धितलुकि ङीब् भवतीति । "द्विगोः" इत्येव सिद्धे तन्नियमार्थं भविष्यति । परिमाणान्तादेव तद्धितलुकि नान्यत इति । विपरीतनियमस्तु न, लक्ष्यानुसारित्वाच्छास्त्रस्य । ततो बिस्ताचितकम्बल्येभ्यो न । तद्धितलुकीत्येव" इत्युक्तम् । यद्यत्र परिमाणपदेन "परिमाणन्तु सर्वत" इति पारिभाषिकस्य ग्रहणं स्यात् तदा बिस्तादीनां परिमाणत्वाभावेन परिमाणान्तादेवेति नियमादेव ङीपो व्यावृत्तेः सिद्धौ बिस्ताचितेति द्वितीयो योगो विफल एव स्यात् ।

द्वितीये "अयं योगः शक्योऽवक्तुम् । कथं कम्बल्यमिति ? । निपातना-

देतत्सिद्धम् । किं निपातनम् ? । अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि इति । इदन्तर्हि प्रयोजनं, संज्ञायामिति वक्ष्यामि, इह माभूत् कम्बलीया ऊर्णा इति । एतदपि नास्ति प्रयोजनं, परिमाणपर्युदासेन पर्युदासे प्राप्ते कम्बल्यग्रहणं तत्र क्रियते परिमाणार्थं, परिमाणञ्च संज्ञैव"इत्युक्तम् । यदि चात्र परिमाणपदेन पारिभाषिकस्यैव ग्रहणम्, तदा कम्बल्ये परिमाणत्वाभावेन परिमाणपर्युदासस्य प्राप्त्यभावात्परिमाणपर्युदासेन पर्युदासे प्राप्ते इत्युक्तिरसङ्गतैव स्यात् ।

तृतीये "परिमाणान्तस्यासंज्ञाशाणयोरिति सिद्धे संवत्सरग्रहणमनर्थकम् । एवन्तर्हि ज्ञापयत्याचार्यो ऽन्यत्र कालपरिमाणानां परिमाणग्रहणेन ग्रहणं नेति । किं प्रयोजनम् ? । अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि । द्विवर्षा त्रिवर्षा । परिमाणपर्युदासेन पर्युदासो न भवति" इत्युक्तम् । पारिभाषिकपरिमाणस्यैव परिमाणपदेन ग्रहणे तु उक्तोदाहरणे प्राप्त्यभावात्संवत्सरग्रहणानर्थक्यशङ्कायाः, कालपरिमाणानां परिमाणग्रहणेन ग्रहणं नेति ज्ञापनफलस्यचासङ्गतिः स्पष्टैवेति ।

अत्र केचित् । अत्र सूत्रकृद्भाष्यकृतोर्मतभेदः । सूत्रकृता पारिभाषिकपरिमाणमित्युपगम्यैको योगः, नञ्द्वयं, कम्बलाच्चेति सूत्राणि प्रणीतानि । तदेव नागेशभट्टैः सूत्रकृन्मतं प्रतिपादितम् । भाष्यकृता च परिमाणमात्रग्रहणं स्वीकृत्य नञ्द्वयखण्डनं, योगविभागः, कम्बलाच्चेत्यस्य प्रत्याख्यानं च कृतम् । "संख्यायाः"इतिसूत्रस्थं भाष्यञ्च भाष्यकृता स्वमतेनोक्तमिति न भाष्यविरोधत्रिकम् इत्याहुः ।

परन्त्वेवं स्वीकारे द्विहस्ता भित्तिरित्यत्र सूत्रकारभाष्यकृतोः फलभेद आपद्येत । तथा हि—सूत्रकारमते उक्तरीत्या द्विहस्ता भित्तिरिति, भाष्यकृन्मते तु ङीप् स्यात् । तस्मान्नायं पक्षो युक्तः । यद्यप्यत्र भाष्यप्रामाण्यादनभिधानं वक्तुं शक्यं, तथापि सत्यन्यस्मिन्नुपाये तदाश्रयणमयुक्तमित्यन्यो विरोधपरिहारोपायो ऽत्र प्रदर्श्यते ।

प्रकृतसूत्रे भाष्यकृन्मतेऽपि पारिभाषिकपरिमाणस्यैव ग्रहणं, ततश्च द्वितीयो योगो व्यर्थः सन् "उन्मानातिरिक्तान्ताच्चेत् परिमाणान्तादेव"इति पूर्वयोगस्य नियमाकारं कल्पयति । ततश्च बिस्ताद्यन्ते उन्मानातिरिक्तान्तत्वाभावान्नियमेन व्यावृत्तेरसिद्धौ ङीब्वारणार्थो द्वितीयो योगः । विशेषनियमाकारकल्पनफलंतु द्विनिष्कीत्यादौ ङीपोऽव्यावृत्तिः । एवंच न प्रकृतसूत्रस्थभाष्यविरोधः ।

द्वितीये परिमाणपर्युदासेन पर्युदासे प्राप्ते इत्यस्य "तेन पर्युदासेन द्विनिष्कीत्यादावपि निषेधरूपे विधेयङीब्रूपकार्यस्य पर्युदासे प्राप्ते "उन्मानस्य चेद् बिस्तकम्बल्ययोरेव"इति परिमाणविशेषे नियमाय बिस्तकम्बल्यग्रहणम् । कम्बल्यपदस्य कम्बलहितोर्णादिसामान्यार्थकत्वेतु अपरिमाणान्तत्वादेव निषेधसिद्धेः, उक्तनियमस्य चासंभवात्कम्बल्यग्रहणमनर्थकं स्यात्" इत्यर्थ इति न तद्भाष्यविरोधः ।

तृतीयभाष्यविरोधपरिहारश्चैवम्—तत्र तावत् परिमाणान्तस्यासंज्ञा-

शाणयोः इति सूत्रे "माषैश्चतुर्भिः शाणः स्यात्" इति परिभाषितोन्मानभूतशाणपर्युदासात् न सर्वतोमानरूपार्थस्य ग्रहणं, किंतु परिच्छेदकमात्रस्येति संवत्सरस्यापि परिच्छेदकत्वात् परिमाणग्रहणेन ग्रहणं स्यादिति तदानर्थक्यशङ्कोपपद्यते । संख्यायाश्च आर्हादिति सूत्रे संख्याग्रहणात् परिमाणग्रहणेन अग्रहणबोधनात् न संख्याग्रहणानर्थक्यशङ्केति न न्यूनत्वं शङ्कनीयम् । अग्रेच तेन कालपरिमाणानां वृद्धिर्नेति ज्ञापयित्वा द्वैसमिकः त्रैसमिकः इति फलमभिहितम्।शाणपर्युदासात् परिमाणग्रहणेन उन्मान-प्रमाण-परिमाणानां ग्रहणेऽपि संख्याया इव कालपरिमाणस्यापि ग्रहणं न भवतीति तद्भावः । अपर आहेत्यादिना च न केवलं परिमाणान्तस्येति वृद्धिविधायके एव कालपरिमाणस्य परिमाणग्रहणेन ग्रहणं न भवति, किन्तु सर्वत्रैवास्मिन् शास्त्रे कालपरिमाणस्य परिमाणग्रहणेन ग्रहणं न भवतीति । तेन द्विवर्षा त्रिवर्षा इत्यादौ अपरिमाणेति परिमाणपर्युदासो न भवति इत्युक्तम् । तस्य च परिच्छेदकविशेषग्रहणज्ञापनद्वारेत्यर्थः । तेन च आर्हादितिसूत्रस्थेन सर्वतोमानार्थग्रहणप्रतिपादकभाष्येण न विरोधः । परिमाणान्तस्येति सूत्रे तु परिच्छेदकविशेषग्रहणज्ञापनेन कालपरिमाणाग्रहणे ऽपि परिमाणप्रमाणोन्मानानां त्रयाणामपि ग्रहणम्, शाणपर्युदासात् । एवं च न कश्चिद्विरोध इति । तदस्य परिमाणमित्यधिकारे "संख्यायाः संज्ञा"इति सूत्रे तु संख्यासामानाधिकरण्यानुपपत्त्या परिच्छेदकमात्रग्रहणम्, क्रीतवत्परिमाणादित्यत्र च संख्याया अपि ग्रहणं कर्तव्यं शतस्य विकार इत्याद्यर्थे शत्य इत्यादीनां सिद्ध्यर्थमिति आर्हादिति सूत्रे भाष्ये एव स्पष्टम् ।

परेतु आर्हादितिसूत्रभाष्ये संख्यायाः परिमाणबहिर्भावकथनात् न संख्यायाः परिमाणग्रहणेन ग्रहणम्। तेन द्विशतेत्यादौ अपरिमाणान्तत्वान्निषेधसिद्धिरिति तत्रैव भाष्ये स्पष्टम्। कालपरिमाणस्य च परिमाणग्रहणेन ग्रहणं न, तेन द्विवर्षा त्रिवर्षेत्यादौ अपरिमाणान्तत्वान्निषेधसिद्धिरिति "संख्यायाः संवत्सर"इतिसूत्रभाष्ये स्पष्टम् । आर्हादितिसूत्रभाष्ये प्रसङ्गात् उन्मानादीनां त्रयाणां वैलक्षण्योपपादनेऽपि परिमाणग्रहणेन प्रमाणोन्मानयोरग्रहणमित्यनुक्तेः, संख्यायास्तद्ग्रहणेनाग्रहणमुक्त्वा तस्यैव द्विशतेत्यादौ अपरिमाणेतिनिषेधप्रवृत्तिरूपफलोक्तेश्च परिमाणपदेन उन्मान-प्रमाण-परिमाणानां त्रयाणामपि ग्रहणम। अत एव "असमासे निष्कादिभ्यः"इति सूत्रस्थम् असमासग्रहणस्य तदन्तविधिज्ञापकतापरं भाष्यं सङ्गच्छते । सर्वतोमानमात्रस्य आर्हादिति सूत्रे परिमाणपदेन ग्रहणे तु उन्मानभूतनिष्कस्य अपरिमाणत्वात् नैष्किकं, परमनैष्किकमित्युभयत्रापि "आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्"इत्यनेन ठकः प्राप्तौ निष्काच्चेत् असमासे एवेतिनियमार्थतया असमासग्रहणस्य चारितार्थ्ये तदन्तविधिज्ञापकत्वासङ्गतिः । कैयटोऽपि तत्र "निष्कशब्दस्य परिमाणवाचित्वात् पूर्वेणाप्राप्तोऽनेन ठग्विधीयते"

प्रमाणे इति । षोडशहस्तप्रमाणदण्डवाचककाण्डशब्दस्याऽऽयाममात्रपरिच्छेदकत्वेन प्रमाणत्वमिति भावः ।

पुरुषात्प्रमाणे ॥ पुरुषस्योर्ध्वाधरदिगवस्थितवस्तुमात्रपरिच्छेदकत्वेनोन्मानत्वाद् उन्मानस्य चेद् विस्तादेरेवेति नियमान्निषेधाप्राप्त्या नित्यं ङीपि प्राप्ते विकल्पार्थमिदम् । अत्र प्रमाणशब्दः परिच्छेदकमात्रपरो न त्वायामपरिच्छेदकवाची । अत एव तस्य पुरुषविशेषणता नासङ्गता । जातिवचनस्यापि पुरुषशब्दस्य "पञ्चारत्निः पुरुषः" इति शुल्बसूत्रादत्र प्रमाणे इति विशेषणाल्लोकव्यवहाराच्च परिच्छेदकवाचित्वमपि । द्विपुरुषीति । द्वौ पुरुषौ प्रमाणमस्या इत्यर्थे "तदस्य परिमाणम्"इति प्रत्ययस्य 'अद्ध्यर्द्ध'इति लुकि उदाहरणम् । तत्र हि परिमाणशब्देन *उत्तरसूत्रानुरोधात्परिच्छेदकमात्रस्य ग्रहणमिति सिद्धान्तः ।

ऊधसो ॥ समासान्तोऽयम् । तत्र स्त्रियामित्युपसंख्यानादाह—स्त्रियामिति । "बहुव्रीहौ सक्थ्यक्ष्णोः"इत्यतो बहुव्रीहावित्यनुवर्त्तते । ङित्त्वाच्चास्याऽऽदेशत्वम् । डाब्ङीब्निषेधेष्विति । समासान्तानामलौकिके वाक्ये एव प्रवृत्त्या पूर्वमनङ्येषां प्राप्तिः । "अन उपधालोपिन" इत्यत्रास्यानुवृत्त्या ङीपो ऽपि बाधः । एतेन मध्येऽपवादन्यायाड्डाब्निषेधयोरिदं बाधकमित्यपास्तमिति भावः । ङीषिति । ङीपि तु कुण्डोधन्शब्दे पूर्वपदप्रकृतिस्वरेण धकाराकारस्यानुदात्तत्वादुदात्तनिवृत्तिस्वराप्राप्त्याऽन्तोदात्तत्वन्न सिद्ध्येत् । कुण्डमिवोधो यस्या इति विग्रहः । बहुव्रीहेः किम् । ऊधः प्राप्ता प्राप्तोधाः "प्राप्तापन्ने च"इति समासः । अव्ययग्रहणाननुवृत्तेरिति । अस्वरितत्वादिति भावः । निषेधावपीति । अपिना "अन उपधा"इति ङीप् । अन्ग्रहणे ऽनर्थकस्यापि ग्रहणात् । द्विहायनी बालेति । "द्विहायनी द्विवर्षा गौः"इति प्रायोवाद इत्येके ।

---

इत्याह । तत्र परिमाणोन्मानयोरेव ग्रहणमिति तु न युक्तम् । विनिगमनाविरहात् । अत एव च विस्तकम्बल्यग्रहणं चरितार्थम् । तस्य, काण्डान्तात्क्षेत्रे इत्यस्य च नियामकत्वकल्पनं तु "विधिनियमसम्भवे विधिरेव ज्यायान्"इतिपरिभाषाऽननुगृहीतं गौरवग्रस्तं च । तस्मात् तिर्यङ्माने द्विहस्ती भित्तिरित्येव । द्विहस्तेति तु उत्तरपदलोपिसमासे अर्शआद्यचा कथंचित्साधनीयम् इत्याहुः । *उत्तरसूत्रेति । "संख्यायाः संज्ञा"इतिसूत्रस्थसंख्यासामानाधिकरण्यानुरोधादित्यर्थः ॥

बालेत्यस्य गौरित्यर्थ इत्यन्ये ।

नित्यं सञ्ज्ञा । ननु सञ्ज्ञाशब्दा नियतानुपूर्वीका अनादयः, छन्दसि च दृष्टस्यैव विधानमिति ङीबभावविशिष्टस्य तत्र प्रयोगासम्भवाद् "अन उपधा"इत्येव सिद्धे इदं व्यर्थमिति चेदुत्तरार्थत्वात् । योगविभागस्तु व्यर्थ एव । तद् ध्वनयन् लक्षणान्तरसिद्धमुदाहरति-वेदे पञ्चदाम्नीति । क्व चित्तु शतमूर्ध्नीति पाठः ।

केवलमामक ॥ अस्मच्छब्दादाणि "तवकममकावेकवचने" इतिममकादेशः । भागशब्दात्पुंलिङ्गात्स्वार्थे ऽभिधेये स्वार्थिकेषु लिङ्गातिवृत्तेरपि सत्त्वात्स्त्रीत्वम् । पापशब्दो ऽर्शआद्यचा तद्वति वर्त्तमानः स्त्रियाम् । अपरः पवर्गमध्यो घृतादित्वादन्तोदात्तः । 'उतापरं यक्षिदेवान्' इत्यादौ 'उतापरीभ्यो मघवा'इत्यादौ चान्तोदात्तपाठात् । पूर्वमनयन्नापरामित्यादौ पठ्यमानमाद्युदात्तत्वमपि वृषादित्वात् । अपराः पूर्वामभ्येतीत्यादावजादिपाठाट्टाबपि । आर्येण कृतेति प्राक् सुबुत्पत्तेः समासे ऽदन्तत्वम् । भेषजशब्दो ऽव्युत्पन्न औषधे रूढः । भिषज इदमित्यणि भैषजशब्दो ऽपि तत्र । सुमङ्गलीरियं वधूरिति तु मत्वर्थीये ईप्रत्यये बोद्ध्यम् ।

प्रकृतिभागाविति । नुक्सन्नियोगेनेति भावः* । मतुबिति । वत्वन्तु "मादुपधाया" इति सिद्धम् ।

यज्ञेन संबन्ध इति । स्त्रिया इत्यर्थः । संयोगपदं संबन्धोपलक्षणम् । संबन्धश्च यज्ञफलप्रतियोगिकैश्वर्यवत्त्वं, तदाह—तत्कर्तृकेति ।

विभाषा ॥ सहशब्दो विद्यमानवाची, पूर्वशब्दो ऽवयववाची, व्याख्यानात् । तत्र केवलपतिशब्दस्य विद्यमानपूर्वावयवत्वासम्भवादव्यभिचाराच्च पतिशब्देन तदन्तं गृह्यते इत्याह-पतिशब्दान्तस्येत्यादि । न पत्युरिति । सपूर्वस्येत्यनेन पत्यन्तस्य गृह्यमाणत्वादिति भावः । बहवो वृषलपतयो यस्या इति कर्मधारयोत्तरपदबहुव्रीहौ वारणायेहार्थो ऽप्यनुपसर्जनपदसम्बन्ध*इत्यन्ये । बहुव्रीहावित्युपसर्जनोपलक्षणम् । तेन पतिमतिक्रान्ता ऽतिपत्नीत्यपि । व्यस्ते इति । "विभाषा सपूर्वस्य"इत्यत्र य-

---

*नुक्सन्नियोगेनेति । "अन्तर्वत्पतिवत गर्भभर्तृसंयोगे" इति वार्त्तिकात् गर्भिण्यां, जीवद्भर्तृकायामिति च लभ्यते इति बोध्यम् ।

* इत्यन्ये इति । केचित्तु "सिद्धं तु पत्युः प्रातिपदिकविशेषणत्वात्"

ज्ञसंयोग इति न सम्बद्ध्यते, भाष्ये "कथं तुषजकस्य पत्नी" इति व्यस्ते एव प्रश्नात् । वृषलत्वेन यज्ञसंयोगाभावात्पूर्वेणाप्राप्तेः, सपूर्वत्वाभावाच्चैतदप्राप्तेरिति भावः । उपचारादिति । पाणिग्रहणाश्रयणादिति भावः । यद्वेति । इदं प्रौढ्या । तत्प्रकृतिककर्त्तृक्विपि दृढमानाभावात् । पूर्वसूत्रे यज्ञसंयोग इति तु "वृषलस्य पतिः स्त्री" इतिप्रयोगसाधनार्थम् । सपूर्वस्य किमिति । अवयववाची पूर्वशब्दः किमर्थ इति प्रश्नः । गवां पतिरिति । स्वामिनीत्यर्थः ।

निपात्यते इति । तेन चोदात्तसादेशस्यैव प्रवृत्त्या सपत्नीशब्दस्याद्युदात्तत्वमपि सिद्धम् । किं च समानस्वामिकस्त्रीविशेषस्यैव रूढ्या बोधनार्थं ङीब्नकारविशिष्टोच्चारणम् । अत एव समानस्वामिकदासीभूम्यादौ सपतिरित्येव । समानत्वं चैकस्यैव तत्तत्पत्नीसम्बन्धेन भेदमारोप्य बोद्धव्यम् । मुख्यसादृश्यवत्पतिकासु तु न तथा प्रयोग इष्यते ।

त्रिसूत्रीति । व्याख्यानादिति भावः ।

सन्नियोगशिष्ट इति । तेन तदभावे ङीबपि नेति भावः ।

नितान्तानामित्यत्राकार उच्चारणार्थः । नितन्तानामिति पाठे जश्त्वाभावः सौत्रः । त्रीण्येतानीति । अत्रेतशब्दस्योपसर्जनत्वे ऽपि तदन्तमनुपसर्जनमेव । अनुपसर्जनादिति चात्र तदन्तविशेषणम् । अत एव गृह्यवृत्तिकृता नारायणेनात्र बहुव्रीहिं कृत्वा ऽनेन ङीबित्युक्तं, तदनुसारेण चेदम् ।

परे तु "उपमानानि" इतिसूत्रस्थभाष्यस्वरसात् "टिड्ढाणञ्" इत्यादौ गृह्यमाणविशेषणत्वस्य क्लृप्तत्वाच्चात्रापि तथैवोचितम् । तत्र हि शस्त्रीश्यामेत्यादौ श्यामाशब्दः शस्त्र्यामेव, उपमेयन्तु समासवाच्यमिति पक्षे "शस्त्रीश्यामो देवदत्त इत्यत्र ह्रस्वत्वन्न सिद्ध्यति । यद्युपसर्जनस्येति *ह्रस्वत्वं, तदा

---

इति वार्त्तिकस्य "सपूर्वात् प्रातिपदिकात् पत्यन्तादनुपसर्जनात्" इति भाष्ये व्याख्यानात् स्त्रियां वर्तमाने प्रातिपदिके एव सपूर्वत्वानुपसर्जनत्वयोर्लाभात् निरुक्तकर्मधारयोत्तरपदे बहुव्रीहावपि ङीप्प्रवृत्तेर्दुर्वारतया नेहार्थोऽनुपसर्जनपदसंबन्धः । अत एव अनउपधेति सूत्रे "बहुव्रीहेरनुपसर्जनत्वाव्यभिचारात्" इति शेखरकारेणोक्तम् । अन्यथा बहुव्रीहिघटकबहुव्रीहौ उपसर्जनत्वसंभवेन अनुपसर्जनत्वाव्यभिचारोक्तिरसंगतैव स्यादित्याहुः ।

*ह्रस्वत्वमिति* । समासवाच्यत्वेनोपमेयस्य प्राधान्यमिति स्या-

*कुम्भकपाललोहिनीत्यत्रानुपसर्जनलक्षण ईकारो न प्राप्नोति"इत्युक्तम् । त्र्येण्येत्यस्य *त्रिषु स्थानेषु एन्येत्यर्थो बोद्धय इत्याहुः। *आर्षमत्र णत्वम्। वर्णात्किम्, प्रकृता । "गतिरनन्तरः" इत्याद्युदात्तः । अन्तोदात्त इति । "श्वेतो वाजी जायते"इत्यादौ तथा पाठादिति भावः । "छन्दसि क्नम्"इति नादेशापवादः । तेन 'उत्सर्गसमानदेशा अपवादा'इति न्यायात्तस्थानिकत्वं* ङीप्संनियोगशिष्टत्वञ्चास्य बोद्ध्यम् । विशुद्धिवाचीति पाठे तत्प्रवृत्तिनिमित्तक इत्यर्थः ।

अन्यतो ॥ सन्निधानाद् *व्याख्यानाच्च तोपधस्यैव प्रतियोगित्वेनान्वय इत्याह–तोपधभिन्नादिति । वर्णात्किम् । खट्वा । आद्युदात्तः ।

नर्त्तकीति । शिल्पिनि ष्वुन् । गौरशब्दो वर्णवाच्यप्यन्तोदात्त इतीह पाठः । अनड्वाहीति । "आमनडुहः स्त्रियां वा"इति वचनात्पक्षे आम् ।

सूर्येति । स चेद्य इति. । सूर्यादीनामङ्गानामुपधाया इति व्याख्याने तु सौरी बलाकेति न सिद्ध्येत् । सूर्येणैकदिगित्यणन्तान् ङीपि अण्णन्तमङ्गं न सूर्यशब्द इति तदसिद्धिः । वचनन्तु सूरी कुन्तीत्यत्र चरि-

---

माशब्दार्थस्य वृत्तिघटकपदार्थत्वेनाप्राधान्यादुपसर्जनत्वमित्यभिमानेन "गोस्त्रियोरुपसर्जनस्य" इत्यस्य प्राप्तिरिति भावः । वस्तुतस्तु तत्र 'प्रथमानिर्दिष्टम्' इति 'एकविभक्ति' इति च कृत्रिमस्यैवोपसर्जनस्य ग्रहणमिति सामान्यवचनैरितितृतीयानिर्दिष्टत्वाद्, अनियतविभक्तिकत्वाच्च श्यामाशब्दस्य कृत्रिमोपसर्जनत्वाभावेन पूर्वोक्तदोषो दुरुद्धर एव । लौकिकोपसर्जनग्रहणमभ्युपेत्य दोषान्तरमाह—*कुम्भकपालेति* । उपमेयं समासवाच्यमिति पक्षे कुम्भकपालं लोहितमिवेति विग्रहः । तथा चोपमानस्य नपुंसकलिङ्गत्वात् समासात् प्राक् स्त्रीप्रत्ययो न, समासोत्तरमुपसर्जनत्वेन "वर्णादनुदात्तात्तोपधात्तो न"इत्यस्य न प्राप्तिरिति भावः । *त्रिषु स्थानेष्विति* । "सुप्सुपा" इति समासः । *आर्षमत्र णत्वमिति* । समानपदत्वाभावाद् "अट्कुप्वाङ्" इत्यस्य, संज्ञात्वाभावात् "पूर्वपदात्संज्ञायामगः"इत्यस्य चाप्राप्तेरिति भावः । *तस्थानिकत्वमिति* । न त्वनेकाल्त्वात्सर्वादेश इति शेषः । यद्वा । वर्णादनुदात्तादित्यतः त इत्यस्यानुवृत्त्या तकारस्थानिकत्वं क्नादेशस्य । तेन "विषयभेदेऽपि बाध्यबाधकभाव" इति भाष्यमते उत्सर्गसमानदेशा इतिन्यायाभावेऽपि न दोष इति बोध्यम् ।

*व्याख्यानादिति । तित्तिरिकल्माषी इत्युपमानानीति सूत्रस्थभाष्यप्रयोगदर्शनमूलकादित्यर्थः । अन्यथा पूर्वसूत्रे विशेष्यभूतवर्णवाचकस्यैव प्रतियोगितयाऽन्वये उक्तप्रयोगानुपपत्तिः स्पष्टैव, कल्माषशब्दस्य वर्णवाचित्वादिति बोध्यम् ।

तार्थम् । अणो लोपेऽप्याभीयत्वेन सो ऽसिद्धः, अणुनिमित्तकाल्लोपस्तु ना-श्रयत्वान्नासिद्ध इति यस्योपधात्वम्, उपधाग्रहणादेव*भाधिकारमभिव्याप्या-भीयासिद्धत्वमिति बोद्ध्यम् । यग्रहणन्तूत्तरार्थम् । ङ्यामिति निर्देशात्सप्त-म्येकवचनस्याग्रहणम् । नक्षत्राणीति । नक्षत्रवाचकाद् यो ऽण् तत्रेत्यर्थः । तेन तिष्येण युक्तं तैषमहः, तिष्ये भवस्तैष इत्यादि सिद्धम् । मातरि षिच्चेति । पितामहीसिद्ध्यर्थमिदम् । दंष्ट्रेति । दंशेः "दाम्नीशस" इति करणे ष्ट्रन् । अयमजादिषु पठ्यते । गौरादिषु मातामहीशब्दपाठो ऽनार्ष इत्यन्ये ।

जानपदीति । जनपदे भवेत्यर्थः । उत्सादित्वादञ् । ङीष्याद्युदा-त्तत्वे प्राप्ते ऽन्तोदात्तार्थं वचनम् । वृत्तिः--अनुच्छेद्या जीविका । अप्रत्यय इति । तथा च क्रियाशब्दोऽयमिति भावः । अमत्रे—कमण्डलुरूपे(१) ।

कुण्डी कमण्डलौ, जारात् पतिवत्नीसुते पुमान् ।

इति मेदिनीकोशात्स तत्र नित्यस्त्रीलिङ्ग इति भावः । यदि तु 'पिठरे तु न ना कुण्डम्' इति विश्वकोशे तस्य नपुंसकत्वमप्युक्तं, पिठरामत्रशब्दौ च पर्यायौ, 'पिठरं स्थाल्युखा कुण्डम्' इत्यमरे नपुंसकत्वमात्रोक्तिस्त्वत्रयुत्या-ऽनुवाद इत्युच्यते, तदाऽनेकविधसंस्थानेषु अमत्रेषु कुण्डव्यवहारेण कुण्डत्वे जातित्वाभावादप्राप्तो ङीषिति बोद्ध्यम् । स्त्रीविषयत्वादित्युपलक्षणमिति बहवः । कमण्डलुसंस्थानस्यानुगतत्वात्तद्रूपामत्रवाचिनो जातित्वमप्यस्ति । सूत्रन्तु नियमार्थमेव । अमृते जारजायां कुण्डेत्येवेत्यपरे । आवपने च नि-त्यस्त्रीत्वादप्राप्तस्य ङीषो विधिः । आवपनमिति सामान्ये नपुंसकम् ।

गुणयोगादिति । गौणत्वेऽप्यपदकार्यत्वात्प्रवृत्तिरिति भावः । *विधित्वानुरोधाद् गौण एवास्य प्रवृत्तिः । वर्णश्चेदिति । तद्विशिष्ट-श्चेदित्यर्थः । अन्यथा 'गुणे शुक्लादयः पुंसि' इत्युक्त्या ऽसंगतं स्या-

---

*भाधिकारमभिव्याप्येति । तेन शुन इत्यादौ संप्रसारणस्यासिद्धत्वा-त् "न संयोगात्" इति निषेधेन "अल्लोपोऽन" इति लोपो न । अल्लोपे हि स्थानि-वत्त्वेन यणापत्तिः, बहुश्वेत्यादौ अनउपधेति ङीबापत्तिश्च । एवं भूयानित्यादौ "बहोर्लोप" इत्यस्यासिद्धत्वात् ओर्गुणो न । एवं तिर्यञ्चमाचष्टे तिराययतीत्यादौ अचाष्टिलोपेनोपहारे तस्यासिद्धत्वात् पुनष्टिलोपो नेति बोध्यम् ।

*विधित्वानुरोधादिति* । विधिनियमसम्भवे विधेर्ज्यायस्त्वात् ।

---

(१) कुण्डरूपे इति क्वचित् पुस्तके पाठः ।

द्विति बोद्धव्यम् । सूत्रे वर्णशब्दो ऽर्शआद्यजन्तः । कालाऽन्येति । क्रौर्यगुणयुक्तेत्यर्थः ।

नील्या अनिति । वृत्त्यनुसारेणेदम् । प्रतिपदोक्तत्वाद् अन्प्रकृतिङीषन्तप्रविष्टनीलशब्दस्यैवात्र ग्रहणं, न त्वस्य । लाक्षणिकत्वात् । अनाच्छादने इति नीलवर्णवती शाटीत्यर्थे नीलीति वारणाय चरितार्थम् । नील्या रक्ता गौरित्यर्थे *नीलत्येवोचितमिति परे । मैथुनेच्छाशब्दो ऽर्शआद्यजन्तस्तद्वतीत्यर्थः । अन्येति । मैथुनादन्यद् या इच्छति । क्रमेः "लषपत"इत्युकञ् । शोणशब्दो वर्णवाची "वर्णानां तण"इत्याद्युदात्तः । अन्यत इति सिद्धे विकल्पार्थमिदम् ।

वोतो ॥ अत्र *गुणवचनशब्देन समस्त–कृदन्त–तद्धितान्त–सर्वनाम–जाति–संख्या–सञ्ज्ञाशब्दातिरिक्तशब्दो गृह्यते । *आकडारसूत्रभाष्यपर्यालोचनया तादृशानामेव तत्सञ्ज्ञालाभात् । तत्र हि प्रातिपदिकमात्रस्य

---

तथा च वृत्तिः–"नागशब्दो गुणवचनः स्थौल्ये ङीषमुत्पादयति, अन्यत्र गुणे एव टापम् । अगुणवचनात्तु जातिशब्दान् ङीषेव भवति" इति ।

*नीलत्येवोचितमिति* । अस्य लाक्षणिकत्वेन सूत्रे नीलशब्देनाग्रहणादिति भावः ।

*वोतो गुणवचनात्* । अत्र गुणो नादेङ्रूपः । उत इति विशेषणात् । नापि विशेषणम् । आखुर्द्रव्यमित्यादावतिप्रसङ्गात् । नापि नैयायिकाभिमतो गुणः । मृद्वी बुद्धिरित्यादेरसिद्ध्यापत्तेः । अत आह—*अत्र गुणवचनशब्देनेति ।

*आकडारसूत्रेति* । तत्र सूत्रे भाष्ये "अर्थवत् प्रातिपदिकम्" इति अर्थवतः प्रातिपदिकसंज्ञामुक्त्वा तस्यैव "गुणवचनं च"इति गुणवचनसंज्ञा विहिता । ततश्च "समास–कृत्–तद्धिता–ऽव्यय–सर्वनामा–ऽसर्वलिङ्गा जातिः, संख्या, डु च, एकद्रव्योपनिवेशिनी संज्ञा"इति समासादिसंज्ञास्तद्बाधकत्वेनोक्ताः । डुशब्देन च षट्—संज्ञा । अत्र कैयटः—"गुणवचनं चेति । एकविषयत्वाच्चकारकरणाच्च गुणवचनप्रातिपदिकसंज्ञयोः समावेशो भवति । उत्तरासु च संज्ञासु प्रातिपदिकमित्यनुवर्तनात् ताभिः प्रातिपदिकसंज्ञा समाविशति, गुणवचनसंज्ञा तु ताभिर्बाध्यते" इति । एवञ्च समासादिसंज्ञातिरिक्तप्रातिपदिकमात्रं गुणवचनपदेन ग्राह्यमिति स्पष्टमेव लभ्यते । अत्र समासादिसंज्ञाभिर्गुणवचनसंज्ञाबाधात् "चित्रगुत्वं, कारकत्वम्, औपगवत्वम्, उच्चैस्त्वं, सर्वत्वं, घटत्वं, बहुत्वं, पञ्चत्वं, डित्थत्वम्" इत्यादौ न ष्यञ् । नचैवम् 'ऐक्यम्' 'राजपौरुष्यम्' इत्याद्यसिध्यापत्तिः, संख्यासमाससं-

जन्येति भावः। हरेः *क्रोधद्रोहाभ्यामिच्छाविषयत्वाभावात् "क्रियया यम्" इत्यनेन न सिद्धिः। "न ह्यकुपितः क्रुध्यति" इति भाष्येण *प्ररूढकोप एव क्रोध इति कुपेस्तदर्थत्वाभावेन न तद्योगे इदम्। 'कुप्यति कस्मैचित्' इत्याद्यसाध्वेव।

उपसृष्टयोरित्यस्यार्थमाह—सोपसर्गयोरिति। वैयाकरणनिकाये एष एतदर्थकत्वेन प्रसिद्धः। पूर्वसूत्रापवादोऽयम्।

यदीय इति। यदीयशुभाशुभसम्बन्धीत्यर्थः। राधीक्ष्योः प्रश्नविषयार्थपर्यालोचनमर्थः। कर्मणः प्रश्नविषयस्य धात्वर्थेनोपसङ्ग्रहादकर्मकावेतौ। अत एव श्यन्। 'राधोऽकर्मकादेव' इत्युक्तेः। कृष्णसम्प्रदानकं शुभाशुभपर्यालोचनमर्थः॥

प्रत्याङ्भ्याम्॥ व्याख्यानात्प्रत्येकं निमित्तत्वमित्याशयेनोदाहरति—गां प्रतिशृणोतीति। अनयोः प्रवर्तनापूर्वकाभ्युपगमोऽर्थः। तत्र विप्रस्य कर्तृप्रयोजकत्वेन हेतुत्वे प्राप्ते वचनम्॥

---

धर्मारोपानुकूलव्यापारजनकश्चित्तवृत्तिविशेष एव ईर्ष्यधातुना प्रत्याय्यते, प्रकृते तु भार्यायां कोपाभावान्न तथा, तथापि चित्तवृत्तिविशेषरूपेर्ष्यार्थकत्वमुभयत्र समानम्। सा च यस्मिन् ताडनवाक्पारुष्याद्यनुकूलव्यापारजनकचित्तवृत्तिविशेषरूपकोपजन्या तमुद्दिश्य तत्संबन्ध्युत्कर्षविरोधिधर्मारोपानुकूलं व्यापारं जनयति, यत्र च न उक्तविधकोपजन्या किन्तु अन्यदर्शनजन्या तमुद्दिश्य तत्संबन्ध्युत्कर्षविरोधिधर्मारोपानुकूलव्यापारं न जनयतीति विशेषः। यं प्रति कोप इत्यस्यानुपादाने तु ईर्ष्याजनककोपविषये देवदत्तादाविव तज्जनकान्यदर्शनविषये भार्यादावपि प्रसज्येतैवं संप्रदानत्वमिति दिक्। ईर्ष्याऽसूयाविषययोः कर्मत्वे प्राप्ते इदमित्याहुः।

*क्रोधद्रोहाभ्यामिति। वाक्चक्षुरादिविकारानुमेयो वधताडनाद्यनुकूलव्यापारजनकश्चित्तवृत्तिविशेषः क्रोधः। दुःखजनकक्रियाजनकश्चित्तवृत्तिविशेषो द्रोहः। वधादीनां, दुःखस्य च धात्ववाच्यत्वात् तदाश्रयत्वेन विवक्षितदेवदत्तादेः कर्मत्वाप्राप्त्या षष्ठ्यां प्राप्तायामिदमित्याहुः।

*प्ररूढकोप एवेति। यावत् वाचः स्फुरणं, चक्षुषो रक्तत्वं, दन्तानां घर्षणमित्यादयो विकारा नाभिव्यज्यन्ते, किन्तु सूक्ष्मरूपेणावस्थिताः तावत् चित्तस्य कोपावस्था। अभिव्यक्तेषु च तेषु क्रोधावस्थेति तयोर्विशेषः। ईर्ष्या पूर्वं व्याख्याता। असूया तु शौचाचारादिषु दम्भादिकृतत्वाध्यासप्रयोजिका चित्तवृत्तिः। द्वेषस्तु दुःखसाधनत्वज्ञानजन्याऽनभिनन्दनात्मिका चेतनाचेतनविषयसाधारणी चित्तवृत्तिः। सा च क्रोधादिभ्यो विलक्षणैवेति न तद्योगे अनेन संप्रदानत्वमिति औषधं द्वेष्टि अस्मान् द्वेष्टीत्येवेत्यलम्।

अनुपत्ति । अनुप्रतीति भिन्नं पदं लुप्तप्रथम्यन्तम् । गृण इति श्नान्तानुकरणात् षष्ठी । शंसितुः शंसनविषयहर्षानुकूलव्यापारलक्षणं प्रोत्साहनमनयोरर्थः । पूर्वव्यापारस्येति । शंसनस्येत्यर्थः । प्रोत्साहयतीति । ओथामेत्यादिशब्दैरिति शेषः । शंसायेति । करणस्यैव सम्प्रदानत्वेन भानमत्र । शतव्यापारश्च दानरूप एवेति बोध्यम् ।

*तादर्थ्ये । *तादर्थ्यमुपकार्योपकारकभावरूपः सम्बन्धः । यदा तादर्थ्यस्य सम्बन्धत्वेन भानं तदा षष्ठी—गुरोरिदं गुर्वर्थमिति अत्र भाष्ये स्पष्टम् । क्लृपीति सप्तमी । अर्थग्रहश्चात्र । सम्पत्तिः—उत्पत्तिः । क्लृप्यर्थकधातुयोगे उत्पद्यमानेऽर्थे वर्तमानाच्चतुर्थीत्यर्थः । हितयोगे च । चात्सुखयोगेऽपि ॥

*क्रियार्थोप ॥ क्रिया अर्थः फलं यस्य तत् क्रियार्थम् । तेन स्ववाचकं लक्ष्यते । क्रियाफलकार्थवाचकमुपपदं यस्येत्यर्थः । सोऽर्थश्च प्रत्यासत्त्या क्रियारूप एव । स्थानिशब्दश्च अप्रयुज्यमानवाची वैयाकरणानां निकाये प्रसिद्धः । क्रियार्थक्रियोपपदत्वञ्च तुमुनादेरेवेत्याह—क्रियार्था क्रियेति । फलेभ्यो यातीत्यादौ फलकर्मकाऽऽहरणफलकं यानमिति बोधः । यथा वाक्यार्थे वाक्यैकदेशप्रयोगस्थले 'प्रविश पिण्डीम्' इत्यादौ तस्यैव पदस्य संपूर्णवाक्यार्थशक्तता तथाऽस्य समुदायस्याहरणघटितोक्तार्थे शक्तिरेतच्छास्त्रबलात् । स्थानिन इत्युक्तेस्तत्प्रयोगे नेति बोध्यम् । अयमेवार्थाध्याहारः ।

नमस्कुर्मो नृसिंहायेति । "नमःस्वस्ति"इत्यनेन तु न सिद्धिः, उपपदविभक्तेरिति न्यायेन द्वितीयापत्तेः । पिण्डीमित्यादावप्रयुज्यमानभ-

---

*तादर्थ्यमिति । इदं संप्रदानसंज्ञासूत्रे निरूपितम् ।

*क्रियार्थोपपदस्य । ननु ब्राह्मणाय दधीत्यादौ यथा स्वसंबन्धिभोजनरूपोपकारजनकत्वरूपतादर्थ्यसंबन्धेन ब्राह्मणादेरन्वयविवक्षया चतुर्थी ब्राह्मणादिपदोत्तरं प्रयुज्यते तथा फलेभ्यो यातीत्यादावपि स्वसम्बन्ध्याहरणादिजनकत्वसम्बन्धेन फलादेर्यानादिक्रियायामन्वयविवक्षया फलादिपदेभ्योऽपि चतुर्थी सिध्येदितीदं व्यर्थम् । नचोक्तविवक्षायां फलान्याहर्तुं यातीत्यादावपि तदापत्तिरिति वाच्यम् । उपपदविभक्तेरिति न्यायेन तत्र द्वितीयाया एव युक्तत्वादिति चेन्न । फलकर्मकाहरणफलकं यानमितिबोधेच्छायाम् आहरणादिक्रियानिष्ठविशेष्यतानिरूपितकर्मत्वसंबन्धावच्छिन्नप्रकारताप्रयोजकत्वेन

क्षणक्रियाकर्मणि चतुर्थीवारणाय *क्रियार्थोपपदस्येति ।

तुमर्थात् ॥ 'तुम्'शब्देन तदर्थो लक्ष्यते, सोऽर्थो यस्येत्यर्थः । इति सूत्रेणेति । भावे ये प्रत्यया वक्ष्यन्ते ते क्रियार्थक्रियायामुपपदे भविष्यति स्युरिति तदर्थः । यागायेति । *यागफलकं यानमित्यर्थः ।

उपपदविभक्तेरिति । वाचनिकमेवेदं भाष्ये पठितमिति केचित् । क्रियाकारकयोः सम्बन्धोऽन्तरङ्गः, उपपदार्थेन तु यत्किंचित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेति "अन्तराऽन्तरेण"इति सूत्रे कैयटः । अत्राहुः—एवं सति 'नमस्यति देवान्' इत्यादौ नमःपदार्थे क्रियाकारकभावेनैवान्वये परत्वाच्चतुर्थीमाशङ्क्यानेन वारणस्य*भाष्योक्तस्यासङ्गतिः । *एतेन प्रधानत्वात् क्रियायास्तत्सबन्धनिमित्तकत्वेन बलवत्त्वमित्यपि *परास्तम् । कारकविभक्तित्वं च क्रियाजनकत्वसमानाधिकरणकर्त्रादिषट्कान्यतमार्थत्वम् । अन्याभिहितानुद्भूतकर्त्राद्यन्यतमार्थत्वं प्रथमाया अपि । "अभिहिते प्रथमा"इतिवार्तिकस्वा-

---

तात्पर्यविषयात् फलादिपदात् चतुर्थीसिद्धये पतस्य सत्त्वात् । गदाधरमते यानादिक्रियायां निरुक्तेच्छाविषयव्यापाराश्रयत्वरूपतादर्थ्यस्याभावाच्च । *क्रियार्थोपपदस्येतीति । यद्यपि 'प्रविश, पिण्डीम्' इत्यादौ प्रवेशनक्रिया भक्षणार्था भवति तथापि प्रविशेत्यादीनां "तत्रोपपदं सप्तमीस्थम्" इति परिभाषितमुपपदत्वं नास्ति, फलान्याहर्तुं यातीत्यादौ यातीत्यादीनां तु तुमुन्विधायके 'क्रियार्थायां क्रियायाम्' इत्युक्तेस्तदस्तीति भावः ।

*यागफलकं यानमिति । अत एव क्रियार्थोपपदस्येत्यनेन न गतार्थता । तथा सति यागानुकूलकृतिफलकं यानमिति बोधः स्यात् । तादर्थ्यचतुर्थ्यास्तु अत्र न प्राप्तिः । भाववचनाश्चेत्यनेन तुमुनर्थे घञो विधानेन तेनैव तस्योक्तत्वात् । तस्मात् तुमुन्नन्तादिव तदर्थकघञन्तादपि प्रातिपदिकार्थमात्रे प्रथमायां प्राप्तायां चतुर्थ्यर्थमिदमिति वैयाकरणाः । भाववचनाश्चेत्यनेन तुमुनर्थे घञो विधानात् भविष्यद्यागफलकं यानमिति बोधाकारः प्रदर्शनीयः ।

भाष्योक्तस्यासङ्गतिरिति* । उभयोरपि क्रियाकारकभावसम्बन्धनिमित्तकत्वेन अन्तरङ्गत्वे तस्य बाधबीजत्वाभावात् परत्वाच्चतुर्थ्याशङ्कायां तस्य द्वितीयाव्यवस्थापकत्वायोगात् तदसङ्गतिरित्यर्थः । तस्माद्वाचनिकमेवेदम् । एवं च द्वितीयाचतुर्थ्योः प्राप्तयोः परत्वाच्चतुर्थ्याशङ्कायां वाचनिकेनानेन व्यवस्था युज्यते इति भावः । *एतेन—पूर्वोक्तचतुर्थीवारणपरभाष्यासङ्गतिप्रदर्शनेन । *परास्तमिति* । चतुर्थ्या अपि क्रियासम्बन्धनिमित्तकत्वेन तेन हेतुना द्वितीयाया बलवत्त्वासम्भवादित्यर्थः ।

रस्यात् । अतः प्रथमापि कारकविभक्तिरिति बोध्यम् । द्वावित्यादौ द्वित्वादेरिव 'देवदत्तः पचति'इत्यादौ उभाभ्यामेकस्यैव कर्तृत्वस्य बोध इति न तद्बोधावृत्तिः ।

नमस्करोति देवानिति । उत्कृष्टनिष्ठो यः *स्वानिष्ठापकृष्टत्वबोधः तदनुकूलव्यापाररूपनमस्कारफलस्य* तादृशबोधस्याश्रयतया देवानां कर्मत्वम् । स्वशब्देन प्रयोक्ता । नमःशब्दस्य साक्षात्प्रभृतिषु ऊर्यादिषु वा पाठेन गतित्वात्सत्त्वम् । *एकस्या एवोपपदविभक्तित्वे कारकविभक्तित्वे चायं न्याय इति तु न युक्तम् । "नमस्यति देवान्"इत्यत्रैतत्परिभाषो-

---

परेतु क्रियाजनकत्वसमानाधिकरणकर्त्रादिषट्कान्यतमार्थकविभक्तेः उपपदार्थान्वयनिमित्तकविभक्त्यपेक्षया वचनेन बलवत्त्वाङ्गीकारेऽपि पुत्रेण सहागतस्य पितुर्धनम्, शिष्येण सहोपाध्यायस्य गौः इत्यादौ षष्ठ्यास्तत्त्वाभावात् उक्तवचनेन बलवत्त्वबोधनासम्भवात् तेन न्यायेन तृतीयां वारयित्वा कृतस्य अप्रधानग्रहणप्रत्याख्यानस्यासङ्गतिः । तस्मात् प्रधानान्वयनिमित्तकविभक्तित्वमेव कारकविभक्तित्वम् । क्रियार्थककारकपदेन प्राधान्योपलक्षणात् । प्रधानकार्ये च सर्वतो बलवत्त्वस्य गतिबुद्धीतिसूत्रे व्यवस्थापनात् तन्मूलिकैवेयं परिभाषा इति प्राचामाशयः । नमस्यति देवानित्यादौ चतुर्थ्याः प्रधानधात्वर्थान्वयनिमित्तकत्वेऽपि अन्यत्र उपपदार्थधात्वर्थयोर्मध्ये धात्वर्थस्यैव प्राधान्यात् प्रधानतावच्छेदकक्रियात्वरूपधर्मावच्छिन्नान्वयनिमित्तकत्वं द्वितीयाया एव नतु चतुर्थ्या इति न तेन न्यायेन द्वितीयाया बलवत्त्वप्रतिपादकभाष्यासङ्गतिः । एवमन्तरङ्गमूलकत्वाङ्गीकारेऽपि नैतद्भाष्यविरोधः । नमस्यति देवानित्यादौ नमःपदार्थस्य धात्वर्थघटकत्वेन तत्र क्रियाकारकभावेनैव देवादिपदार्थान्वयेऽपि क्रियाकारकभावेनान्वयस्य चतुर्थीप्रत्ययनिमित्तत्वात् । तं विनाऽपि हरये नम इत्यादौ तदुत्पत्तेः । तस्मात् कैयटोक्तं प्राचीनोक्तं च सम्यगेवेत्याहुः ।

*स्वनिष्ठापकृष्टत्वेति । स्वविशेष्यको यः अपकृष्टत्वबोधस्तदुद्देश्यको व्यापारो नमस्कारस्तत्फलस्येत्यर्थः । तेन प्रयोक्तुः नमस्कार्यापेक्षया अपकृष्टत्वाभावेऽपि उत्कृष्टत्वाभिमाननिरासार्थं न अपकृष्टोद्देशेन नमस्कारप्रयोगानुपपत्तिः । नापि चैत्रोद्देशेन नमस्कारे मैत्रस्य बोधेऽपि मैत्रं नमस्करोतीतिप्रयोगापत्तिः, तद्बोधस्योद्देश्यत्वाभावादिति बोध्यम् । एषोऽर्घः शिवाय नम इत्यादौ त्यागो नमःशब्दार्थः । त्यागश्च स्वस्वत्वनिवृत्त्यनुकूलो व्यापार इति लघुमञ्जूषायां विस्तरः ।

*नमस्कारफलस्येति । निपातानां द्योतकत्वात् कृधातोरेव फलवाचकत्वात् धात्वर्थफलाश्रयत्वात् कर्मत्वं देवानां सिध्यति । वाचकत्वाभावेऽपि बोधरूपफलनिष्ठविषयताया नमःपदप्रयोज्यत्वाच्चतुर्थीप्राप्तिरिति न्यायाश्रयणमिति भावः । *एकस्या एवेति । 'तत्र च दीयते' इत्यादौ पाणिन्युच्चारिताया एकस्या

पन्यासपरभाष्यविरोधात्, "सहयुक्ते" इत्यादिसूत्रस्थभाष्यविरोधाच्च ।

अलमितीति । अलमित्यनेन पर्याप्त्यर्थानां ग्रहणं व्याख्यानादित्यर्थः । तत्र ज्ञापकमप्याह—तस्मैप्रेति । षष्ठ्या अपि साधुत्वे बीजं—स एषामिति ।

आशीर्विवक्षायामिति । *आशीर्विषयत्वविवक्षायामित्यर्थः । स्वस्त्यर्थः कुशलं मङ्गलं वा । स्वस्तियोगे चतुर्थ्या अवकाशः—स्वस्ति जाल्मायास्तीति तत्त्वकथनम् । कुशलार्थैराशिषीत्यस्यावकाशः स्वस्तिभिन्नाः कुशलार्थाः । स्वस्तिशब्दोऽनव्ययमपि* ।

प्रतिगृह्णामि ते धेनुं कुटुम्बार्थे विशेषतः ।
स्वस्तिर्भवतु मे नित्यं सुखश्चानुत्तमं तथा ॥

इति भविष्योत्तरे प्रयोगात् ।

मन्यकर्मणि ॥ तिरस्कार इति । अनादरो न आदराभावमात्रम्, अपि तु नञो ऽधर्मादाविव प्रतिपक्षवाचित्वात्तिरस्कार इति भावः । तत्रानादर इति मन्यकर्मविशेषणं तद्द्योतकं यत्कर्मेत्यर्थः । तेन युष्मच्छब्दाच्चतुर्थी न । तिरस्कारश्च व्याख्यानादपकृष्टनिरूपितोपमेयत्वस्याप्यभावरूप उपमेयेऽत्र गृह्यते न त्वपकृष्टसादृश्यरूपः । तत्प्रतीतिश्च नञ्समभिव्याहारे एव । तृणतुल्यमपि न मन्ये इत्यर्थः । 'तृणाय मत्वा रघुनन्दनोऽपि'इत्यादौ नञोऽध्याहारः, तदाह—न त्वां तृणमिति । कर्माऽत्र चतुर्थ्यर्थः । श्यनेति । न तु यका, व्याख्यानादिति भावः । श्यंस्तूपलक्षणम् । तेन लिडादावपि भवति । तत् ध्वनयन्नाह—तानादिकयोगे नेति । नौकाकेति । भाष्ये येषु प्राणिषु नेष्यते ते नान्नादयो भविष्यन्तीति येष्विति वहुवचनेन वृत्त्युदाहरणबलेन चैष्वेवानिष्टानिर्णय इति भावः ॥

---

एव सप्तम्यादेः उपपदार्थान्वयनिमित्तकसाधुत्वकविभक्त्यर्थबोधतात्पर्येणोच्चरितत्वं, क्रियान्वयनिमित्तकसाधुत्वकविभक्त्यर्थबोधतात्पर्येणोच्चरितत्वं वेति संदेहे कारकविभक्तेर्बलवत्त्वबोधनेन तदर्थबोधतात्पर्येणोच्चरितत्वनिर्णायिका वाचनिकी परिभाषा इति तेषामाशयः । तदाशयानवबोधमूलकमेव खण्डनमित्याहुः ।

*आशीर्विषयत्वेति । एतेन आशिषः स्वस्तिशब्दार्थत्वं निराकृतम् । तस्य तदर्थत्वे स्वस्ति गोभ्यो भूयादिति स्वस्तिशब्दयोगे आशीर्लिङः प्रयोगानापत्तेः । *अनव्ययमपीति । चतुर्थी तु साहचर्यात् अव्यययोगे एवेति बोध्यम् ।

इति चतुर्थी* ।

गत्यर्थकर्मे ॥ कर्मात्रापि चतुर्थ्यर्थः । गत्यर्थेति किम् । ओदनं पचति । कर्मणीति किम् । अश्वेन गच्छति । चेष्टायां किमिति । धात्वर्थस्य क्रियारूपत्वात् प्रश्नः । शरीरक्रियाया एव ग्रहणमित्युत्तरम् । पन्थानमिति । अध्वशब्दोऽर्थपरो व्याख्यानादिति भावः । अधिष्ठित इति । शब्दप्रयोगसमकालिकगन्तृव्यापारजन्यफलाश्रय इत्यर्थः । अध्वपदेन गन्तृव्याप्तोऽर्थ उच्यते, तेन गन्तृयुक्तस्त्रियां 'स्त्रियं गच्छति'इत्यादौ न । स्पष्टश्चेदं भाष्ये । उत्पथादिति । उत्पथं सन्त्यज्येत्यर्थः । इष्यत इति । न त्वाक्रान्त इत्यर्थः । उत्पथेनेति । गन्तुमशक्त इति शेषः ॥

इति चतुर्थी ॥

ध्रुवमपायेऽपा ॥ ध्रुवं स्थिरम् । अपायो विभागजनको व्यापारः, तदनाश्रयमिति यावत् । विभागश्च न वास्तवसम्बन्धपूर्वको वास्तव एव, किं तु बुद्धिपरिकल्पितसम्बन्धपूर्वको बुद्धिकल्पितोऽपि । "माथुराः पाटलिपुत्रकेभ्य आढ्यतराः" इत्यादौ बुद्धिकल्पितापायाश्रयेणैव भाष्ये पञ्चमीसाधनात् । कर्तृवारणाय ध्रुवमिति । अन्यथा कर्तृसंज्ञाया इयमपवादः स्यात् । अपायविषये यत् कारकं तद्रूपक्रियाजनकं तदपादानमित्यर्थसम्भवात् । कर्तृसंज्ञा तु पचत्यादियोगे चरितार्था । हरिरप्याह—

अपाये यदुदासीनश्चलं वा यदि वाऽचलम् ।
ध्रुवमेवातदावेशात्तदपादानमुच्यते ॥ इति ।

स्पष्टश्चेदं कैयटादौ । भाष्यानुसारिणस्तु एवं हि 'त्रस्तादश्वात्पतितः'-'धावतः पतित'इत्यादौ ध्रुवत्वाभावादपादानत्वं न स्यादित्याशङ्क्य "अध्रौव्यस्याविवक्षितत्वमत्र, यतः सतोऽप्यविवक्षा भवति" इति समाहितं भाष्ये, तदसङ्गतं स्यात् । त्वदुक्ताध्रुवत्वस्य पतधात्वर्थव्यापाराश्रयत्वस्यात्रासत्त्वेन सतोऽध्रौव्यस्याविवक्षेत्यस्यासङ्गतेः । सिद्धान्तेऽपि त्वदुक्तध्रुवपदार्थकथनमेवोचितमिति तदसङ्गतिश्च । लोकसिद्धातिरिक्तार्थे ध्रुवपदस्य शक्तिकल्पने गौरवञ्च । अतदावेशादित्यस्य हरिकारिकायां तदावेशाविवक्षणादित्यर्थः । *तस्मादपाये गतिविशेषे सति यद् ध्रुव*मवधिभावोपगमाश्र-

---

ध्रुवमपाये । प्रकृतधात्वर्थप्रधानीभूतव्यापारानाश्रयत्वे सति तज्जन्यविभागाश्रयत्वं ध्रुवत्वं प्राचीनाभीष्टं, तद्विपरीतमाह- *तस्मादित्यादि* । अ:

यत्वे सति *तदतिरिक्तस्यावधित्वोपयोगिव्यापारस्यानाश्रयं तदपादानमिति सूत्रार्थः। त्रासादेरवधित्वोपयोगित्वाश्रयणेन शङ्का, 'वृक्षात्पर्णम्'इत्यादौ तस्यासत्त्वान्न तदुपयोगित्वं तस्य, प्रकृते विद्यमानस्यापि तस्याविवक्षितत्वान्न तदुपयोगित्वं तस्येत्युत्तरम्। ध्रुवमपाये इति तु वृक्षस्य पर्णं पततीत्यादौ वस्तुतस्तस्य पर्णद्वारा पातजनकत्वात्प्राप्तापादानत्ववारणाय। एवञ्चापाये इति कारके इत्यस्य क्रियाजनकत्वेन विवक्षिते इत्यर्थे तात्पर्यग्राहकं बोध्यम्। ध्रुवग्रहणन्तु कारकान्तराणामिवापादानस्यावधिभावोपगमातिरिक्तव्यापाराभावबोधनाय* इत्याहुः।

अपादानत्वशक्तिश्च प्रकृतधात्वर्थविभागाश्रयत्वसमानाधिकरणेति अपादानसमभिव्याहारे विभागोऽपि धात्वर्थ इति बोध्यम्। एवञ्च वृक्षात्पततीत्यादौ तदपादानकविभागपूर्वकः संयोगः पर्णवृत्तिरिति बोधः। 'वृक्षाद् भूमिं पतति'इत्यादौ वृक्षापादानकविभागपूर्वकसंयोगानुकूलो व्यापार इति बोधः। परस्परस्मान्मेषावपसरत इत्यादौ मेषपदोपात्तयोरेव क्रियाश्रयत्वात्कर्तृत्वं, परस्परपदोपात्तयोरेव विभागाश्रयत्वादपादानत्वम्। मेषपदोपात्ते तदविवक्षणात्। प्रयोगानुसारित्वाद्विवक्षायाः। विभागपूर्वकं पृष्ठतो गमनमपसरणम्। आत्मानमात्मनेत्यादावन्तःकरणाद्युपाधिकृतभेदवत् शब्दरूपोपाधिकृतभेदाग्रहणे मानाभावात्। शब्दालिङ्गितार्थभानस्यैव सत्त्वाच्चेत्यन्यत्र विस्तरः।

यत्त्वपसरत इति सृधातुना गतिद्वयस्याप्युपादानादेकनिष्ठाङ्गतिं प्रति इतरस्यापादानत्वमविरुद्धमिति, तन्न। वस्तुतस्तन्निष्ठव्यापारयोर्भेदेऽपि सृधातुना निवृत्तभेदस्यैवापायस्योपादानादुभयोरपि तत्क्रियाश्रयत्वेन परत्वात्कर्तृत्वापत्तेः। अत एवैकशेषसूत्रे भाष्ये उक्तं "न वै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वात्"इति। धनुषा विध्यतीत्यत्र निःसरच्छरजन्यवेधार्थत्वाद्धनुषेरपादानत्वकरणत्वोभयप्राप्तौ परत्वात् करणत्वं बोध्यम्।

ग्रामादायातीति। आयातेर्विभागपूर्वकोत्तरदेशसंयोगानुकूलो

---

वधिभावोपगमाश्रयत्वे सतीति*। अवधित्वेन विवक्षितत्वे सतीत्यर्थः। *तदतिरिक्तस्य अवधित्वोपयोगिव्यापारस्य-अवधिताप्रयोजकप्रकृतधात्वर्थस्य, तद्भिन्नस्य वेत्यर्थः। *व्यापाराभावबोधनायेति*। एतेन सौकर्यादिविवक्षायां 'स्थाली पचति'इत्यादिवत् अश्वः पततीत्यादयो नेति सूचितम्।

व्यापारो ऽर्थः । वृक्षन्त्यजतीत्यादौ व्यापारव्यधिकरणविभागस्यैव धात्वर्थत्वेन कर्मसंज्ञयाऽपादानत्वस्य बाधः । स्पन्देस्तु न विभागो ऽर्थ इति वृक्षे स्पन्दत इत्येव । चलतेस्त्वासनाच्चलित इति प्रयोगादस्त्येव विभागार्थत्वम् । सार्थाद्धीयत इत्यत्र सार्थस्य धात्वर्थप्रधानव्यापाराश्रयत्वेऽपि "अपादाने चाहीयरुहोः" इति ज्ञापकात्कर्मप्रत्ययान्तहीधातुप्रयोगे ऽपादानत्वम् । कर्मसंज्ञायाश्च कर्तृपदं स्वतन्त्रोपलक्षणमिति कर्मणि लकारः । सार्थेन त्यज्यते देवदत्त इत्यर्थः ।

धावत इति । क्रियाविशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तगत्यनावेशात्, धावनस्याविवक्षणाद्वा ध्रुवत्वं बोद्ध्यम् ।

जुगुप्सेत्यादि । *जुगुप्सादीनां यद्विषयकत्वेन विवक्षा तदपादानम् । तस्यैव विषयस्य क्रियाजनकत्वरूपकारकत्वेनाविवक्षायां संबन्धित्वेन च विवक्षायां पापस्य जुगुप्सत इति षष्ठी भवत्येव सत्यभिधाने । एवमुत्तरसूत्रेष्वपि बोद्ध्यम् । एषां धातूनां स्वार्थपूर्वकबौद्धविश्लेषजनकनिवृत्तिलक्षणया सूत्रेणैव सिद्धेदं वार्तिकमुत्तरसूत्राणि च प्रत्याख्येयानीति स्पष्टं भाष्ये* ।

*भयं भीस्त्राणन्त्रास्तदाह । भयार्थानामिति । हेतुतृती-

---

*जुगुप्सादीनामिति । अनिष्टसाधनत्वज्ञानं जुगुप्सतेरर्थः । तत्समभिव्याहृतपञ्चम्या विषयत्वमर्थः । तथा च पापाज्जुगुप्सते इत्यादौ पापविषयकमनिष्टसाधनत्वज्ञानमिति बोधः । विरमतेस्तु प्रागभावसाधारणकृत्यभावानुकूलो व्यापारोऽर्थः । योगक्षेमसाधारणीचात्र अनुकूलता स्वरूपसम्बन्धविशेषप्रयोजकत्वरूपा । धर्माद्विरमतीत्यादौ धर्मविषयककृत्यभावानुकूलो व्यापारः उपेक्षाविशेषरूप एव । प्रमाद्यतेस्तु इष्टसाधने वस्तुनि समानदेशत्वसमानकालत्वोभयसम्बन्धेनाधिकारविशिष्टेष्टसाधनत्वाभावज्ञानमर्थः । पञ्चम्यर्थश्च विषयत्वं ज्ञानेऽन्वेति इति दिक् ।

*स्पष्टं भाष्ये इति । एतेन तत्तदर्थपूर्वकनिवृत्तिलक्षणयाऽपादानत्वसिद्धौ सम्बन्धित्वेन विवक्षायां प्राप्तायाः षष्ठ्या बाधनार्थमिमानीति शङ्का निराकृतेति बोध्यम् ।

*भयमिति । अनिष्टज्ञानं भयम् । *त्राणमिति । अनिष्टविरहानुकूलो व्यापारस्त्राणम् । चोराद्बिभेतीत्यादौ पञ्चम्यर्थापादानत्वस्य धात्वर्थैकदेशेऽनिष्टेऽन्वयः । तथा च चोरापादानकानिष्टज्ञानं, चोरापादानकानिष्टविरहानुकूलो व्यापार इति च बोधः । भयहेतुरित्यस्य च भयैकदेशानिष्टहेतुरित्यर्थः । तेन चोरात् त्रायते इत्यादौ चोरतः अनिष्टज्ञानाभावेऽपि अनिष्टजनकत्वस्य तत्र स-

यापवादो ऽयम् । अरण्ये इति । भयाद्यर्थानां योगे कारकमपादान-मित्यर्थेऽविशेषात्सर्वसंज्ञापवादः स्यादिति भावः ॥

*पराजे ॥ असोढो ग्लानिविषयः । एवञ्च पराजेरकर्मकत्वे उदाहरणत्वं–तदाह ग्लायतीत्यर्थ इति । अभिभवतीति । तिरस्कारानुकूलो व्यापारो धात्वर्थ इति भावः ।

प्रवृत्तिविघात इति । *भक्षणसंयोगादिजनकव्यापाराभावानुकूलो व्यापार इत्यर्थः । ईप्सित इति । वारणार्थधात्वर्थफलाश्रय इत्यर्थः । उदाहरणे च तद्धात्वर्थव्यापारजन्यसंयोगादिरूपफलाश्रयत्वाद्यवानामपादानत्वम् । ईप्सित इत्यनेन प्रधानाप्रधानान्यतरव्यापाराश्रयमात्रस्याक्षेपः, कर्मलक्षणे तु तमब्ग्रहणात् *प्रकृतधात्वर्थप्रधानभूतव्यापा-

---

त्वात् न पञ्चम्यनुपपत्तिः । ननु यस्मात् कण्टकादेः अनिष्टं नैवोत्पन्नं ततः पञ्चमी न स्यात् अनिष्टहेतुत्वस्य तत्रासत्त्वादिति चेन्न । हेतुत्वारोपणेव कण्टकात् त्रायते इत्यादिप्रयोगाणामिष्टत्वात् । एवमेव आकाशो न पश्यति, घटो न पचति इत्यादिप्रयोगा उपपद्यन्ते । दर्शनादौ आकाशकर्तृत्वादिकमारोप्य तस्यैव निषेधात्, बोधाच्च । शशशृङ्गं नास्तीत्यादिवदित्याहुः ।

*पराजे । कृत्यसाध्यत्वधीसमानाधिकरणोऽनुत्साहः पराजयतेरर्थः ।

*भक्षणसंयोगादीति । यवेभ्यो गां वारयतीत्यादौ भक्षणजनकव्यापाराभावानुकूलो व्यापारः । कूपादन्धं वारयतीत्यादौ तु संयोगजनकव्यापाराभावानुकूल इति भावः ।

*प्रकृतधात्वर्थप्रधानभूतव्यापारेति । धात्वर्थप्रधानभूतव्यापाराश्रयस्यैव कर्तृत्वात् तमब्ग्रहणात् कर्तुः स्वव्यापारेण आप्यत्वेनेष्टस्य कर्मसंज्ञेत्यर्थे कर्तृत्वस्य प्रत्यासत्त्या प्रकृतधात्वर्थनिरूपितस्यैव ग्रहणे फलवत्त्वरूपाप्यत्वघटकफलस्यापि उपस्थितत्वात् प्रकृतधात्वर्थस्यैव ग्रहणात् प्रकृतधात्वर्थप्रधानव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयस्यैव ग्रहणमित्यर्थः । प्रकृतसूत्रे तु ईप्सित इत्येतावन्मात्रोपादानेन आप्यत्वेनेष्टस्येत्यर्थे आप्यत्वघटकफलस्य उपस्थितत्वात् प्रकृतधात्वर्थस्यैव ग्रहणेऽपि आप्तिक्रियायाः जनकं विनाऽनुपपन्नत्वात् जनकमात्रस्याक्षेपेण कारकस्य प्रकृतधात्वर्थफलाश्रयत्वेन यदिष्टमित्यर्थस्यैव लाभः । कर्तृपदानुपादानेन कर्तुः आप्यत्वेनेष्टमित्यर्थासंभवात् । प्राधान्यात् कथं चित् कर्त्राक्षेपेण कर्तुः आप्यत्वेनेष्टमित्यर्थसंभवेऽपि तस्य पदादनुपस्थित्या प्रकृतधात्वर्थनिरूपितस्यैव तस्य ग्रहणे मानाभावेन प्रकृतधात्वर्थप्रधानभूतव्यापारप्रयोज्यत्वसंबन्धेन आपधात्वर्थफले तस्यान्वयासम्भवेन प्रकृतधात्वर्थप्रधानव्यापारप्रयोज्यफलाश्रयस्येत्यर्थो दुरुपपाद एव । ननु कर्तृग्रहणंनैव प्रत्यासत्त्या एतदर्थस्य सुलभत्वात् तमब्ग्रहणं व्यर्थमिति चेन्न । लाघवात्

रप्रयोज्यप्रकृतधात्वर्थफलाश्रयस्य ग्रहणमिति भावः ॥

अन्तर्धौ ॥ अन्तर्द्धिरन्यकर्तृकस्वकर्मकदर्शनाभावानुकूलो व्यवहितदेशस्थितिरूपस्तद्घटकं यत्कर्तृकदर्शनाभावमिच्छति तदपादानमित्यर्थस्तत्फलितमाह—व्यवधाने सतीति । येनेत्यत्र कर्तृकर्मणोरिति षष्ठी न, सौत्रत्वात् । आत्मन इति प्रत्यासत्तिलब्धम् । मातुर्निलीयतइत्यादावाक्षेपलभ्येच्छा बोद्ध्या । चोरानिति । चोरकर्मकदर्शनेच्छाऽभाव इति शाब्दोऽर्थः । स च चोरकर्तृकस्वदर्शनाभावायेति प्राप्तिः । इच्छामात्रस्याक्षेपलभ्यत्वे इव विशिष्टस्याक्षेपलभ्यत्वे ऽपि स्यादिति भावः । प्रकृते नान्तर्द्धिरिति न दोषः । येनेत्यस्याभावे हि स्वकर्मकदर्शनाभावं य इच्छति इत्यर्थे कर्तुरेव स्यादतस्तत् । इच्छतिग्रहणं किमिति । अन्तर्धौ सति यत्कर्तृकदर्शनस्याभावस्तदपादानमित्यर्थोऽस्त्विति भावः । सत्यपीति । अदर्शनेच्छया तदनुकूलव्यापारकरणे दैववशाद्दर्शने सत्यपीत्यर्थः । अन्यथा यत्र दर्शनाभाव एव तत्रैव स्यादिति भावः ।

नियमेति । उपयोगशब्दस्य तत्रैव रूढेः । नियमो ब्रह्मचर्यादिः । नटस्येति । नटजन्यं श्रवणमिति बोधात् कारकत्वम् । नियमपूर्वकविद्यावक्तृत्वाभावान्नेत्युत्तरम् ॥

जनिक ॥ प्रकृतिरुपादानकारणं, ब्रह्म च मायाशबलञ्जगदुपादानकारणम् । वृत्तौ हेतुपदमप्युपादानकारणपरमेवेति बोद्ध्यम् । *विभाषेत्येव सिद्धे इदमपादानत्वेन बोधनार्थम् । तत्र हि 'गुणे ऽस्त्रियाम्' इति

---

तमब्ग्रहणेनैव एतदर्थलाभसंभवे कर्तृग्रहणस्य प्रत्याख्येयत्वात । ध्वनितं चेदं वारणार्थानामितिसूत्रे माणवकेऽपादानत्ववारणार्थं कृतस्य कर्मणो यदीप्सितमिति न्यासस्य तमब्ग्रहणात् प्रत्याख्यानेन भाष्ये इति तत्रैव विवरणे स्पष्टम् । फले प्रकृत धात्वर्थत्वांशस्तु न तमब्लभ्यः । तस्य प्रत्यासत्त्यैव लभ्यत्वात् । अत एव कर्तुरीप्सितसूत्रे भाष्ये तमब्ग्रहणाभावे वारणार्थानामित्यस्यानवकाशत्वमापादितम् । ननु पयसा ओदनं भुङ्क्तइत्यादौ पयआदीनां कर्मत्वनिवारणं फलमुक्तम् । तस्मात् कर्तुः स्ववृत्तिव्यापारप्रयोज्यत्वसम्बन्धेन आपधात्वर्थे फले ऽन्वय एव तमब्लभ्यः । फलत्वघटकधातौ शीघ्रोपस्थितिकप्रकृतत्वरूपविशेषणापेक्षया व्यापारप्रयोज्यत्वसंबन्धेन तत्रान्वयस्यैव यत्नसाध्यत्वाच्चेति दिक् ।

*विभाषेत्येवेति । पुत्रात्प्रमोदो जायते इत्यादौ अनेनैव पञ्चमीति भावः । "यतो वा इमानि भूतानि जायन्ते" इत्यादौ जनिकर्तुरिति पञ्चमी । स्थितिलयाधारत्वश्रवणेन तस्योपादानत्वनिर्णयात् । 'जनितुः प्रकृतिः' इत्येव

प्रायिकम्, बाहुलकं प्रकृतेस्तनुदृष्टेरिति वार्त्तिकप्रयोगात्* ॥

*भुवः ॥ प्रभवनं प्रथमप्रकाशः प्रग्रहणात् । तदधिकरणमपादानमित्यर्थः । 'प्रभवो जलमूले स्यात् जन्महेतौ पराक्रमे । ज्ञानस्य चादिमस्थाने' इति विश्वः । प्रकाशत इत्यस्य योगे तु न, प्रथमप्रकाशार्थत्वाभावात् । तदाह—तत्र प्रकाशते इत्यर्थ इति ।

ल्यब्लोपइति । ल्यबन्तशब्दाज्ञाने इत्यर्थः । कर्मणीति । प्रत्यासत्त्या ल्यबन्तधात्वर्थस्येति भावः । प्रासादादिति । फलेभ्यो यातीत्यत्रैव बोधप्रक्रिया । "आजघ्ने विषमविलोचनस्य वक्ष" इत्यत्र कर्मणः शेषत्वविवक्षया षष्ठी । वक्ष इत्यस्य प्राप्येति शेषः । गम्यमानाऽपीति । विशिष्य तद्वाचकपदानुपात्ताऽपीत्यर्थः । 'कस्मात् त्वम्'इत्यादौ फलेभ्यो यातीत्यत्रेव बोधप्रक्रिया ।

अन्येत्यर्थेति । तदर्थश्च भेदवान् । अत एव घटात् भिन्न इत्यादिसिद्धिः ।

परे तु ध्रुवमिति सूत्रे अपायशब्देन भेदस्यापि ग्रहणम् । "पञ्चमी विभक्ते" इत्यत्र विभागार्थकविभक्तपदेन भेदस्य व्याख्यानात् । भिदिर् विदारणे इत्यत्र भेदज्ञानविषयत्वमपि विदारणम् । एकत्वेन गृहीतस्य तथा बोधे बुद्धिविदारणस्य तत्रापि सत्त्वात् । अत एव घटात् भेद इति सिद्धं, तद्योगेऽप्यपादानत्वात् । तस्यैव सम्बन्धत्वेन विवक्षायाङ्घटीयो भेद इत्यपि । अन्यशब्दार्थस्याक्रियात्वात् तद्योगे एतद्विधानम् । अत एव घटः पटो नेत्यादौ न पञ्चमी । नञो भेदवदर्थकत्वेऽपि अक्रियात्वात् । घटादेरू इत्याद्यसाध्वेव । अत एवेतरग्रहणञ्चरितार्थम् । अत एव भाष्ये ऽर्थग्रहणं नोक्तमित्याहुः* ।

---

सिद्धे कर्तृग्रहणं कर्तृसंज्ञकत्वविवक्षार्थम् । तेन मृदो घटं जनयतीत्यादौ नापादानत्वमित्याहुः ।

वार्तिकेति । "उणादयो बहुलम्"इति सूत्रे इति शेषः । उणादौ पठितानां प्रकृतीनमल्पत्वदर्शनात् बाहुलकमाश्रितमिति तदर्थः ।

*भुवः प्रभवः । जनिकर्तुरित्यतः कर्तृग्रहणमनुवर्तते । तत्सामर्थ्यात् कर्तृसंज्ञकस्य ग्रहणम् । तेन हिमवति गङ्गां प्रभावयतीत्यादौ अधिकरणत्वाविवक्षायां नेत्याहुः ।

*इत्याहुरिति । अन्येत्तु अन्येति भावप्रधाननिर्देशेन अन्यत्वार्थकयोगे

आराद् दूरसमीपयोः । एतद्योगे दूरान्तिकार्थैरिति प्राप्तम् । नन्वयं देशवाची न दिक्शब्दः, अत आह—दिशि दृष्ट इति । शब्दग्रहणादिति भावः । ते च रूढ्या दिग्विशेषवाचकाः पूर्वादय एव गृह्यन्ते, न ऐन्द्रीककुबादयो व्याख्यानात् । अवयववाचीति । तद्वाचिपूर्वादियोगेऽवयविवाचकान्नेत्यर्थः । ज्ञापकस्य सजातीयापेक्षत्वात् । अत एवास्मादयं पूर्वो भागः कायस्येति सिद्धम् । अवयवे पूर्वत्वम् अवयवान्तरापेक्षया प्रथमकालोत्पत्तिकत्वेन बोद्धव्यम् । अन्वृत्तरपदस्येति । दिक्शब्दसाहचर्येण तस्य दिग्वाचकस्यैव ग्रहणं, तेन सध्र्यङ् इत्याद्यर्थं तन्नेति भावः । बाधितुमिति । परत्वात्प्राप्तमित्यादिः । यदि तु षष्ठ्यतसर्थेत्यत्र प्रत्ययग्रहणात्तस्य श्रूयमाणप्रत्ययएव प्रवृत्तिस्तदेदं माऽस्त्विवति तत्त्वमिति भाष्ये स्पष्टम् । दक्षिणा ग्रामादिति । दक्षिणस्यां दिशीत्यर्थे "दक्षिणादाच्" "आहि च दूरे" इत्याजाही । षष्ठ्यतसर्थेत्यस्यापवादः ।

प्रभृतियोग इति । प्रभृत्यर्थयोगइत्यर्थः । "अपादाने पञ्चमी" इति सूत्रे "यतश्चाध्वकालनिर्माणं ततः पञ्चमी, कार्तिक्या आग्रहायणी मासे" इतिवार्त्तिकप्रत्याख्यानाय "इदमत्र प्रयोक्तव्यं सन्न प्रयुज्यते कार्तिक्याः प्रभृत्याग्रहायणी मासे" इति भाष्येण 'प्रभृतिशब्दाभावेऽपि तदर्थसत्तामात्रेण पञ्चमी'-इत्यर्थकेन 'प्रभृत्यर्थयोगे पञ्चमी' इतिवचनसत्त्वस्य भगवता बोधितत्वात् । अन्यथा प्रभृतिपदाभावे पञ्चम्यर्थं वचनस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिरिति भावः । एवञ्च तदर्थकारभ्यशब्दयोगेऽपि पञ्चमी । यथा "अवीचिमारभ्य मेरुपृष्ठपर्यन्तं भूलोको मेरुपृष्ठादारभ्य ध्रुवपर्यन्तङ्ग्रहनक्षत्रतारागणचित्रितोऽन्तरिक्षलोकः" इति पातञ्जलभाष्यप्रयोगे । प्रभृतीत्यस्य चावधिमादायेत्यर्थः । आरभ्येत्यस्यैतदर्थकतापि । अवधौ पञ्चम्यन्तार्थस्याभेदेनान्वयः । तद्विशेषणत्वेऽपि न द्वितीया । प्रभृत्यर्थयोगे पञ्चमीति भाष्यकृद्बोधितवचनात् । आरभ्येत्यस्य गृहीत्वेत्यर्थेनावीचिमारभ्येत्यादौ द्वितीया ।

---

पञ्चमीत्यर्थः । तेन घटाद्भेद इत्यादीनां सिद्धिः । घटादेक इत्याद्यपीष्यते एव । घटः पटो नेत्यादौ तु न पञ्चम्यापत्तिः । अन्यार्थकस्य अन्यशब्दसदृशस्य लिङ्गसंख्यान्वय्यर्थकस्यैव ग्रहणात् । घटीयो भेद इति तु घटस्यायम् इति इदमर्थान्वयविवक्षया साधु । इतरस्त्वन्यनीचयोः इति कोशात् नीचार्थकेतरशब्दयोगे तु "पञ्चमी विभक्ते" इत्यनेन सिद्धिः । तस्मात् इतरग्रहणं स्पष्टतया भेदविशिष्टार्थकयोगे ऽपि पञ्चमीत्यर्थबोधनार्थं सत् प्रपञ्चार्थमेव इत्याहुः ।

वस्तुतोऽवधित्वं तस्य समभिव्याहृतपदार्थनिरूपितं गम्यमान-क्रियापेक्षमित्यपादानत्वादेवात्र पञ्चमी सिद्धा । *कार्तिकीतो विभक्ते अत एव कार्तिक्यवधिके आग्रहाणीघटिते मासे कार्तिकीमादाय गते आग्रहायणीति बोधः । भवात्प्रभृति आरभ्य वेत्यत्र भवकालाद्विभक्ते अत एव भवावधिके मरणान्ते काले भवकालमादाय हरिः सेव्य इति बोधः । एवमन्यत्राप्यूह्यमित्यलं विस्तरेण ।

ज्ञापकादिति । पञ्चम्यन्तेन समासविधानाज्ज्ञापकादित्यर्थः । अयं भावः । परस्परसाहचर्यात्तत्रापपरी वर्जनार्थौ कर्मप्रवचनीयावेव । तद्योगे "पञ्चम्यपाङ्परिभिः" इति वचनात्, लक्षणप्रतिपदोक्तपरिभाषयाऽपपरिनिमित्तकसुबन्तस्यैव ग्रहणाच्च पञ्चम्यैव सिद्धः समासः–तत्साहचर्यादुक्तपरिभाषया चाञ्चूत्तरपदेनापि तन्निमित्तपञ्चम्यैव सिद्धः समासः इति व्यर्थं तत् बहिःशब्देन पञ्चम्यन्तेन समासविधानद्वारा तद्योगे पञ्चम्या अपि ज्ञापनार्थमिति* । इदम् अपपरिबहिरिति सूत्रे भाष्ये स्पष्टम् । पञ्चमीति । *सापीत्यर्थः । तेन करस्य करभो बहिरिति सिद्धम् ।

प्रतिनिधि ॥ यस्मादिति पञ्चम्यर्थः सम्बन्धः । अस्मादेव निपातनात् षष्ठ्यर्थे पञ्चमी । प्रतिनिधिप्रतिदानशब्दौ कर्मकि–भावल्युडन्तौ । प्रतिनिधिप्रतिदाने यत्सम्बन्धिनी ततः कर्मप्रवचनीययुक्तात्पञ्चमीत्यर्थः । प्रतिनिधिः सदृशः, प्रतिदानम् दत्ततुल्यमूल्यस्य वस्तुनः प्रत्यर्पणम् । कर्तृवर्जितमिति । कर्तृसञ्ज्ञारहितमित्यर्थः । ऋणत्वं वस्तुसन्निमित्तं न तु तृतीयावाच्यकोटिनिविष्टम् । हेतुभूतमिति । तेन करणत्वविवक्षायान्तृतीयैवेति भावः ॥

विभाषा गुणे । योगविभागादिति । बाहुलकं प्रकृतेस्तनुदृष्टेरित्युक्तवार्तिकप्रयोगाद् 'गुणे ऽस्त्रियाम्' इति प्रायिकमित्यन्ये । धूमादि-

---

'कार्तिक्या आग्रहाणी मासे' इतिवाक्यजबोधाकारमाह *कार्तिकीतो विभक्ते इति* । काश्चित्तु कार्तिक्या अव्यवहितोत्तरत्वेन मासे तस्य चान्त्यत्वसम्बन्धेनाग्रहायण्यामन्वय इत्याह । *ज्ञापनार्थमिति । एतेन पञ्चम्येत्यस्य अपादियोगे चारितार्थ्यात् सामर्थ्यात् अन्यसुबन्तेनैव बहिःशब्दस्य समासः स्यादित्यपास्तम् । *सापीति । ज्ञापकसिद्धस्य असार्वत्रिकत्वादिति भावः । एतेन पञ्चमीप्रकरणे एव बहिर्ग्रहणं कर्तुमुचितमित्यपास्तम् ।

ति । *धूमपदं स्वज्ञानेऽग्निमत्पदं स्वज्ञानविषये लाक्षणिकं बोद्धव्यम् । समुच्चयार्थमिति । स्पष्टश्चेदं भाष्ये । एतेनान्यतरस्य आमङ्गीकार इत्यर्थकं *पदद्वयमेतदित्यपास्तम् । विकल्पविषयेऽप्यर्थासङ्गतेश्च ।

परे तु द्वितीयासमुच्चयो न फलम् । विना वातं विना वर्षमित्यादौ ऋतेशब्दयोगइव "ततोऽन्यत्रापि दृश्यते" इत्यनेन द्वितीयासिद्धेः । अत एव भाष्ये द्वितीयासमुच्चयो नोक्तः । "पञ्चम्या अधिकारे द्वितीयाषष्ठीविषये *प्रतिषेधो वक्तव्यः, दक्षिणेन ग्रामं दक्षिणतो ग्रामस्य" इति प्रकृतसूत्रस्थभाष्येण "एनपा द्वितीया" इति सूत्रं षष्ठ्यतसर्थेत्यतः प्रागिति च सूचितम् । अन्यथा *सौत्रक्रमत्यागे, *न्यायाविपरीतपूर्वनिपातकरणे च बीजानापत्तिः । *अत एव करणे चेति सूत्रे द्वितीयासमुच्चयो *नेत्याहुः ॥

करणे च ॥ करणे तृतीयायाः सिद्धत्वेन पक्षे पञ्चम्यर्थं वचनमिदम् । चकारः तृतीयान्यतरस्यामित्यनुकर्षणार्थः । षष्ठी गापोष्टगितिवत् । अद्रव्येति । द्रव्याभिन्नवचनेभ्य इत्यर्थः । द्रव्यपदेनात्र सर्वनामपरामर्शयोग्यं, लिङ्गनिरूपितविशेष्यं वा । स्तोकशब्दो यद्धर्मावेशाद् द्रव्ये स्तोकव्यवहारस्तद्धर्मपरः । स च धर्मो ऽल्पादिशब्दप्रवृत्तिनिमित्तमेव । शुक्लादिवच्चैते धर्मवचना अपि । करणत्वञ्च परम्परया । ईदृशार्थएव च साधुत्वं सूत्रबलादिति स्पष्टमलुगुत्तरपदइत्यत्र कैयटे । करणे किम् । स्तोकम्पचति । असत्त्वरूपफलसमानाधिकरणविशेषणत्वादत्र स्तोकशब्दस्यासत्त्ववचनत्वमिति दिक् ॥

दूरान्तिका ॥ अत्र "दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्" इत्यतः समुच्चयार्थकान्यतरस्यांग्रहणानुवृत्त्यैवार्थाधिकारात्पञ्चम्याः सिद्धौ चकारो

---

*धूमपदं स्वज्ञाने इति* । धूमज्ञानस्यैव अग्निमज्ज्ञानं प्रति हेतुत्वात् । ज्ञाननिष्ठहेतुहेतुमद्भावस्य विषये आरोप इति भावः ।

*पदद्वयमेतदिति* । द्विविषयनिर्धारणार्थकान्यतरशब्दप्रकृतिकषष्ठ्यन्तम् अन्यतरस्येत्येकम्, आमिति अङ्गीकारार्थकं च द्वितीयमित्यर्थः । प्रतिषेध इति* । पञ्चम्या इति शेषः । *सौत्रक्रमत्यागे इति* । द्वितीयाषष्ठीरयुक्त्या "षष्ठ्यतसर्थप्रत्ययेन" "एनपा द्वितीया" इतिसूत्रक्रमत्यागः स्पष्ट एव । *न्यायेति । अल्पाच्त्वेन षष्ठीद्वितीयेति न्याय्यम् । *अत एव–द्वितीयासमुच्चयाभावादेव । *नेति । अत्र द्वितीयानुवृत्तौ सन्नियोगशिष्टत्वाद् उत्तरत्रापि द्वितीयानुवृत्तिरापद्येत । अत्रैव तन्निवृत्तौ तु उत्तरत्रापि सा नानुवर्तत इति भावः ।

*इति पञ्चमी ।

व्यवहिततृतीयासमुच्चयार्थो व्याख्यानादित्याह—चादित्यादि । प्रातिपदिकार्थमात्रे इति । व्याख्यानादिति भावः ॥

इति पञ्चमी ॥

षष्ठी शेषे ॥ शेष उक्तादन्यः । स च तत्तद्रूपेण स्वत्वादिः संबन्धत्वेन रूपेण च । कारकविभक्तीनां क्रियाजनकत्वसमानाधिकरणकर्तृत्वादिशक्तिरूपेण बोधकत्वम् । तत्रापि तन्मूलके संबन्धे विवक्षिते षष्ठी । तदाह—कारकेति । स्वस्वामिभावादिरिति । स्वत्वस्वामित्वसमूहः संबन्ध इत्यन्यत्र विस्तरः । एवं सर्वत्र बोद्ध्यम् । षष्ठ्यर्थस्य *संसर्गविधयैव भानम् । कारकविभक्तिभ्यो ऽपि क्रियाकारकभावस्य संसर्गविधया भानमित्युक्तम् । संबन्धमात्रविवक्षायामिति । संबन्धत्वेन भाने इत्यर्थः । यद्वा क्रियाकारकभावमूलकसंबन्धस्यैव विवक्षायां न तु तद्विवक्षायामित्यर्थः । कर्तुरपि तथा विवक्षा "क्तस्य च वर्तमाने" इति सूत्रे छात्रस्य हसितमित्यादौ भाष्ये स्पष्टा । संयोगसंबन्धावच्छिन्नाधारस्य न तथा विवक्षा । अत एव घटवद् भूतलमितिप्रयोगसाधकं मतुप्सूत्रे अस्मिन्निति चरितार्थमिति तत्रैव भाष्ये स्पष्टम् । लोहितोष्णीषा इत्यादावपि सप्तम्यर्थे बहुव्रीहिर्बोद्ध्यः ।

एधो दकस्येति । एधः कर्तृ कर्ता वा । दकस्योदकस्येत्यर्थः । एधशब्दो ऽदन्तः पुल्लिङ्गः कारकइति सूत्रे भाष्ये प्रयुक्तः—एधाः पच्यन्ते

---

*संसर्गविधयैव भानमिति* । ननु व्युत्पत्तिवादोक्तरीत्या प्रतिबध्यप्रतिबन्धकभावलाघवानुरोधेन प्रकारतयैव भानमिष्यतां किं तद्विरुद्धोक्त्येति चेन्न । ज्ञानद्वयस्य युगपदसम्भवेन ज्ञानघटितसामग्रीककार्यद्वयासम्भवात् प्रतिबध्यप्रतिबन्धकभावोपगमस्य व्यर्थत्वात् । समूहालम्बनस्यैकस्यापि कार्यद्वयप्रयोजकस्य सम्भवे तु प्रत्यक्षशाब्दात्मकस्यापि एकस्यैव समूहालम्बनात्मकस्य कार्यस्य संभवेन प्रतिबन्ध्यप्रतिबन्धकभावोपगमवैयर्थ्यं तदवस्थमेव ।

मनसः परमाणुरूपस्य निरवयवस्य सत्त्वेन युगपज्ज्ञानद्वयासम्भवेन तार्किकाणां कथंचित् प्रतिबध्यप्रतिबन्धकभावावश्यकत्वेऽपि 'जन्यत्वेन सावयवं मन' इति सांख्यमतमनुगच्छतां वैयाकरणानां प्रतिबध्यप्रतिबन्धकभावानभ्युमगम एव । एकदेशावच्छिन्नेनैकस्यापरदेशावच्छिन्नेन मनसाऽपरस्य ज्ञानस्य इति युगपज्ज्ञानद्वयजननसंभवात् । दीर्घशष्कुलीभक्षणादौ युगपदनेकज्ञानानुभवाच्च । तस्मादभेदवादोक्तकार्यकारणभावलाघवानुरोधेन संसर्गविधयैव भानमङ्गीकार्यमिति दिक् ।

इति। सान्तः क्लीबोऽपि। हेतौ द्योत्ये इति। हेताविति वर्तते। हेतुहेतुमद्भावेनेतरान्वये इत्यर्थः। तेनान्नं हेतुं पश्येत्यादौ न। षष्ठीति। हेतुवाचकादित्यर्थः। निमित्तेत्यादि। निमित्तादिप्रयोगे तेभ्यस्तत्समानाधिकरणशब्देभ्यश्चेत्यर्थः। किन्निमित्तमिति। प्रथमान्तं द्वितीयान्तञ्च। प्रायग्रहणादिति। एवञ्च "षष्ठी हेतुप्रयोगे" "सर्वनाम्नस्तृतीया च"-इति सूत्रे व्यर्थे इति बोद्धव्यम्॥

षष्ठ्यत॥ दिक्शब्दात्पञ्चम्यां प्राप्तायामिदम्। *ततः पश्चादित्यत्र तु सार्वविभक्तिकः षष्ठ्यन्तात्तसिः। षष्ठ्यपीति। स्पष्टञ्चेदं वृत्तौ। भाष्ये तु न दृश्यते। विपरीतं षष्ठ्यतसर्थेति सूत्रात्पूर्वम् एनपेत्यस्य पाठ इति लभ्यते इति पृथग्विनानानेति सूत्रे उक्तम्॥

दूरान्तिकार्थैः॥ यदपेक्षं दूरत्वादिकन्ततः षष्ठीत्यर्थः। पञ्चमी चेति। *तस्या एव समुच्चयो, न द्वितीयातृतीययोरपीति भावः॥

ज्ञोऽविदर्थ॥ अत्र सूत्रे ऽविदर्थस्येति छेदो *व्याख्यानात्। सर्पिषो ज्ञानमिति। जानातेः प्रवृत्तिरर्थः। सर्पिःसम्बन्धिनी प्रवृत्तिरित्यर्थः।

अधीग॥ अधीगर्थः स्मृतिः। कर्मणि किम्। मातुर्गुणस्मरणम्। करणे शेषेऽनेन षष्ठ्यभावे समासो भवत्येव। अत एवात्र सूत्रे भाष्ये शेषइति वर्ततइत्युक्तम्। "प्रतिपदविधाना षष्ठी न समस्यते"इति *एतैः षष्ठीसमासनिषेधात्। एधो दकस्येति। एध इति पृथक्पदं, दकशब्द उदकवाची॥

रुजार्थानाम्॥ रोगार्थानां *धातूनामित्यर्थो व्याख्यानात्।

---

*ततः पश्चादिति। पश्चाच्छब्दयोगे अनेन षष्ठ्या एव युक्तत्वादिति भावः।

*तस्या एवेति। पृथग्विनेति साहचर्यात् अन्यतरस्यांग्रहणं समुच्चयार्थम्। तत्र तद्ग्रहणेन पञ्चम्याः समुच्चयात् अत्रापि तस्या एव समुच्चयः। सन्निहितत्वात् तृतीयायाः समुच्चये तु पुनरत्र अन्यतरस्यांग्रहणं व्यर्थं स्यात्। षष्ठीचेत्युक्त्यैव सन्निहिततदनुवृत्तिसम्भवात् इति पदमञ्जर्यां हरदत्तः।

*व्याख्यानादिति। "विदर्थस्य ज्ञ"इत्येव लघुभूतासंदिग्धपाठेन सिद्धे "ज्ञोविदर्थस्य"इतिगुरुभूतसंधिघटितपाठमूलकादित्याहुः।

*एतैरिति। अधीगर्थादिभिः।

*धातूनामित्यर्थं इति। यद्यपि रुजाशब्दो दुःखजनकव्याधौ रूढस्तथापि अज्वरेरितिपर्युदासबलात् प्रकृत्यर्थमात्रविवक्षया तदर्थको धातुरेव गृह्यते।

धातोर्भाववचनत्वाव्यभिचारेण सामर्थ्याद्वचनइति कर्तरि ल्युट्। भावशब्देन सिद्धरूपोऽर्थ उच्यते, ल्युट्प्रकृत्यर्थो *ऽविवक्षितस्तदाह । भावकर्तृकाणामिति, रोगकर्तृकामिति च । रोगो ऽत्र क्षयादिः । भावकर्तृकाणां किम् । श्लेष्मणश्चौररुजा । श्लेष्मात्र न भावः। सर्पिषो नाथनमिति । सर्पिर्मे भूयादित्याशासनमित्यर्थः ॥

जासिनि ॥ जसु मोक्षणे इति दैवादिकस्य *न ग्रहणम् । जासीति निर्देशाद्, हिंसायामित्युक्तेश्च । निप्रोपसृष्टो हनो निप्रहणः । शब्दपरत्वे ऽपि सौत्रत्वाद्धन्तेरिति णत्वम् । चुरादिरिति । घटादेस्तु न ग्रहणं, दीर्घनिर्देशात् । 'क्राथनम्'इति घटादेः क्रथेः । क्राथेति सूत्रे निपातनाद् वृद्धिरिति वृत्तिः । परे तु एतत्सूत्रप्रामाण्यान्नटसाहचर्याच्चायमपि चुरादिर्बोध्यस्तस्याकृतिगणत्वात् । निपातनस्य शेषषष्ठीसन्नियोगशिष्टत्वे कर्मत्वेन विवक्षायां चोरस्य क्राथनमित्यस्यानापत्तिः । सामान्येन निपातने चिण्णमुल्विषये क्रथं क्रथमित्यादेः क्रथयतीत्यादेश्चानापत्तिरित्याहुः ।

समर्थयोरिति । समपर्यायसंशब्देन समासः, शकन्ध्वादित्वात् पररूपं वा । ब्राह्मणपणनमिति । आयप्रत्ययो वैकल्पिकत्वान्न कृतः । उदाहरणे स्तुतावेवेति नियमादपि न ।

दिवस्त । कर्मणि षष्ठी स्यादिति । शेषइति त्वत्र न सम्बन्ध्यते *व्याख्यानात् । अत एव "द्वितीया ब्राह्मणे"इति सूत्रं 'गामस्य

---

कर्मणस्तस्यैव सम्भवाच्चेति भावः। *अविवक्षित इति । भावस्य वक्तृत्वासम्भवादिति भावः। चौरस्य रोगस्य रुजेत्यादौ सर्वत्र रुजा पीडेति बोध्यम्।

*न ग्रहणमिति । किंतु जसु ताडने, जसु हिंसायाम् इति चुराद्योर्ग्रहणमित्यर्थः ।

*व्याख्यानादिति । "विभाषोपसर्गे" "द्वितीया ब्राह्मणे"इतिसूत्रद्वयारम्भमूलकादित्यर्थः । तथाहि-अत्र शेषे इत्यस्य सम्बन्धे "विभाषोपसर्गे"इत्यत्र शेषे इति सम्बध्यते न वा । सम्बन्धे तस्य वैयर्थ्यम् । एतच्च तत्रैवोपपादयिष्यते । तत्र शेषे इत्यस्य असम्बन्धे वेदेऽपि "विभाषोपसर्गे"इत्यनेनैव कर्मणि द्वितीयायाः सिद्धौ "द्वितीया ब्राह्मणे" इत्यस्य वैयर्थ्यापत्तिः । न च पक्षे प्राप्तषष्ठीनिवृत्त्यर्थं तदिति वाच्यम् । दृष्टानुविधानस्यैव वेदे सत्त्वेन षष्ठ्यापादनासम्भवात् । न च निरुपसर्गे द्वितीयार्थं "द्वितीया ब्राह्मणे" इत्यस्य चारितार्थ्यं वक्तुं शक्यम् । "दिवस्तदर्थस्य"इत्यत्र शेषग्रहणानुवृत्त्यङ्गीकारे अशेषभूते कर्मणि तेन षष्ठ्या अप्राप्तौ "कर्मणि द्वितीया"इत्यनेनैव द्वितीयायाः सिद्धत्वात् । न च

तदहः सभायान्दीव्येयुः'इत्यत्र नित्यं षष्ठीप्राप्तौ द्वितीयार्थमिति भाष्ये उक्तम् । तत् ध्वनयन् तिङन्तमुदाहरति । शतस्य दीव्यतीति । यद्यपि पूर्वसूत्रे दिवं पठित्वा तदर्थस्येति त्यक्तुं शक्यते तथापि योगविभाग उत्तरार्थः, शेषइत्यस्यासम्बन्धार्थश्च ।

विभाषोप । अत्रापि शेषइति *न सम्बध्यते, तदर्थस्येति च वर्तते । तदाह । पूर्वयोगेति । अत एवेयं प्राप्तविभाषेति नवेति सूत्रे भाष्ये स्पष्टम् ।

कृत्वोऽर्थप्रयो । शेषे किमिति । दिवस्तदर्थस्येत्यादिना विच्छेदादधिकरणकारकएव षष्ठीविधानं युक्तमिति प्रश्नः । द्विरह्नीति । वृत्त्यादिप्रामाण्यान्मण्डूकानुवृत्तिः स्वीकार्येत्युत्तरम् । अधीगर्थेति सूत्रे "कर्मादीनामविवक्षा शेष"इति भाष्ये *बहुवचनेनात्रापि शेषपदसम्बन्धबोधनाच्च । वस्तुतस्तु "कर्माश्रयषष्ठीविषये सूत्रोपात्तसकर्मकाणामकर्मकवद्वच-

---

"द्वितीया ब्राह्मणे"इत्यत्र शेषग्रहणानुवृत्त्या कर्मत्वाविवक्षायां द्वितीयार्थं तदिति वाच्यम् । "विभाषोपसर्गे" इत्यत्र विच्छिन्नत्वेन उत्तरत्रानुवृत्तेरयुक्तत्वात् । नच कृद्योगे पुनर्द्वितीयाविधानं समासाभावार्थमिति वाच्यम् । "किमुदाहरणं, गां प्रति दीव्यन्ति । पूर्वेणाप्येतत्सिद्धम् । इदं तर्हि, गामस्य तदहः सभायां दीव्येयुः" इति "द्वितीया ब्राह्मणे" इतिसूत्रस्थभाष्योक्त्या "अत्र "दिवस्तदर्थस्य" इति षष्ठी प्राप्नोति" इति कैयटोक्त्या च कृद्योगे तस्याप्रवृत्तेर्लाभात् । तस्मात् "दिवस्तदर्थस्य" इत्यत्र शेषपदसम्बन्धाङ्गीकारे "विभाषोपसर्गे" इत्यत्र तत्सम्बन्धे तस्यैव वैयर्थ्यम्, विभाषोपसर्गे इत्यत्र तदसम्बन्धे द्वितीया ब्राह्मणे इत्यस्य वैयर्थ्यम्–इति दिव इत्यादित्रिसूत्र्याम् उभयोः सार्थक्याय तदसम्बन्ध आवश्यकः । तथा च उपसर्गयोगे शतस्य शतं वा प्रतिदीव्यतीति द्वितीयाषष्ठीविधानार्थं "विभाषोपसर्गे" इति, 'गामस्य तदहः सभायां दीव्येयुः' इत्यत्र "दिवस्तदर्थस्य" इति षष्ठीं बाधित्वा द्वितीयाविधानार्थं "द्वितीया ब्राह्मणे" इति च चरितार्थमिति 'दिक् ।

*न सम्बध्यते इति । अत्र शेषग्रहणानुवृत्तौ इदं सूत्रं व्यर्थं स्यात् । दिवस्तदर्थस्येत्यनेनैव समासाभावस्य सिद्धत्वात् । न च अनेन विकल्पेन षष्ठीविधाने पक्षे "शेषे षष्ठी" इत्यस्य प्रवृत्त्या पक्षे समासप्रवृत्तिरेवास्य फलमिति वाच्यम् । तथापि "नोपसर्गे" इति न्यासेन"दिवस्तदर्थस्य"इत्यस्य निषेधे शेषषष्ठ्यां समासविकल्पेन रूपद्वयस्य सिद्धौ विभाषाग्रहणवैयर्थ्यापत्तेर्दुर्वारत्वात् इति भावः ।

*कृत्वोर्थे । *बहुवचनेनेति । अधिकरणघटितेऽस्मिन् सूत्रे शेषपदासंबन्धे 'कर्मादीनामविवक्षा शेष' इति बहुवचनासङ्गतिः । एतद्व्यतिरिक्ते कर्मकर-

नम्''इतिवार्तिकप्रत्याख्यानाय शेषे इति वर्तते इति भाष्यकृतोक्ते परेण ''शेषश्च क''इति पृष्टे ''शेषे षष्ठी''इतिसूत्रोक्तं ''कर्मादीनामविवक्षा शेष''इति सिद्धान्तिना स्मारितम्। नैतावता कृत्वोर्थेत्यत्र तत्सम्बन्धो लभ्यते। *किं चैतद्भाष्यबलात् दिव इति सूत्रे ऽपि शेषपदसम्बन्ध आवश्यकः। अन्यथा वार्तिकरीत्या शतस्य दीव्यते इति भावे इष्टस्य प्रयोगस्यासिद्धिः। अत एव वार्तिकव्याख्यायाम् ''अधीगर्थादयः *प्रेष्यब्रूपर्यन्ताः कर्माश्रयपदेनोच्यन्ते'' इति कैयटः। एवञ्च शेषइत्यनुवृत्त्या वार्तिकप्रत्याख्यानवत् *एतत्सूत्रद्वय-प्रत्याख्याने एव भाष्यतात्पर्यम्। ''द्वितीया ब्राह्मणे'' इतिसूत्रस्थभाष्यं तु वार्तिकरीत्येत्याहुः।

किंच ''यदा कर्म विवक्षितं भवति तदा षष्ठी न भवति स्मराम्यहं मातरम्''इति भाष्ये उक्तम्। त्वद्रीत्या तु यदा कर्मादि विवक्षितं भवतीति वदेत्। *एवञ्च ''ज्ञोऽविदर्थस्य''इत्यत्रापि तदसम्बन्ध एव। एवञ्च तद्योगे न कदापि तृतीया। शतं दीव्यतीत्यादि च सिद्ध्यति। अधीगर्थेत्यादौ च मण्डूकानुवृत्तिरिति सुधियो विभावयन्तु॥

---

णयोर्द्वयोरेवोपलम्भादित्यर्थः। *किं चैतद्भाष्यबलाद् दिव इति सूत्रेऽपीति*। वार्तिकसत्त्वे कर्मत्वेनैव षष्ठ्याः कर्मबोधकत्वेऽपि शतस्य दीव्यते इतीष्यते। वार्तिकाभावे शेषानुवृत्तौ तद् न स्यादिति भावः। एतेन ''दिव इति सूत्रे शेषाननुवृत्तावपि वार्तिकाभावेऽपि शेषत्वविवक्षयैव शतस्य दीव्यते इत्यत्र षष्ठी, अकर्मकत्वाद्भावे लकारश्च सिध्यत्येवेति तदभावेऽपि एतत्प्रयोगसिद्धौ न विरोध'' इत्यपास्तम्। दिवस्तदर्थस्येत्यनेन कर्मणि षष्ठ्यामकर्मकत्वाभावेन भावे लकारस्य वार्तिकमते इष्टस्य असिद्ध्यापत्तेस्तदवस्थत्वात्। शेषग्रहणानुवृत्तौ तु न तेन कर्मणि षष्ठी किंतु भावे एवेति न तत्र भावे लकारानुपपत्तिः। ननु भाष्यकृता शेषानुवृत्त्या कथं वार्तिकं प्रत्याख्यातम्, वार्तिकसत्त्वे कर्मत्वेनैव षष्ठ्याः कर्मबोधकत्वं, तदभावे तु नैवेति फलभेद इति चेन्न। बोधवैलक्षण्येऽपि ''वसेस्तव्यत् कर्तरि णिच्च'' इत्यादीनां प्रत्याख्यानदर्शनात्। *प्रेष्यब्रूपर्यन्ता इति। कृत्वोर्थेत्यत्र तत्संबन्धे तु कृत्वोर्थपर्यन्ता इति वदेत्। दिव इत्यत्र तत्सम्बन्धेऽपि इदं मानम्। तस्यापि तदन्तर्गतत्वात्, दिवभिन्ना इत्यनुक्तेश्चेति भावः। *सूत्रद्वयप्रत्याख्याने एवेति*। ''विभाषोपसर्गे'' ''द्वितीया ब्राह्मणे''इतिसूत्रद्वयेत्यर्थः। ''दिवस्तदर्थस्यानुपसर्गे''इत्येव पाठ्यमिति तदाशयः। कश्चित्तु''व्यवहृपणानुपसृष्टदिवां समर्थानाम्''इति पाठ्यम्। दिवस्तदर्थस्य,विभाषोपसर्गे इति सूत्रद्वयं न कार्यम्। एवं द्वितीयाब्राह्मणे इत्यपि न कार्यमित्याशय इत्याह। *एवं च ज्ञोऽविदर्थस्येति* । यदा कर्म विवक्षितमित्यादिभाष्यप्रामाण्येन कर्मग्रहणे

कर्तृकर्मणोः ॥ अत्र शेषइति न सम्बद्ध्यते, सूत्रवैयर्थ्यापत्तेः । "कृद्योगा षष्ठी समस्यते"इति वार्तिकेन तत्र समासस्येष्टत्वात् । कृतिरिति । भावे क्तिन् । कृष्णः कर्ता । जगत इति । कर्मेदम् । कर्तृसाहचर्यात् कर्मापि धात्वर्थे भेदनान्वय्येव गृह्यते । तेन स्तोकं पाक इत्यादौ *न क्रियाविशेषणात् षष्ठी । किंच क्रियाविशेषणेन स्तोकम्पाचक इत्यादौ न समानाधिकरणसमासो, नापि सुप्सुपेत्यादिः । सुबन्तार्थविशेष्येणानन्वयेनासामर्थ्यात्* । द्वितीयाश्रितेत्यादेस्तु सामर्थ्यादवयवद्वारके सामर्थ्ये प्रवृत्तिः । द्वितीयाप्रकरणोक्तपरेतुमतरीत्या वा सामर्थ्यम् । अत एव पूजनात्पूजितमिति सूत्रे दारुणं यथा भवति तथा ऽध्यापक इत्यर्थकस्य दारुणाध्यापकइत्यस्य सिद्ध्यर्थं *मलोपवचनमारब्धं भाष्ये । *अन्यथा समासेन सिद्धे *तद्व्यर्थं स्यात् । एतदेव भाष्यं ततः षष्ठ्यभावेपि मानम् । *अन्यथा षष्ठीसमासस्य तृजकाभ्यां कर्तरीत्यादिनिषेधैरुक्तसामर्थ्येपि प्रवृत्त्या तत्समासेनैव सिद्धौ मलोपवचनं व्यर्थमेव स्यादिति बोद्ध्यम् । न च *भिन्नपदत्वे ऽपि तथाप्रयोगसाधुत्वार्थं मलोपवचनमिति वाच्यम् । *तथा सति वाक्ये मलोपश्च वक्तव्य इति वदेत् । अत एव कैयटेन क्रियाविशेषणं दारुणादयस्तत्र वैयधिकरण्यात् समासाभावात् मलोपो विधीयतइत्युक्तम् । सुप्सुपेत्यादिसमासो *न सार्वत्रिक इति तदाशय इत्यलम् ।

---

एव शेषग्रहणानुवृत्तिलाभेन ज्ञोऽविदर्थस्येत्यत्रापि तदसम्बन्धो लभ्यते इति भावः । यदि च प्रकृताभिप्रायकत्वेन "यदा कर्म"इत्यादिभाष्यं योज्यते तदा तु मण्डूकानुवृत्तौ प्रमाणाभावः ।

केचित्तु शेषानुवृत्तिरेव प्रयत्नसाध्या । आरम्भसामर्थ्येन समासाभावकल्पने गौरवात् । अननुवृत्तिस्तु स्वारसिकी । एवं च कर्मघटिते उक्तभाष्यस्य मानत्वेपि उत्तरत्र मानाभावादननुवृत्तिरिति रीत्यैतद्ग्रन्थं योजयन्ति ।

*कर्तृकर्मणोः कृति । न क्रियाविशेषणात् षष्ठीति* । स्तोकादेः कर्मणः पाकक्रियायामभेदेनान्वयात् । *असामर्थ्यादिति । प्रधानन्यायेन विशेष्यद्वारकमेव सामर्थ्यं गृह्यत इति भावः । षष्ठीसमासे तु तृजकाभ्यामित्यादिगमकादवयवद्वारकसामर्थ्यस्यापि ग्रहणम् इत्यन्यत् । *मलोपवचनमारब्धमिति* । अन्यथा षष्ठ्येवात्रापि स्यादिति मकारो न लभ्येतेति भावः । *अन्यथेति* । अवयवद्वारकसामर्थ्यमादाय प्रकृतेपि समासस्वीकारे । *तद्व्यर्थं स्यादिति । समासे कृते विभक्तेर्लुकि मस्यैवाभावे मलोपवचनं व्यर्थं स्यात् । *भिन्नपदत्वेऽपीति* । समासस्य वैकल्पिकत्वेन तदभावे वाक्ये मलोपार्थं तद्वचनं चरितार्थमिति भावः । *तथा सतीति* । वाक्ये एव मलोपार्थं तद्वचनस्य सार्थक्ये सति । *न सार्वत्रिक

कृति किमिति। कर्तृकर्मभ्यां क्रिया सन्निधाप्यते। तद्वाची तु धातुरेव। कारकान्वययोग्यतावच्छेदकरूपेण साक्षात्त्वेन धातुभिरेव तदुपस्थितेः। शत्योऽश्वः, आभिभ्रक इत्यादौ तद्धितान्न तेन रूपेणोपस्थितिरिति न तत्र कारकाणामन्वयः, एतद्भाष्यप्रामाण्यात्। अत एव ह्रिरुगादियोगे न कर्मादिसंज्ञा। एतेन देवदत्तेन शत्योऽश्व इत्यादौ षष्ठीनिवृत्त्यर्थं कृद्ग्रहणमित्यपास्तम्। अधिका खारी द्रोणेनेत्यत्र हेतौ तृतीया। क्रियायोगाभावात् कर्तुः कर्तृत्वाभावे जनकत्वरूपहेतुत्वसत्त्वात्। धातोश्च द्वये प्रत्ययास्तिङः कृतश्च। तत्र तिङ्योगे नलोकेति निषेधात् कृद्योगे एव भविष्यतीति किं तेन। नलोकेति सूत्रे कृदव्ययस्यैव ग्रहणं तु अव्ययार्थस्य ये कर्तृकर्मणी इति व्याख्यानेन सिद्धम्। उभयप्राप्ताविस्यत्र बहुव्रीहिस्तु "एकाचो द्वे" इत्यादाविवान्यपदार्थस्याशाब्दत्वे ऽपि व्याख्यानाद्भविष्यति। न च भेदिका देवदत्तस्य काष्ठानामित्यादौ गुणभूते णिच्प्रकृत्यर्थकर्तरि षष्ठ्यर्थं करोतीति कृदिति कर्तृपरं तदिति वाच्यम्। तृतीयावत्तत्र षष्ठ्या अपि विनैव यत्नं सिद्धेरिति प्रश्नः।

तद्धित इति। *तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियायाः कर्त्तरि कर्मणि च मा भूदित्यर्थः। उदाहरणे सकर्मकप्रकृतिकभावक्तान्तस्येदशवृत्तिमात्रविषयताया भाष्यसम्मतत्वेन तस्य केवलस्य क्वाप्यप्रयोगेण ताद्धितान्तसमुदायशक्त्यैव क्रियोपस्थापकत्वात्। *कृद्ग्रहणात्कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयक्रियाकर्तृकर्मणोर्ग्रहणम्, न चात्र

---

इति*। विस्पष्टं पटुर्विस्पष्टपटुरित्यादौ प्रधानेन सामर्थ्याभावेपि सुप्सुपेति समासस्य भाष्यकृता कृतत्वात्। वस्तुतस्तु "अन्यथा समासेन" इत्यादिग्रन्थश्चिन्त्य एव। नितान्तं दारुणाध्यापक इत्याद्यर्थे मलोपवचनावश्यकत्वात्। समासे "वृत्तस्य च विशेषणं न" इति न्यायेन दारुणपदार्थे नितान्तादिविशेषणान्वयानापत्तेः। तस्मात् षष्ठ्यापत्तौ मकारस्य दुर्लभत्वान्मलोपवचनासङ्गत्यापत्त्या क्रियाविशेषणे षष्ठी न भवति, समासस्तु असामर्थ्यात् न भवतीत्येव सारम् इति दिक्।

*तद्धितान्तशक्तिग्रहमात्रप्रयोज्योपस्थितिविषयक्रियाया इति*। शक्तिश्चात्र आनुभाविकी आकाङ्क्षास्थानीया, उपस्थितिश्च वाक्यार्थबोधः। एवञ्च तद्धितान्तपर्याप्तानुभाविकशक्तिग्रहमात्रप्रयोज्यशाब्दबोधविषयक्रियायाः कर्तरि कर्मणि च षष्ठी मा भूदित्यर्थः। *कृद्ग्रहणादिति। तत्सामर्थ्यात् कृदन्तपर्याप्तानुभाविकशक्तिग्रहप्रयोज्यशाब्दबोधविषयक्रियानिरूपितकर्तृकर्मणोः षष्ठी इति

तथा । तण्डुलानां पाचकतर इत्यादौ च पाचकादेः पृथक्प्रयोगेण तच्छक्तिग्रहस्यापि सत्त्वेन कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयत्वं क्रियाया अस्त्येवेति भवत्येव षष्ठी । अत एव तद्धिते माभूदित्येवोक्तं, न तु तद्धिताधिक्येऽपीति । भाष्येपि तद्धितस्य ये कर्तृकर्मणी तत्र मा भूत्कृतो ये कर्तृकर्मणी तत्रैव यथा स्यादित्येवोक्तम् ।

---

सूत्रार्थः । कृष्णस्य कृतिः तण्डुलानां पाचकः इत्यादौ च तमबादिसमभिव्याहारं विनापि पाकादिक्रियानिष्ठविशेष्यतानिरूपितकर्मत्वकर्तृत्वान्यतरसम्बन्धावच्छिन्नतण्डुलादिनिष्ठप्रकारताकबोधस्योदयात् तादृशबोधं प्रति तण्डुलादिपदसमभिव्याहृतकृदन्तपाचकादिपदस्यैव कारणत्वेन कृदन्तशक्तिग्रहप्रयोज्यबोधीयक्रियानिष्ठविशेष्यतानिरूपितकर्तृत्वकर्मत्वान्यतरसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वं तण्डुलानां पाचकतम इत्यादावपि अस्त्येवेति तत्रापि षष्ठी भवत्येव । कृतपूर्वी कटम् इत्यादौ तु पूर्वं कर्माविवक्षया भावे प्रत्यये पश्चात् कर्मान्वयस्य तद्धितविषये एव भाष्यप्रामाण्यात् स्वीकारेण कृधात्वर्थनिष्ठविशेष्यतानिरूपितकर्मत्वसंबन्धावच्छिन्नकटादिनिष्ठप्रकारताकबोधं प्रति कटादिपदसमभिव्याहृतकृतपूर्वीतितद्धितान्तस्यैव कारणत्वात् न कटादीनां कृदन्तपर्याप्तशक्तिग्रहप्रयोज्यबोधविषयक्रियानिरूपितं कर्मत्वमिति न ततः षष्ठीति भावः ।

एतेन "कृतमिति व्यस्ते कृतपूर्वीति वृत्तौच विद्यमाने कृतपदे एकस्या एव क्रियाविषयकबोधानुकूलायाः शक्तेः सत्त्वेन कृतपूर्वीत्यत्र कृदन्तशक्तिग्रहप्रयोज्योपस्थितिविषयत्वं क्रियायां नास्तीति दुर्वचम्" इति शङ्का समाहिता । एवमेव च 'देवदत्तेन कृतम्'इत्यादौ क्तान्तस्यार्थवत्त्वेन कृद्ग्रहणपरिभाषया कृदन्तत्वात्प्राप्तप्रातिपदिकसंज्ञायाः अर्थवत्समुदायविषयकेण समासग्रहणनियमेन वारणं संगच्छते । अत एव च 'देवदत्तो गार्ग्य' इत्यादौ देवदत्तोगार्ग्येत्यस्य सुप्रहितस्यार्थवत्त्वाभावेन समासग्रहणेनाव्यावृत्तौ प्राप्तायां प्रत्ययग्रहणपरिभाषया प्रातिपदिकसंज्ञा भाष्ये वारिता । देवदत्तकर्तृककरणकर्मरूपार्थस्य 'देवदत्तेन कृतपुत्रः' इति वाक्यादपि प्रतीतेः सुप्रहिते एवाकाङ्क्षास्थानीयानुभाविकी शक्तिः । सुप्रहिताद्देवदत्तोगार्ग्येत्यस्मात्तु न देवदत्ताभिन्नो गार्ग्य इति प्रत्यय इति तत्र सुप्सहिते एव सेति सुधीभिर्विचार्यताम् ।

न च 'कृतपूर्वी कटम्' इत्यत्र "न लोका" इति निषेधादेव षष्ठी न स्यादिति कृद्ग्रहणाभावेऽपि नात्र दोष इति वाच्यम् । कृतपूर्वी कटमित्यस्य कर्तव्यपूर्वी कटमित्येतदुपलक्षणत्वात् । निष्ठान्तपर्याप्तानुभाविकशक्तिग्रहप्रयोज्यबोधविषयक्रियाकर्तृकर्मणोरेव नलोकेत्यनेन षष्ठीनिषेधाच्च । यद्वा "निष्ठा" इत्यनेन नात्र क्तः, किन्तु "नपुंसके भावे क्तः" इत्यनेन । एवं च अनेन निषेधप्राप्तौ "नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यानम्"इति वार्तिकेन षष्ठी प्राप्ता कृद्ग्रहणाच्च । यद्यपि वार्तिकमिदं शेषत्वविवक्षया भाष्यकृता प्रत्या-

कृतपूर्वीति । अत्र कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षया ऽकर्मकत्वाद्भावे क्ते पूर्वादिनिरिति तद्धितः । तदनन्तरं तु विशेषरूपेण कर्मयोगो भवत्येव । तत्रोक्तरीत्या षष्ठ्यभावे ऽनभिहितत्वाद् द्वितीया । एवं रीत्या साधुत्वे ऽत्रत्यभाष्यमेव मानम् । वृत्तेः पूर्वं कर्मान्वयाभावाच्च सापेक्षत्वाद् वृत्तिर्न स्यादिति न शङ्क्यम् । एवमधीती व्याकरणे इत्यादावपि बोद्ध्यम् । तदुक्तं भाष्ये—यदा वाक्यं न तदा प्रत्ययः, यदा प्रत्ययः सामान्येन तदा वृत्तिरिति । न तदा प्रत्ययः—न तदा भावे प्रत्ययः । धातोः सकर्मकत्वात् । यदा प्रत्ययः—भावे इति शेषः । तदा वृत्तिरेव । सा च वृत्तिर्न कदापि कर्मक्तान्तेनेत्याह । सामान्येनेति । कर्मविशेषस्य तत्तद्रूपेण प्रागन्वयाविवक्षाविशिष्टो योऽर्थः तदर्थकधातुप्रकृतिकक्तान्तेनेत्यर्थः । इयमेव कर्मणोऽविवक्षा नाम । अनेन तादृशक्तान्तस्य वाक्ये न प्रयोग इति स्पष्टमेवोक्तम् । प्रयोगानुरोधिनी हि विवक्षेति तद्भावः । न चाविवक्षितकर्मतया भावे क्तसाधनयत्नो व्यर्थः, नपुंसके भावे इत्यनेन सकर्मकेभ्योऽपि सिद्धेरिति वाच्यम् । तस्याप्यकर्मकेभ्य एवेष्टेः । अत्र चेदमेव भाष्यं मानम् । '

दद्दैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम् ।
लिम्पैरिव तनोर्वातैश्चेतयन् स्याज्ज्वलो न कः ॥

इति भट्टिपद्यम् । मादृग्भ्यो दुःखं ददद्भिरुत्तममामोदं पुष्पादीनां गृहीत्वा मादृशां दत्तस्य दुःखस्य पोषकैर्मादृशां शरीरं लिम्पद्भिरिव वातैः को मादृक् विरहाग्निव्याप्तश्चेतयन् ज्वलः ज्वलन्निव न स्यादिति तदर्थः । दाधातोः पोषणार्थाद्धाञश्च ददातिदधात्योरिति शणौ, लिम्पेः शः, ज्वलेर्णं इति । जयमङ्गलाश्लोकव्याख्याप्येतज्जातीयैव तत्रेति दिक् । तत्र धायैरामोदमुत्तममित्यत्र *गृहीत्वेत्यध्याहृत्य तद्योगे द्वितीया बोद्ध्या ।

उभयोः प्राप्तिर्यस्मिन्निति । तेनैकनिमित्तत्वलाभादोदनस्य पाको ब्राह्मणानाञ्च प्रादुर्भाव इत्यादौ विभिन्नक्रियाकर्तृकर्मणोः षष्ठीप्राप्तौ नायं नियम इति भावः । प्राप्तिपदेन चोभयोः प्रयोग*एवायं निषेध इति

---

ख्यातं तथापि वार्तिकरीत्यैवेदमुदाहरणमिति केचिदाहुरिति दिक् ।

*गृहीत्वेति । एतेन "तदर्हम्" इति निर्देशात् अस्यानित्यत्वकल्पनं मनोरमोक्तं व्यर्थमिति ध्वनितम् ।

उभयप्राप्तौ कर्मणि । *उभयोः प्रयोगे एवेति* । ननु सति प्राप्तिपदे

ध्वनितम् । स्त्रीप्रत्यययोरिति । "स्त्रियां क्तिन्" इत्यधिकारविहितयोरित्यर्थः । नायं नियम इति । तेनोभयत्रापि षष्ठी भवत्येवेति भावः । भेदिकेति । धात्वर्थनिर्देशे ण्वुल्, सन्नन्ताद्भिदेः "अ प्रत्ययात्" इत्यकारप्रत्ययः । शेषे इति । नियमस्यायं विकल्पः । 'इत्येके' इत्येतल्लब्धमर्थं स्पष्टप्रतिपत्तये आह । केचिदिति । अकाकारभिन्ने कृन्मात्रे इत्यर्थः । अनुशासनमिति । अनुशिष्यन्ते ऽसाधुभ्यो विविच्य बोध्यन्ते येनेति करणे ल्युट् ।

मत इत्यादौ मतिबुद्धीति वर्तमाने क्तः ।

इदमेषामिति । कर्तरि षष्ठी । सकर्मकेभ्यस्त्वधिकरणे क्ते कर्तृकर्मणोर्द्वयोरपि षष्ठी, इदमेषां भुक्तमोदनस्य । उभयप्राप्ताविति तु मध्येऽपवादन्यायेन कर्तृकर्मणोरित्यस्यैव नियम इति बोध्यम् ।

न लोका । लादेशा इति । लकारसम्बन्धिन इत्यर्थः, तेन

---

यत्र कर्तृकर्मणोरुभयोरपि कृदन्तार्थेऽन्वयः सम्भवी तत्रैवायं नियमः प्रवर्तते, तदभावे तु यत्राविवक्षितकर्मतया कर्मान्वयस्य नैव योग्यता तत्रापि 'चैत्रस्य पाकः' इत्यादौ एतत्कृतेन 'उभयोः कर्मण्येव षष्ठी' इति नियमेन कर्तरि षष्ठी न प्रवर्तेत इति तदर्थं प्राप्तिपदस्य चारितार्थ्येनोभयोः प्रयोगे एवायमित्यर्थे प्रमाणाभाव इति चेन्न । एवं सत्यकर्मकेष्वेव कर्तरि षष्ठी स्यात्, सकर्मकेषु तु सति सम्भवे कर्मण्येवेति "अकर्मके कर्तरि कृति" ततः "कर्मणि" इति योगविभागेन सिद्धौ उभयोर्ग्रहणसामर्थ्याद्यत्रोभयोरन्वययोग्यता तत्रैव प्रवृत्तिसिद्धौ पुनः प्राप्तिग्रहणाद्, "क्त्वार्थप्रयोगे" इत्यतः प्रयोगग्रहणानुवृत्तेः, "आत्ममाने खश्च" इतिसूत्रस्थभाष्यप्रामाण्याच्च यत्रोभयार्थकं पदं श्रूयते तत्रैवेत्यर्थस्य सम्भवात् । "आत्ममाने" इति सूत्रे भाष्ये हि "आत्ममाने इत्यात्मग्रहणं परमाने मा भूत् इत्येतदर्थम । क्रियमाणेऽपि तस्मिन् प्राप्नोति । कुतः । आत्मन इति कर्तरि षष्ठी, मान इति भावे घञ् । नैष दोषः । आत्मन इति कर्मणि षष्ठी । ननु कर्तर्यपि प्राप्नोति । एवं तर्हि आत्मग्रहणसामर्थ्यात् कर्मणि षष्ठी विज्ञास्यते" इत्युक्तम् । उभयोः प्रयोगमन्तरेऽपि नियमप्रवृत्तौ तु प्रकृते "उभयप्राप्तौ कर्मणि" इति नियमेन कर्मषष्ठ्याः सिद्धत्वेन आत्मग्रहणसामर्थ्येन कर्मषष्ठ्याः साधनं भाष्यकृतो विफलं स्यात् । तत्फलं तु "अथ शब्दानुशासनम्" इत्यादौ यत्र सत्यामपि कर्त्रन्वययोग्यतायाम् आचार्यादिरूपकर्तृबोधकं पदं न श्रूयते तत्रास्य नियमस्य न प्रवृत्तिरिति समासः सिद्धः । एतत्प्रवृत्तौ तु "कर्मणि च" इति निषेधात् समासो न स्यात् । उभयप्राप्तावित्यनेन षष्ठ्यभावे तु न समासनिषेधः । इति-शब्दार्थकचकारेण 'कर्मणि' इत्येवं विहितषष्ठ्या एव समासनिषेधादिति भावः ।

